# सुश्रुतः ।

## सूत्रनिदानशारीरचिकित्साकल्पोत्तर-
## कल्पित आयुर्वेदः ।

भगवता धन्वन्तरिणोपदिष्टः ।

सुश्रुतनामधेयेन तच्छिष्येण विरचितः ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृत्य प्रकाशितः ।

त[redacted]णम् ।

क[redacted]

सरतीय[redacted]

मुद्रितः ।

इं १८८९ ।

# सुश्रुते सूत्रस्थानस्य सूचीपत्रम्।

शारीरस्थानस्य सूचीपत्रम् ।

---

सूचीपत्र समाप्तम।

# सुश्रुतः।



## अथ सूत्रस्थानम्।

### प्रथमोऽध्यायः।

नमो ब्रह्मप्रजापत्यश्विबलभिद्धन्वन्तरिसुश्रुतप्रभृतिभ्यः।

अथातो वेदोत्पत्तिं नामाध्यायं व्याख्यास्यामः। यथोवाच भगवान् धन्वन्तरिः सुश्रुताय ॥१॥

अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः। भगवन्! शारीरमानसागन्तुस्वाभाविकैर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीडा भवति तेषां सुखैषिणां रोगोपशमार्थमात्मनः प्राणयात्रार्थञ्च प्रजाहितहेतोरायुर्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम्। अत्रायत्तमैहिकमामुष्मिकञ्च श्रेयः। तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति। तानुवाच भगवान् स्वागतं वः। सर्वं एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः। ॥२॥

इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणी-

तवान्। तद्यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति ॥३॥

अथास्य प्रत्यङ्गलक्षणसमासः।

तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च ॥४॥

शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् ॥५॥

कायचिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम् ॥६॥

भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम् ॥७॥

कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम् ॥८॥

अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थम्॥९॥

रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ॥१०॥

वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थञ्च। एवमिदमायुर्वेदोऽष्टाङ्ग उपदिश्यते ॥११॥

अत्र कस्मै किमुच्यतामिति। त ऊचुः। अस्माकं सर्वेषामेव शल्यज्ञानमूलं कृत्वोपदिशतु भगवानिति। स उवाचैवमस्त्विति। त ऊचुर्भूयोऽपि भगवन्तम्। अस्माकमेकमतीनां मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति। अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः। स होवाचैवमस्त्विति। वत्स सुश्रुत। इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य स्वास्थ्यरक्षणञ्च ॥१२॥

आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः। तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ॥१३॥

एतद्ध्यङ्गं प्रथमं प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च। श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः। भवद्भ्यां यज्ञस्य शिरः सन्धातव्यम्। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः संहितमिति ॥१४॥

अष्टास्वपि चायुर्वेदतन्त्रेष्वेतदेवाधिकमभिमतमाशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्नि-प्रणिधानात्सर्वतन्त्रसामान्याच्च। तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरञ्चेति॥१५

ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः ॥१६॥

भवति चात्र।

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्।

शल्याङ्गमङ्गैरपरैरुपेत प्राप्तोऽस्मि गां भूय इहोपदेष्टुम ॥१७॥

अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवाय पुरुष इत्युच्यते। तस्मिन् क्रिया सोऽधिष्ठान कस्माल्लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च। द्विविधात्मक एवाग्नेय. सौम्यश्च तद्भूयस्त्वात् पञ्चात्मको वा ॥१८॥

तत्र चतुर्विधो भूतग्राम। स्वेदजाण्डजोद्भिज्जजरायुजसञ्ज्ञ। तत्र पुरुष प्रधान तस्योपकरणमन्यत्। तस्मात् पुरुषोऽधिष्ठानम् ॥१९॥

तद्दुःखसंयोगा व्याधय इत्युच्यन्ते। ते चतुर्विधा आगन्तव शारीरा मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ता। शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता। मानसास्तु क्रोधशोकभयहर्ष-विषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति। स्वाभाविका. क्षुत्पिपासाजरामृत्युनिद्राप्रकृतय। त एते मनःशरीराधिष्ठानाः ॥२०॥

तेषां संशोधनसंशमनाहाराचाराः सम्यक् प्रयुक्ता निग्रहहेतव. ॥२१॥

प्राणिना पुनर्मूलमाहारो बलवर्णौजसाञ्च स षट्सु रसेष्वायत्तो रसाः पुनर्द्रव्याश्रया.। द्रव्याणि पुनरोषधयस्तास्तु द्विविधा. स्थावरा जङ्गमाश्च। तासा स्थावराश्चतुर्विधा.। वनस्पतयो वृक्षा वीरुध ओषधय इति। तासु अपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः। प्रतानवत्य. स्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति ॥२२॥

जङ्गमा खल्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजा। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः। तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तो जङ्गमेभ्यश्चर्मनखरोमरुधिरादयः ॥२३॥

पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः। कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाऽहोरात्रपक्षमासर्त्त्वयनादयः कालविशेषाः। त एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः प्रयोजनवन्तश्च ॥२४॥

भवन्ति चात्र श्लोकाः।

शारीराणां विकाराणामेष वर्गश्चतुर्विधः।
प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सके ॥२५॥
आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि।
मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया ॥२६॥
शरीरपतितानान्तु शारीरवदुपक्रमः।
मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः ॥२७॥

एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम्। तत्र पुरुषग्रहणात् तत्सम्भवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांससिरास्नायुप्रभृतयः। व्याधिग्रहणाद्वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः सर्व्व एव व्याधयो व्याख्याताः। औषधग्रहणाद् द्रव्यगुणरसवीर्य्यविपाकानामादेशः। क्रिया-

ग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्माणि व्याख्यातानि।
कालग्रहणात्सर्वक्रियाकालानामादेशः ॥२८॥

भवति चात्र।

वीजं चिकित्सितस्यैतत्समासेन प्रकीर्त्तितम्।
सविंशमध्यायशतमस्य व्याख्या भविष्यति ॥२९॥

तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु। तत्र सूत्रस्थान-निदानशारीरचिकित्सितकल्पेष्वर्थवशात् सविभज्योत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः ॥३०॥

भवति चात्र।

स्वयम्भुवा प्रोक्तमिदं सनातनं
पठेद्धि यः काशिपतिप्रकाशितम्।
स पुण्यकर्मा भुवि पूजितो नृपै-
रसुक्षये शक्रसलोकतां व्रजेत् ॥३१॥

---

## द्वितीयोऽध्यायः।

अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥१॥

ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्य्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत्। अतो विपरीतगुणं नोपनयेत् ॥२॥

उपनयनीयन्तु ब्राह्मणं प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पैर्लाजभक्तै

रतेश्च देवता. पूजयित्वा विप्रान् भिषजश्च तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्रह्माणं स्थापयित्वाग्निमुपसमाधाय खदिर-पलाशदेवदारुविल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिर्दार्वीहोमिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात्। सप्रणवाभिर्महा-व्याहृतिभिस्तत प्रतिदैवतमृषीश्च स्वाहाकारञ्च कुर्य्यात् शिष्यमपि कारयेत्। ब्राह्मणस्त्रयाणां वर्णानामुपनयन कर्त्तुमर्हति राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति। शूद्रमपि कुलगुणसम्पन्न मन्त्रवर्जमनुपनीतमध्यापयेदित्येके ॥३॥

ततोऽग्नि त्रि परिणीयाग्निसाक्षिकं शिष्य ब्रूयात्। कामक्रोधलोभ-मोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्या-यशस्यानि हित्वा नीचनखरोमणा शुचिना कषायवाससा सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणाऽवश्य भवितव्य मदनु-मतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रिय-हितेषु वर्त्तितव्यमतोऽन्यथा ते वर्त्तमानस्याधर्मो भवत्यफला च विद्या न च प्राकाश्य प्राप्नोति ॥४॥

अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामे-नोभाग्भवेयमफलविद्यश्च। द्विजगुरुदरिद्रमित्रप्रव्रजितो-पनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेव साधु भवति। व्याधशाकुनिकपतित-पापकारिणां न च प्रतिकर्त्तव्यमेव विद्या प्रकाशते मित्र-यशोधर्मार्थकामांश्च प्राप्नोति ॥५॥

भवतश्चात्र।

कृष्णेऽष्टमी तन्निधनेऽहनी द्वे

क्षणान्तरेऽप्येवमहर्द्दिसन्ध्यम ।
अकालविद्युत्स्तनयित्नुघोषे
स्वतन्त्रराष्ट्रक्षितिपव्यथासु ॥६॥
श्मशानयानायतनाहवेषु
महत्सवौत्पातिकदर्शनेषु ।
नाध्येयमन्येषु च येषु विप्रा
नाधीयते नाशुचिना च नित्यम् ॥७॥

---

तृतीयोऽध्याय ।

अथातोऽध्ययनसम्प्रदानीयमध्याय व्याख्यास्याम. ॥१॥

प्रागभिहित सविंशमध्यायशत पञ्चसु स्थानेषु । तत्र सूत्रस्थानमध्याया षट्चत्वारिंशत् । षोडश निदानानि । दश शारीराणि । चत्वारिंशच्चिकित्सितानि । अष्टौ कल्पा. । तदुत्तरं षट्षष्टि: ॥२॥

वेदोत्पत्ति. शिष्यनयस्तथाध्ययनदानिक ।
प्रभाषणाग्रहरणाहृतुचर्य्याथ यान्त्रिकः ॥३॥
शस्त्रावचारण योग्या विशिखा चारकल्पनम् ।
अग्निकर्मजलौकाख्यावध्यायौ रक्तवर्णनम् ॥४॥
दोषधातुमलादीना विज्ञानाध्याय एव च ।
कर्णव्यधामपक्वैषावालेपो व्रणुपासनम् ॥५॥
हिताहितौ व्रणप्रश्नौ व्रणास्रावश्च य. पृथक् ।
कल्याकल्यविधिर्व्याधिसमुद्देशीय एव च ॥६॥
विनिश्चय: शस्त्रविधौ प्रनष्टज्ञानिकस्तथा ।
शल्योद्धृतिर्व्रणज्ञान दूतस्वप्ननिदर्शनम् ॥७॥

पञ्चेन्द्रियं तथा छाया स्वभावाद्वैकृतं तथा ।
वारणो युक्तसेनीय आतुरक्रममिश्रकौ ॥८॥
भूमिभागो द्रव्यगण- संशुद्धौ शमने च य ।
द्रव्यादीनाञ्च विज्ञानं विशेषो द्रव्यगोऽपरः ॥९॥
रसज्ञानं वमनार्थमध्यायो रेचनाय च ।
द्रवद्रव्यविधिस्तद्वदन्नपानविधिस्तथा ॥१०॥
सूचनात् स्रवणाच्चैव सन्धानाच्चार्थसन्ततेः ।
षट्‌चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥११॥—(१)
वातव्याधिकमर्शांसि साश्मरिश्च भगन्दरं ।
कुष्ठमेहोदरामूढविद्रध्यः परिसर्पणम् ॥१२॥
ग्रन्थिवृद्धिभग्नशूकक्षुद्राश्च मुखरोगिकम् ।
हेतुलक्षणनिर्देशान्निदानानीति षोडश ॥१३॥—(२)
भूतचिन्ता रजःशुद्धिर्गर्भावक्रान्तिरेव च ।
व्याकरणञ्च गर्भस्य शरीरस्य च यत् स्मृतम् ॥१४॥
प्रत्येकं मर्मनिर्देशः शिरावर्णनमेव च ।
सिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा ॥१५॥
निर्दिष्टानि दशैतानि शारीराणि महर्षिणा ।
विज्ञानार्थं शरीरस्य भिषजा योगिनामपि ॥१६॥—(३)
द्विव्रणीयो व्रणः सद्यो भग्नानां वातरोगिकम् ।
महावातिकमर्शांसि साश्मरिश्च भगन्दरं ॥१७॥
कुष्ठानां महताञ्चापि मैहिकं पैडिकं तथा ।
मधुमेहचिकित्सा च तथा चोदरिणामपि ॥१८॥
मूढगर्भचिकित्सा च विद्रधीनां विसर्पिणाम् ।
ग्रन्थिवृद्ध्युपदंशानान्तथा च क्षुद्ररोगिकम् ॥१९॥

शूकदोषचिकित्सा च तथा च मुखरोगिणाम ।
शोफस्यानागतानाञ्च निषेधो मिश्रकन्तथा ॥२०॥
वाजीकरञ्च यत् क्षीणे सर्वाबाधशमोऽपि च ।
मेधायुष्करणञ्चापि स्वभावव्याधिवारणम् ॥२१॥
निवृत्तसन्तापकर कीर्त्तितञ्च रसायनम ।
स्नेहोपयौगिक स्वेदो वमने च विरेचने ॥२२॥
तयोर्व्यापच्चिकित्सा च नेत्रवस्तिविभागिकः ।
नेत्रवस्तिविपत्सिद्धिस्तथा चोत्तरवस्तिक ॥२३॥
निरूहक्रमसञ्ज्ञश्च तथैवातुरसञ्ज्ञक ।
धूमनस्यविधिश्चाग्राश्चत्वारिंशदिति स्मृता ॥२४॥
प्रायश्चित्त प्रशमन चिकित्सा शान्तिकर्म्म च ।
पर्य्यायास्तस्य निर्दिष्टाश्चिकित्सास्थानमुच्यते ॥२५॥ (४)
अन्नस्य रक्षा विज्ञान स्थावरस्येतरस्य च ।
सर्पदष्टविषज्ञान तस्यैव च चिकित्सितम् ॥२६॥
दुन्दुभेर्मूषिकाणाञ्च कीटानां कल्प एव च ।
अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥२७॥(५)
अध्यायाना शत विंशमेवमेतदुदीरितम् ।
अतः पर स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥२८॥
अधिकृत्य कृत यस्मात्तन्त्रमेतदुपद्रवान् ।
औपद्रविक इत्येष तस्याशात्रिरुच्यते ॥२९॥
सन्धौ वर्त्मनि शुक्ले च कृष्णे सर्वत्र दृष्टिषु ।
सविज्ञानार्थमध्याया गदानान्तु प्रति प्रति ॥३०॥
चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः ।
पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैव च ॥३१॥

लेख्यभेद्यनिषेधौ च क्रेद्यानां वर्त्मदृष्टिषु ।
क्रियाकल्पोऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम् ॥३२॥
घ्राणोत्थानाञ्च विज्ञानं तन्नद्प्रतिषेधनम् ।
प्रतिश्यायनिषेधश्च शिरोगदविवेचनम् ।
चिकित्सा तन्नदानाञ्च शालाक्यं तन्त्रमुच्यते ॥३३॥
नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम् ।
अपस्मारशकुन्योश्च रेवत्याश्च पुनः पृथक् ॥३४॥
पूतनायास्तथान्धाया मण्डिका शीतपूतना ।
नगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा ।
कौमारतन्त्रमित्येतच्छारीरेषु च कीर्त्तितम् ॥३५॥
ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि ।
पाण्डूनां रक्तपित्तस्य मूर्च्छाया पानजाश्च ये ॥३६॥
तृष्णायाश्छर्दिहिक्कानां निषेधः श्वासकासयोः ।
स्वरभेदचिकित्सा च क्रम्युदावर्त्तिनो पृथक् ॥३७॥
विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः ।
इति कायचिकित्सायाः शेषमत्र प्रकीर्त्तितम् ॥३८॥
अमानुषनिषेधश्च तथापस्मारिकोऽपरः ।
उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते ॥३९॥
रसभेदाः स्वस्थवृत्तिर्युक्तयस्तान्त्रिकाश्च याः ।
दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः ॥४०॥
श्रेष्ठत्वादुत्तरं ह्येतत्तन्त्रमाहुर्महर्षयः ।
बहुर्थसंग्रहाच्छ्रेष्ठमुत्तरञ्चापि पश्चिमम् ॥४१॥
शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या ।
भूतविद्येति चत्वारि तन्त्रे तूत्तरसञ्ज्ञिते ॥४२॥

वाजीकरणचिकित्सा तु रसायनविधिस्तथा।
भिषतन्त्वं पुनः कल्पाः शल्यज्ञान समन्ततः ॥४३॥
इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्।
विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि ॥४४॥

एतदवश्यमध्येयमधीत्य च कर्माण्यवश्यमुपासितव्य-मुभयज्ञो हि भिषग्राजार्हो भवति ॥४५॥

भवन्ति चात्र।

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः।
स मुह्यत्यातुरम्प्राप्य प्राप्य भीरुरिवाहवम् ॥४६॥
यस्तु कर्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः।
स सत्सु पूजां नाप्नोति बधं चार्हति राजतः ॥४७॥
उभावेतावनिपुणावसमर्थौ स्वकर्मणि।
अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ ४८ ॥
ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः।
भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्जयेत् ॥४९॥
स्नेहादिष्वनभिज्ञो यः स्नेहादिषु च कर्मसु।
स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः ॥५०॥
यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने।
आहवे कर्मनिर्वोढुं द्विचक्रः स्यन्दनो यथा ॥५१॥

अथ वत्स तदेतदध्येयं यथा तथोपधारय मया प्रोच्य-मानम्। अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थिताया-ध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा ते च पदपादश्लोका भूयः क्रमेणानुसन्धेया एवमेकैकशो-घटयेदात्मनाचानुपठेत्। अद्रुतमविलम्बित मविशङ्कितमननु-

नासिकं व्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेन्न चान्तरेण कश्चिद् व्रजेत्तयोरधीयानयोः ॥५२॥

भवतश्चात्र ।

शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्जितः ।
पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥५३॥
वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्मनैपुणे ।
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥ ५४॥

---

चतुर्थोऽध्यायः ।

अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः ॥१॥
अधिगतमप्यध्ययनमप्रभाषितमर्थतः ।
खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति ॥२॥

भवति चात्र ।

यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।
एवं हि शास्त्राणि बहून्यधीत्य
चार्थेषु मूढाः खरवद्वहन्ति ॥३॥

तस्मात्सविशमध्यायशतमनुपदपादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च। कस्मात्सूक्ष्मा हि द्रव्यरसगुणवीर्य्यविपाकदोषधातु मलाशयमर्मसिरा-स्नायुसन्ध्यस्थि-गर्भसम्भवद्रव्यसमूहविभागास्तथा प्रनष्टशल्योद्धरणव्रणविनिश्चयभग्नविकल्पाः साध्ययाप्यप्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धेरपि

बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः । तस्मादवश्यमनुपद-
पादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च ॥४॥

अन्यशास्त्रोपपन्नानाञ्चार्थानामिहोपनीतानामर्थव-
शात्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं कस्मा-
न्नह्येकस्मिन् शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्त्तुम् ॥५॥

भवन्ति चात्र ।

एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥६॥
शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥७॥
औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् ।
शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्द्दिशेत् ॥८॥

---

## पञ्चमोऽध्यायः ।

अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः ॥१॥

त्रिविधं कर्म्म । पूर्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति
तद्व्याधिं प्रति प्रत्युपदेक्ष्यामः । अस्मिन् शास्त्रे शस्त्रकर्म्म-
प्राधान्याच्छस्त्रकर्म्मैव तावत् पूर्वमुपदेक्ष्यामस्तत्सम्भारांश्च ॥२॥

तच्च शस्त्रकर्म्माऽष्टविधम् । तद्यथा । छेद्यं भेद्यं लेख्यं
वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति । अतोऽन्यतमं कर्म्म
चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि तद्यथा यन्त्र-
शस्त्रक्षाराग्निशलाकाशृङ्गजलौकालावूजाम्बवौष्ठपिचुप्रोतसू-
त्रपत्रपट्टमधुघृतवसापयस्तैलतर्पण-कषायालेपनकल्कव्यजन-

शीतोष्णोदककटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः ॥३॥

ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं वा शस्त्रपदमुक्तम् ॥४॥

तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः ॥५॥

भवतश्चात्र।

आयतश्च विशालश्च सुविभक्तो निराश्रयः।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते ॥६॥
शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू।
असम्मोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥७॥

एकेन वा व्रणेनाशुध्यमानेनान्तराबुद्ध्वावेक्ष्यापरान् व्रणान् कुर्य्यात् ॥८॥

भवति चात्र।

यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च।
तत्र तत्र व्रणं कुर्य्याद् यथा दोषो न तिष्ठति ॥९॥

तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥१०॥

चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥११॥

अन्यथा तु सिरास्नायुच्छेदनादतिमात्रं वेदना चिराद्व्रणसंरोहो मांसकन्दीप्रादुर्भावश्चेति। मूढगर्भोदराशोऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म कुर्वीत ॥१२॥

ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात्परिपीड्याङ्गुल्या व्रणमभिमृद्य प्रक्षाल्य कषायेण प्लोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढामौषधयुक्तां वर्त्तिं प्रणिदध्यात्। ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरुक्षां घनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपैर्धूपयेद्रक्षोघ्नैश्च मन्त्रैरक्षां कुर्वीत ॥१३॥

ततो गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत्। आज्यशेषेण चास्य प्राणान् समालभेत। उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म कुर्य्यात्तद्वक्ष्यामः ॥१४॥

कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च।
रक्षाकर्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥१५॥
नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥१६॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः ॥१७॥
पान्तु त्वां मुनयो ब्राह्मा दिव्या राजर्षयस्तथा।
पर्वताश्चैव नद्यश्च सर्वाः सर्वेऽपि सागराः ॥१८॥
अग्नीरक्षतु ते जिह्वां प्राणान् वायुस्तथैव च।
सोमो व्यानमपानं ते पर्जन्यः परिरक्षतु ॥१९॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः।

बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ॥२०॥
कामास्ते पान्तु गन्धर्वाः सत्वमिन्द्रोऽभिरक्षतु ।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥२१॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ।
नक्षत्राणि सदा रूपं छाया पान्तु निशास्तव ॥२२॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ।
आकाशं खानि ते पातु देहं तव वसुन्धरा ॥२३॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ ॥२४॥
एता देहे विशेषेण तव नित्या हि देवताः ।
एतास्त्वा सततं पान्तु दीर्घमायुरवाप्नुहि ॥२५॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्वताम् ।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्वतौ ॥२६॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ।
पितामहकृता रक्षा स्वस्त्यायुर्वर्द्धतां तव ॥२७॥
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥२८॥

इति स्वाहा ।

एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः ।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥२९॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत् । ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्वस्त्रपट्टेन न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत् ॥३०॥

द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसरोहति तीव्ररुजश्च भवति । अत ऊर्द्धं दोषकालबलादीन-

वेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात्। न चैनं त्वरमाणः सान्तर्दोषं रोपयेत्। स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति। २१॥

भवन्ति चात्र।

तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद् व्रणम्।
रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत्।
हर्षं क्रोधं भयञ्चापि यावत् स्थैर्य्योपसम्भवात् ॥२२॥
हेमन्ते शिशिरे चैव वसन्ते चापि मोचयेत्।
त्र्यहाद् द्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥२३॥
अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक्।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम् ॥२४॥
या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन ॥२०॥

---

## षष्ठोऽध्यायः।

अथात ऋतुचर्य्यमध्यायं व्याख्यास्यामः ॥१॥

कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते। स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः ॥२॥

तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेण

निमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सर-युगप्रविभागं करोति ॥३॥

तत्र लघ्वक्षरोच्चारणमात्रो निमेषः। पञ्चदश निमेषाः काष्ठा। त्रिंशत्काष्ठाः कला। विंशतिकलो मुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च तौ मासः ॥४॥

तत्र माघादयो द्वादश मासाः द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचि-शुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्जौ शरत्। सहः-सहस्यौ हेमन्त इति ॥५॥

त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालप्रविभा-गकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधु-राश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलम-भिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्या-यतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्त-रञ्च सर्वप्राणिनां बलमपहीयते ॥६॥

भवति चात्र।

शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि।
तावुभावपि संश्रित्य वायुः पालयति प्रजाः ॥७॥

अथ खल्वयने द्वे युगपत् संवत्सरो भवति। ते तु

पञ्च युगमिति सञ्ज्ञा लभन्ते । स एष निमेषादियुगपर्य्यन्त. कालश्चक्रवत्परिवर्त्तमान कालचक्रमुच्यत इत्येके ॥८॥

इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृष षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम् । ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याता. । तद् यथा । भाद्रपदाश्वयुजौ वर्षा । कार्त्तिकमार्गशीर्षौ शरत् । पौषमाघौ हेमन्त । फाल्गुनचैत्रौ वसन्त । वैशाखज्यैष्ठौ ग्रीष्म. । आषाढ़श्रावणौ प्रावृडिति ॥९॥

तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्ना. क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नाया भूमौ क्लिन्नदेहाना प्राणिना शीतवातविष्टम्भिताग्नीना विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति । स सञ्चय: शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायित पैत्तिकान् व्याधीन् जनयति ॥१०॥

ता एवौषधय. कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्ना. स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानो सतुषारपवनोपस्तम्भितदेहाना देहिनामविदग्धा. स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मण. सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहाना देहिना श्लैष्मिकान् व्याधीन् जनयति ॥११॥

ता एवौषधयो निदाघे नि.सारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमाना: सूर्य्यप्रतापोपशोषितदेहाना देहिना रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायो: सञ्चयमापा-

दयन्ति स सञ्चय प्राहृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहाना प्राणिना शीतवातवर्षैरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणा सञ्चय प्रकोपहेतु-रुक्त ॥१२॥

तत्र वर्षाहेमन्तग्रीष्मेष सञ्चितानां दोषाणां शरद्वसन्त-प्राहट्सु च प्रकुपितानां निर्हरण कर्त्तव्यम ॥१३॥

तत्र पैत्तिकाना व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकाना शरदि, स्वभावत एव। त एते सञ्चय-प्रकोपोपशमा व्याख्याता ॥१४॥

तत्र पूर्वाह्णे वसन्तस्य लिङ्ग मध्याह्ने ग्रीष्मस्यापराह्णे प्राहृष. प्रदोषे वार्षिक शारदमर्द्धरात्रे प्रत्यूषसि हैमन्त मुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ॥१५॥

तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमाना प्राणायुर्बलवीर्य्यौजस्कार्य्यो भवन्ति। तेषां पुन-र्व्यापदोऽदृष्टकारिता। शीतोष्णवातवर्षाणि खलु विपरी-तान्योषधीर्व्यापादयन्त्यपश्च तासामुपयोगाद्विविधरोगप्रा-दुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनाम-पाञ्चोपयोग ॥१६॥

कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापरक्ष क्रोधाधर्मै-रुपध्वस्यन्ते जनपदा। विषौषधिपुष्पगन्धेन वायुनोपनीते-नाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथु प्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृह-

दारशयनासनयानवाहन-मणिरत्नोपकरणगर्हितलक्षणनिर्मित्तप्रादुर्भावैर्वा ॥१७॥

तत्र स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेव साधु भवति ॥१८॥

ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः ॥१९॥

वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः ।
छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥२०॥
दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः ।
रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥२१॥
शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः ॥२२॥
सिद्धविद्याधरबधूचरणालक्तकाङ्किते ।
मलये चन्दनलतापरिष्वङ्गाधिवासिते ॥२३॥
वाति कामिजनानन्दजननोऽनङ्गदीपनः ।
दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः ॥२४॥
ग्रीष्मे हेमन्तवत् सर्वं विज्ञेयं लक्षणं बुधैः ॥२५॥
दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः ॥२६॥
कोकिलषट्पदगणैरुपगीता मनोहराः ।
दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः ॥२७॥
ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैरृतोऽसुखः ।
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव ॥२८॥
भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ।
ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः ॥२९॥

प्रावृष्यम्बरमानद्ध पश्चिमानिलकर्षितै ।
अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनै ॥३०॥
कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्जकेतकीभूषिता ॥३१॥
तत्र वर्षासु नद्यश्च पूरोद्भिन्नतटद्रुमा ।
वाप्य प्रोत्फुल्लकुमुदनीलोत्पलविराजिता ॥३२॥
भूर्व्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ।
नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रह नभ ॥३३॥
बभ्रुरुष्ण शरद्यर्क. श्वेताभ्रविमल नभ. ।
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितै ॥३४॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भू ।
बाणसप्ताह्वबन्धूककाशासनविराजिता ॥३५॥
स्वगुणैरतियुक्तेषु विपरीतेषु वा पुन ।
विषमेष्वपि वा दोषा कुप्यन्त्यृतुषु देहिनाम् ॥३६॥
हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ।
वर्षासु शमयेद्वायु प्राग्विकारसमुच्छ्रयात् ॥३७॥

---

## सप्तमोऽध्याय ।

अथातो यन्त्रविधिमध्याय व्याख्यास्याम ॥१॥

यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतम यन्त्राणामवगच्छ। किं कारणम्। यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद् यन्त्रकर्मणाम् ॥२॥

तत्र मन शरीराबाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि। तानि षट्प्रकाराणि। तद् यथा। स्वस्ति-

कयन्त्राणि। सन्दंशयन्त्राणि। तालयन्त्राणि। नाडीयन्त्राणि। शलाकायन्त्राणि। उपयन्त्राणि चेति।३॥

तत्र चतुर्विंशति स्वस्तिकयन्त्राणि। द्वे सन्दंशयन्त्रे। द्वे एव तालयन्त्रे। विंशतिर्नाड्य। अष्टाविंशति. शलाका। पञ्चविंशतिरुपयन्त्राणि। तानि प्रायशो लौहानि भवन्ति तत्प्रतिप्रतिरूपकाणि वा तदलाभे। तत्र नानाप्रकाराणा व्यालाना मृगपक्षिणा मुखैर्मुखानि यन्त्राणां प्रायश सदृशानि तस्मात्तत्सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद् युक्तितश्च कारयेत् ॥४॥

समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च।

सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥५॥

तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगालमृगैर्वारुककाककङ्ककुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्च भृङ्गराजाञ्जलिकर्णावभञ्जननन्दिमुखमुखानि मसूराकृतिभि कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्त वारङ्गाण्यस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते ।६॥

सिंहास्ययन्त्रम ।



तरक्ष्वास्ययन्त्रम ।



ऋक्षास्ययन्त्रम् ।



काकास्ययन्त्रम ।



कङ्कास्ययन्त्रम् ।



सनिग्रहसन्दंशयन्त्रम् ।



अनिग्रहसन्दंशयन्त्रम् ।



तालयन्त्रम् ।



नाडीयन्त्राणि ।



स्नुहीपत्रम् । अर्शोयन्त्रे ।





शमीयन्त्रम् । अङ्गुलीत्राणकयन्त्रम् ।





योनिव्रणेक्षणम् । वस्तियन्त्रम् ।





शलाकायन्त्राणि ।













सनिग्रहोऽनिग्रहश्च सन्दंशौ षोडशाङ्गुलौ भवतस्त्व-ङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते॥७॥

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके कर्णनासानाडीशल्यानामाहरणार्थम् ॥८॥

नाडीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखा-न्युभयतोमुखानि च तानि स्रोतोगतशल्योद्धरणार्थं रोग-दर्शनार्थमाचूषणार्थं क्रियासौकर्य्यार्थञ्चेति तानि स्रोतोद्वा-रपरिणाहानि यथायोगपरिणाहदीर्घाणि च। भगन्दरा-र्शोऽर्बुदव्रणवस्त्युत्तरवस्तिमूत्रवृद्धिदकोदरधूमनिरुद्धप्रकशस-न्निरुद्धगुदयन्त्राण्यलाबूशृङ्गयन्त्राणि चोपरिष्टाद्वक्ष्याम ॥९॥

शलाकायन्त्राण्यपि नानाप्रकाराणि नानाप्रयोजनानि यथायोगपरिणाहदीर्घाणि च तेषां गण्डूपदशरपुङ्खसर्प-फणवडिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुपदिश्येते। मसूरदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धर-णार्थम्। षट्कार्पासकृतोष्णीषाणि प्रमार्जनक्रियासु। त्रीणि दर्व्याकृतीनि खल्लमुखानि चारौषधप्रणिधानार्थम्। त्रीण्यन्यानि जाम्बववदनानि त्रीण्यङ्कुशवदनानि षडेवा-ग्निकर्मस्वभिप्रेतानि। नासार्बुदहरणार्थमेकं कोलास्थिदल-मात्रमुखं खल्लतीक्ष्णोष्ठम्। अञ्जनार्थमेकं कलायपरिमण्ड-लमुभयतो मुकुलाग्रम्। मूत्रमार्गविशोधनार्थमेकं मालती-पुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥१०॥

उपयन्त्राण्यपि रज्जुवेणिकापट्टचर्मान्तर्वल्कललताव-स्त्राष्ठीलाश्ममुद्गर-पाणिपादतलाङ्गुलिजिह्वादन्तनखमुखवा-लाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि चारा-

ग्निभेषजानि चेति ॥११॥

एतानि देहे सर्वस्मिन् देहस्यावयवे तथा।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत् ॥१२॥

यन्त्रकर्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्ज्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः ॥१३॥

स्वबुद्ध्या चापि विभजेद्यन्त्रकर्माणि बुद्धिमान्।
असङ्ख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥१४॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं मृदुमुखं मृदुपाशमिति द्वादशयन्त्रदोषाः ॥१५॥

एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम्।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्मसु योजयेत् ॥१६॥

दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः।
निर्हरेत्तु शनैः शल्यं शस्त्रयुक्तिव्यपेक्षया ॥१७॥

विवर्त्तते साध्ववगाहते च शल्यं निगृह्योद्धरते च यस्मात्।
यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वविकारि चैव ॥१८॥

---

## अष्टमोऽध्यायः।

अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः ॥१॥

विंशतिः शस्त्राणि। तद्यथा। मण्डलाग्रकरपत्रवृद्धिपत्रनख-शस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुख-

शरारीमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसप-त्रकवडिशदन्तशङ्क्वेषण्य इति ॥२॥

मण्डलाग्रम ।



करपत्रम् ।



वृद्धिपत्रे ।





नखशस्त्रम् ।



मुद्रिका ।



उत्पलपत्रकम् ।



अर्द्धधारम् ।



सूच्यः ।



कुशपत्रम् ।



आटीमुखम् ।



शरारीमुखम् ।



अन्तर्मुखशस्त्रम् ।



कुठारिका ।



त्रिकूर्चकम् ।



व्रीहिमुखम् ।



वेतसपत्रकम् ।



वडिशशस्त्रम् ।



एषण्य. ।





तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धि-पत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च। वडिशो दन्तशङ्कुश्चाहरणे। एषण्येषणे आनुलोम्ये च। सूच्यः सेवने। इत्यष्टविधे कर्मण्युपयोग शस्त्राणा व्याख्यात' ॥३॥

तेषामथ यथायोगग्रहणसमासोपाय. कर्मसु वक्ष्यते। तत्र वृद्धिपत्र वृन्तफलसाधारणे भागे गृह्णीयाच्छेदनान्येव सर्वाणि। वृद्धिपत्र मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्य्ये वृन्ताग्रे विस्रावणानि। विशेषेण बालवृद्धसुकुमारभीरुनारीणा राज्ञा राजपुत्राणाञ्च त्रिकूर्च-केन विस्रावयेत्। तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम। कुठारिका वामहस्तन्यस्तामितरहस्तमध्य-माङ्गुल्याङ्गुष्ठविष्टब्धयाभिहन्यात्। आराकरपत्रैषण्यो मूले। शेषाणि तु यथायोग गृह्णीयात् ॥४॥

तेषा नामभिरेवाकृतय प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले सूच्यो वक्ष्यन्ते।

वडिशो दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्र-मुखे। एषणी गण्डूपदाकारमुखी। प्रदेशिन्यग्रपर्वप्रदेश-प्रमाणा मुद्रिका। दशाङ्गुला शरारीमुखी सा कर्त्तरीति कथ्यते। शेषाणि तु षडङ्गुलानि ॥५॥

तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुस-माहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत् ॥६॥

तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम् । तत्र धाराभेदनानां मासूरी । लेखनानामर्द्धमासूरी । व्यधनानां विस्रावणानाञ्च कैशिकी । छेदनानामर्द्धकैशिकीति । तेषां पायना त्रिविधा क्षारोदकतैलेषु तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु । उदकपायितं मांसच्छेदनभेदनपाटनेषु । तैलपायितं सिराव्यधनस्नायुच्छेदनेषु । तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा । धारासंस्थापनार्थं शाल्मलीफलकमिति ॥७॥

भवति चात्र ।

यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम् ।
सुगृहीतं प्रमाणेन तदा कर्मसु योजयेत् ॥८॥

अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षार-नखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति ॥९॥

शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् ।
त्वक्सारादि चतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान् ॥१०॥
आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत् ।
विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम् ॥११॥
ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ।
गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥१२॥
एष्यं त्वेषण्यलाभे तु बालाङ्गुल्यङ्कुराहिताः ।
शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु ।

कारयेत्करणग्रामं कर्मारं कर्मकोविदम् ॥१३॥
प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ।
तस्मात्परिचयः कार्य्यः शस्त्राणां ग्रहणे सदा ॥१४॥

---

नवमोऽध्यायः ।

अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥१॥

अधिगतसर्वशास्त्रार्थमपि शिष्यं योग्यां कारयेत् । छेद्यादिषु स्नेहादिषु च कर्मपथमुपदिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्मस्वयोग्यो भवति ॥२॥

तत्र पुष्पफलालाबूकालिन्दकत्रपुसैर्वारुककर्क्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेदुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत् । दृतिवस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम् । सरोमणि चर्म्मण्याततेऽलेख्यस्य । मृतपशुसिरासूत्पलनालेषु च वेध्यस्य । घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबूमुखेष्वेष्यस्य । पनसविम्बीविल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य । मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य । सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य । पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम् । मृदुमांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम् । मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम् । उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणिधानवस्तिव्रणवस्तिपीडनयोग्यामिति ॥३॥

भवतश्चात्र ।

एवमादिषु मेधावी योग्यार्हेषु यथाविधि ।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु ॥४॥

तस्मात्कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्मसु।
यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत् ॥५॥

---

## दशमोऽध्यायः।

अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ॥१॥

अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्मणा कृतयोग्येन शास्त्रार्थं निगदता राजानुज्ञातेन नीचनखरोमणा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखानुप्रवेष्टव्या ॥२॥

ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभिगम्योपविश्यातुरमभिपश्येत् स्पृशेत् पृच्छेच्च। त्रिभिरेतैर्विज्ञानोपायै रोगाः प्रायशो वेदितव्या इत्येके। तत्तु न सम्यक्। षड्विधो हि रोगाणां विज्ञानोपायः। तद्यथा पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति ॥३॥

तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः। स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयो स्पर्शविशेषा ज्वरशोफादिषु। चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः। घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः। प्रश्नेन च विजानीयाद्देशं कालं जातिं

साध्यसाध्यत्वमातङ्कसमुत्पत्ति वेदनासमूर्च्छाय बल दीप्ताग्निता वातमूत्रपुरीषाणा प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्। आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात् ॥४॥

भवति चात्र।

मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च।
तथा दु परिमृष्टाश्च मोहयेयुश्चिकित्सकम ॥५॥

एवमभिसमीक्ष्य साध्यान् साधयेद्याप्यान् यापयेदसाध्यान्नोपक्रमेत् परिसंवत्सरोत्थितांश्च विकारान् प्रायशो वर्जयेत् ॥६॥

तत्र साध्या अपि व्याधय प्रायेणैषा दुश्चिकित्स्यतमा भवन्ति। तद्यथा। श्रोत्रियनृपतिस्त्रीबालवृद्धभीरुराजसेवककितवदुर्बलवैद्यविदग्धव्याधिगोपकदरिद्रकृपणक्रोधवतामनात्मवतामनाथानाञ्चैव निरूप्य चिकित्सा कुर्वन् धर्मार्थकामयशांसि प्राप्नोति ॥७॥

भवति चात्र।

स्त्रीभि सहास्यां संवासं परिहासञ्च वर्जयेत्।
दत्तञ्च ताभ्यो नादेयमन्नाद्न्यद्भिषग्वरै. ॥८॥



एकादशोऽध्याय'।

अथात' क्षारपाकविधिमध्यायं व्याख्यास्याम' ॥१॥

शस्त्रानुशस्त्रेभ्य' क्षारः प्रधानतमश्छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च ॥२॥

तत्र क्षरणात् क्षणनाद्वा क्षारः। नानौषधिसमवाया-

ग्निदोषघ्नः शुक्लत्वात्सौम्यस्तस्य सौम्यस्यापि सतो दहन-पचनदारणादिशक्तिरविरुद्धा स खल्वाग्नेयौषधिगणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः ॥३॥

स द्विविधः प्रतिसारणीयः पानीयश्च। तत्र प्रतिसारणीयः कुष्ठकिटिमदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रणनाडीचर्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यविद्रधिकृमिविषादिषु उपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम। पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्य्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते ॥४॥

अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः। तच्चेतरक्षारवद्दग्ध्वा परिस्रावयेत्तस्य विस्तारोऽन्यत्र ॥५॥

स च त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च। तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वाभिमन्त्र्यानेन मन्त्रेण।

अग्निवीर्य्य महावीर्य्य मा ते वीर्य्यं प्रणश्यतु।
इहैव तिष्ठ कल्याण मम कार्य्यं करिष्यसि।
मम कार्य्ये कृते पश्चात् स्वर्गलोकं गमिष्यसि॥

श्वेतपुष्परक्तपुष्पसहस्रं जुहुयात्। खण्डशः प्रकल्प्यावपाट्य निर्वाते देशे निचितं कृत्वा सुधाशर्कराश्च प्रक्षिप्य

तिलनालैरादीपयेद्यथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च ॥६॥

अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकविभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थगुञ्जाश्चतस्रश्च कोशातकी: समूलफलपत्रशाखा दहेत् ॥७॥

ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिवारान् विस्राव्य महति कटाहे शनैर्दर्व्या विघट्टयन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च तमादाय महति वस्त्रे परिस्राव्येतरं विसृज्य च पुनरग्नावधिश्रयेत्। तत एव च क्षारोदकात् कुडवमध्यर्द्धं वापनयेत् ॥८॥

ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वायसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसम्मितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सततमप्रमत्तश्चैनमवघट्टयन् विपचेत्। स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत। अथैनमागतपाकमवतार्य्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः। एष एवाप्रतीवापः पक्वः संव्यूहिमो मृदुः ॥९॥

प्रतीवापे यथालाभं दन्तीद्रवन्तीचित्रकलाङ्गलकीपूतिकप्रवालतालपत्रीविडसुवर्चिकाकनकक्षीरीहिङ्गुवचाविषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः प्रतीवापः। स एव सप्रतीवापः पक्वः पाक्यस्तीक्ष्णस्तेषां यथा व्याधिबलमुपयोग.। क्षीणबले तु क्षारोदकमावपेद्बलकरणार्थम् ॥१०॥

भवतश्चात्र।

नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः।
अभिष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः ॥११॥
अतिमार्दवशैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिता।
सान्द्रताऽपक्वता हीनद्रव्यता दोष उच्यते ॥१२॥

तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निर्वातातपे देशेऽसम्बाधेऽग्रोपहरणीयोक्तेन विधानेनोपसम्भृतसम्भारं ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा शलाकया क्षारं पातयित्वा वाक्शतमात्रमुपेक्षेत ॥१३॥

तस्मिन्निपतिते व्याधौ कृष्णता दग्धलक्षणम्।
तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः ॥१४॥
अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते।
इदमालेपनं तत्र समग्रमवचारयेत् ॥१५॥
अम्लकाञ्जिकबीजानि तिलान्मधुकमेव च।
प्रपिष्य समभागानि तेनैवमनुलेपयेत् ॥१६॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः।
रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः ॥१७॥
आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति।
एवं चेन्मन्यसे वत्स। प्रोच्यमानं निबोध मे।
अम्लवर्ज्यान् रसान् क्षारे सर्वानेव विभावयेत् ॥१८॥
कटुकस्तत्र भूयिष्ठो लवणानुरसस्तथा।
अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः ॥१९॥
माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति।
माधुर्य्याच्छममाप्नोति वह्निरद्भिरिवाप्लुतः ॥२०॥

तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च । हीनदग्धे तोदकण्डुजाड्यानि व्याधिवृद्धिश्च । अतिदग्धे दाहपाकरागस्रावाङ्गमर्दक्लमपिपासामूर्च्छाः स्युर्मरणं वा । क्षारदग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत् ॥२१॥

अथ नैते क्षारकृत्याः । तद्यथा । दुर्बलबालस्थविरभीरु-सर्वाङ्ग-शूनोदरिरक्तपित्तिगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहिर-क्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीवापवृत्तोद्वृत्तफलयोनय ॥२२॥

तथा मर्मशिरास्नायुधमनीसन्धितरुणास्थिसेवनीधमनी-गलनाभिनखान्तरशोफस्रोत स्वल्पमांसेषु च प्रदेशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्म रोगात् ॥२३॥

तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिन-मन्नद्वेषिणं हृदयसन्धिपीडोपद्रुतं क्षारो न साधयति ॥२४॥

भवति चात्र ।

विषाग्निशस्त्राशनिमृत्युकल्पः
क्षारो भवत्यल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो
रोगान्निहन्यादचिरेण घोरान् ॥२५॥

---

## द्वादशोऽध्यायः ।

अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥१॥

क्षारादग्निर्गरीयान् क्रियासु व्याख्यातस्तद्दग्धानां रोगाणामपुनर्भावाद्भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ॥२॥

अथेमानि दहनोपकरणानि । तद्यथा । पिप्पल्यजा-

शक्लोदन्तशरशलाकाजाम्बवौष्ठेतरलोहा चौद्रगुडस्नेहाश्च। तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानां, जाम्बवौष्ठेतरलोहानि मांसगतानां, चौद्रगुडस्नेहाः सिरास्नायुसन्ध्यस्थिगतानाम्। ३॥

तत्राग्निकर्म सर्वर्तुषु कुर्य्यादन्यत्र शरद्ग्रीष्माभ्यां तत्राप्यात्ययिकेऽग्निकर्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा ॥४॥

सर्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः कर्म कुर्वीत मूढगर्भाश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः ॥५॥

तत्र द्विविधमग्निकर्माहुरेके त्वग्दग्धं मांसदग्धञ्च। इह तु सिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ॥६॥

तत्र शब्दप्रादुर्भावो दुर्गन्धता त्वक्सङ्कोचश्च त्वग्दग्धे। कपोतवर्णताल्पश्वयथुवेदना शुष्कसङ्कुचितव्रणता च मांसदग्धे। कृष्णोन्नतव्रणतास्रावसन्निरोधश्च सिरास्नायुदग्धे। रूक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे ॥७॥

तत्र शिरोरोगाधिमन्थयोर्भ्रूललाटशङ्खप्रदेशेषु दहेत्। वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् दहेत्। त्वङ्मांससिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजे वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुदभगन्दरापचीश्लीपदचर्मकीलतिलकालकान्त्रवृद्धिसन्धिसिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म कुर्य्यात् ॥८॥

तत्र रोगाधिष्ठानभेदादग्निकर्म चतुर्धा भिद्यते। तद्यथा। वलयबिन्दुविलेखाप्रतिसारणानीति दहनविशेषाः ॥९॥

भवति चात्र ।

रोगस्य संस्थानमतो विदित्वा नरस्य मर्म्माणि बलाबलञ्च ।
व्याधिं तथर्त्तुञ्च समीक्ष्य सम्यक् ततो व्यवस्येद्भिषगग्निकर्म्म ॥१०॥

तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्गः । अथेमानग्निना परिहरेत् पित्तप्रकृतिमन्तःशोणितं भिन्नकोष्ठमनुद्धृतशल्यं दुर्बलं बालं वृद्धं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति ॥११॥

अत ऊर्द्ध्वमितरथा दग्धलक्षणं वक्ष्यामः । तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति । अग्निसन्तप्तो हि स्नेहः सूक्ष्मसिरानुसारित्वात्त्वगादीननुप्रविश्याशु दहति । तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति ॥१२॥

तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धञ्चेति चतुर्विधमग्निदग्धम् । तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टम् । यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम् । सम्यग्दग्धमनवगाढं तालफलवर्णं सुसंस्थितं पूर्वलक्षणयुक्तञ्च । अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति व्रणश्चास्य चिरेण रोहति रूढ़श्च विवर्णो भवति । तदेतच्चतुर्विधमग्निदग्धलक्षणमात्मकर्मप्रसाधकं भवति ॥१३॥

भवन्ति चात्र ।

अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति ।
ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्य्यते ॥१४॥
तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा ।

तेनास्य वेदनास्तीव्रा प्रकृत्या च विदह्यते ॥१५॥
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते।
दग्धस्योपशमार्थाय चिकित्सा सम्प्रवक्ष्यते ॥१६॥
प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम्।
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ॥१७॥
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम्।
तस्मात्सुखयति ह्युष्णं न तु शीतं कथञ्चन ॥१८॥
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्याद्भिषक् पुनः।
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत् ॥१९॥
सम्यग्दग्धे तु गाचीरीप्लक्षचन्दनगैरिकैः।
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक् ॥२०॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत्।
पित्तविद्रधिवच्चैनं सन्ततोष्माणमाचरेत् ॥२१॥
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम्।
क्रियां कुर्य्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥२२॥
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत्।
व्रणं गुडूचीपत्रैर्वा छादयेदथवौदकैः।
क्रियाञ्च निखिलां कुर्य्याद्भिषक् पित्तविसर्पवत् ॥२३॥
मधूच्छिष्टं समधुकं रोध्रं सर्जरसं तथा।
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥२४॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत्।
अत ऊर्द्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् ॥२५॥
श्वसिति क्षौति चात्यर्थमत्याधमति कासते।

चक्षुषो परिदाहश्च रागश्चैवोपजायते ॥२६॥
सधूमकं निःश्वसिति घ्रेयमन्यन्न वेत्ति च ।
तथैव च रसान् सर्वान् श्रुतिश्चास्योपहन्यते ॥२७॥
तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति ।
धूमोपहत इत्येवं शृणु तस्य चिकित्सितम् ॥२८॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥२९॥
वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति ।
विधिनानेन शाम्यन्ति सदनक्षवथुज्वराः ॥३०॥
दाहमूर्च्छातृडाध्मानश्वासकासाश्च दारुणाः ।
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥३१॥
सम्यग्गृह्णातीन्द्रियार्थान् मनश्चास्य प्रसीदति ।
शिरोविरेचनं तस्मै दद्याद्योगेन शास्त्रवित् ॥३२॥
दृष्टिर्विशुध्यते चास्य शिरोग्रीवञ्च देहिनः ।
अविदाहि लघुस्निग्धमाहारं चास्य कल्पयेत् ॥३३॥
उष्णवातातपैर्दग्धे शीतः कार्य्यो विधिः सदा ।
शीतवर्षानिलैर्दग्धे उष्णः स्निग्धश्च शस्यते ।
तथातितेजसा दग्धे सिद्धिर्नास्ति कथञ्चन ॥३४॥
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ।
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥३५॥

---

## त्रयोदशोऽध्यायः ।

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥१॥
नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं

परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः ॥२॥

तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालावुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्वाणि सर्वैर्वा ॥३॥

भवन्ति चात्र ।

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् ।
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥४॥
शीताधिवासा मधुरा जलौका वारिसम्भवा ।
तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥५॥
अलावु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् ।
तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥६॥

तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेद्वा चूषणात् । सान्तर्दीपयाऽलाव्वा ॥७॥

अथ जलायुका वक्ष्यन्ते । जलमासामायुरिति जलायुका, जलमासामोक इति जलौकसः । ता द्वादश तासां सविषाः षट् तावत्य एव निर्विषाः । तत्र सविषाः कृष्णा कर्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्णवर्णा पृथुशिरा कृष्णा । वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्वुरा । रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महा-

गद पानालेपननस्यकर्मादिषूपयोज्य। इन्द्रायुधादृष्टम-साध्यमित्येता सविषा सचिकित्सिता व्याख्याता ॥८॥

अथ निर्विषा। कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति।

तत्र मन शिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्ध मुद्गवर्णा कपिला। किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला। यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाष्टा-दशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे। इत्येता अविषा व्याख्याता। तासां यवनपाण्ड्यसह्यपौतनादीनि क्षे-त्राणि। तेषु महाशरीरा बलवत्य शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति। तत्र सविषमत्स्यकीटदर्दुर-मूत्रपुरीषकोथजाता कलुषेष्वम्भःसु च सविषा। पद्मोत्पल-नलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता वि-मलेष्वम्भःसु च निर्विषा ॥९॥

भवति चात्र।

क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखा ॥१०॥

तासां ग्रहणमार्द्रचर्मणान्यैर्वा प्रयोगैर्गृह्णीयात्। अथैना नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निद-ध्यात्। भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दा-ञ्चूर्णीकृत्य शय्यार्थं तृणमौदकानि च पत्राणि। त्र्यहात् त्र्य

हाश्चान्यज्जलं भक्ष्यञ्च दद्यात् सप्तरात्रात्सप्तरात्राच्च घटमन्यं सङ्क्रामयेत् ॥११॥

भवति चात्र।

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः।
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥१२॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात्। गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्तंस्थिता विगतक्लमा ज्ञात्वा ताभीरोगं ग्राहयेत्। सूक्ष्मशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयादगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत्। यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद् गृह्णातीति चार्द्रवस्त्रावच्छन्नां धारयेत्सेचयेच्च। दंशे तोदकण्डुप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोममनुमार्जयेदा मुखाद्वामयेत्तावद्यावत्सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्वान्ता तां पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्ता पूर्ववत्सन्निदध्यात्

शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद् बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति ॥१३॥

भवति चात्र ।

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।
जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान् ॥१४॥

---

## चतुर्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ।

तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते । तस्य च हृदयं स्थानं स हृदयाच्चतुर्विंशतिं धमनीरनुप्रविश्योर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा । तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः । तस्मिन् सर्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति । अत्रोच्यते स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते । स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति ॥१॥

भवतश्चात्र ।

रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥२॥

रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते ।
तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥३॥

आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः ॥४॥

विस्रता द्रवता रागः स्पन्दनं लघुता तथा ।
भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥५॥

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥६॥

तत्रैषां धातूनामन्नपानरसः प्रीणयिता ॥७॥

रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।
अन्नात्पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः ॥८॥

तत्र रस गतौ धातुरहरहर्गच्छतीत्यतो रसः । स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धाताववतिष्ठते एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवमिति ॥९॥

भवति चात्र ।

अष्टादश सहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ।
कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥१०॥

स शब्दार्च्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम् । वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद्विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥११॥

यथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीत्यथवास्ति सतां भावानामभिव्यक्तिरिति ज्ञात्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते स एव गन्धो विवृतपत्रकेशरे

कालान्तरेणाभिव्यक्तिं गच्छत्येव बालानामपि वय परिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयोऽथार्त्तवादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनै शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति। स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वान्न प्रीणनो भवति। त एते शरीरधारणाद्धातव इत्युच्यन्ते तेषां क्षयवृद्धी शोणितनिमित्ते तस्मात्तदधिकृत्य वक्ष्याम ॥१२॥

तत्र फेनिलमरुणं कृष्णं परुष तनु शीघ्रगमस्कन्दि च वातेन दुष्टम्। नील पीत हरित श्याव विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम। गैरिकोदकप्रतीकाश स्निग्ध शीतल बहल पिच्छिल चिरस्रावि मांसपेशीप्रभ श्लेष्मदुष्टञ्च। सर्वलक्षणसयुक्त काञ्जिकाभ विशेषतो दुर्गन्धि च सन्निपातदुष्टम्। पित्तवद्रक्तेनातिकृष्णञ्च। द्विदोषलिङ्ग ससृष्टम्। जीवशोणितमन्यत्र वक्ष्याम ॥१३॥

इन्द्रगोपप्रतीकाशमसहतमविवर्णञ्च प्रकृतिस्थ जानीयात्। विस्राव्याण्यन्यत्र वक्ष्याम। अथाऽविस्राव्या सर्वाङ्गशोफ क्षीणस्य चाम्लभोजननिमित्त पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनाञ्च श्वयथव ॥१४॥

तत्र शस्त्रविस्रावण द्विविध प्रच्छान सिराव्यधनञ्च। तत्र ऋज्वसङ्कीर्ण सूक्ष्म सममनवगाढमनुत्तानमाशु च शस्त्र पातयेन्मर्म सिरास्नायुसन्धीनां चानुपघाति। तत्र दुर्दिने दुर्विद्धे शीतवातयोरस्विन्नेऽभुक्तवत स्कन्नत्वाच्छोणित न स्रवत्यल्प वा स्रवति ॥१५॥

भवति चात्र।

मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम्।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते ॥१६॥

तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत्। अत्युष्णातिस्विन्नातिविद्धेष्वज्ञैर्विस्रावितमतिप्रवर्त्तते। तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थतिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणञ्चापादयति ॥१७॥

भवन्ति चात्र।

तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते।
यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् ॥१८॥
सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते।
शुद्धं तदा विजानीयात्सम्यग्विस्रावितञ्च तत् ॥१९॥
लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः।
सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥२०॥
त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये।
रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥२१॥

अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः सर्षपतैललवणप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते। अथातिप्रवृत्ते लोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैर्व्रणमुखमव-

चूर्णाङ्गुल्यग्रेणावपीडयेत् । सालसर्जार्जुनारिमेदमेषशृङ्ग-धवधन्वनत्वग्भिर्वा चूर्णिताभि क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात् । शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत् क्षारेणाग्निना वा दहेद्यथोक्तव्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत् । काकोल्यादिक्वाथ वा शर्करामधुमधुर पाययेत् । एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिर क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत् ॥२२॥

भवन्ति चात्र ।

धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनल' ।
पवनश्च परं कोप याति तस्मात् प्रयत्नत ॥२३॥
अनातिशीतैर्लघुभि स्निग्धैः शोणितवर्द्धनैः ।
ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥२४॥
चतुर्विध यदेतद्धि रुधिरस्य निवारणम् ।
सन्धान स्कन्दनञ्चैव पाचन दहन तथा ॥२५॥
व्रण कषाय. सन्धत्ते रक्त स्कन्दयते हिमम् ।
तथा सम्पाचयेद्भस्म दाह' सङ्कोचयेत् सिरा ॥२६॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत् ।
सन्धाने भ्रस्यमाने तु पाचनै' समुपाचरेत् ॥२७॥
कल्पैरेतैस्त्रिभिर्वैद्य प्रयतेत यथाविधि ।
असिद्धिमत्सु चैतेषु दाह' परम इष्यते ॥२८॥
सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते ।
सावशेषे तत. स्थेय न तु कुर्य्यादतिक्रमम ॥२९॥

देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते।
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥२०॥
स्रुतरक्तस्य सेकाद्यैः शीते प्रकुपितेऽनिले।
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥२१॥

---

## पञ्चदशोऽध्यायः।

अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः। दोषधातुमलमूलं हि शरीरं तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥१॥

तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति ॥२॥

रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा प्रविभक्तमग्निकर्म्मणानुग्रहं करोति ॥३॥

सन्धिसंश्लेषणस्नेहनरोपणपूरणबृंहणतर्पणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति ॥४॥

रसः प्रीणयति रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्ज्ञः पुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थञ्च ॥५॥

पुरीषमुपस्तम्भं वायुग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत्। रक्तलक्षणमार्त्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्वजननं जीवनञ्चेति। तेषां विधिवत्परिरक्षणं कुर्वीत ॥६॥

अत ऊर्द्धमेषां क्षीणलक्षणं वक्ष्यामः। क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति ॥७॥

तत्र वातक्षये मन्दचेष्टताल्पवाक्त्वमल्पहर्षो मूढ़संज्ञता च। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च। श्लेष्मक्षये रूक्षतान्तर्दाह आमाशयेतराशयशिरसां शून्यता सन्धिशैथिल्यं तृष्णा दौर्बल्यं प्रजागरणञ्च। तत्र स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः ॥८॥

रसक्षये हृत्पीडा कम्पः शून्यता तृष्णा च। शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यञ्च। मांसक्षये स्फिग्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कतारौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यञ्च। मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च। अस्थिक्षयेऽस्थितोदो दन्तनखभङ्गो रौक्ष्यञ्च। मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च। शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनञ्च। तत्रापि स्वयोनिवर्द्धनद्रव्योपयोगः प्रतीकारः ॥९॥

पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्द्धगमनं कुक्षौ सञ्चरणञ्च। मूत्रक्षये वस्तितोदोऽल्पमूत्रता च। अत्रापि स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः। स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च तत्राभ्यङ्गः स्वेदोपयोगश्च। आर्त्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च। तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां

विधिवदुपयोग. । स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा तत्र श्लेष्मवर्द्धनद्रव्योपयोग । गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च तत्र प्राप्तवस्तिकालाया क्षीरवस्तिप्रयोगो मेध्यान्नोपयोगश्चेति ॥१०॥

अत ऊर्द्धमतिवृद्धाना दोषधातुमलाना लक्षणं वक्ष्यामः। वृद्धिः पुनरेषा स्वयोनिवर्द्धनाभ्युपसेवनाद्भवति। तत्र वातवृद्धौ त्वक्पारुष्य कार्श्यं कार्ष्ण्य गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्व गाढवर्चस्त्वञ्च। पित्तवृद्धौ पीतावभासता सन्ताप शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्य पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्य शैत्य स्थैर्य्य गौरवमवसादस्तन्द्रानिद्रा सन्ध्यस्थिविश्लेषश्च। रसोऽतिवृद्धो हृदयोत्क्लेद प्रसेकञ्चापादयति। रक्त रक्ताङ्गाक्षता सिरापूर्णत्वञ्च। मास स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धि गुरुगात्रताञ्च। मेद. स्निग्धाङ्गतामुदरपार्श्ववृद्धि कासश्वासादीन् दौर्गन्ध्यञ्च। अस्थि अध्यस्थीन्यधिदन्तांश्च। मज्जा सर्वाङ्गनेत्रगौरवम्। शुक्र शुक्राश्मरीमतिप्रादुर्भावञ्च। पुरीषमाटोप कुक्षौ शूलञ्च। मूत्र मुहुर्मुहु प्रवृत्ति वस्तितोदमाध्मानञ्च। स्वेदस्त्वचो दौर्गन्ध्य कण्डूञ्च। आर्त्तवमङ्गमर्दमतिप्रवृत्तिं दौर्बल्यञ्च। स्तन्य स्तनयोरापीनत्वं मुहुर्मुहु. प्रवृत्तिं तोदञ्च। गर्भो जठराभिवृद्धि शोथञ्च। तेषा यथास्वं संशोधनं क्षपणञ्च क्षयादविरुद्धै. क्रियाविशेषैः प्रतिकुर्वीत ॥११॥

पूर्वं पूर्वोऽतिवृद्धत्वाद्वर्द्धयेद्धि परं परम्।
तस्मादतिप्रवृद्धाना धातूनां ह्रासनं हितम् ॥१२॥

बलक्षणं बलक्षयलक्षणमत ऊर्द्ध्वं वक्ष्यामः । तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात् । तत्र बलेन स्थिरोपचितमांसता सर्व्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति ॥१३॥

भवन्ति चात्र ।

ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं रसम् ।
विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम् ॥१४॥
देहस्यावयवस्तेन व्याप्तो भवति देहिनाम् ।
तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम् ॥१५॥
अभिघातात् क्षयात्कोपाच्छोकाद्ध्यानात् श्रमात् क्षुधः ।
ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ।
तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥१६॥

तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति । सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे । स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने । मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति क्षये ॥१७॥

भवन्ति चात्र ।

त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ।
विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ।
अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम् ॥१८॥
गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्व्वर्णस्य भेदनम् ।
तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥१९॥

मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च।
पूर्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये ॥२०॥

तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्यापयेत्, नष्टसंज्ञमितरञ्च वर्जयेत् ॥२१॥

तेजोऽप्याग्नेय क्रमश. पच्यमानाना धातूनामभिनिर्वृत्तमन्तरस्थ स्नेहजात वसाख्य स्त्रीणा विशेषतो भवति, तेन मार्दवसौकुमार्य्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति। तत् कषायतिक्तशीतरुक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते। तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति। कार्श्यं मन्दाग्निताधस्थैर्य्यच्युतिर्व्यापत्तौ दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये, तत्रापि स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षये, विदधीत ॥२२॥

भवन्ति चात्र।

दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः।
स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥२३॥
यद्यदाहारजात हि क्षीणः प्रार्थयते नर.।
तस्य तस्य स लाभे तु त त क्षयमपोहति ॥२४॥
अस्य धातुक्षयाद्वायु संज्ञा कर्म च नाशयेत्।
प्रक्षीणञ्च बल यस्य नासौ शक्यश्चिकित्सितुम् ॥२५॥

रसनिमित्तमेव स्थौल्य कार्श्यञ्च तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति तमतिस्थूलं क्षुद्रश्वासपिपासाक्षु-

त्स्वप्नखेदगात्रदौर्गन्ध्यक्राथनगात्रसादगद्गदत्वानि क्षिप्रमे-
वाविशन्ति सौकुमार्य्यं मेदस सर्वक्रियास्वसमर्थं कफमेदो-
निरुद्धमार्गत्वाच्चाल्पव्यवायो भवत्यावृतमार्गत्वादेवं शेषा
धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति प्रमेहपिडि-
काज्वरभगन्दरविद्रधिवातविकाराणामन्यतम प्राप्य पञ्चत्व-
मुपयाति सर्वं एव चास्य रोगा बलवन्तो भवन्त्यावृतमा-
र्गत्वात् स्रोतसामतस्तस्योत्पत्तिहेतु परिहरेत्। उत्पन्ने
तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुय-
वमुद्गकोरदूषकश्यामाकोद्दालकादीना विरूक्षणच्छेदनी-
यानाञ्च द्रव्याणा विधिवदुपयोगो व्यायामो लेखनवस्त्यु-
पयोगश्चेति ॥२६॥

तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययन
भयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृति-
भिरुपशोषितो रसधातु शरीरमननुक्रामन्नल्पत्वान्न प्रीणय-
ति तस्मादतिकार्श्यञ्च भवति। सोऽतिकृश क्षुत्पिपासाशी-
तोष्णवातवर्षभारादानेष्वसहिष्णु वातरोगप्रायोऽल्पप्रा-
णश्च क्रियासु भवति श्वासकासशोषप्लीहोदराग्निसादगुल्म-
रक्तपित्तानामन्यतम प्राप्य मरणमुपयाति। सर्वं एव चास्य
रोगा बलवन्तो भवन्त्यल्पप्राणत्वादतस्तस्योत्पत्तिहेतु परि-
हरेत्। उत्पन्ने तु पयस्याश्वगन्धाविदारीविदारीगन्धाश-
तावरीबलातिबलानागबलाना मधुराणामन्यासाञ्चौषधी-
नामुपयोग. क्षीरदधिघृतमासशालिषष्टिकयवगोधूमानाञ्च
दिवास्वप्नब्रह्मचर्य्याव्यायामबृंहणवस्त्युपयोगश्चेति ॥२७॥

य. पुनरुभयसाधारणान्युपसेवेत तस्यान्नरसः शरीर

मनुव्रामन् समान् धातूनुपचिनोति समधातुत्वान्मध्यश-रीरो भवति सर्वक्रियासु समर्थ. क्षुत्पिपासाशीतोष्णवर्षा-तपसहो बलवांश्च स सततमनुपालयितव्य इति ॥२८॥

भवन्ति चात्र ।

अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ ।
श्रेष्ठो मध्यशरीरस्तु कृश' स्थूलात्तु पूजित. ॥२९॥
दोष. प्रकुपितो धातून् क्षपयत्यात्मतेजसा ।
इद्ध स्वतेजसा वह्निरुखागतमिवोदकम् ॥३०॥
वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च ।
दोषधातुमलानान्तु परिमाण न विद्यते ॥३१॥
एषा समत्व' यच्चापि भिषग्भिरवधार्यते ।
न तत् स्वास्थ्यादृते शक्य वक्तुमन्येन हेतुना ॥३२॥
दोषादीना त्वसमतामनुमानेन लक्षयेत् ।
अप्रसन्नेन्द्रिय वीक्ष्य पुरुष कुशलो भिषक् ।
समदोष. समाग्निश्च समधातुमलक्रिय: ॥३३॥
प्रसन्नात्मेन्द्रियमना स्वस्थ इत्यभिधीयते ।
स्वस्थस्य रक्षणं कुर्य्यादस्वस्थस्य तु बुद्धिमान् ॥३४॥
क्षपयेद् बृंहयेच्चापि दोषधातुमलान् भिषक् ।
तावद्यावदरोग. स्यान्नरो रोगसमन्वित. ॥३५॥

---

षोडशोऽध्याय ।

अथात' कर्णव्यधबन्धविधिमध्यायं व्याख्यास्याम: ।

रक्षाभूषणनिमित्त बालस्य कर्णौ विध्येते षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु

कृतमङ्गलस्वस्तिवाचन धात्र्यङ्के कुमारमुपवेश्य बालक्रीड-
नकै प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं
दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिण-
हस्तेन ऋजु विध्येत् प्रतनुकं सूच्या बहलमारया पूर्वं
दक्षिणं कुमारस्य वाम कन्यायास्ततः पिचुवर्त्तिं प्रवेश्य
सम्यक् विद्धमामतैलेन परिषेचयेत् । शोणितबहुत्वेन
वेदनया वान्यदेशविद्धमिति जानीयान्निरुपद्रवतया तद्देश-
विद्धमिति ॥१॥

तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्मरि-
कालोहितिकासूपद्रवा भवन्ति । तत्र कालिकाया ज्वरो
दाहः श्वयथुर्वेदना च भवति । मर्मरिकाया वेदना ज्वरो
ग्रन्थयश्च । लोहितिकाया मन्यास्तम्भापतानकशिरोग्रह-
कर्णशूलानि भवन्ति । तेषु यथास्वं प्रतिकुर्वीत । क्लिष्ट-
जिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्त्तित्वाद्दोषप्रकोपादप्रशस्त-
व्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्त्तिमुपहृ-
त्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरा-
लेपयेत्तावद् यावत् सुरूढ इति सुरूढं चैनं पुनर्विध्येत्
विधानन्तु पूर्वोक्तमेव । त्र्यहात् त्र्यहाच्च वर्त्तिं स्थूलतरां
दद्यात्परिषेक तमेव । अथ व्यपगतदोषोपद्रवे कर्णे वर्द्ध-
नार्थं लघुवर्द्धनक कुर्य्यात् ॥२॥

भवति चात्र ।

एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम् ।
दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु ॥३॥
तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः । तद्यथा ।

नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्वेधिमो व्यायोजिम. कपाट-सन्धिकोऽर्द्धकपाटसन्धिक सङ्क्षिप्तो हीनकर्णो वल्लीकर्ण: यष्टिकर्ण: काकौष्ठक इति। तेषु पृथुलायतसमोभयपालि-र्नेमिसन्धानक । वृत्तायतसमोभयपालिरुत्पलभेद्यक । ह्रस्ववृत्तसमोभयपालिर्वल्लूरक:। अभ्यन्तरदीर्घैकपालिरा-सङ्गिम । बाह्यदीर्घैकपालिर्गण्डकर्ण.। अपालिरुभय-तोऽप्याहार्य्य । पीठोपमपालिरुभयत क्षीणपुत्रिकाश्रितो निर्वेधिम.। स्थूलाणुसमविषमपालिर्व्यायोजिम । अभ्य-न्तरदीर्घैकपालिरितराल्पपालि कपाटसन्धिक । बाह्य-दीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिक । तत्र दशैते कर्णबन्धविकल्पा' साध्यास्तेषां स्वनामभिरेवाकृतय' प्रायेण व्याख्याता । सङ्क्षिप्तादय. पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालि: सङ्क्षिप्त । अन-धिष्ठानपालि. पर्य्यन्तयो: क्षीणमांसो हीनकर्ण । तनु-विषमाल्पपालिर्वल्लीकर्ण । ग्रथितमांसस्तब्धसिराततसूक्ष्मपालिर्यष्टिकर्ण । निर्मांससङ्क्षिप्ताग्राल्पशोणितपालि काकौष्ठकपालिरिति। बन्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति ॥४॥

भवन्ति चात्र।

यस्य पालिद्वयमपि कर्णस्य न भवेदिह ।
कर्णपीठं समे मध्ये तस्य विद्ध्वा विवर्द्धयेत् ॥५॥
बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् ।

आभ्यन्तरार्धां दीर्घायां वाह्यसन्धिरुदाहृत ॥६॥
एकैव तु भवेत् पालि स्थूला पृथ्वी स्थिरा च या।
तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् ॥७॥
गण्डादुत्पाद्य मांसेन सानुबन्धेन जीवता।
कर्णपालीमपालेस्तु कुर्य्यान्निर्लिख्य शास्त्रवित् ॥८॥

अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसम्भृतसम्भारः विशेषतश्चात्रोपहरेत सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति। ततोऽङ्गनां पुरुषं वा ग्रन्थितकेशान्तं लघुभुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नैरुपपाद्य कर्णं शोणितमवेक्षेत तद् दुष्टमदुष्टं चेति। तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात्। ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेद् द्विव्रणीयोक्तेन च विधानेनोपचरेत् ॥९॥

भवतश्चात्र।

विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम्।
व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्जयेत् ॥१०॥
आमतैलपरीषेकं त्रिरात्रमवचारयेत्।
ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम् ॥११॥

न चासशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा सन्दध्यात्। स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्। पित्तदुष्टे

दाहपाकरागवेदनावान्। श्लेष्मदुष्टे स्तब्ध' कण्डूमान्। अतिप्रवृत्तरक्ते श्यावशोफवान। क्षीणोऽल्पमांसो न वृद्धिमुपैति। स यदा सुरूढो निरुपद्रव सवर्णो भवति तदैन शनै शनैरभिवर्द्धयेत। अतोऽन्यथा सरम्भदाहपाकरागवेदनावान् पुनर्श्छिद्यते वा। अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्ग। तद्यथा, गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पय सर्पिस्तैल गौरसर्षपजञ्च यथालाभ सम्भृत्याकौलकबलातिबलानन्तापामार्गाश्वगन्धाक्षीर शुक्लाजलशूकमधुरवर्गप्रतिवाप तैल वा पाचयित्वा स्वनुगुप्त निदध्यात् ॥१२॥

स्वेदितोन्मर्दित कर्ण स्नेहेनानेन योजयेत्।
अथानुपद्रव सम्यक् बलवाश्च विवर्द्धते ॥१३॥
यवाश्वगन्धायष्ट्याह्वै स्तिलैश्चोद्वर्त्तन हितम।
शतावर्य्यश्वगन्धाभ्या पयस्यैरण्डजीवनै ॥१४॥
तैल विपक्व सक्षीरमभ्यङ्गात् पालिवर्द्धनम।
ये तु कर्णा न वर्द्धन्ते विधिनानेन योजिता ॥१५॥
तेषामपाङ्गदेशेषु कुर्य्यात् प्रच्छानमेव तु।
बाह्यच्छेद न कुर्वीत व्यापदस्तु ततो ध्रुवा' ॥१६॥
बद्धमात्रन्तु य कर्ण सहसैवाभिवर्द्धयेत्।
आमकोशी समाध्मात, क्षिप्रमेव विमुच्यते ॥१७॥
जातरोमा सुवर्त्मा च श्लिष्टसन्धि सम स्थिर।
सुरूढोऽवेदनो यस्तु त कर्ण वर्द्धयेच्छनै ॥१८॥
अमिता कर्णबन्धास्तु विज्ञेया कुशलैरिह।
यो यथा सुनिविष्ट स्यात् त तथा विनियोजयेत् ॥१९॥
कर्णपाल्यामयान्नृणा पुनर्वक्ष्यामि सुश्रुत।।

कर्णपाल्या प्रकुपिता वातपित्तकफास्त्रय ॥२०॥
द्विशो वाप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः।
विस्फोट स्तब्धता शोफ पाल्या दोषे तु वातिके ॥२१॥
दाहविस्फोटजनन शोफ पाकश्च पैत्तिके।
कण्डूः सश्वयथुस्तम्भो गुरुत्वञ्च कफात्मके ॥२२॥
यथादोषञ्च सशोध्य कुर्य्यात्तेषा चिकित्सितम्।
स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥२३॥
मृद्वीं क्रिया वृहणीयैर्यथास्वं भोजनैस्तथा।
य एव वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति ॥२४॥
अत ऊर्द्धं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान्।
उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥२५॥
अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा।
स्रावी च दाहवाश्चैव शृणुत्वेषां क्रमश क्रियाम् ॥२६॥
अपामार्गं सर्जरस पाटलालकुचत्वचौ।
उत्पाटके प्रलेप स्यात्तैलमेभिश्च पाचयेत् ॥२७॥
शम्पाकश्चिग्रुपूतीकगोधामेदोऽथ तद्वसा।
वाराह गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥२८॥
लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम्।
गौरीं सुगन्धां सश्यामामनन्ता तण्डुलीयकम् ॥२९॥
श्यावे प्रलेपन दद्यात्तैलमेभिश्च साधितम्।
पाठा रसाञ्जन क्षौद्र तथा स्यादुष्णकाञ्जिकम् ॥३०॥
दद्याल्लेप सकण्डूके तैलमेभिश्च साधितम्।
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥३१॥
मधुक क्षीरकाकोलिजीवकाद्यैर्विपाचितम्।

गोधावराहसर्पाणां वसा स्यु क्षतह हणे ॥२२॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ।
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥२३॥
तैलमेभिश्च सम्पक्क शृणु कण्डूमतः क्रियाम् ।
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ।
एतैरालेपनं दद्यात्तैलमेभिश्च साधितम् ॥२४॥
ग्रन्थिके गुटिकां पूर्वं स्रावयेदवपाट्य तु ।
ततः सैन्धवचूर्णन्तु घृष्ट्वा लेपं प्रदापयेत् ॥२५॥
लिखित्वा ततः स्रुतं घृष्ट्वा चूर्णैरोध्रस्य जम्बुले ।
क्षीरेण प्रतिसार्य्यैनं शुद्धं संरोपयेत्ततः ॥२६॥
मधुपर्णीं मधुकञ्च मधुकं मधुना सह ।
लेपः स्राविणि दातव्यस्तैलमेभिश्च साधितम् ॥२७॥
पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ।
जीवकाद्यैः सर्सर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥२८॥

विश्लेषितायास्त्वथ नासिकाया
वक्ष्यामि सन्धानविधिं यथावत् ।
नासाप्रमाणं पृथिवीरुहाणां
पत्रं गृहीत्वा त्ववलम्बितस्य ॥२९॥
तेन प्रमाणेन हि गण्डपार्श्वा-
दुत्कृत्य बद्धं त्वथ नासिकाग्रम् ।
विलिख्य चाशु प्रतिसन्दधीत
तत् साधुबन्धैर्भिषगप्रमत्तः ॥४०॥
सुसंहितं सम्यगतो यथाव-
न्नाडीद्वयेनाभिसमीक्ष्य बद्धा ।

प्रोन्नम्य चैनामवचूर्णयेच्च
पत्तङ्गयष्टीमधुकाञ्जनैश्च ॥४१॥
सञ्छाद्य सम्यक् पिचुना सितेन
तैलेन सिञ्चेदसकृत्तिलानाम् ।
घृतञ्च पाय्यः स नरः सुजीर्णे
स्निग्धो विरेच्यः स यथोपदेशम् ॥४२॥
रूढञ्च सन्धानमुपागतं स्यात्
तद्वर्द्धशेषन्तु पुनर्निकृन्तेत् ।
हीनां पुनर्वर्द्धयितुं यतेत
समाञ्च कुर्य्यादतिवृद्धमांसाम् ॥४३॥
नाड़ीयोगं विनौष्ठस्य नासासन्धानवद्विधिम् ।
य एवमेवं जानीयात् स राज्ञः कर्त्तुमर्हति ॥४४॥

---

## सप्तदशोऽध्यायः ।

अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः ।

शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिधास्यन्तेऽनेकाकृतयस्तैर्विलक्षणः पृथुर्ग्रथितसमो विषमो वा त्वङ्मांसस्थायी दोषसङ्घातः शरीरैकदेशोत्थितः शोफ इत्युच्यते ॥१॥

स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः ।

तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः । तत्र वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति । पित्तशोफः पीतो मृदुः

सरक्तो वा शीघ्रानुसारी चोषादयश्चात्र वेदनाविशेषा भव न्ति। श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्व-वर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च॥२॥

स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रश-मयितुं क्रियाविपर्ययाद् बहुत्वाद्वा दोषाणां तदा पाका-भिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय। तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्यं मन्दवेदनताल्पशोफता चामलक्षण-मुद्दिष्टम्। सूचिभिरिव निस्तुद्यते दश्यत इव पिपीलिका-भिस्ताभिश्च संसृप्यत इव छिद्यत इव शस्त्रेण भिद्यत इव शक्तिभिस्ताड्यत इव दण्डेन पीड्यत इव पाणिना घट्टयत इव चाङ्गुल्या दह्यते पच्यत इव चाग्निक्षाराभ्यामोषचोषप-रीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्य-मानलिङ्गम्॥३॥

वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भाव-स्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीडिते प्रत्युन्नमनं वस्ता-विवोदकसञ्चरणं पूयस्य प्रपीडयत्येकमन्तमन्ते वावपीडिते मुहुर्मुहुस्तोदः कण्डूरुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ता-भिकाङ्क्षा च पक्वलिङ्गम्॥४॥

कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा

केषुचिदसमस्त पक्कलक्षणं दृष्ट्वा पक्कमपक्कमिति मन्यमानो भिषग् मोहमुपैति । यत्र हि त्वक्सवर्णता शीतशोफता स्थैल्यमल्परुजताश्मवद्घनता न तत्र मोहमुपेयादिति ॥५॥

भवन्ति चात्र ।

आमं विपच्यमानञ्च सम्यक् पक्कञ्च यो भिषक् ।
जानीयात्स भवेद्वैद्य शेषास्तस्कवृत्तय ॥६॥

वातादृते नास्ति रुजा न पाक.
पित्तादृते नास्ति कफाच्च पूय ।
तस्मात्समस्ता परिपाककाले
पचन्ति शोफांस्त्रय एव दोषा ॥७॥
कालान्तरेणाभ्युदितन्तु पित्त
कृत्वा वशे वातकफौ प्रसह्य ।
पचत्यत. शोणितमेष पाको
मतोऽपरेषां विदुषां द्वितीय ॥८॥

तत्रामच्छेदे मांसशिरास्नायुस्थिसन्धिव्यापादनमतिमात्र शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शन क्षतविद्रधिर्वा भवति । स यदा भयमोहाभ्या पक्कमप्यपक्कमिति मन्यमानश्चिरमुपेक्षते व्याधि वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूय. स्वमाश्रयमवदीर्य्योत्सङ्ग महान्तमवकाशं कृत्वा नाडीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति ॥९॥

भवन्ति चात्र ।

यश्छिनत्याममज्ञानाद् यश्च पक्कमुपेक्षते ।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥१०॥

प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक्।
मद्यपं पाययेन्मद्यं तीक्ष्णं योऽवेदनासहः ॥११॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते।
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्मणि ॥१२॥
प्राणो ह्याभ्यन्तरो नृणां वाह्यप्राणगुणान्वितः।
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥१३॥

अल्पो महान् वा क्रियया विना यः
समुच्छ्रितः पाकमुपैति शोफः।
विशालमूलो विषमो विदग्धः
स कृच्छ्रतां यात्यवगाढदोषः ॥१४॥
आलेपविस्रावणशोधनैश्च
सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्।
पच्येत शीघ्रं सममल्पमूलः
स पिण्डितश्चोपरि चोन्नतः स्यात् ॥१५॥
कक्षं समासाद्य यथैव वह्नि-
र्वायुरितः सन्दहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि
मांसं शिरास्नायु च खादतीह ॥१६॥

आदौ विम्लापनं कुर्य्याद् द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥१७॥
पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥१८॥

———

## अष्टादशोऽध्यायः ।

अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः ।

आलेप आद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च। तञ्च प्रतिरोगं वक्ष्यामः। ततो बन्धः प्रधानं तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्य्यञ्च तत्र प्रतिलोममालिम्पेत् नानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठतेऽनुप्रविशति रोमकूपान् स्वेदवाहिभिः सिरामुखैश्च वीर्य्यं प्राप्नोति। न च शुष्यमाणमुपेक्षेतान्यत्र पीडयितव्यात्। शुष्को ह्यपार्थकोऽरुक्करश्च। स त्रिविधः प्रलेपः प्रदेह आलेपश्च तेषामन्तरं प्रलेपः शीतस्तनुरविशोषी विशोषी च। प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च। मध्यमोऽत्रालेपः। तत्र रक्तपित्तप्रसादकृदालेपः। प्रदेहो वातश्लेष्मप्रशमनः सन्धानः शोधनो रोपणः शोफवेदनापहश्च तस्योपयोगः क्षताक्षतेषु। यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञस्तेनास्रावरुतनिरोधो मृदुता पूतिमांसापकर्षणमन्तर्निर्दोषता व्रणशुद्धिश्च भवति ॥१॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत् ।
यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥२॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ।
दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम् ॥३॥
मर्म्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ।
संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक् ॥४॥
षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके ।
अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत् ॥५॥

तस्य प्रमाणमार्द्रमाहिषचर्मोत्सेधमुपदिशन्ति । न चालेपं रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमा-द्विकारप्रवृत्तिरिति ॥६॥

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ।
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥७॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत् ।
उपर्य्युपरि लेपन्तु न कदाचित् प्रदापयेत् ॥८॥
उष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि ।
न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ।
शुष्कभावात् स निर्वीर्य्यो युक्तोऽपि स्यादपार्थकः ॥९॥

अत ऊर्द्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः । तद्यथा क्षौम-कार्प्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्कलाला-बूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति ॥१०॥

तेषां व्याधिं कालञ्चावेक्ष्योपयोगः प्रकरणतश्चैषामादेशः । तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिका-यमकखट्टाचीनविबन्धवितानगोफणा पञ्चाङ्गी चेति चतु-र्द्दशबन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्या-ख्याताः ॥११॥

तत्र कोशमङ्गुष्ठाङ्गुलिपर्व्वसु विदध्यात् । दाम सम्बा-धेऽङ्गे । सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम् । अनुवेल्लितन्तु शाखासु । ग्रीवामेढ्रयोः प्रतोलीम् । वृत्ते-ऽङ्गे मण्डलम् । अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम् । यम-लव्रणयोर्यमकम् । हनुशङ्खगण्डेषु खट्टाम् । अपाङ्गयो-श्चीनं पृष्ठोदरोरःसु विबन्धम् । मूर्द्धनि वितानम् । चिबुक-

नासौष्ठांसवस्तिषु मोक्षणाम । जत्रुण ऊर्द्ध पञ्चाङ्गी-
मिति । यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति त
तस्मिन् विदध्यात् । बन्धगमत ऊर्द्धमधस्तिर्य्यक् च ॥१२॥

तत्र घना कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमना-
विद्धमसङ्कुचित मृदुपट्ट निवेश्य बध्नीयात् । न च व्रणस्यो-
परि कुर्य्याद्ग्रन्थिमाबाधकर वा । न च विकेशिकौषधे
अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत यस्मादतिस्नेहात्
क्लेदो रौक्ष्याच्छेदो दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति ॥१३॥

तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति गाढ
स्सम शिथिल इति ॥ १४॥

पीडयन्नरुजो गाढ. सोच्छ्वासः शिथिल स्मृत ।
नैव गाढो न शिथिल' समो बन्ध प्रकीर्त्तित ॥१५॥

तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरु शिर सु गाढ । शाखावद-
नकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोर सु सम । अक्ष्णो स-
न्धिषु च शिथिल इति । तत्र पैत्तिक गाढस्थाने सम बध्नी-
यात समस्थाने शिथिलं शिथिलस्थाने नैव शोणितदुष्टञ्च ।
श्लैष्मिक शिथिलस्थाने सम समस्थाने गाढ गाढस्थाने गाढ-
तरमेव वातदुष्टञ्च । तत्र पैत्तिक शरदि ग्रीष्मे द्विरह्नो बध्नी-
याद्रक्तोपद्रुतमप्येव श्लैष्मिक हेमन्तवसन्तयोस्त्र्यहाद्वातो-
पद्रुतमप्येवम् । एवमभ्यूह्य बन्धविपर्य्ययञ्च कुर्वीत । तत्र
समशिथिलस्थानेषु गाढबद्धे विकेशिकौषधनैरर्थक्य शोफ-
वेदनाप्रादुर्भावश्च । गाढसमस्थानेषु शिथिलबद्धे विकेशिकौ-
षधपतनं पट्टसञ्चाराद्व्रणवर्त्मावघर्षणमिति । गाढशिथि-
लस्थानेषु सम बद्धे च गुणाभाव इति ॥१६॥

अविपरीतवबन्धे वेदनोपशान्तिरसृकप्रसादो मार्दवञ्च। अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणो विविधवेदनोपद्रुतश्च दुष्टतामुपैत्यालेपनादीनि चास्य विशोषमुपयान्ति ॥१७॥

चूर्णित मथित भग्न विश्लिष्टमतिपातितम ।
अस्थि स्नायुसिराछिन्नमाशु बन्धेन रोहति ।१८।
सुखमेव व्रणी शेते सुख गच्छति तिष्ठति ।
सुख शय्यासनस्थस्य चिप्र संरोहति व्रण' ॥१९॥

अबन्ध्या पित्तरक्ताभिघातविषनिमित्ता यदा च शोफदाहपाकरागवेदनाभिभूता चाराग्निदग्धा पाकात् प्रकुपिता प्रविशीर्णमासाश्च भवन्ति ।२०॥

कुष्ठिनामग्निदग्धाना पिडका मधुमेहिनाम् ।
कर्णिकाश्चोन्दुरुविषे विषजुष्टव्रणाश्च ये ॥२१॥
मासपाके न बध्यन्ते गुदपाके च दारुणे ।
स्वबुद्या चापि विभजेत् कृत्याकृत्याश्च बुद्धिमान् ॥२२॥
देश दोषञ्च विज्ञाय व्रणञ्च व्रणकोविद ।
ऋतूंश्च परिसङ्ख्याय ततो बन्धान् निवेशयेत् ॥२३॥
ऊर्द्ध्व तिर्य्यगधस्ताच्च यन्त्रणा त्रिविधा मता ।
यथा च बध्यते बन्धस्तथा वच्याम्यशेषत. ॥२४॥
घना कवलिका दत्त्वा मृदु चैवापि पट्टकम् ।
विकेशिकामौषधञ्च नातिस्निग्ध समाचरेत् ॥२५॥
प्रक्लेदयत्यतिस्निग्धा तथा रूचा चिणोति च ।
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥२६॥
विषमञ्च व्रण कुर्य्यात् स्तम्भयेत् स्रावयेत्तथा ।

यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥२७॥
पित्तजे रक्तजे चापि सकृदेव परिक्षिपेत्।
असकृत्कफजे वापि वातजे च विचक्षणः ॥२८॥
तत्रैव प्रतिपीड्याथ स्रावयेदनुलोमतः।
सर्वांश्च बन्धान् गूढांस्तान् सन्धींश्च विनिवेशयेत् ॥२९॥
श्रोष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः।
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्त्रिषु जानता ॥३०॥
उत्तिष्ठतो निषण्णस्य शयनं चापि गच्छतः।
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥३१॥
ये च स्युर्मांसस्था वै त्वग्गताश्च तथा व्रणाः।
सन्ध्यस्थिकोष्ठप्राप्ताश्च सिरास्नायुगतास्तथा ॥३२॥
तथावगाढगम्भीराः सर्वतो विषमस्थिताः।
नैते साधयितुं शक्याः ऋते बन्धाद्भवन्ति हि ॥३३॥

---

## एकोनविंशोऽध्यायः।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः।

व्रणिनः प्रथममेवागारमन्विच्छेत्तच्चागारं प्रशस्तवास्त्वादिकं कार्य्यम् ॥१॥

प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते।
निवाते न च रोगाः स्युः शारीरागन्तुमानसाः ॥२॥

तस्मिन् शयनमसम्बाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं कुर्वीत ॥३॥

सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी।
प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं नतं शिरः ॥४॥

तस्मिन् सुहृद्भिरनुकूलै प्रियंवदैरुपास्यमानो यथेष्ट-मासीत ॥५॥

सुहृदो विचित्रमल्याश्च कथाभिर्न्नवेदना ।
आश्वासयन्तो बहुशस्त्वनुकूलाः प्रियंवदाः ॥६॥

न च दिवानिद्रावशगः स्यात् ॥७॥

दिवास्वप्नाद् व्रणे कण्डूर्गात्राणां गौरवं तथा ।
श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥८॥

उत्थानसंवेशनपरिवर्त्तनचङ्क्रमणोच्चैर्भाषणादिषु चात्म-चेष्टास्वप्रमत्तो व्रणं संरक्षेत् ॥९॥

स्थानासनं चङ्क्रमणं यानयानातिभाषणम् ।
व्रणवान्न निषेवेत शक्तिमानपि मानवः ॥१०॥

उत्थानाद्यासनं स्थानं शय्यां चातिनिषेविता ।
प्राप्नुयान्मारुतादृङ्गे रुजस्तस्माद्विवर्जयेत् ॥११॥

गम्यानाञ्च स्त्रीणां सन्दर्शनसम्भाषणसंस्पर्शनानि दूरतः परिहरेत् ॥१२॥

स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ।
ग्राम्यधर्मकृतान् दोषान् सोऽससर्गोऽप्यवाप्नुयात् ॥१३॥

नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाका-म्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदकक्रृशरापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत् ॥१४॥

तस्मात्तो नवधान्यादिर्योऽयं वर्गः प्रकीर्त्तितः ।
दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः ॥१५॥

मद्यञ्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत् ॥१६॥

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णञ्च वीर्य्यतः ।
आशुकारि च तत्पीतं क्षिप्रं व्यापादयेद् व्रणम् ॥१७॥

वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टश्रवणदर्शनेर्ष्यामर्षभयक्रोधशोकध्यानरात्रिजागरणविषमाशनानशनशयनोपवासवाग्व्यायामस्थानचङ्क्रमणशीतवातविरुद्धाशनाजीर्णमक्षिकाद्या बाधा परिहरेत् ॥१८॥

व्रणिनः सम्प्रतप्तस्य कारणैरेवमादिभिः ।
क्षीणशोणितमांसस्य भुक्तं सम्यक् न जीर्य्यति ॥१९॥
अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥२०॥

सदा नीचनखरोमणा शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति । तत् कस्य हेतोः हिंसाविहाराणि हि महावीर्य्याणि रक्षांसि पशुपतिकुवेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति सत्कारार्थं जिघांसूनि वा कदाचित् ॥२१॥

भवन्ति चात्र ।

तेषां सत्कारकामानां प्रयतेनान्तरात्मना ।
धूपवल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥२२॥

ते तु सन्तर्पिता आत्मवन्तं न हिंस्युः । तस्मात्सततमतन्द्रितो जनपरिवृतो नित्यदीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि सम्पन्मङ्गलमनोऽनुकूला कथाः शृण्वन्नासीत ॥२३॥

सम्पदाद्यनुकूलाभिः कथाभिः प्रीतमानसः ।

आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् ॥२४॥

ऋग्यजुःसामाथर्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्यायाभिषजश्च सन्ध्ययो रक्षा कुर्य्युः ॥२५॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च।
हिरङ्क कारयेद्धूप दशरात्रमतन्द्रित ॥२६॥

छत्रातिच्छत्रे लाङ्गूलीं जटिलां ब्रह्मचारिणीं लक्ष्मीं गुहामतिगुहां शतवीर्य्यां सहस्रवीर्य्यां सिद्धार्थांश्च शिरसा धारयेत् ॥२७॥

व्यज्येत बालव्यजनैर्व्रणं न च विघट्टयेत्।
न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥२८॥
अनेन विधिना युक्तमादावेव निशाचराः।
वनं केशरिणाक्रान्तं वर्जयन्ति मृगा इव ॥२९॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम्।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥३०॥
तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः।
बालमूलकवार्त्ताकपटोलैः कारवेल्लकैः ॥३१॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः।
अन्यैरेवं गुणैर्वापि मुद्गादीनां रसेन वा ॥३२॥
शक्तून् विलेपीं कुल्माषं जलञ्चापि शृतं पिबेत्।
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥३३॥
तौ च रुक् च दिवास्वापात् ताश्च मृत्युश्च मैथुनात्।
दिवा न निद्रावशगो निवातगृहगोचरः।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥३४॥
एवं वृत्तसमाचारो व्रणी सम्पद्यते सुखी।

आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥३५॥

---

## विंशतितमोऽध्यायः।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः।

यद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद् द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्य्या ब्रुवते तत्तु न सम्यक्। इह खलु यस्माद् द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति। तत्रैकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि। एकान्ताहितानि दहनपचनमारणादिषु प्रवृत्तान्यग्निक्षारविषादीनि। संयोगादपराणि विषतुल्यानि भवन्ति। हिताहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यतः सर्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते ॥१॥

तद्यथा रक्तशालिषष्टिकगङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकाशनकपुष्पककर्द्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः। एणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालक्रकरकपोतलावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकादीनां मांसानि। मुद्गवनमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेणुआढकीसतीनाः। चिल्लिवास्तुकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः। गव्यं घृतं सैन्धवदाडिमामलकमित्येष वर्गः सर्वप्राणिनां सामान्यतः पथ्यतमः। तथा ब्रह्मचर्य्यानिवातशयनोष्णोद-

कनिद्रास्वप्नव्यायामाश्चैकान्तत पथ्यतमा । एकान्तहितान्येकान्ताहितानि प्रागुपदिष्टानि। हिताहितानि तु यद्वायो पथ्यं तत्पित्तस्यापथ्यमिति ॥२॥

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति। तद्यथा। वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहिपिष्टशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिमम-त्स्यगोधावराहाश्च नैकध्यमश्नीयात् पयसा ॥३॥

रोग सात्म्यञ्च देशञ्च काल देहञ्च बुद्धिमान् ।
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्ते प्रयोजयेत् ॥४॥
अवस्थान्तरबाहुल्याद्रोगादीना व्यवस्थितम ।
द्रव्य नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥५॥
द्वयोरन्यातरादाने वदन्ति विषदुग्धयो ।
दुग्धस्यैकान्तहितता विषमेकान्ततोऽहितम् ॥६॥
एव युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ।
एकान्तहितता विद्धि वत्स सुश्रुत । नान्यथा ॥७॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्याम.। न च विरूढधान्यैर्वसामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत्। न पयोमधुभ्या रोहिणीशाक जातुशाक वाश्नीयात्। बलाका वारुणीकुल्माषाभ्याम्। काकमाची पिप्पलीमरिचाभ्याम्। नाडीभङ्गशाककुक्कुटदधीनि च नैकध्यम्। मधु चोष्णोदकानुपानम्। पित्तेन वा मांसानि। सुराकृशरापायसांश्च नैकध्यम्। सौवीरकेण सह तिलशष्कुलीम्। मत्स्यै. सहेक्षुविकारान्। गुडेन शाकमाचीं मधुना मूलक गुडेन वाराह मधुना च सह

विरुद्धम् । क्षीरेण मूलकम । आम्रजाम्बवश्वाविच्छूकर-गोधाश्च सर्वांश्च मत्स्यान् विशेषेण चिलिचिम पयसा। कदलीफल तालफलेन पयसा दध्ना तक्रेण वा। लकुचफल पयसा दध्ना माषसूपेन वा मधुना घृतेन च। प्राक् पयस पयसोऽन्ते वा ॥८॥

अत कर्मविरुद्धान् वक्ष्याम । कपोतान् सर्षपतैलभ्रष्टान्नाद्यात् । कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात् । कांस्यभाजने दशरात्रपर्य्युषित सर्पिर्मधु चोष्णेरुष्णे वा । मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धा काकमाचीम् । तिलकल्कसिद्धमुपोदिकाशाकम् । नारिकेलेन वराहवसापरिभृष्टा बलाकाम् । भासमङ्गारशूल्य नाश्नीयादिति ।९॥

अथो मानविरुद्धान् वक्ष्याम । मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्। स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ ॥१०॥

अत ऊर्द्ध्व रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि वक्ष्याम । तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ मधुरलवणौ च मधुरकटुकौ च सर्वत । मधुरतिक्तौ रसविपाकाभ्या मधुरकषायौ चाम्ललवणौ रसत । अम्लकटुकौ रसविपाकाभ्यामम्लतिक्तावम्लकषायौ च सर्वत । लवणकटुकौ रसविपाकाभ्या लवणतिक्तौ लवणकषायौ च सर्वत. । कटुतिक्तौ रसवीर्य्याभ्या कटुकषायौ तिक्तकषायौ च रसत । तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् ॥११॥

भवन्ति चात्र ।

विरुद्धान्येवमादीनि रसवीर्य्यविपाकत ।
तान्येकान्ताहितान्येव शेष विद्याद्धिताहितम् ॥१२॥
व्याधिमिन्द्रियदौर्वल्य मरणञ्चाधिगच्छति ।
विरुद्धरसवीर्य्यादीन् भुञ्जानोऽनात्मवान्नर ॥१३॥
यत्किञ्चिद्दोषमुत्क्लेश्य भुक्त कायान्न निर्हरेत् ।
रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥१४॥
विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम ।
वमन शमन वापि पूर्वं वाहितसेवनम ॥१५॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ।
स्निग्धव्यायामबलिना विरुद्ध वितथ भवेत् ॥१६॥

व्यायामशीलो बलवान् शिशुश्च
स्निग्धोऽग्निमांश्चापि महाशनश्च ।
आप्नोति रोगान्न विरुद्धजातान्
अभ्यासतो वाल्पतया च जन्तु ॥१७॥

अथ वातगुणान् वक्ष्याम ।
पूर्व समधुर स्निग्धो लवणश्चैव मारुत ।
गुरुर्विदाहजननो रक्तपित्ताभिवर्द्धन ॥१८॥
क्षताना विषजुष्टाना व्रणिन श्लेष्मलाश्च ये ।
तेषामेव विशेषेण सदा रोगविवर्द्धन ॥१९॥
वातलाना प्रशस्तश्च श्रान्ताना कफशोषिणाम् ।
तेषामेव विशेषेण व्रणक्लेदविवर्द्धन ॥२०॥
मधुरश्चाविदाही च कषायानुरसो लघु ।
दक्षिणो मारुत. श्रेष्ठश्चक्षुष्यो बलवर्द्धन. ।

रक्तपित्तप्रशमनो न च वातप्रकोपणः ॥२१॥
विशदो रूक्षपरुषः खरः स्नेहबलापहः ।
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ।
सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम् ॥२२॥
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ।
कषायानुरसः शीतो दोषाणामप्रकोपणः ॥२३॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्द्धनः ।
क्षीणक्षयविषार्त्तानां विशेषेण तु पूजितः ॥२४॥

एकविंशतितमोऽध्यायः ।

अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः ।

वातपित्तश्लेष्माण एव देहसम्भवहेतवः । तैरेवाव्यापन्नैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्य्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवस्तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति ॥१॥

भवति चात्र ।

नर्त्ते देहः कफादस्ति न पित्तान्न च मारुतात् ।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥२॥

तत्र वा गतिगन्धनयोरिति धातुः तप सन्तापे श्लिष आलिङ्गने । एतेषां कृद्विहितैः प्रत्ययैर्वात पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥३॥

दोषस्थानान्यत ऊर्द्ध्वं वक्ष्यामः । तत्र समासेन वातः श्रोणिगुदसंश्रयः । श्रोणिगुदयोरुपर्य्यधो नाभेः पक्वाशयः

पक्वामाशयमध्यं पित्तस्य। आमाशय श्लेष्मणः ॥४॥

अत ऊर्द्ध्वं पञ्चधा विभज्यन्ते तत्र वा तस्य वातव्याधौ वक्ष्यामः। पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तञ्च। श्लेष्मणस्तूरः शिरःकण्ठसन्धय इति पूर्वोक्तञ्च। एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥५॥

भवति चात्र।

विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥६॥

अत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निराहोस्वित्पित्तमेवाग्निरिति। अत्रोच्यते। न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते आग्नेयत्वात्पित्ते दहनपचनादिष्वभिवर्त्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति। तच्चादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति विवेचयति च रसदोषमूत्रपुरीषाणि तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणानुग्रहं करोति तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा। यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा स रसस्य रागकृदुक्तः। यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः। यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा स्वरूपग्रहणेऽधिकृतः। यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा सोऽभ्यङ्गपरिषेकावगाहावलेपनादीनां क्रिया द्रव्या-

त्ता पक्ता छायानाञ्च प्रकाशक ॥७॥

भवति चात्र।

पित्त तीक्ष्ण द्रव पूति नील पीत तथैव च।
उष्ण कटुरसञ्चैव विदग्ध चाम्लमेव च॥८॥

श्लेष्मस्थानान्यत ऊर्ड्ड वच्याम। तत्रामाशयः पित्ताशयस्योपरिष्टात्तत्प्रत्यनीकत्वादूर्द्धगतित्वात्तेजसश्चन्द्र इवादित्यस्य स चतुर्विधस्याहारस्याधार। स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघात सुखजरश्च भवति॥९॥

माधुर्य्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च।
आमाशये सम्भवति श्लेष्मा मधुरशीतल॥१०॥

स तत्रस्थ एव स्वशक्त्या शेषाणा श्लेष्मस्थानाना शरीरस्य चोदककर्मणानुग्रह करोति। उरःस्थस्त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बन करोति। जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरःस्थ स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रह करोति। सन्धिस्थस्तु श्लेष्मा सर्वसन्धिसंश्लेषात्सर्वसन्ध्यनुग्रह करोति॥११॥

भवति चात्र।

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च।
मधुरस्त्वविदग्धः स्याद्विदग्धो लवण स्मृतः॥१२॥

शोणितस्य स्थान यकृत्प्लीहानौ तच्च प्रागभिहित, तत्रस्थमेव शोणितस्थानानामनुग्रह करोति॥१३॥

भवति चात्र।

अनुष्णशीत मधुर स्निग्ध रक्तञ्च वर्णत,।

शोणित गुरु विस्र स्यादिदाहश्चास्य पित्तवत् ॥१४॥

एतानि खलु दोषस्थानान्येषु सञ्चीयन्ते दोषा. प्राक् सञ्चयहेतुरुक्त । तत्र सञ्चितानां दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गाना गौरवमालस्य चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति तत्र प्रतम. क्रियाकाल. ॥१५॥

अत ऊर्द्ध्वं प्रकोपणानि वक्ष्याम: । तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीडनाभिघातलङ्घनप्लवनतरणरात्रिजागरणभारहरणगजतुरङ्गरथपदातिचर्य्याकटुकषायतिक्तरूक्षलघुशीतवीर्य्यशुष्कशाकवल्लूरवरकोद्दालककोरदूषश्यामाकनीवारमुद्गमसूराढकीहरेणुकलायनिष्पावानशनविषमाशनाध्यशनवातमूत्रपुरीषशुक्रच्छर्दिक्षवथूद्गारवाष्पवेगविघातादिभिर्विशेषैर्वायु प्रकोपमापद्यते ॥१६॥

स शीताभ्रप्रवातेषु घर्मान्ते च विशेषत. ।
प्रत्यूषस्यपराह्णे तु जीर्णेऽन्ने च प्रकुप्यति ॥१७॥

क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदाहितिलतैलपिण्याककुलत्थसर्षपातसीहरितकशाकगोधामत्स्याजाविकमासदधितक्रकूर्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वराकप्रभृतिभि. पित्त प्रकोपमापद्यते ॥१८॥

तदुष्णैरुष्णकाले च मेघान्ते च विशेषत' ।
मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति ॥१९॥

दिवास्वप्नाव्यायामालसमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषम ...षगोधूम-

तिलपिष्टविकृतिदधिदुग्धकृशरापायसेक्षुविकारानूपौदकमांसवसाबिसमृणालकसेरुक-शृङ्गाटकमधुरवल्लीफल-समशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥२०॥

स शीते शीतकाले च वसन्ते च विशेषतः।
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥२१॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिश्चाहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते ॥२२॥

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति।
तस्मात्तस्य यथादोषं कालं विद्यात् प्रकोपणे ॥२३॥

तेषां प्रकोपात् कोष्ठतोदसञ्चरणाम्लिकापिपासापरिदाहान्नद्वेषहृदयोत्क्लेदाश्च जायन्ते। तत्र द्वितीयः क्रियाकालः ॥२४॥

अत ऊर्द्ध्वं प्रसरं वक्ष्यामः। तेषामेभिरातङ्कविशेषैः प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति। तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्वभावानाम्। यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदार्य्यापरेणोदकेन व्यामिश्रः सर्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति। तद्यथा। वातः पित्तं श्लेष्मा शोणितम्। वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते। वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशो-

णितानि। वातपित्तकफा वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरन्ति ॥२५॥

कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्।
दोषो विकारं नभसि मेघवत्तत्र वर्षति ॥२६॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति।
नि प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥२७॥

तत्र वायोः पित्तस्थानगतस्य च पित्तवत् प्रतीकारः, पित्तस्य कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवदेष क्रियाविभागः ॥२८॥

एवं प्रकुपितानां प्रसरतां च वायोर्विमार्गगमनाटोपौ। ओषाचोषपरिदाहधूमायनानि पित्तस्य। अरोचकाविपाकाङ्गसादच्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति। तत्र तृतीयः क्रियाकालः ॥२९॥

अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः। एवं कुपितास्तांस्तान् शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। ते यदोदरसन्निवेशं कुर्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीन् जनयन्ति। वस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्। मेढ्रगता निरुद्धप्रकाशोपदंशशूकदोषप्रभृतीन्। गुदगता भगन्दरार्शःप्रभृतीन्। वृषणगता वृद्धीः। ऊर्द्ध्वजत्रुगतास्तूर्द्ध्वजान्। त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च। मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन्। अस्थिगता विद्रध्यनुशयीप्रभृतीन्। पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्। सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन्। तेषामेवमभिनिविष्टानां

पूर्वरूपप्रादुर्भावस्तत् प्रतिरोग वक्ष्याम । तत्र पूर्वरूप॰ गतेषु चतुर्थ क्रियाकाल॰ ॥३०॥

अत ऊर्द्ध व्याधिदर्शन वक्ष्याम । शोफार्बुदग्रन्थिविद्र॰ धिविसर्पप्रभृतीना प्रव्यक्तलक्षणता ज्वरातिसारप्रभृतीनाञ्च। तत्र पञ्चम क्रियाकाल ॥३१॥

अत ऊर्द्धमेतेषामवदीर्णाना व्रणभावमापन्नाना षष्ठ क्रियाकाल । ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्ध । तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ॥३२॥

भवन्ति चात्र।

सञ्चयञ्च प्रकोपञ्च प्रसर स्थानसंश्रयम्।
व्यक्ति भेदञ्च यो वेत्ति दोषाणा स भवेद्भिषक्॥३३॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गती॰।
ते तूत्तरासु गतिषु भवन्ति बलवत्तरा ॥३४॥
सर्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुन॰।
संसर्गे कुपित क्रुद्ध दोष दोषोऽनुधावति ॥३५॥
संसर्गे यो गरीयान् स्यादुपक्रम्य स वै भवेत्।
शेषदोषविरोधेन सन्निपाते तथैव च ॥३६॥
व्रणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति।
आदेहधारणात्तस्माद् व्रण इत्युच्यते बुधै ॥३७॥

---

द्वाविंशतितमोऽध्याय ।

अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्याम॰।

त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि। अत्र सर्वव्रणसन्निवेश.। तत्राद्यैकवस्तुसन्निवेशी

त्वग्भेदी व्रण सूपचर, शेषा स्वयमवदीर्य्यमाणा दुरुप चारा । तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृति-समास, शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥१॥

सर्व्वं एव व्रणा क्षिप्रं संरोहन्त्यात्मवता सुभिषग्भिश्चो-पक्रान्ता. । अनात्मवतामज्ञैश्चोपक्रान्ता प्रदुष्यन्ति प्रवृद्ध-त्वाद्दोषाणाम ॥२॥

तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽव-सन्नोऽतिशीतोऽत्युष्ण कृष्णरक्तपीतशुक्लादीना वर्णानामन्य-तमवर्णो भैरव पूतिपूयमांससिरास्नायुप्रभृतिपूर्ण पूतिपू-यास्राव्युन्मार्ग्युत्सङ्गग्रमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणिता-स्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि । तस्य दोषोच्छ्रायेण षट्त्व विभज्य यथास्वं प्रतीकारे प्रयतेत ॥३॥

अत ऊर्द्ध्वं सर्व्वस्रावान् वक्ष्याम । तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु विदारितेषु वा सलिलप्रकाशो भव-त्यास्राव किञ्चिद्विस्र पीतावभासश्च । मांसगत सर्पि-प्रकाश सान्द्र श्वेत. पिच्छिलश्च । सिरागत सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्ति पक्वासु च तोयनाडीभिरिव तोयाग-मन पूयस्यास्रावश्चात्र तनुर्विच्छिन्न पिच्छिलोऽवलम्बी श्या-वोऽवश्यायप्रतिमश्च । स्नायुगत स्निग्धो घन सिङ्घाणकप्र-तिम सरक्तश्च । अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषा-वदारिते वा दोषभक्षितत्वादस्थि नि सार शुक्तिधौतमिवा-भाति । आस्रावश्चात्र मज्जमिश्र: सरुधिर: स्निग्धश्च । सन्धि गत पीड्यमानो न प्रवर्त्तत आकुञ्चनप्रसारणोन्नमनविनम-

नप्रधावनोत्कासनप्रवाहणैश्च स्रवति । आस्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च । कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति । मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते । तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद्भवन्ति । पित्ताद्गोमेदगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि । पित्तवद्रक्तादतिविस्रत्वञ्च । कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकवराहवसासन्निभत्वानि । सन्निपातात्तिलनारिकेलोदकैर्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ॥४॥

श्लोकौ चात्र भवतः ।

पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ।
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात् स्रवन् ॥५॥
आमाशयात्कलायाम्भोनिभश्च त्रिकसन्धिजः ।
स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद्भिषक् ॥६॥

अत ऊर्द्ध्वं सर्वव्रणवेदना वक्ष्यामः ।

तोदनभेदनताडनच्छेदनायमनमन्थनविक्षेपणचुमचुमायननिर्द्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिकाः सम्भवन्ति । अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुः यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात् । ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनावि-

शेषास्तु पैत्तिकमिति विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्। यत्र सर्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति ॥७॥

अत ऊर्द्ध्वं व्रणवर्णान् वक्ष्यामः। भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य। नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः। श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य। सर्ववर्णोपेतः सान्निपातिक इति ॥८॥

भवति चात्र।

न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः।
सर्वशोथविकारेषु व्रणवल्लक्षयेद्भिषक् ॥९॥

---

त्रयोविंशतितमोऽध्यायः।

अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः।

तत्र वयस्थानां दृढानां प्राणवतां सत्त्ववताञ्च सुचिकित्स्याः व्रणाः एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः। तत्र वयस्थानां प्रत्यग्रधातुत्वादाशु व्रणाः रोहन्ति। दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणः सिरास्नाय्वादिविशेषान्न प्राप्नोति। प्राणवतां वेदनाभिघाता-द्दारयन्व्रणादिभिर्न ग्लानिरुत्पद्यते। सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति। तस्मादेतेषां सुखसाधनीयतमाः ॥ १ ॥

त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः।

स्फिक्पायुप्रजननललाटगण्डोष्ठपृष्ठकर्णफलकोषोदरजत्रुमु-
खाभ्यन्तरसंस्था सुखरोपणीया व्रणा ॥२॥

अक्षिदन्तनासापाङ्गश्रोत्रनाभि-जठरसेवनी-नितम्बपा-
र्श्वकुक्षिवक्ष.कक्षास्तनसन्धिभागगता' सफेनपूयरक्तानिलवा-
हिनोऽन्त.शल्याश्च दुश्चिकित्स्या । अधोभागाश्चोर्द्ध्वभागनि-
र्वाहिणो रोमान्तोपनखमर्मजङ्घास्थिसंश्रिताश्च । भगन्दर
मपि चान्तर्मुख सेवनीकुटकास्थिसंश्रितम् ॥३॥

भवन्ति चात्र ।

कुष्ठिना विषजुष्टाना शोषिणा मधुमेहिनाम ।
व्रणा कृच्छ्रेण सिध्यन्ति येषा चापि व्रणे व्रणा' ॥४॥

अवपाटिकानिरुद्धप्रकशसन्निरुद्धगुदजठर-ग्रन्थिक्षतक्रि-
मय प्रतिश्यायजा: कोष्ठजाश्च त्वग्दोषिणा प्रमेहिना वा
ये परिक्षतेनु दृश्यन्ते शर्करासिकतामेहवातकुण्डलिकाष्ठी-
लादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्त-
वेष्टा विसर्पास्थिक्षतोर क्षतव्रणग्रन्थिप्रभृतयश्च याप्या ॥५॥

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यता तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम ॥६॥

यापनीय विजानीयात् क्रिया धारयते तु यम् ।
क्रियायान्तु निवृत्ताया सद्य एव विनश्यति ॥७॥

प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम ।
प्रपतिष्यदिवागार विष्कम्भ साधुयोजित: ॥८॥

अत ऊर्द्ध्वमसाध्यान् वक्ष्याम । मांसपिण्डवदुद्गता.
प्रसेकिनोऽन्त पूयवेदनावन्तोऽश्वापानवदुद्वृतौष्ठा । केचित्क-
ठिना गोशृङ्गवदुन्नतमृदुमांसप्ररोहा. । अपरे दुष्टरुधिरास्रा-

विणस्तनुपिच्छिलास्रावियो वा मध्योन्नता । केचिदवसन्न-शुषिरपर्य्यन्ता । शणतूलवत् स्नायुजालवन्तो दुर्दर्शा वसा-मेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्था । पीतासितमूत्र-पुरीषवातवाहिनश्च कोष्ठस्था. चीणमांसानाञ्च सर्वतोगत-यश्चाणुमुखा मांसबुद्बुदवन्त सशब्दवातवाहिनश्च शिर क-ण्ठस्था. । चीणमांसानाञ्च पूयरक्तनिर्वाहिणोऽरोचका विपाककासश्वासोपद्रवयुक्ता. । भिन्ने वा शिर कपाले यत्र मस्तुलुङ्गदर्शन त्रिदोषलिङ्गप्रादुर्भाव. कासश्वासौ वा यस्योत ॥९॥

भवन्ति चात्र ।

वसा मेदोऽथ मज्जान मस्तुलुङ्गञ्च य स्रवेत् ।
आगन्तुस्तु व्रण सिध्येन्न सिध्येद्दोषसम्भव. ॥१०॥
अमर्मोपहिते देशे शिरास्नाय्वस्थिवर्जिते ।
विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम् ॥११॥
क्रमेणोपचय प्राप्य धातूननुगत. शनै ।
न शक्य उन्मूलयतु वृद्धो वृक्ष इवामय. ॥१२॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ।
निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा ॥१३॥
अतो यो विपरीत. स्यात्सुखसाध्य. स उच्यते ।
अबद्धमूल' क्षुपको यदुत्पाटने सुख. ।१४॥
त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठ. पिडको सम. ।
अवेदनो निरास्रावो व्रण. शुद्ध इहोच्यते ॥१५॥
कपोतवर्णप्रतिमा यस्यान्ता क्लेदवर्जिताः ।
स्थिराश्चपिटिकावन्तो रोहतीति तमादिशेत् ॥१६॥

रूढवर्त्मानमग्रन्थिमशूनमरुज व्रणम् ।
त्वक्सवर्णं समतल सम्यग्रूढ विनिर्दिशेत् ॥१७॥
दोषप्रकोपाद्व्यायामादभिघातादजीर्णत ।
हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढोऽपि दीर्य्यते ॥१८॥

---

## चतुर्विंशतितमोऽध्याय ।

अथातो व्याधिसमुद्देशीयमध्याय व्याख्यास्याम ।

द्विविधा व्याधय शस्त्रसाध्या स्नेहादिक्रियासाध्याश्च । तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते । स्नेहादिक्रियासाध्येषु शस्त्रकर्म न क्रियते । अस्मिन् पुन: शास्त्रे सर्वतन्त्रसामान्यात् सर्वेषा व्याधीना यथास्थूलमवरोध क्रियते । प्रागभिहित तद्दु खसयोगा व्याधिरिति । तच्च दु ख त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति । तत् तु सप्तविधे व्याधावुपनिपतति । ते पुन सप्तविधा व्याधय । तद्यथा । आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ता सघातबलप्रवृत्ता कालबलप्रवृत्ता, दैवबलप्रवृत्ता स्वभावबलप्रवृत्ता इति । तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वया: कुष्ठार्श प्रभृतय । तेऽपि द्विविधा मातृजा पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात्पङ्गुजात्यन्धबधिरमूकमिन्मिणवामनप्रभृतयो जायन्ते । तेऽपि द्विविधा रसकृता दौहृदापचारकृताश्च । दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च । तेऽपि द्विविधा आमाशयसमुत्था पक्वाशयसमुत्थाश्च, पुनश्च द्विविधा शारीरा मानसाश्च । त एत आध्यात्मिका ॥१॥

सङ्घातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात्तेऽपि द्विविधा शस्त्रकृता व्यालादिकृताश्च। एत आधिभौतिका। कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्त्तुकृता अव्यापन्नर्त्तुकृताश्च। दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वकृता उपसर्गकृताश्च। तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च, पुनश्च द्विविधा संसर्गजा आकस्मिकाश्च। स्वभावबलप्रवृत्ता क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयस्तेऽपि द्विविधा कालकृता अकालकृताश्च। तत्र परिरक्षणकृताः कालकृता अपरिरक्षणकृता अकालकृता। एत आधिदैविका। तत्र सर्वव्याध्यवरोध ॥२॥

सर्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च यथाहि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते। एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते। दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पा भवन्ति। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजोऽयमस्थिजोऽयं मज्जजोऽयं शुक्रजोऽयं व्याधिरिति ॥३॥

तत्रान्नाश्रद्धारोचकाविपाकाङ्गमर्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालवलिपलितदर्शनप्रभृतयो रसदोषजा विकाराः ॥४॥

कुष्ठविसर्पपिडकामशकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्द-

रक्तपित्तप्रभृतयो रक्तदोषजाः ॥५॥

गुदमुखमेढ्रपाकाश्च अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीमांससङ्घातौष्ठप्रकोपगलगण्डमालाप्रभृतयो मांसदोषजाः ॥६॥

ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः ॥७॥

अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः ॥८॥

तमोदर्शनमूर्च्छाभ्रमपर्वगौरवस्थूलमूलोरुजङ्घानेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः ॥९॥

क्लैव्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषजाः। त्वग्दोषाः सङ्गोऽतिप्रवृत्तिर्वा मलायतनदोषाः। इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः ॥१०॥

इत्येवं समास उक्तो विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्यामः ॥११॥

भवति चात्र।

कुपितानां हि दोषाणां शरीरे परिधावताम्।
यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते ॥१२॥

भूयोऽत्र जिज्ञास्यं किं वातादीनां ज्वरादीनाञ्च नित्यः सश्लेषः परिच्छेदो वेति। यदि नित्यः सश्लेषः स्यात्तर्हि नित्यातुराः सर्व एव प्राणिनः स्युः। अथाप्यन्यथा वातादीनां ज्वरादीनां चान्यत्र वर्त्तमानानामन्यत्र लिङ्गं न भवतीति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न। अत्रोच्यते। दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति।

अथ च न नित्य सम्बन्धो यथाहि विद्युद्वाताशनिवर्षाण्या-काश प्रत्याख्याय न भवन्ति। सत्यप्याकाशे कदाचिन्न भवन्ति। अथ च निमित्ततस्तत एवोत्पत्तिरिति तरङ्ग बुद्बुदादयश्चोदकविशेषा एव। वातादीना ज्वरादीनाञ्च नाप्येव संश्लेषो न परिच्छेद शाश्वतिक। अथ च निमि-त्तत एवोत्पत्तिरिति ॥१३॥

भवति चात्र।

विकारपरिमाणञ्च सङ्ख्या चैषा पृथक् पृथक्।
विस्तरेणोत्तरे तन्त्रे सर्वा बाधाश्च वक्ष्यते ॥१४॥

---

पञ्चविंशतितमोऽध्याय।

अथातोऽष्टविधशस्त्रकर्मीयमध्याय व्याख्यास्याम.।

छेद्या भगन्दरा ग्रन्थि श्लैष्मिकस्तिलकालक।
व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थिमासगम् ॥१॥
शल्य जतुमणिर्मांससघातो गलशुण्डिका।
स्नायुमांससिराक्लेथो वल्मीक शतपोनक ॥२॥
अध्रुषश्चोपदंशाश्च मासकन्द्यधिमासक।
भेद्या विद्रधयोऽन्यत्र सर्वजाद् ग्रन्थयस्त्रय ॥३॥
आदितो ये विसर्पाश्च वृद्धय सविदारिका.।
प्रमेहपिडकाशोफस्तनरोगावमन्थका ॥४॥
कुम्भीकानुशयीनाड्यो वृन्दौ पुष्करिकालजी।
प्रायश क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥५॥
तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिण:।
वस्तिस्तथाश्मरीहेतोर्मेदोजा ये च केचन ॥६॥

लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका ।
मेदोजो दन्तवैदर्भो ग्रन्थ्यर्ब्बुदाधिजिह्विका ॥७॥
अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ।
वेध्याः सिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥८॥
एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ।
आहार्य्याः शर्करास्तिस्रो दन्तकर्णमलाश्मरी ॥९॥
शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे ।
स्राव्या विद्रधयः पञ्च भवेयुः सर्वजादृते ॥१०॥
कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ।
पाल्यामयाः श्लीपदानि विषजुष्टञ्च शोणितम् ॥११॥
अर्ब्बुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये ।
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥१२॥
शौषिरो गलशालूकं कण्टकाः कृमिदन्तकः ।
दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥१३॥
पित्तासृक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः ।
सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ॥१४॥
सद्योव्रणाश्च ये चैव चलसन्ध्यव्यपाश्रयाः ।
न क्षाराग्निविषैर्जुष्टा न वा मारुतवाहिनः ।
नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥१५॥
पांशुरोमनखादीनि चलमस्थि भवेच्च यत् ।
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ॥१६॥
रुजश्च विविधाः कुर्युस्तस्मादेतान् विशोधयेत् ।
ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥१७॥
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा ।

शणजक्षौमसूत्राभ्यां स्नाय्वा वालेन वा पुनः ।
मूर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥१८॥
सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् ।
ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥१९॥
देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् ।
आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥२०॥
धनुर्वक्रा हिता मर्म्मफलकोशोदरोपरि ।
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः ॥२१॥
कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डला ।
नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत् ।
दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥२२॥
अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् ।
प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥२३॥
सल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः ।
ततो व्रणं यथायोगं बद्ध्वाचारिकमादिशेत् ॥२४॥
एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम् ।
चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥२५॥
हीनातिरिक्तं तिर्य्यक् च गात्रच्छेदनमात्मनः ।
एतास्चतस्रोऽष्टविधे कर्म्मणि व्यापदः स्मृताः ॥२६॥
अज्ञानलोभाहितवाक्ययोग-
भयप्रमोहैरपरैश्च भावैः ।
यदा प्रयुञ्जीत भिषक् कुशस्त्रं
तदा सशेषान् कुरुते विकारान् ॥२७॥
तं चाप्यशस्त्रा ऽभिरौषधैश्च

भूयोऽभियुञ्जानमयुक्तियुक्तम्।
जिजीविषुर्दूरत एव वैद्य
विवर्जयेदुग्रविषाग्नितुल्यम् ॥२८॥
तदेव युक्तान्त्वतिमर्मसन्धीन्
हिंस्यात् सिरास्नायुमथास्थि चैव।
मूर्खप्रयुक्तं पुरुषं क्षणेन
प्राणैर्वियुञ्ज्यादथवा कथञ्चित् ॥२९॥
भ्रमः प्रलापः पतनं प्रमोहो
विचेष्टनं संलयनोष्णता च।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥३०॥
मांसोदकाभं रुधिरञ्च गच्छेत्सर्वेन्द्रियार्थोपरमस्तथैव।
दशार्द्धसङ्ख्येष्वपि हि क्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥३१
सुरेन्द्रगोपप्रतिमं प्रभूतं
रक्तं स्रवेत्तत्क्षततश्च वायुः।
करोति रोगान् विविधान् यथोक्तान्
छिन्नासु भिन्नास्वथवा सिरासु ॥३२॥
कौब्ज्यं शरीरावयवावसाद
क्रियास्वशक्तिस्तुमुला रुजश्च।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं मनुजं व्यवस्येत् ॥३३॥
शोफातिवृद्धिस्तुमुला रुजश्च
बलक्षयः पर्वसु भेदशोफौ।
क्षतेषु सन्धिष्वचलाचलेषु

स्यात् सन्धिकर्मोपरतिश्च लिङ्गम् ॥३४॥
घोरा रुजो यस्य निशादिनेषु
सर्वास्ववस्थासु न शान्तिरस्ति ।
तृष्णाङ्गसादौ श्वयथुश्च रुक च
तमस्थिविद्ध मनुज व्यवस्येत् ॥३५॥
यथास्वमेतानि विभावयेयु-
र्लिङ्गानि मर्मस्वभिताडितेषु
स्पर्शन्न जानाति विपाण्डुवर्णो
यो मांसमर्मण्यभिताडित स्यात् ॥३६॥
आत्मानमेवाथ जघन्यकारी शस्त्रेण यो हन्ति हि कर्म कुर्वन् ।
तमात्मवानात्महन कुवैद्य विवर्जयेदायुरभीप्समान ॥३७॥
तिर्य्यक् प्रणिहिते शस्त्रे दोषा पूर्वमुदाहृता ।
तस्मात् परिहरन् दोषान् कुर्य्याच्छस्त्रनिपातनम् ॥३८॥
मातर पितर पुत्रान् बान्धवानपि चातुर ।
अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥३९॥
विसृजत्यात्मनात्मान न चैन परिशङ्कते ।
तस्मात् पुत्रवदेवैन पालयेदातुर भिषक ॥४०॥
कर्मणा कश्चिदेकेन द्वाभ्या कश्चित्त्रिभिस्तथा ।
विकार साध्यते कश्चिच्चतुर्भिरपि कर्मभि ॥४१॥
धर्मार्थौ कीर्त्तिमत्यर्थं सता ग्रहणमुत्तमम ।
प्राप्नुयात्स्वर्गवासञ्च हितमारभ्य कर्मणा ॥४२॥

— —

## षड्विंशतितमोऽध्यायः ।

अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

शल श्वल आशुगमने धातुस्तस्य शल्यमिति रूपम् । तद् द्विविधं शारीरमागन्तुकञ्च । सर्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्यशास्त्रं तत्र शारीरं रोमनखादिधातवोऽन्नमलादिदोषाश्च दुष्टाः । आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति । अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु तत्रापि विशेषतो लोहमयेष्वेव विशसनार्थोपपन्नत्वाल्लोहस्य लोहानामपि दुर्वारत्वादणुमुखत्वाद् दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः । स द्विविधः कर्णी श्लक्ष्णश्च प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याता व्यालमृगपक्षिवक्त्रसदृशाश्च ॥१॥

सर्वशल्यानान्तु महतामणूनां वा पञ्चविधो गतिविशेषः ऊर्द्ध्वमधोऽर्वाचीनस्तिर्य्यगृजुरिति । तानि यदा वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु तत्र शल्यलक्षणमुच्यमानमुपधारय । तत् तु द्विविधं सामान्यं वैशेषिकञ्च । श्यावं पिडकावन्तं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्राविणं बुद्बुदवदुन्नतं मृदुमांसञ्च व्रणं जानीयात् । सशल्योऽयमिति सामान्यलक्षणमेतदुक्तम् ॥२॥

वैशेषिकन्तु त्वग्गते विवर्णः शोफो भवत्यायतः काठिन्यञ्च । मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च । पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्जम् । सिरागते सिराध्मानं सिराशूलं सिराशो-

फश्च। स्नायुगते स्नायुजालोत्क्षेपण सरम्भोग्रा रुक् च। स्रोतोगते स्रोतसा स्वकर्मगुणहानि। धमनीस्थे सफेन रक्तमीरयन्ननिल. सशब्दो निर्गच्छत्यङ्गमर्द. पिपासा हृल्लासश्च। अस्थिगते विविधवेदनाप्रादुर्भाव शोफश्च। अस्थिविवरगतेऽस्थिपूर्णतास्थितोद सहर्षो बलवांश्च। सन्धिगतेऽस्थिवच्चेष्टोपरमश्च। कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनञ्च व्रणमुखात्। मर्मगते मर्मविद्धवच्चेष्टते। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥२॥

महान्ति स्वल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति विशेषत कण्ठस्रोत सिरात्वक्पेश्यस्थिविवरेषु दोषप्रकोपव्यायामाभिघातेभ्य प्रचलितानि पुनर्बाधन्ते।

तत्र त्वक्प्रनष्टे स्निग्धस्विन्नाया मृन्माषयवगोधूमगोमयमृदिताया त्वचि यत्र सरम्भो वेदना वा भवति तत्र शल्य जानीयात्। स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धाया शल्योष्मणाशु विसरति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्य विजानीयात्। मांसप्रनष्टे स्नेहस्वेदादिभि क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्। कर्शितस्य तु शिथिलीभूतमनवबद्ध क्षुभ्यमाण यत्र सरम्भो वेदना वा भवति तत्र च शल्य विजानीयात्। कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेव परीक्षेत। सिराधमनीस्रोत स्नायुप्रनष्टे खण्डचक्रैर्युक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायाद्यत्र सरम्भो वेदना वा भवति तत्र शल्य जानीयात्। अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्या भृशमु-

पचरेद्यत्र सरम्भो वेदना वा भवति तत्र शल्य जानीयात्॥ सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसारणाकुञ्चनबन्धनपीडनैश्चाप्युपचरेद्यत्र सरम्भो वेदना वा भवति तत्र शल्यमिति जानीयात्। मर्म्मप्रनष्टे त्वनन्यभावान्मर्मणामुक्त परीक्षण भवति ॥४॥

सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्रतरणप्लवनव्यायामैर्जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र सरम्भो वेदना वा भवति तत्र शल्य जानीयात् ॥५॥

भवन्ति चात्र।

यस्मिस्तोदादयो देशे सुप्तता गुरुतापि च।
घट्टत बहुशो यत्र स्पूयते तुद्यतेऽपि च ॥६॥
आतुरस्यापि य देशमभीक्ष्ण परिरक्षति।
सवाध्यमानो बहुशस्तत्र शल्य विनिर्दिशेत् ॥७॥
अल्पबाधमशूनञ्च निरुज निरुपद्रवम्।
प्रसन्न मृदुपर्य्यन्त निरावट्टमनुन्नतम ॥८॥
एषण्या सवतो दृष्ट्वा यथामार्ग चिकित्सक।
प्रसाराकुञ्चनान्नून नि शल्यमिति निर्दिशेत् ॥९॥
अस्थ्यात्मक भज्यते तु शल्यमन्तश्च शीर्य्यते।
प्रायो निर्भुज्यते शार्ङ्गमायसञ्चेति निश्चय ॥१०॥
वार्क्ष्य वैणवतार्णानि निर्ह्रियन्ते तु नो यदि।
पचन्ति रक्त मासञ्च क्षिप्रमेतानि देहिनाम् ॥११॥
कानक राजत ताम्र रैतिक त्रपु सीसकम्।

चिरस्थानाद्विलीयन्ते पित्ततेज:प्रतापनात् ॥१२॥
स्वभावशीता मृदवो ये चान्येऽपीदृशा मता ।
द्रवीभूता. शरीरेऽस्मिन्नेकत्व यान्ति धातुभि ॥१३॥
विषाणदन्तकेशास्थिवेणुदारूपलानि तु ।
शल्यानि न विशीर्य्यन्ते शरीरे मृन्मयानि च ॥१४॥
द्विविध पञ्चगतिक त्वगादिव्रणवस्तुषु ।
यो वेत्त्यधिष्ठित शल्य स राज्ञ कर्त्तुमर्हति ॥१५॥

---

सप्तविंशतितमोऽध्याय ।

अथात शल्यापनयनीयमध्याय व्याख्यास्याम ।

शल्य द्विविधमवबद्धमनवबद्धञ्च। तत्र समासेनावबद्धशल्योद्धरणार्थ पञ्चदश हेतून् वक्ष्याम । तद् यथा। स्वभाव पाचन भेदन दारण पीडन प्रमार्जन निर्ध्मापन वमन विरेचन प्रक्षालन प्रतिमर्ष. प्रवाहणमाचूषणमयस्कान्तो हर्षश्चेति ॥१॥

तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलै स्वभावशल्यप्रवृत्तैर्नयनादिभ्य. पतति। सावगाढ शल्यमभिद्ह्यमान पाचयित्वा प्रकोपात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति। पक्वमभिद्यमान भेदयेद्दारयेद्वा भिन्नमनिरस्यमान पीडनीयै पीडयेत्पाणिभिर्वा। अणून्यक्षिशल्यानि परिषेचनाश्चापनैर्बालवस्त्रपाणिभि. प्रमार्जयेत्। आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोच्छ्वासनप्रधमनैर्निर्ध्मेत्। अन्नशल्यानि वमनाङ्गुलिप्रतिमर्षप्रभृतिभिर्विरेचनै. पक्वाशयगतानि ॥२॥

व्रणदोषाश्रयगतानि प्रक्षालनैः । वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम् । मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन विषाणैर्वा । अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन । हृदयवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति । सर्वशल्यानान्तु महतामणूनां वा द्वावेवाहरणहेतू भवतः प्रतिलोमोऽनुलोमश्च तत्र प्रतिलोममर्वाचीनमानयेदनुलोमं पराचीनम् ॥३॥

उत्तुण्डितं छित्त्वा निर्वातयेच्छेदनीयमुखम् । छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावङ्क्षणपर्शुकान्तरपतितानि च हस्तप्राप्यं यथामार्गं हस्तेनैवापहर्त्तुं प्रयतेत ॥४॥

अनुत्तुण्डितशल्यानि छेदनीयमुखानि च ।
अनिर्वाप्यानि जानीयाद्भूयश्छेदानुबन्धतः ॥५॥

हस्तेनापहर्त्तुमशक्यं विसृष्य शस्त्रेण यन्त्रेण वापहरेत् ॥६॥

भवति चात्र ।

शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ।
संरक्षेदस्य मर्माणि मुहुराश्वासयेच्च तम् ॥७॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्य विदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाचारिकमुपदिशेत् । सिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत् श्वयथुग्रस्तत्वाद्रङ्गं समवपीड्य श्वयथुं दुर्बलवाङ्गं कुशादिभिर्बद्ध्वा । हृदयमभितो वर्त्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गम् । दुरपहरमन्यतोऽपबाध्यमानं पाटयित्वोद्धरेत् ॥८॥

अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पादाभ्यां

यन्त्रेणापहरेदशक्यमेव वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्धैः-कतश्चास्य पञ्चाङ्ग्यामुपसयतस्याश्ववक्त्रकटके वा बध्नीयाद्दृढेन कशया ताडयेद्यथोन्नमयन् शिरोवेगेन शल्यमुद्धरति। दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्‌ बद्धोद्धरेत्। अस्थिदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव। यन्त्रेण विमृदितकर्णानि कर्णवन्त्यनाबाधकरदेशोत्तुण्डितानि पुरस्तादेव ॥९॥

जातुषे कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्ताञ्च शलाकां तथावगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतमुद्धरेत्। अजातुषं जतुमधूच्छिष्टलिप्तया शलाकया पूर्वकल्पेनैवैके। अस्थिशल्यमन्यद्वा तिर्य्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वान्त्‌ नतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्त्रिफलाचूर्णं वा मधुशर्करामिश्रम। उदकपूर्णमवाक्शिरसमवपीडयेद्धुनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखम ॥१०॥

ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धस्कन्धे मुष्टिनाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्। बाहुरज्जुलतापाशशल्ये तु कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं फेनागमनं सञ्ज्ञानाशं चापादयति। तमभ्यज्य सस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसञ्च वातघ्नं विदध्यादिति ॥११॥

भवन्ति चात्र।

शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान्।
तथा यन्त्रपृथक्त्वाञ्च सम्यक् शल्यमथाहरेत् ॥१२॥
कर्णवान्ति तु शल्यानि दुःखाहार्य्याणि यानि च।
आददीत भिषक् तस्मात्तानि युक्त्या समाहितः ॥१३॥
एतैरुपायैः शल्यन्तु नैव निर्घात्यते यदि।
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥१४॥
शोथपाकौ रुजश्चोग्रा कुर्य्याच्छल्यमनिर्हृतम्।
वैकल्यं मरणञ्चापि तस्माद्यत्नाद्विनिर्हरेत् ॥१५॥

---

## अष्टाविंशतितमोऽध्यायः।

अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः।

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा।
ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम् ॥१॥
तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशुव्यतिक्रमात्।
गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसम्भवात् ॥२॥
ध्रुवन्तु मरणं रिष्टे ब्राह्मणैस्तत्किलामलैः।
रसायनतपोजप्यतत्परैर्वा निवार्य्यते ॥३॥
नक्षत्रपीडा बहुधा यथाकालाद्विपच्यते।
तथैवारिष्टपाकञ्च ब्रुवते बहुधा जनाः ॥४॥
असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः।
अतो रिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥५॥
गन्धवर्णरसादीनां विशेषाणां समासतः।

वैकृत यत्तदाचष्टे व्रणिन पक्कलक्षणम ॥६॥
कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभि.।
लोहगन्धिस्तु रक्तेन व्यामिश्र सान्निपातिक. ॥७॥
लाजातसीतैलसमा किञ्चिद्विस्राश्च गन्धत ।
ज्ञेया प्रकृतिगन्धा स्युरतोऽन्यद्गन्धवैकृतम् ॥८॥
मद्यागुर्वाज्यसुमन पद्मचन्दनचम्पकै.।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणा व्रणा' स्मृता' ॥९॥
श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणै ।
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिता ॥१०॥
श्यामकुङ्कुमकङ्कुष्ठसवर्णा पित्तकोपत ।
न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्जयेत् ॥११॥
कण्डूमन्त स्थिरा श्वेता स्निग्धा कफनिमित्तत:।
दूयन्ते च विदह्यन्ते भिषक् तान् परिवर्जयेत् ॥१२॥
कृष्णास्तु ये तनुस्रावा वातजा मर्मतापिन ।
स्वल्पामपि न कुर्वन्ति रुज तान् परिवर्जयेत् ॥१३॥
क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणा ।
त्वङ्मांसस्थाश्च पवन सशब्द विसृजन्ति ये ॥१४॥
ये च मर्मस्वसम्भूता भवन्त्यत्यर्थवेदना ।
दह्यन्ते चान्तरत्यर्थं वहि शीताश्च ये व्रणा. ॥१५॥
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतला ।
शक्तिकुन्तध्वजरथा वाजिवारणगोवृषा. ॥१६॥
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ।
चूर्णावकीर्णा इव ये भान्ति वा न च चूर्णिता. ॥१७॥
प्राणमासक्षयश्वासकासारोचकपीडिता:।

प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्मसु ॥१८॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
वर्जयेत्तान् भिषक् प्राज्ञः सरचन्नात्मनो यशः ॥१९॥

---

एकोनत्रिंशत्तमोऽध्यायः ।

अथातो विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः ।

दूतदर्शनसम्भाषा वेशश्चेष्टितमेव च ।
ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥१॥
देशो वैद्यस्य वाग्देहमनसाञ्च विचेष्टितम् ।
कथयन्त्यातुरगतं शुभं वा यदिवाऽशुभम् ॥२॥
पाषण्डाश्रमवर्णानां स्वपक्षाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥३॥
नपुंसकं स्त्रीबहवो नैककार्य्या असूयकाः ।
गर्दभोष्ट्ररथप्राप्ता प्राप्ता वा स्युः परम्पराः ॥४॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ।
पाशदण्डायुधधराः पाण्डरेतरवाससः ॥५॥
आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः ।
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ॥६॥
रूक्षनिष्ठुरवादाश्चाप्यमाङ्गल्याभिधायिनः ।
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ॥७॥
वस्त्रान्तानामिकाकेशनखरोमदशास्तथा ।
स्रोतोऽवरोधहृद्गण्डमूर्द्धोरःकुक्षिपाणयः ॥८॥
कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ।

विलिखन्तो महीं किञ्चिन्मुञ्चन्तो लोष्टभेदिनः ॥९॥
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ।
फलं पक्कमसारं वा गृहीत्वान्यच्च तद्विधम् ॥१०॥
नखैर्नखान्तरं वापि करेण चरणं तथा ।
उपानच्चर्महस्ता वा विकृतव्याधिपीडिता ॥११॥
वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ।
याम्या दिशि प्राञ्जलयो विषमैकपदे स्थिताः ॥१२॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ।
दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ।
ज्वलयन्तं पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥१३॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ।
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च ॥१४॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ।
वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने ॥१५॥
मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ।
आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च ॥१६॥
चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥१७॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ।
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥१८॥
त एव कफरोगेषु कर्मसिद्धिकराः स्मृताः ।
एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु तत् ॥१९॥
रक्तपित्तातिसारेषु प्रमेहेषु तथैव च ।
प्रशस्तो जलरोधेषु दूतवैद्यसमागमः ॥२०॥

विज्ञायैव विभाग तु शेष बुध्येत पण्डित:।
शुक्लवासा. शुचिर्गौर श्यामो वा प्रियदर्शन. ॥२१॥
स्वस्था जातौ स्वगोत्रो वा दूत कार्य्यकर स्मृत.।
गोयानेनागतस्तुष्ट पादाभ्यां शुभचेष्टित. ॥२२॥
धृतिमान् विधिकालज्ञ स्वतन्त्र. प्रतिपत्तिमान्।
अलङ्कृतो मङ्गलवान् दूत कार्य्यकर स्मृत ॥२३॥
स्वस्थ प्राङ्मुखमासीन समे देशे शुचौ शुचिम्।
उपसर्पति यो वैद्य स च कार्य्यकर: स्मृत. ॥२४॥
मांसोदकुम्भातपत्रविप्रवारणगोवृषा ।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शन गता. ॥२५॥
स्त्री पुत्त्रिणी सवत्सा गौर्वर्द्धमानमलङ्कृता।
कन्या मत्स्या. फल चाम स्वस्तिक मोदका दधि ॥२६॥
हिरण्याक्षतपात्र वा रत्नानि सुमनो नृप.।
अप्रशान्तोऽनलो वाजी हसचाष. शिखी तथा ॥२७॥
ब्रह्मदुन्दुभिजीमूतशङ्खवेणुरथस्वना ।
सिंहगोवृषनादाश्च ह्रेषित गजबृंहितम् ॥२८॥
शस्त हसरुत नृणा कौशिकश्चैव वामत ।
प्रस्थाने यायिन श्रेष्ठा वाचश्च हृदयङ्गमा: ॥२९॥
पत्रपुष्पफलोपेतान् सक्षीरान्निरुजो द्रुमान्।
आश्रिता वा नभोवेश्मध्वजतोरणवेदिका. ॥३०॥
दिक्षु शान्तासु वक्तारो मधुर पृष्ठतोऽनुगा:।
वामा वा दक्षिणा वापि शकुना: कर्मसिद्धये ॥३१॥
शुष्कोऽशनिहते पत्रे वल्लीनद्धे सकण्टके।
वृक्षेऽथवाश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥३२॥

चैत्यवल्मीकविषमस्थिता दीप्तखरस्वरा ।
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधका ॥३३॥
पुन्नामान खगा वामा स्त्रीसञ्ज्ञा दक्षिणा शुभा ।
दक्षिणाद्वामगमन प्रशस्त श्वसृगालयो ।
वाम नकुलचाषाणा नोभय शशसर्पयो ॥३४॥
भासकौशिकयोश्चैव न प्रशस्त किलोभयम ।
दर्शन वा रुतञ्चापि न गोधाकृकलासयो: ।'३५॥
दूतैरनिष्टै सुल्यानामशस्त दर्शन नृणाम ।
कुलत्थतिलकार्पासतुषपाषाणभस्मनाम ॥३६॥
पात्र नेष्ट तथाङ्गारतैलकर्दमपूरितम ।
प्रसन्नेतरमद्याना पूर्ण वा रक्तसर्षपै ॥३७॥
शवकाष्ठपलाशानां शुष्काना पथि सङ्गमा' ।
नेष्यन्ते पतितान्तस्थदीनान्धरिपवस्तथा ॥३८॥
मृदुशीतोऽनुकूलश्च सुगन्धिश्चानिल' शुभ ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हित ॥३९॥
ग्रन्थ्यर्बुदादिषु सदा छेदशब्दश्च पूजित ।
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥४०॥
रक्तपित्तातिसारेषु रुद्धशब्द' प्रशस्यते ।
एव व्याधिविशेषेण निमित्तमुपधारयेत् ॥४१॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वना ।
छर्द्या वातपुरीषाणा शब्दो वै गर्दभोष्ट्रयो. ॥४२॥
प्रतिषिद्धं तथा भग्न क्षुत स्खलितमाहतम् ।
दौर्मनस्यञ्च वैद्यस्य यात्राया न प्रशस्यते ॥४३॥
प्रवेशेऽप्येतदुद्देशाद्वेक्ष्य च तथातुरे।

प्रतिद्वार गृहे वास्य पुनरेतन्न गच्छति ॥४४॥
केशभस्मास्थिकाष्ठाश्मतुषकार्पासकण्टकाः ।
खट्वोर्ध्वपादा मद्यापो वसा तैलं तिलास्तृणम् ॥४५॥
नपुंसकव्यङ्गभग्ननग्नमुण्डासिताम्बराः ।
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥४६॥
भाण्डानां सङ्करस्थानां स्थानात्सञ्चरणं तथा ।
निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥४७॥
वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ।
वैद्यं सम्भाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥४८॥
प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा ।
हस्तं चाक्रम्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥४९॥
यो वैद्यमुन्मुखः पृच्छेदुन्माष्टिं स्वाङ्गमातुरः ।
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥५०॥
भवने पूज्यते वापि यस्य वैद्यः स सिध्यति ।
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ॥५१॥
आतुरस्य ध्रुवं तस्माद् दूतादीन् लक्षयेद्भिषक् ।
स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ॥५२॥
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ।
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥५३॥
वराहैर्महिषैर्वापि यो यायाद्दक्षिणामुखः ।
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्द्धजा ॥५४॥
यं वाकर्षति बद्धा स्त्री नृत्यन्ती दक्षिणामुखम् ।
अन्त्यावसायिभिर्यो वा कृष्यते दक्षिणामुखः ॥५५॥
परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा ।

मूर्द्धन्याघ्रायते यस्तु श्वापदैर्विकृताननैः ॥ ५६॥
पिबेन्मधु च तैलञ्च यो वा पङ्केऽवसीदति ।
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥ ५७॥
निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम् ।
यस्य वंशो नलो वापि तालो वा रसि जायते ॥ ५८॥
य वा मत्स्यो ग्रसेद्यो वा जननीं प्रविशेन्नरः ।
पर्वताग्रात्पतेद्यो वा श्वभ्रे वा तमसावृते ॥ ५९॥
ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ।
पराजीयेत बध्येत काकाद्यैर्वाभिभूयते ॥ ६०॥
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ।
यः पश्येद्देवतानाञ्च प्रकम्पमवनेस्तथा ॥ ६१॥
यस्य छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ।
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥ ६२॥
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ।
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥ ६३॥
लभेताश्नीत वा पक्वमन्नं यश्च पिबेत् सुराम् ।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥ ६४॥
यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः ।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ ६५॥
ज्वरितानां शुना सख्यं कपिसख्यन्तु शोषिणाम् ।
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्त्तनम् ॥ ६६॥
मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्ध्नि शिरोरुजि ॥ ६७॥
शष्कुलीभक्षणं छर्द्यामध्वा श्वासपिपासयोः ।

हारिद्रं भोजनं वापि यस्य स्यात्पाण्डुरोगिणः ॥६८॥
रक्तपित्ती पिबेद्यश्च शोणितं स विनश्यति ।
स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान् ॥६९॥
दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा ।
जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा ॥७०॥
दृष्ट्वा च प्रथमे यामे सुप्याद् ध्यात्वा पुनः शुभम् ।
जपेद्वान्यतमं देवं ब्रह्मचारी समाहितः ॥७१॥
न चाचक्षीत कस्मैचिद् दृष्ट्वा स्वप्नमशोभनम् ।
देवतायतने चैव वसेद्रात्रित्रयं तथा ।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते ॥७२॥
अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥७३॥
समिद्धमग्निं विप्रांश्च निर्मलानि जलानि च ।
पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥७४॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ।
लभन्ते धनलाभाय व्याधेरपगमाय च ॥७५॥
महाप्रासादसफलवृक्षवारणपर्वतान् ।
आरोहेद् द्रव्यलाभाय व्याधेरपगमाय च ॥७६॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ।
तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥७७॥
उरगो वा जलौको वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्दिशेत्तस्य धनलाभञ्च बुद्धिमान् ॥७८॥
एवंरूपान् शुभान् स्वप्नान् यः पश्येद् व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥७९॥

त्रिंशत्तमोऽध्यायः ।

अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ।

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।
तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे ॥१॥
शृणोति विविधान् शब्दान् यो दिव्यानामभावतः ।
समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान् ॥२॥
तान् स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि ॥३॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥४॥
यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत् ।
सञ्जातशीतपिडको यश्च दाहेन पीड्यते ॥५॥
उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते ।
प्रहारान्नाभिजानाति योऽङ्गच्छेदमथापि वा ॥६॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ।
वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥७॥
स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥८॥
विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ।
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥९॥
यस्य दोषाग्निसाम्यञ्च कुर्य्युर्मिथ्योपयोजिताः ।
यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते ॥१०॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ।
यो वा गन्धान्न जानाति गतासुं तं विनिर्द्दिशेत् ॥११॥

द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा ।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥१२॥
दिवाज्योतींषि यश्चापि ज्वलितानीव पश्यति ।
रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् ॥१३॥
अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान् ।
तडित्वतोऽसितान् यो वा निर्मले गगने घनान् ॥१४॥
विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् ।
यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति ॥१५॥
धूमनीहारवासोभिरावृतामिव मेदिनीम् ।
प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा ॥१६॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ।
न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम् ॥१७॥
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् ।
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति ॥१८॥
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्वजाम् ।
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥१९॥
पिशाचोरगनागानां भूतानां विकृतामपि ।
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ।
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥२०॥

---

## एकत्रिंशत्तमोऽध्यायः ।

अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः ।
श्यावा लोहितिका नीला पीतिका वापि मानवम् ।
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥१॥

ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा।
अकस्माद्य भजन्ते वा स परासुरसंशयम् ॥२॥
यस्याधरौष्ठः पतित श्चिप्तश्चोर्द्ध तथोत्तरः।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥३॥
आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च।
खञ्जनप्रतिमा वापि त गतायुषमादिशेत् ॥४॥
कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥५॥
कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका।
अवस्फूर्जति मग्ना वा न स जीवति मानवः ॥६॥
सङ्क्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने।
स्याता वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥७॥
केशाः सीमन्तिनो यस्य सङ्क्षिप्ते विनते भ्रुवौ।
लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥८॥
नाहरत्यन्नमास्यस्थं न धारयति यः शिरः।
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥९॥
बलवान् दुर्बलो वापि सम्मोहं योऽधिगच्छति।
उत्थाप्यमानो बहुशस्तं धीरः परिवर्जयेत् ॥१०॥
उत्तानः सर्वदा शेते पादौ विकुरुते च यः।
विप्रसारणशीलो वा न स जीवति मानवः ॥११॥
शीतपादकरोच्छ्वासश्छिन्नश्वासश्च यो भवेत्।
काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्जयेत् ॥१२॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्वदा।
मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः स जानता ॥१३॥

उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति य ।
प्रेतैर्वा भाषते सार्द्धं प्रेतरूप तमादिशेत् ॥१४॥
खेभ्य सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते।
पुरुषस्याविषार्त्तस्य सद्यो जह्यात्स जीवितम् ।१५॥
वाताष्ठीला तु हृदये यस्योर्द्ध्वमनुयायिनी ।
रुजान्नविद्वेषकरी स परासुरसंशयम ॥१६॥
अनन्योपद्रवकृत शोफ पादसमुत्थित.।
पुरुष हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥१७॥
अतिसारो ज्वरो हिक्का छर्द्दिः शूनाण्डमेढ्रता ।
श्वासिन कासिनो वापि यस्य तं परिवर्जयेत् ॥१८॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ।
बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशय ॥१९॥
श्यावा जिह्वा भवेद्यस्य सव्य चाक्षि निमज्जति।
मुखञ्च जायते पूति यस्य त परिवर्जयेत् ॥२०॥
वक्त्रमापूर्य्यतेऽश्रूणा स्विद्यतश्चरणावुभौ ।
चक्षुश्चाकुलता याति यमराष्ट्रं गमिष्यत' ॥२१॥
अतिमात्र लघूनि स्युर्गात्राणि गुरुकाणि च ।
यस्याकस्मात्स विज्ञेयो गन्ता वैवस्वतालयम् ॥२२॥
पङ्कमत्स्यवसातैलघृतगन्धाश्च ये नरा ।
मृष्टगन्धाश्च ये वान्ति गन्तारस्ते यमालयम ॥२३॥
यूका ललाटमायान्ति बलिं नाश्नन्ति वायसा' ।
येषा वापि रतिर्नास्ति यातारस्ते यमालयम् ॥२४॥
ज्वरातिसारशोफा स्युर्यस्यान्योन्यावसादिन.।
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ।२५॥

क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥२६॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम्।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥२७॥
विषमेणोपचारेण कर्मभिश्च पुराकृतैः।
अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥२८॥
प्रेतभूतपिशाचाश्च रक्षांसि विविधानि च।
मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥२९॥
तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया।
तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषः ॥३०॥

---

## द्वात्रिंशत्तमोऽध्यायः।

अथातः स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः।

स्वभावप्रसिद्धानां शरीरैकदेशानामन्यभावित्वं मरणाय। तद्यथा। शुक्लानां कृष्णता कृष्णानां शुक्लता रक्तानामन्यवर्णत्वं स्थिराणामस्थिरत्वं मृदूनां स्थिरता चलानामचलत्वमचलानां चलता पृथूनां संक्षिप्तत्वं संक्षिप्तानां पृथुता दीर्घाणां ह्रस्वत्वं ह्रस्वानां दीर्घताऽपतनधर्मिणां पतनधर्मित्वं पतनधर्मिणामपतनधर्मित्वमकस्माच्च शैत्यौष्ण्यस्नैग्ध्यरौक्ष्यप्रस्तम्भवैवर्ण्यावसदनञ्चाङ्गानाम् ॥१॥

स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवस्रस्तोत्क्षिप्तभ्रान्तावक्षिप्तपतितविमुक्तनिर्गतान्तर्गतगुरुलघुत्वानि। प्रवालवर्णव्यङ्गप्रादुर्भावोऽप्यकस्मात्। सिराणाञ्च दर्शनं ललाटे नासावंशे वा पिडकोत्पत्तिः। ललाटे प्रभातकाले वा

स्वेद । नेत्ररोगादिना वाश्रुप्रवृत्ति. । गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयन वा कपोतकङ्कप्रभृतीनाम् । मूत्रपुरीषवृद्धिरभुञ्जानानाम् । तत्प्रणाशो भुञ्जानानाम् । स्तनमूलहृदयोर सु च शूलोत्पत्तय । मध्ये शूनत्वमन्तेषु परिम्लायित्व विपर्ययो वा तथार्द्धाङ्गे श्वयथु । शोषोऽङ्गपचयोर्वा नष्टहीनविकलविकृतस्वरता ॥२॥

विवर्णपुष्पप्रादुर्भावो वा दन्तमुखनखशरीरेषु । यस्य वाप्सु कफपुरीषरेतासि निमज्जन्ति । यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते । स्नेहाभ्यक्तकेशाङ्ग इव यो भाति । यश्च दुर्बलो भक्तद्वेषातिसाराभ्या पीड्यते । कासमानश्च तृष्णाभिभूत क्षीणश्छर्दिभक्तद्वेषयुक्त सफेन पूयरुधिरोद्वामी हतस्वर शूलाभिपन्नश्च मनुष्य । शूनकरचरणवदन क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणिपादो ज्वरकासाभिभूत । यस्तु पूर्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्य्यते वा ज्वरकासाभिभूत स श्वासान्म्रियते । वस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कस्तब्धमेढ्रो भग्नग्रीव प्रनष्टमेहनश्च मनुष्य ॥३॥

प्राग्विशुष्यमाणहृदय आर्द्रशरीरो यश्च लोष्ट लोष्टेनाभिहन्ति काष्ठ काष्ठेन तृणानि वा छिनत्ति । अधरोष्ठ दशत्युत्तरोष्ठ वा लेढि । आलुञ्चति वा कर्णौ केशाश्च । देवद्विजगुरुसुहृद्वैद्याश्च द्वेष्टि । यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगता पीडयन्ति जन्मर्क्षं वा यस्योल्काशनिश्यामभिहन्यते होरा वा । गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति ॥४॥

भवन्ति चात्र ।

चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते ।
प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥५॥
निवर्त्तते महाव्याधिः सहसा यस्य देहिनः ।
न चाहारफलं यस्य दृश्यते स विनश्यति ॥६॥
एतान्यरिष्टरूपाणि सम्यग् बुध्येत यो भिषक् ।
साध्यासाध्यपरीक्षायां स राज्ञः सम्मतो भवेत् ॥७॥

---

त्रयस्त्रिंशत्तमोऽध्यायः ।

अथातोऽवारणीयमध्यायं व्याख्यास्यामः ।
उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम् ।
रसायनादिना वत्स ! तान् शृणुष्वैकमना मम ॥१॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः ।
अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् ॥२॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ।
प्राणमांसक्षयश्वासतृष्णाशोषवमीज्वरैः ॥३॥
मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः ।
वर्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥४॥
शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ।
नरं रुजार्त्तिमन्तञ्च वातव्याधिर्विनाशयेत् ॥५॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ।
पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥६॥
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् ।
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥७॥

तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम्।
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥८॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च।
भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्जयेत् ॥९॥
प्रशूननाभिवृषणं रुद्धमूत्रं रुगान्वितम्।
अश्मरी क्षपयत्याशु सिकता शर्करान्विता ॥१०॥
गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः।
हन्यात् स्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ॥११॥
पार्श्वभङ्गान्नविद्वेषशोफातिसारपीडितम्।
विरिक्तं पूर्य्यमाणञ्च वर्जयेदुदरार्दितम् ॥१२॥
यस्ताम्यति विसञ्ज्ञश्च शेते निपतितोऽपि वा।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥१३॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान्।
नित्यं वक्त्रेण चोच्छ्वस्यात् तं ज्वरो हन्ति मानवम् ॥१४॥
हिक्काश्वासपिपासार्त्तं मूढं विभ्रान्तलोचनम्।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥१५॥
आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च।
क्षीणशोणितमांसञ्च नरं क्षपयति ज्वरः ॥१६॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितम्।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥१७॥
शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीडितम्।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥१८॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः।
भवन्ति दुर्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः ॥१९॥

आध्मातं बद्धनिष्यन्दं छर्द्दिहिक्कातृडन्वितम ।
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥२०॥
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च मानवः ।
पाण्डुसङ्घातदर्शी च पाण्डुरोगो विनश्यति ॥२१॥
लोहितं छर्द्दयेद् यस्तु बहुशो लोहितेक्षणः ।
रक्तानाञ्च दिशो द्रष्टा रक्तपित्ती विनश्यति ॥२२॥
अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः ।
जागरिष्णुरसन्देहमुन्मादेन विनश्यति ॥२३॥
बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम ।
नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत् ॥२४॥



चतुस्त्रिंशत्तमोऽध्याय ।

अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः ।
युक्तसेनस्य नृपतेः परानभिजिगीषतः ।
भिषजा रक्षणं कार्य्यं यथा तदुपदेक्ष्यते ॥१॥
विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ।
रक्षितव्यो विशेषेण विषादेव नराधिपः ॥२॥
पन्थानमुदकं छाया भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयो यस्मात्जानीयाच्छोधयेत्तथा ।
तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥३॥
एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते ।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥४॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद् वैद्यपुरोहितौ ॥५॥

ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्वेदमभाषत ।
पुरोहितमत तस्मादर्त्तेत भिषगात्मवान् ॥६॥
सङ्कर सर्ववर्णाना प्रणाशो धर्मकर्मणाम् ।
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुत ॥७॥
पुरुषाणा नृपाणाञ्च केवल तुल्यमूर्त्तिता ।
आज्ञा त्याग क्षमा धैर्य्य विक्रमश्चाप्यमानुष ॥८॥
तस्माद् देवमिवाभीक्ष्ण वाङ्मन कर्मभि शुभै ।
चिन्तयेन्नृपति नित्य श्रेयासीच्छन् विचक्षण: ॥९॥
स्कन्धावारे च महति राजगेहादनन्तरम् ।
भवेत्सन्निहितो वैद्य सर्वोपकरणान्वित ॥१०॥
तत्रस्थमेन ध्वजवद् यश ख्यातिसमुच्छ्रितम् ।
उपसर्पन्त्यमोहेन विषशल्यामयार्दिता ॥११॥
स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्ववहिष्कृत ।
वैद्यो ध्वज इवाभाति नृपतद्विधपूजित ॥१२॥
वैद्यो व्याध्युपसृष्टश्च भेषज परिचारक ।
एते पादाश्चिकित्साया कर्मसाधनहेतव ॥१३॥
गुणवद्भिस्त्रिभि पादैश्चतुर्थो गुणवान् भिषक् ।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥१४॥
वैद्यहीनास्त्रय. पादा गुणवन्तोऽप्यपार्थका ।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्यु विनाध्वरे ॥१५॥
वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा ।
प्लव प्रतितरैर्हीन कर्णधार इवाम्भसि ॥१६॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयङ्कृती ।
लघुहस्त. शुचि. शूर. सज्जोपस्करभेषज. ॥१७॥

प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ।
सत्यधर्मपरो यश्च स भिषक् पाद उच्यते ॥१८॥
आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि ।
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥१९॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम् ।
युक्तमात्र मनस्कान्तं गन्धवर्णरसान्वितम् ॥२०॥
दोषघ्नमग्लानिकरमविकारि विपर्य्यये ।
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥२१॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥२२॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ।

अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः ।

आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्षेत । सत्यप्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत । तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति । तमेकान्तेनोपक्रमेत् । एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति ॥१॥

भवन्ति चात्र ।

गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ।
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥२॥
गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते ।
शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥३॥
मध्यमस्यायुषो ज्ञानमत ऊर्द्धं निबोध मे ।
अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥४॥
द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ ।
नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः ॥५॥
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ।
जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ॥६॥
ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम् ।
तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् ॥७॥
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ।
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम् ॥८॥

अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति । तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीनाः । चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः । चतुर्दशाङ्गुलायतः पादः । चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि । अष्टादशाङ्गुला जङ्घा । जानूपरि-

ष्टादशित्रिंशदङ्गुलमेव प्रत्येकम्। जङ्घायामसमावूरू। द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहनाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायाम षोडशाङ्गुल। चतुर्विंशत्यङ्गुलो हस्त। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ। द्वात्रिंशत्परिणाहावूरू। मणिबन्धकूर्परान्तरं षोडशाङ्गुलम। तल षट्चतुरङ्गुलायामविस्तारम। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाह मुखग्रीवम। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टि.। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुल.। कर्णावद्वन्तर चतुर्दशाङ्गुलम्। पुरुषोर.प्रमाणविस्तीर्णा स्त्रीश्रोणि.। अष्टादशाङ्गुलविस्तीर्णमुर। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशत पुरुषायाम इति ॥९॥

भवन्ति चात्र।

पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे।
समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक् ॥१०॥
देहः स्वैरङ्गुलैरेष यथावदनुकीर्त्तित।
युक्तप्रमाणेनानेन पुमान् वा यदि वाऽङ्गना ॥११॥

दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति ।
मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम ॥१२॥

अथ सारान् वक्ष्याम । स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेत कल्याणाभिनिवेशं सत्त्वसारं विद्यात् । स्निग्धं संहतश्वेतास्थिदन्तनख बहुलकामप्रज शुक्रेण । अकृशमुत्तमबल स्निग्धगम्भीरस्वर सौभाग्योपपन्न महानेत्रञ्च मज्ज्ञा । महाशिर स्कन्धदृढदन्तहन्वस्थिनखमस्थिभि. । स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायाससहिष्णुं मेदसा । अच्छिद्रगात्र गूढास्थिसन्धि मांसोपचितञ्च मांसेन । स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतल रक्तेन । सुप्रसन्नमृदुत्वग्रोमाण त्वक्सार विद्यादित्येषा पूर्वं पूर्वं प्रधानमायु-सौभाग्ययोरपि ॥१३॥

भवति चात्र ।

सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारत ।
परीक्ष्यायु. सुनिपुणो भिषक् सिध्यति कर्मसु ॥१४॥

व्याधिविशेषास्तु प्रागभिहिता: । सर्व एवैते त्रिविधा: साध्या याप्या प्रत्याख्येयाश्च । तत्रैतान् भूयस्त्रिधा परीक्षेत किमसावौपसर्गिक: प्राक्केवलोऽन्यलक्षण इति । तत्रौपसर्गिको य. पूर्वोत्पन्न व्याधि जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसञ्ज्ञ: । प्राक्केवलो य: प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च । अन्यलक्षणो यो भविष्यद्व्याधिख्यापक स पूर्वरूपसञ्ज्ञ: । तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रव वा । प्राक्केवल यथास्वं प्रतिकुर्वीत । अन्यलक्षणे त्वादिव्याधौ प्रयतेत ॥१५॥

भवति चात्र।

नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥१६॥

प्रागभिहिता ऋतवः ।

शीते शीतप्रतीकारः उष्णे चोष्मनिवारणम् ।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्॥१७॥
अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया ।
क्रियाहीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति ॥१८॥
यात्युदीर्णं शमयति नान्यं व्याधिं करोति च ।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥१९॥

प्रागभिहितोऽग्निरन्नस्य पाचकः । स चतुर्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन तीक्ष्णः पित्तेन मन्दः श्लेष्मणा चतुर्थः समः सर्वसाम्यादिति । तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः समैर्दोषैः । यः कदाचित्सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसार-जठरगौरवान्त्रकूजन-प्रवाहणानि कृत्वा स विषमः । यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति । यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः ॥२०॥

विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥२१॥

तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च। एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च ॥२२॥

जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः।
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥२३॥
प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः।
ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितः ॥२४॥

वयस्तु त्रिविधं बालं मध्यं वृद्धमिति। तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति। तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति। षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्य्यौवनं सम्पूर्णता हानिरिति। तत्राविंशतेर्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता। अत ऊर्द्धमीषत् परिहाणिर्यावत्सप्ततिरिति। सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते। तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्व्वीत ॥२५॥

भवन्ति चात्र।

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥२६॥

अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ॥२७॥
देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः ॥२८॥
कर्षयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरौ ।
रक्षणञ्चैव मध्यस्य कुर्वीत सततं भिषक् ॥२९॥

बलमभिहितगुणं दौर्बल्यञ्च स्वभावदोषजरादिभिरवेक्षितव्यम् । यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् ॥ ३०॥

केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः ।
तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत् ॥३१॥

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्ववैकल्यकरम् ॥३२॥

सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना ।
राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ॥३३॥

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः । सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति ॥ ३४॥

यो रसः कल्पते यस्य सुखायैव निषेवितः ।
व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत् ॥३५॥

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः । आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्रायः उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च

जाङ्गल। उभयदेशलक्षणं साधारणं इति ॥३६॥

भवन्ति चात्र।

समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः।
दोषाणां समता जन्तोस्तस्मात्साधारणो मतः ॥३७॥
न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः।
स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः ॥३८॥
उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥३९॥
देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थितः।
सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा ॥४०॥
केवलः समदेहाग्नेः सुखसाध्यतमो गदः।
अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः ॥४१॥
क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥४२॥
गुणलाभेऽपि सपदि यदि सैव क्रिया हिता।
कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥४३॥
य एवमेनं विधिमेकरूपं बिभर्त्ति कालादिवशेन धीमान् स मृत्युपाशान् जगतो गदौघान् छिनत्ति भैषज्यपरश्वधेन ॥४४॥

---

षट्त्रिंशत्तमोऽध्यायः।

अथातो मिश्रकमध्यायं व्याख्यास्यामः।

मातुलुङ्गाग्निमन्थौ च देवदारुमहौषधम्।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफहृत् ॥१॥

दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहृत् ॥२॥
आगन्तुजे रक्तजे च एष एव विधिः स्मृतः।
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥३॥
अजगन्धाश्वगन्धा च काला सरलया सह।
एकैषिकाजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥४॥
एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च।
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत् ॥५॥
स्निग्धाम्ललवणो वाते कोष्णः शीतः पयोयुतः।
पित्ते चोष्णः कफे चारमूत्राढ्यस्तत्प्रशान्तये ॥६॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः।
शक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥७॥
चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः।
कपोतगृध्रकङ्कानां पुरीषाणि च दारणम्।
चारद्रव्याणि वा यानि चारो वा दारणं परम् ॥८॥
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीडनम्।
यवगोधूममाषाणां चूर्णानि च समासतः ॥९॥
शङ्खिन्यङ्कोठसुमनःकरवीरसुवर्चलाः।
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥१०॥
अजगन्धाजशृङ्गी च गवाक्षी लाङ्गलाह्वया।
पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥११॥
कटुत्रिकं यवक्षारो लवणानि मनःशिला।
कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा ॥१२॥
संशोधनीनां वर्त्तीनां द्रव्याण्येतानि निर्दिशेत्।

एतैरेवौषधै कुर्य्यात्कल्कानपि च शोधनान् ॥१३॥
कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयो ।
पूर्व्वोद्दिष्टेषु चाङ्गेषु कुर्य्यात्तैलघृतानि वै ॥१४॥
अर्कोत्तमा स्नुहीचीरं पिष्टा चारोत्तमानपि ।
जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम् ॥१५॥
पूर्व्वोद्दिष्टानि चान्यानि कुर्य्यात् संशोधनं घृतम् ।
मयूरको राजवृक्षो निम्ब. कोषातकी तिला' ॥१६॥
वृहती कण्टकारी च हरितालं मनःशिला ।
शोधनानि च योज्यानि तैले द्रव्याणि शोधने ॥१७॥
कासीसे सैन्धवे किण्वे वचाया रजनीद्वये ।
शोधनाङ्गेषु चान्येषु चूर्णं कुर्व्वीत शोधनम् ॥१८॥
सालसारादिसारेषु पटोलत्रिफलासु च ।
रसक्रिया विधातव्या शोधनी शोधनेषु च ॥१९॥
श्रीवेष्टके सर्जरसे सरले देवदारुणि ।
सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम् ॥२०॥
कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितम् ।
शृतशीतं कषायं वा रोपणार्थेषु शस्यते ॥२१॥
सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ।
चीरिप्ररोहेष्वपि च वर्त्तयो रोपणाः स्मृताः ॥२२॥
समङ्गा सोमसरला सोमवल्का सचन्दना ।
काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे ॥२३॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ।
काकोल्यादिश्च योज्यः स्यात् प्रशस्तो रोपणे घृते ॥२४॥
कालानुसार्य्यागुरुणी हरिद्रे देवदारु च ।

प्रियङ्ग्वश्च रोध्रञ्च तैले योज्यानि रोपणे ॥२५॥
कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ।
धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते ॥२६॥
प्रियङ्गुका सर्जरसः पुष्पं कासीसमेव च ।
त्वक्चूर्णं धवजं चैव रोपणार्थं प्रशस्यते ॥२७॥
त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ।
रसक्रिया रोपणार्थे विदधीत यथाक्रमम् ॥२८॥
अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला ।
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥२९॥
कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ।
कुक्कुटाण्डकपालानि सुमनोमुकुलानि च ॥३०॥
फले शैरीषकारञ्जे धातुचूर्णानि यानि च ।
व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ॥३१॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥३२॥

सप्तत्रिंशत्तमोऽध्यायः ।

अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः ।

श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाऽऽघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्व्यवगाढमूलमुदीच्याञ्चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः ॥१॥

विशेषनस्तु । तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतला-सन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाम्बुगुणभू-यिष्ठा । नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्र-रोहाऽग्निगुणभूयिष्ठा । रूक्षा भस्मरासभवर्णा तनुरूक्ष-कोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्ष-प्राया श्यामा चाकाशगुणभूयिष्ठा ॥२॥

तत्र केचिदाहुराचार्य्या । प्रावृट्वर्षाशरद्धेमन्तवसन्त-ग्रीष्मेषु यथासङ्ख्यं मूलपत्रत्वक्क्षीरसारफलान्याददी-तेति तत्तु न सम्यक् कस्मात्सौम्याग्नेयत्वाज्जगत । सौम्या-न्योषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्न-गुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु मृद्वी तानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्ध-शीतानि जायन्ते । एतेन शेषं व्याख्यातम् ॥३॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचन-द्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्र-व्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाश-गुणभूयिष्ठायां संशमनान्येव बलवत्तराणि भवन्ति । सर्वा-ण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्य. । सर्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्त-संवत्सराण्याददीतेति ॥४॥

भवन्ति चात्र ।

गोपालास्तापसा व्याधा ये चान्ये वनचारिण. ।

मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥५॥
सर्वावयवसाध्येषु पलाशलवणादिषु।
व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते ॥६॥
गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते।
तस्माद्भूमिस्वभावेन वीजिन षड्रसायुता ॥७॥
अव्यक्त किल तोयस्य रसो निश्चयनिश्चित।
रस एव स चाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥८॥
सर्वलक्षणसम्पन्ना भूमि साधारणा स्मृता।
द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषत ॥९॥
विगन्धेनापरामृष्टमविपन्न रसादिभि।
नव द्रव्य पुराण वा ग्राह्यमेव विनिर्दिशेत् ॥१०॥
विडङ्ग पिप्पली क्षौद्र सर्पिश्चाप्यनव हितम।
शेषमन्यत्त्वभिनव गृह्णीयाद्दोषवर्जितम ॥११॥
जङ्गमाना वयस्थाना रक्तरोमनखादिकम्।
क्षीरमूत्रपुरीषाणि जीर्णाहारेषु सहरेत् ॥१२॥
प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम्।
प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥१३॥

---

## अष्टात्रिंशत्तमोऽध्यायः।

अथातो द्रव्यसग्रहणीयमध्याय व्याख्यास्याम।

समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति। तद्यथा। विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा

क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभी चेति ॥१॥

विदारीगन्धादिरयं गणः पित्तानिलापहः।
शोषगुल्माङ्गमर्दोर्द्ध्वश्वासकासविनाशनः ॥२॥

आरग्वधमदनगोपघोण्टाकुटजपाठाकण्टकीपाटलामूर्वेन्द्रयवसप्तपर्णनिम्ब-कुरुण्टकदासीकुरुण्टकगुडूचीचित्रक-शार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति ॥३॥

आरग्वधादिरित्येष गणः श्लेष्मविषापहः।
मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥४॥

वरुणार्त्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरीयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहतीद्वयञ्चेति ॥५॥

वरुणादिर्गणो ह्येष कफमेदोनिवारणः।
विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन् ॥६॥

वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरुण्टकेन्दीवरकपोतवङ्का श्वदंष्ट्रा चेति ॥७॥

वीरतर्वादिरित्येष गणो वातविकारनुत्।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥८॥

सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति ॥९॥

सालसारादिरित्येष गणः कुष्ठविनाशनः।
मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥१०॥

रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकसल्लकीजिङ्गिनीकदम्बसाला कदली चेति ॥११॥

एष रोध्रादिरित्युक्तो मेद कफहरो गण ।
योनिदोषहरस्तम्भी वर्ण्यो विषविनाशन ॥१२॥

अर्कालर्ककरञ्जद्वयनागदन्ती-मयूरकभार्गीरास्नेन्द्रपुष्पी क्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥१३॥

अर्कादिको गणो ह्येष कफमेदोविषापह ।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधन ॥१४॥

सुरसाश्वेत-सुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकासमर्दनकक्षवकखरपुष्पाविडङ्ग-कट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विषमुष्टिकश्चेति ॥१५॥

सुरसादिर्गणो ह्येष कफहृत् कृमिसूदन ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधन ॥१६॥

मुष्ककपलाशधवचित्रकमदनवृक्षशिंशपावज्रवृक्षास्त्रिफला चेति ॥१७॥

मुष्ककादिर्गणो ह्येष मेदोघ्न शुक्रदोषहृत् ।
मेहार्श पाण्डुरोगघ्न शर्कराश्मरिनाशन ॥१८॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति ॥१९॥

पिप्पल्यादि कफहर प्रतिश्यायानिलारुची ।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचन ॥२०॥

एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरे-
णुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकबाल-
कगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकाऽगुरुस्पृक्कोशीर-भद्रदारु-कु-
ङ्कुमानि पुन्नागकेशरञ्चेति ॥२१॥

एलादिको वातकफौ निहन्याद्विषमेव च ।
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥२२॥

वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरञ्चेति ।
हरिद्रा दारुहरिद्राकलशीकुटजवीजानि मधुकञ्चेति ॥२३॥

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ।
आमातीसारशमनौ विशेषाद्दोषपाचनौ ॥२४॥

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्य-
कक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छ-
गलान्त्रीसुधा सुवर्णक्षीरी चेति ॥२५॥

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ।
आनाहोदरविड्भेदी तथोदावर्त्तनाशनः ॥२६॥

बृहतीकण्टकारिकाकुटजफलपाठा मधुकञ्चेति ॥२७॥

पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ।
कफारोचकहृल्लासमूत्रकृच्छ्ररुजापहः ॥२८॥

पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी
चेति ॥२९॥

पटोलादिर्गणः पित्तकफारोचकनाशनः ।
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥३०॥

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमे-
दामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरी-

कर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति ॥३१॥

काकोल्यादिरयं पित्तशोणितानिलनाशनः ।
जीवनो वृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥३२॥

ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकञ्चेति ॥३३॥

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ।
अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥३४॥

सारिवामधुक-चन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरञ्चेति ॥३५॥

सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ।
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥३६॥

अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पल-नलदनलिनकेशराणि मधुकञ्चेति ॥३७॥

अञ्जनादिर्गणो ह्येष रक्तपित्तनिवर्हणः ।
विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा ॥३८॥

परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफला चेति ॥३९॥

परूषकादिरित्येष गणोऽनिलविनाशनः ।
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥४०॥

प्रियङ्गुसमङ्गाधातकीपुन्नागरक्तचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ॥४१॥

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकविल्वपेशिकासावररोध्रपलाशनन्दीवृक्षपद्मकेशराणि चेति ॥४२॥

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ ॥ ४३॥

न्यग्रोधोडुम्बराश्वत्थप्लक्षमधूककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयपियालमधुकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ॥ ४४॥

न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधकः ।
रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ ४५॥

गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकञ्चेति ।

एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ।
हृल्लासारोचकवमीपिपासादाहनाशनः ॥ ४६॥

उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकञ्चेति ॥ ४७॥

उत्पलादिरयं दाहपित्तरक्तविनाशनः ।
पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥ ४८॥

मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकविभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गेष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति ॥ ४९॥

एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः ।
योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ ५०॥

हरीतक्यामलकविभीतकानि त्रिफला ॥ ५१॥

त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ।
चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ ५२॥

पिप्पलीमरिचशृङ्गवेराणि त्रिकटुकम् ॥ ५३॥

त्र्यूषण कफमेदोघ्नं मेहकुष्ठत्वगामयान ।

निहन्याद्दीपन गुल्मपीनसाग्न्यल्पतामपि ५४॥

आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ।

आमलक्यादिरित्येष गण सर्वज्वरापह ।

चक्षुष्यो दीपनो वृष्य कफारोचकनाशन ॥५५॥

त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलश्चेति ॥५६॥

गणस्त्रप्वादिरित्येष गरक्रिमिहर पर ।

पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ।५७।

लाक्षारेवतकुटजाऽश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ॥५८॥

कषायस्तिक्तमधुर कफपित्तार्त्तिनाशन ।

कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधन ॥५९॥

पञ्च पञ्च मूलान्यत ऊर्द्ध्वं वक्ष्याम । तत्र त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीय: ॥६०॥

कषायतिक्तमधुर कनीय: पञ्चमूलकम ।

वातघ्नं पित्तशमन वृ हण बलवर्द्धनम ॥६१॥

विल्वाग्निमन्थटुण्टुकपाटलाकाश्मर्य्यश्चेति महत् ॥६२॥

सतिक्तं कफवातघ्न पाके लघ्वग्निदीपनम् ।

मधुरानुरसञ्चैव पञ्चमूल महत् स्मृतम् ॥६३।

अनयोर्द्दशमूलमुच्यते ।

गण श्वासहरो ह्येष कफपित्तानिलापह ।

आमस्य पाचनश्चैव सर्वज्वरविनाशन ॥६४॥

विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसञ्ज्ञ ॥६५॥

करमर्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः ॥६६॥

रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ।
सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥६७॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ॥६८॥

मूत्रदोषविकारञ्च रक्तपित्तं तथैव च।
अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत् ॥६९॥
एषां वातहरावाद्यावन्त्यः पित्तविनाशनः।
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ ॥७०॥

विहृतादिकमन्यत्रोपदेक्ष्यामः।

समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम्।
चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम् ॥७१॥
एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान्।
प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक् ॥७२॥
धूमवर्षानिलक्लेदैः सर्वर्त्तुष्वनभिद्रुते।
ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥७३॥
समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत्।
पृथङ्मिश्रान् समस्तान्वा गणं वा व्यस्तसंहतम् ॥७४॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः।

अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः।

मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदारकर्बुदारारिष्टाश्वगन्धाविदुलबन्धुजीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्वारुचित्रा चे-

त्यूर्द्ध भागहराणि। तत्र कोविदारपूर्व्वाणां फलानि। कोविदारादीना मूलानि ॥१॥

त्रिवृताश्यामादन्तीद्रवन्ती-सप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्कज्योतिष्मती चेत्यधोभागहराणि ॥२॥

तत्र तिल्वकपूर्व्वाणां मूलानि। तिल्वकादीना पाटलान्ताना त्वच। कम्पिल्लकफलरज। पूगादीनामेरण्डान्ताना फलानि। पूतीकारग्वधयो पत्राणि। शेषाणां क्षीराणीति ॥३॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतो भागहराणि। एषा स्वरसा इति ॥४॥

पिप्पलीविडङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवीरविम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्कलशुनातिविषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृङ्गीमातुलुङ्गीमुरङ्गीपीलुजाती-शालतालमधूकलाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि ॥५॥

तत्र करवीरपूर्व्वाणां फलानि। करवीरादीनामर्कान्तानां मूलानि। तालीशपूर्व्वाणा कन्दा। तालीशादीनामर्जकान्ताना पत्राणि। इङ्गुदीमेषशृङ्गीत्वचौ। मातुलुङ्गीमुरङ्गीपीलुजातीना पुष्पाणि। शालतालमधूकाना सारा। हिङ्गुलाक्षे निर्य्यासौ। लवणानि पार्थिवविशेषा। गोमूत्रशकृद्रसौ मलाविति ॥६॥

शमनान्यत ऊर्द्ध्वं वच्यामि। तत्र भद्रदारुकुष्ठहरि-
द्रावरुणमेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकीकुबेराक्षी-
वीरतरुसहचराग्निमन्थवत्सादन्यैरण्डाश्मभेदकालर्कशता-
वरीपुनर्नवावसुकवशिरकाञ्चनकभार्गीकार्पासीवृश्चिकाली-
पत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे
चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ७॥

चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारिशता-
वरीगुन्द्राशैवालकह्लारकुमुदोत्पलकदलीकन्दलीदूर्वामूर्वाप्र-
भृतीनि काकोल्यादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समा-
सेन पित्तसंशमनो वर्गः ।८॥

कालेयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पास-
रलारास्नाप्रकीर्य्योदकीर्य्येङ्गुदीसुमनःकाकादनीलाङ्गलकी-
हस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ
पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्व-
धादिरिति समासेन श्लेष्मसंशमनो वर्गः ।९॥

तत्र सर्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य
विदध्यात्। तत्र व्याधिबलादधिकमौषधमुपयुक्तं तमुपश-
मय्य व्याधिं व्याधिमन्यमावहति अग्निबलादधिकमजीर्णं
विष्टभ्य वा पच्यते। पुरुषबलादधिकं ग्लानिमूर्च्छामदाना-
वहति। संशमनमेव संशोधनमतिपातयति। हीनमेभ्यो
दत्तमकिञ्चित्करं भवति। तस्मात्सममेव विदध्यात् ॥१०॥

भवन्ति चात्र।

रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः।
तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥११॥

चले दोषे मृदौ कोष्ठे नेत्रेतात्र बल नृणाम् ।
अव्याधिदुर्बलस्यापि शोधन हि तदा भवेत् ॥१२॥
व्याध्यादिषु तु मध्येषु क्राथस्याञ्जलिरिष्यते ।
विडालपदक चूर्ण देय कल्कोऽक्षसमित ॥१३॥
स्वय प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम ।
भवेदल्पबलस्यापि प्रयुक्त व्याधिनाशनम ॥१४॥

---

चत्वारिंशत्तमोऽध्याय ।

अथातो द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयमध्याय व्याख्यास्याम । केचिदाचार्य्या ब्रुवते द्रव्य प्रधान कस्मादवस्थितत्वादिह खलु द्रव्य व्यवस्थित न रसादयो यथामे फले ये रसादयस्ते पक्के न सन्ति । नित्यत्वाच्च नित्य हि द्रव्यमनित्या गुणा यथा कल्कादिप्रविभाग । स एव सम्पन्नरसगन्धो व्यापन्नरसगन्धो वा भवति ॥१॥

स्वजात्यवस्थानाच्च यथा हि पार्थिव द्रव्यमन्यभाव न गच्छत्येवं शेषाणि । पञ्चेन्द्रियग्रहणाच्च पञ्चभिरिन्द्रियैर्गृह्यते द्रव्य न रसादय । आश्रयत्वाच्च द्रव्यमाश्रिता रसादयो भवन्ति । आरम्भसामर्थ्याच्च द्रव्याश्रित आरम्भो यथा विदारिगन्धादिमाहृत्य सङ्क्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भ । शास्त्रप्रामाण्याच्च शास्त्रे हि द्रव्य प्रधानमुपदेशे हि योगाना यथा मातुलुङ्गाग्निमन्थौ चेति न रसादय उपदिश्यन्ते । क्रमापेक्षितत्वाच्च रसादीना रसादयो हि द्रव्यक्रममपेक्षन्ते यथा तरुणे तरुणा सम्पूर्णे सम्पूर्णा इति ॥२॥

एकदेशसाध्यत्वाच्च द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते यथा महाहच्चीरेणेति तस्माद् द्रव्य प्रधानं द्रव्यलक्षणन्तु क्रियागुणवत् समवायिकारणमिति । नेत्याहुरन्ये । रसास्तु प्रधान कस्मादागमादागमो हि शास्त्रमुच्यते शास्त्रे हि रसा अधिकृता यथा रसायत्त आहार इति तस्मिंश्च प्राणा । उपदेशाच्चोपदिश्यन्ते हि रसा यथा मधुराम्ललवणा वात शमयन्ति । अनुमानाच्च रसेन ह्यनुमीयते द्रव्य यथा मधुरमिति । ऋषिवचनाच्च ऋषिवचन वेदो यथा किञ्चिदिज्यार्थं मधुरमाहरेदिति । तस्माद्रसा प्रधान रसेषु गुणसंज्ञा । रसलक्षणमन्यत्रोपदेक्ष्याम । नेत्याहुरन्ये । वीर्य्य प्रधानमिति कस्मात्तद्वशेनौषधकर्मनिष्पत्ते ॥ ३॥

इहौषधकर्माण्यूर्द्धाधोभागोभयभागसंशोधनसंशमनसंग्राहकाग्निदीपनप्रपीडनलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशमनानि वीर्य्यप्राधान्याद्भवन्ति । तच्च वीर्य्य द्विविधमुष्ण शीत चाग्निषोमीयत्वाज्जगत । केचिदष्टविधमाहुरुष्ण शीत स्निग्ध रूक्ष विशद पिच्छिल मृदु तीक्ष्ण चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्वन्ति यथा तावन्महत्पञ्चमूल कषाय तिक्तानुरस वात शमयेदुष्णवीर्य्यत्वात् तथा कुलत्थ कषाय. कटुक पलाण्डु. स्नेहभावाच्च । मधुरश्चेक्षुरसा वात वर्द्धयति शीतवीर्य्यत्वात् । कटुका पिप्पली पित्त शमयति मृदुशीतवीर्य्यत्वादम्लमामलक लवण सैन्धवञ्च । तिक्ता काकमाची पित्त वर्द्धयत्युष्णवीर्य्यत्वान्मधुरा

मत्स्याश्च। कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्। अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वान्मधुरं क्षौद्रञ्च। तदेतन्निदर्शनमात्रमुक्तम् ॥४॥

भवन्ति चात्र।

ये रसा वातशमना भवन्ति यदि तेषु वै।
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥५॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै।
तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्मकारिणः ॥६॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै।
स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते ॥७॥

तस्माद्वीर्य्यं प्रधानमिति। नेत्याहुरन्ये। विपाकः प्रधानमिति कस्मात् सम्यङ्मिथ्याविपाकत्वादिह सर्वद्रव्याण्यभ्यवहृतानि सम्यक् मिथ्या विपक्वानि गुणं दोषं वा जनयन्ति। तत्राहुरन्ये प्रतिरसं पाक इति। केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकञ्चेति तत् तु न सम्यक् भूतगुणादागमाच्चाम्लो विपाको नास्ति पित्तं हि विदग्धमम्लतामुपैत्यग्नेर्मन्दत्वात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरस्याम्लोऽम्लस्यैव सर्व्वेषामिति केचिदाहुर्दृष्टान्तञ्चोपदिशन्ति यथा तावत् क्षीरं स्थालीगतमभिपच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति। केचिद्वदन्त्यबलवन्तो बलवता वशमायान्तीत्येवमनवस्थितिस्तस्मादसिद्धान्त एषः। आगमे हि द्विविध एव पाको मधुरः कटुकश्च। तयोर्मधुराख्यो

गुरू, कटुकाख्यो लघुरिति । तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्यः शेषाणि लघूनि तस्माद् द्विविध एव पाक इति ॥८॥

भवन्ति चात्र ।

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः ।
निर्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥९॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु ।
निर्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥१०॥
पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः ।
चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः ॥११॥
तद् द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्य्येण सेवितम् ।
किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ॥१२॥
पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात् ।
रसो नास्ति विना द्रव्याद् द्रव्यं श्रेष्ठमतः स्मृतम् ॥१३॥
जन्म तु द्रव्यरसयोरन्योऽन्यापेक्षकं स्मृतम् ।
अन्योऽन्यापेक्षकं जन्म यथा स्याद्देहदेहिनोः ॥१४॥
वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ।
रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥१५॥
द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ।
श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः ॥१६॥
अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥१७॥
प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ।
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन ॥१८॥

सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ।
तस्मात्तिष्ठेत् तु मतिमानागमे न तु हेतुषु ॥१८॥

---

## एकचत्वारिंशत्तमोऽध्यायः ।

अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ।

पृथ्व्यप्तेजोवाय्वाकाशानां समुदायाद् द्रव्याभिनिर्वृत्तिरुत्कर्षस्त्वभिव्यञ्जको भवतीदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति । तत्र स्थूलसारसान्द्रमन्दस्थिरखरगुरुकठिनगन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं तत् स्थैर्य्यबलसङ्घातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति ॥१॥

शीतस्तिमितस्निग्धमन्दगुरुसारसान्द्रमृदुपिच्छिलरसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यं तत् स्नेहनप्रह्लादनक्लेदनबन्धनविष्यन्दनकरमिति ॥२॥

उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपगुणबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसं तद्दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति ॥३॥

सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति ॥४॥

श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयं तन्मार्दवशौषिर्य्यलाघवकरमिति ॥५॥

अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्य-

मस्तीति कृत्वा त त युक्तिविशेषमर्थं वाभिसमीक्ष्य स्ववीर्य्य-गुणयुक्तानि द्रव्याणि कर्मकराणि भवन्ति। तानि यदा कुर्वन्ति स काल यत्कुर्वन्ति तत्कर्म येन कुर्वन्ति तद्वीर्य्यं यत्र कुर्वन्ति तदधिकरण यथा कुर्वन्ति स उपायो यन्निष्पाद-यति तत् फलमिति ॥६॥

तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्टानि पृथि-व्यापो गुर्व्यो गुरुत्वादधो गच्छन्ति तस्माद्विरेचनमधोगुण-भूयिष्ठमनुमानात्। वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्य-ग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति तस्माद्वमन-मप्यूर्द्ध्वगुणभूयिष्ठमुक्तम्। उभयगुणभूयिष्ठमुभयतोभागम। आकाशगुणभूयिष्ठ सशमनम्। सग्राहकमनिलगुणभूयिष्ठ-मनिलस्य शोषणात्मकत्वात्। दीपनमग्निगुणभूयिष्ठम। लेखनमनिलानलगुणभूयिष्टम। बृहण पृथिव्यम्बुगुण-भूयिष्ठम। एवमौषधकर्माण्यनुमानात्साधयेत् ॥७॥

भवन्ति चात्र ।

भूतेजोवारिजैर्द्रव्यै शम याति समीरण ।
भूम्यम्बुवायुजै पित्त चिप्रमाप्नोति निर्वृतिम ॥८॥
खतेजोऽनिलजै श्लेष्मा शममेति शरीरिणाम।
वियत्पवनजाताभ्या वृद्धिमाप्नोति मारुत ॥९॥
आग्नेयमेव यद् द्रव्य तेन पित्तमुदीर्य्यते।
वसुधाजलजाताभ्या बलास परिवर्द्धते ॥१०॥
एवमेतद्गुणाधिक्य द्रव्ये द्रव्ये विनिश्चितम।
द्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचारयेत् ॥११॥

तत्र य इमे गुणा वीर्य्यसञ्ज्ञका शीतोष्णस्निग्धरूक्षमृदु-

तीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णावाग्नेयौ। शीत-पिच्छिलावम्बुगुणभूयिष्ठौ। पृथिव्यम्बुगुणभूयिष्ठः स्नेहः। तोयाकाशगुणभूयिष्ठं मृदुत्वम् ॥१२॥

वायुगुणभूयिष्ठं रौक्ष्यम्। क्षितिसमीरणगुणभूयिष्ठं वैशद्यम्। गुरुलघुविपाकावुक्तगुणौ। तत्रोष्णस्निग्धौ वातघ्नौ। शीतमृदुपिच्छिलाः पित्तघ्नाः। तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः। गुरुपाको वातपित्तघ्नः। लघुपाकः श्लेष्मघ्नः। तेषां मृदुशीतोष्णाः स्पर्शग्राह्याः। पिच्छिलविशदौ चक्षुःस्पर्शाभ्याम्। स्निग्धरूक्षौ चाक्षुषौ। शीतोष्णौ सुखदुःखोत्पादनेन। गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च। लघुर्बद्धविण्मूत्रतया मारुतकोपेन च। तत्र तुल्यगुणेषु भूतेषु रसविशेषमुपलक्षयेत्। तद्यथा। मधुरो गुरुश्च पार्थिवः। मधुरः स्निग्धश्चाप्य इति ॥१३॥

भवति चात्र।

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा।
स्थानवृद्धिक्षयास्तस्माद् देहिनां द्रव्यहेतुकाः ॥१४॥

---

द्विचत्वारिंशत्तमोऽध्यायः।

अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः।

आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः। तस्मादाप्यो रसः परस्पर-संसर्गात्परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम्। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते। तद्यथा। मधुरो-

ऽम्लो लवण, कटुकस्तिक्त' कषाय इति। ते च भूय परस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते। तत्र भूम्यम्बुगुणबाहुल्यान्मधुर। भूम्यग्निगुणबाहुल्यादम्ल। तोयाग्निगुणबाहुल्याल्लवण। वाय्वग्निगुणबाहुल्यात्कटुक'। वाय्वाकाशगुणबाहुल्यात्तिक्त। पृथिव्यनिलगुणबाहुल्यात्कषाय इति। तत्र मधुराम्ललवणा वातघ्ना। मधुरतिक्तकषाया' पित्तघ्ना। कटुतिक्तकषाया' श्लेष्मघ्ना। तत्र वायुरात्मनैवात्मा पित्तमाग्नेय श्लेष्मा सौम्यो इति। त एव रसा स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च। केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधा, सौम्या आग्नेयाश्च। तत्र मधुरतिक्तकषाया, सौम्या, कट्वम्ललवणा आग्नेया। मधुराम्ललवणा स्निग्धा गुरवश्च। कटुतिक्तकषाया रूक्षा लघवश्च। सौम्या शीता आग्नेयाश्चोष्णा: ॥१॥

तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणो वायुस्तस्य समानयोनि कषायो रस' सोऽस्य शैत्यात् शैत्य' वर्द्धयति रौक्ष्याद्रौक्ष्य' लाघवाल्लाघव वैशद्याद्वैशद्य वैष्टम्भ्याद्वैष्टम्भ्यमिति ॥२॥

औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षण पित्तं तस्य समानयोनि कटुको रस, सोऽस्यौष्ण्यादौष्ण्य वर्द्धयति तैक्ष्ण्यात्तैक्ष्ण्य रौक्ष्याद्रौक्ष्यं लाघवाल्लाघव वैशद्याद्वैशद्यमिति ॥३॥

माधुर्य्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षण श्लेष्मा तस्य समानयोनिर्मधुरो रस सोऽस्य माधुर्य्यान्माधुर्य्यं वर्द्धयति स्नेहात् स्नेह गौरवाद्गौरव शैत्यात् शैत्य' पैच्छिल्यात्पैच्छि-

त्स्यमिति। तस्य पुनरन्यर्योनि कटुको रस स स्नेहस्य प्रत्यनीकत्वात् कटुकत्वान्माधुर्य्यमभिभवति रौक्ष्यात् स्नेह लाघवाद्गौरवमौष्ण्यात् शैत्य वैशद्यात्पैच्छिल्यमिति। तदेतन्निदर्शनमात्रमुक्तम् ॥४॥

रसलक्षणमत ऊर्द्ध्वं वक्ष्याम'। तत्र य परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखावलेप जनयति श्लेष्माण चाभिवर्द्धयति स मधुर। यो दन्तहर्षमुत्पादयति मुखास्राव जनयति श्रद्धाञ्चोत्पादयति सोऽम्ल। यो भक्तरुचिमुत्पादयति कफप्रसेक जनयति मार्दवं चापादयति स लवण। यो जिह्वाग्र बाधते उद्वेग जनयति शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुक। यो गले चोषमुत्पादयति मुखवैशद्य जनयति भक्तरुचि चापादयति हर्षञ्च स तिक्तः। यो वक्त्र परिशोषयति जिह्वां स्तम्भयति कण्ठ बध्नाति हृदय कर्षति पीडयति च स कषाय ॥५॥

रसगुणानत ऊर्द्ध्वं वक्ष्याम। तत्र मधुरो रसो रसरक्तमांसमेदोऽस्थिमज्जौज शुक्रस्तन्यवर्द्धनश्चक्षुष्य केश्यो वर्ण्यो बलकृत्सन्धान शोणितरसप्रसादनो बालवृद्धक्षतक्षीणहित षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाहप्रशमन षडिन्द्रियप्रसादन कृमिकफकरश्चेति। स एवगुणोऽप्येक एवात्यर्थमासेव्यमान' कासश्वासालसकवमथुवदनमाधुर्य्यस्वरोपघातकृमिगलगण्डानापादयति तथार्बुदश्लीपदवस्तिगुदोपलेपाभिष्यन्दप्रभृतीन् जनयति ॥६॥

अम्लो जरण पाचन पवननिग्रहणोऽनुलोमन कोष्ठविदाही वहि, शीत, क्लेदन, प्रायशो हृद्यश्चेति। स एव-

गुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसम्मीलन-रोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति तथा क्षताभिहतदग्ध-दष्टभग्नशूनरुग्णप्रच्युतावमूत्रितविसर्पित-च्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परि-दहति कण्ठमुरो हृदयञ्चेति ॥७॥

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्य-कृदुष्णः सर्वरसप्रत्यनीको मार्गविशोधनः सर्वशरीरावयव-मार्दवकरश्चेति । स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान् तथा मुखाक्षिपाकरक्तपित्तवातशोणिताम्लिकाप्रभृतीनापादयति ॥८॥

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्य-कफकृमिविषकुष्ठकण्डूपशमनः सन्धिबन्धविच्छेदनोऽव-सादनः स्तन्यशुक्रमेदसामुपहन्ता चेति । स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रममदगलताल्वोष्ठशोषगात्रसन्ताप-बलविघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति ॥९॥

तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णा-मूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसा-पूयोपशोषणश्चेति । स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्दितशिरःशूलभ्रमतोदभेदच्छेदास्यवै-रस्यान्यापादयति ॥१०॥

कषायः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति । स एवंगुणोऽप्येक

एवात्यर्थमुपसेव्यमानो हृत्पीडास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपण प्रभृतीन् जनयति ॥११॥

अत सर्वेषामेव द्रव्याण्युपदेच्यामः ।

तद्यथा । काकोल्यादि क्षीरघृतवसामज्जशालिषष्टिकयवगोधूममाषशृङ्गाटककसेरुकत्रपुसैर्वारुककर्कारुकालावुकालिन्दकतकगिलोड्यपियालपुष्करवीजकाश्मर्य्यमधूक द्राक्षाखर्जूरराजादनतालनालिकेरेक्षुविकार-बलातिबलात्मगुप्ताविदारीपयस्यागोक्षुरकक्षीरमोरटमधूलिकाकुष्माण्डप्रभृतीनि समासेन मधुरो वर्ग. ॥१२॥

दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दवदरकोलप्राचीनामलकतिन्तिडीककोशाम्रभव्यपारावतवेत्रफललकुचाम्लवेतसदन्तशठदधि तक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लो वर्ग ॥१३॥

सैन्धवसौवर्चलविडपाक्यरोमकसामुद्रकपक्तिमयवक्षारोषप्रसूतसुवर्चिकाप्रभृतीनि समासेन लवणो वर्ग ॥१४॥

पिप्पल्यादि सुरसादि. शिग्रु मधुशिग्रु मूलकलशुनसुमुखशीतशिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्तलाङ्गलकीशुकनाशापीलुप्रभृतीनि सालसारादिश्च प्रायश. कटुको वर्ग ॥१५॥

आरग्वधादिर्गुडूच्यादिर्मण्डूक-पर्णीवेत्रकरीरहरिद्राद्वयेन्द्रयववरुणस्वादुकण्टकसप्तपर्णबृहतीद्वयशङ्खिनीद्रवन्तीत्रिवृत्कृतवेधनकर्कोटककारवेल्लकवार्त्ताककरीरकरवीरसुमन शङ्खपुष्प्यपामार्गत्रायमाणाऽशोकरोहिणीवैजयन्तीसुवर्चलापु-

नर्नवाव्रश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्ग ॥१६॥

न्यग्रोधादिरम्बष्ठादि प्रियङ्ग्वादी रोध्रादिस्त्रिफलाश्मन्नकीजम्ब्वाम्रवकुलतिन्दुकफलानि कतकशाकपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायश्च कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि नीवारकादयो मुद्गादयश्च समासेन कषायो वर्ग ॥१७॥

तत्रैषा रसाना संयोगास्त्रिषष्टिर्भवन्ति। तद्यथा। पञ्चदश द्विका विंशतिस्त्रिका पञ्चदश चतुष्का षट् पञ्चका एकश्च षड्रस एक षट्क इति तेषामन्यत्र प्रयोजनानि वच्याम ॥१८॥

भवति चात्र।

जग्धा षडधिगच्छन्ति बलिनो वशता रसा ।
यथा प्रकुपिता दोषा वश यान्ति बलीयस ॥१९॥

त्रिचत्वारिंशत्तमोऽध्याय ।

अथातो वमनद्रव्यविकल्पविज्ञानीयमध्याय व्याख्यास्याम ।

वमनद्रव्याणा फलाद्यानां मदनफलानि श्रेष्ठतमानि भवन्ति। अथ मदनपुष्पाणामातपपरिशुष्काणा चूर्णंप्रकुञ्चं प्रत्यक्पुष्पीसदापुष्पीनिम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्ता मात्रा पाययित्वा वामयेत् मदनशलाटुचूर्णान्येव वा वकुलरम्यकोपयुक्तानि मधुलवणयुक्तान्यभिप्रतप्तानि मदनशलाटुचूर्णसिद्धा वा तिलतण्डुलयवागूम। निर्वृत्ताना वा नातिहरितपाण्डूना कुशमूढावबद्धस्नङ्गो-

मयप्रलिप्तानां यवतुषमुद्गमाषशाल्यादिधान्यराशावष्टरात्रो षितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धृत्यातपे शोषयेत्। तासां दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये विमृद्य रात्रिपर्युषितं मधुसैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखं प्राङ्मुखमातुरं पाययेतानेन मन्त्रेणाभिमन्त्र्य ॥१॥

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः ।
ऋषयः सौषधीग्रामा भूतसङ्घाश्च पान्तु ते ॥२॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥३॥

विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिष्वप्रवर्त्तमाने वा दोषे पिप्पलीवचागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः पुनः पुनः प्रवर्त्तयेदासम्यग्वान्तलक्षणादिति । मदनफलमज्जचूर्णं वा पञ्चाथ परिभावितं मदनफलकषायेण मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्तां मदनफलमज्जसिद्धं वा पयः । मदनफलमज्जसिद्धेन वा पयसा यवागूमधोभागरक्तपित्तहृद्दाहयोः । मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छर्दिमूर्च्छातमकेषु। मदनफलमज्जस्नेहं भल्लातकस्नेहवदादाय पाणितीभूतं लेहयेदातपपरिशुष्कं वा मदनफलमज्जचूर्णं जीवन्तीकषायेण पित्ते कफस्थानगते। मदनफलमज्जक्वाथं वा पिप्पल्यादिप्रतीवापं तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेण सन्तर्पणं कफजव्या

धिहर मदनफलमज्जचूर्णं वा मधुककाश्मर्य्यद्राक्षाकषायेण। मदनफलविधानमुक्तम् ॥४॥

जीमूतककुसुमचूर्णं वा पूर्ववदेव क्षीरेण निर्वृत्तेषु क्षीरयवागूं रोमशेषु सन्तानिकामरोमशेषु च दध्युत्तर हरितपाण्डुषु दधि तत्कषायसंसृष्टा वा सुरा कफारोचक-कासश्वासपाण्डुरोगयक्ष्मसु पर्य्यागतेषु मदनफलमज्जवदु-पयोगः। तद्वदेव कुटजफलविधानम्। कृतवेधनानामप्येष एव कल्पः। इक्ष्वाकुकुसुमचूर्णं वा पूर्ववदेव क्षीरेण कास-श्वासच्छर्दिकफरोगेषूपयोगः ॥५॥

धामार्गवस्यापि मदनफलमज्जवदुपयोगो विशेषतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु वायौ वा कफस्थानगते कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां बहु-शश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति। तत्त्वनवबद्धदो-षेषु यवागूमाकण्ठात्पीतवत्सु च विदध्यात्। वमनविरेचन-शिरोविरेचनद्रव्याण्येव वा प्रधानतमानि भवन्ति ॥६॥

भवतश्चात्र।

वमनद्रव्ययोगानां दिगियं सम्प्रकीर्त्तिता।
तां विभज्य यथाव्याधि कालशक्तिविनिश्चयात् ॥७॥
कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान्।
पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥८॥

चतुश्चत्वारिंशत्तमोऽध्यायः।

अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्या-स्यामः।

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने।

प्रधानं तिल्वकस्त्वचु फलेष्वपि हरीतकी ॥१॥
तैलेष्वैरण्डज तैल स्वरसे कारवेल्लिका ।
सुधापय पय सूक्तमिति प्राधान्यसग्रह' ।
तेषा विधान वक्ष्यामि यथावदनुपूर्वश ॥२॥

वैरेचनद्रव्यरसानुपीत मूल महत्त्वैवृतमस्तदोषम ।
चूर्णीकृत सैन्धवनागराढ्यमम्लै. पिबेन्मारुतरोगजुष्ट ॥३॥
द्राक्षाविदारीक्षुरसैस्तत् पैत्ते गदे क्षीरयुत पिबेद्वा ।
गुडूच्यरिष्टत्रिफलारसेन सव्योषमूत्र कफजे पिबेद्वा ॥४॥
त्रिवर्णकत्र्यूषणयुक्तमेतद् गुडेन लिह्यान्नवेन चूर्णम ।
पस्थे च तन्मूलरसस्य दत्त्वा तन्मूलकल्क कुडवप्रमाणम ॥५॥
कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेनदद्यात् ।
तत्कल्कभाग सजलौषधार्द्ध ससैन्धवो मूत्रयुतश्च पेय ॥६॥
मलास्त्रुटिनागरकाऽभया स्युर्भागार्द्धिक पूगफल सुपक्वम ।
विडङ्गसारो मरिच सदारु योग सतिल्वकमूत्रयुक्त. ॥७॥
निरेचनद्रव्यभवन्तु चूर्ण रसेन तेषा मतिमान् विमृद्य ।
तन्मूलसिद्धेन च सर्पिषाक्तं सेव्यन्तदाज्ये गुटिकीकृतञ्च ॥८॥

गुडे च पाकाभिमुखे निधाय
चूर्णीकृत सम्यगिद विपाच्य ।
शीत त्रिजातात्कमयो विरुद्य
यागानुरूपा गुटिका प्रयोज्या. ॥९॥
वैरेकीयद्रव्यचूर्णस्य भाग
सिद्ध सार्द्ध क्वाथभागैश्चतुर्भि ।
आस्रम्रीयात् सर्पिषा तच्छृतेन
तत् क्वाथोऽश्वेदित सामितञ्च ॥१०॥

पाकप्राप्ते फाणिते चूर्णित तत्-
क्षिप्त पक्वं चावतार्य्य प्रयत्नात् ।
शीतीभूता मोदका हृद्यगन्धा
कार्य्यास्त्वेते भक्ष्यकाख्या समानात् ॥११॥

रसेन तेषां परिभाव्य मुद्गान् यूषं ससिन्धूद्भवसर्पिरिष्टं ।
वैरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद्वमनौषधैश्च ॥१२॥

भित्त्वा द्विधेक्षुं परिलिप्य कल्कै-
स्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ।
पक्वञ्च सम्यक् पुटपाकयुक्त्या
खादेत्तु तं पित्तगदी सुशीतम् ॥१३॥

सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ।
लिह्यान्मधुघृताभ्यान्तु तृड्दाहज्वरशान्तये ॥१४॥

शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥१५॥

पचेत्त्रिंश सिताक्षौद्रं पलार्द्धकुडवान्वितम् ।
त्रिवृच्चूर्णयुत शीतं पित्तघ्नं तद्विरेचनम् ॥१६॥

त्रिवृच्छ्यामाक्षारशुण्ठीपिप्पलीर्मधुनाप्नुयात् ।
सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥१७॥

बीजाख्यपथ्याकाश्मर्य्यधात्रीदाडिमकोलजान् ।
तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् ॥१८॥

घनीभूतं त्रिसौगन्ध्यं त्रिवृत्क्षौद्रसमन्वितम् ।
लेह्यमेतत्कफप्रायैः सुकुमारैर्विरेचनम् ॥१९॥

नीलीतुल्यं त्वगेलञ्च तैस्त्रिवृत्समसितोपला ।
चूर्णं सन्तर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥२०॥

त्वक्च्छ्यामासिताकृष्णात्रिफलामाषिकैः समैः।
मोदका सन्निपातोर्द्ध्वरक्तपित्तज्वरापहाः ॥२१॥
त्वग्भागास्त्रय प्रोक्तास्त्रिफला तत्समा तथा।
क्षारकृष्णाविडङ्गानि सचूर्ण्य मधुसर्पिषा ॥२२॥
लिह्याद्गुडेन गुटिका कृत्वा वाप्यथ भक्षयेत्।
कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् ॥२३॥
हन्त्यन्यानपि चाप्येतन्निरपाय विरेचनम्।
चूर्णं श्यामात्वङ्नीली कट्वी मुस्ता दुरालभा ॥२४॥
चव्येन्द्रवीज त्रिफला सर्पिर्मांसरसाम्बुभिः।
पीत विरेचन तद्धि रूक्षाणामपि शस्यते ॥२५॥
वैरेचनिकाति क्वाथभागा शीतास्त्रयो मता।
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥२६॥
तत् साधुसिद्ध विज्ञाय शीत कृत्वा निधापयेत्।
कलसे कृतसंस्कारे विभज्यर्त्तू हिमाहिमौ ॥२७॥
मासादूर्द्ध्वं जातरसमासव मधुगन्धिकम्।
पिबेद्सावेव विधिः क्षारमूत्रासवेष्वपि ॥२८॥
वैरेचनिकमूलाना क्वाथे माषान् सुभावितान्।
सुधौतास्तत्कषायेण शालीनाञ्चापि तण्डुलान् ॥२९॥
अवक्षुद्यैकत पिण्डान् कृत्वा शुष्कान् सुचूर्णितान्।
शालितण्डुलचूर्णञ्च तत्कषायोपसाधितम् ॥३०॥
तस्य पिष्टस्य भागास्त्रीन् किण्वभागविमिश्रितान्।
मण्डोदकार्थे क्वाथञ्च दद्यात्तत्सर्वमेकतः ॥३१॥
निदध्यात्कलसे तान्तु सुरा जातरसा पिबेत्।
एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ॥३२॥

मूलानि त्रिवृतादीनां प्रथमस्य गणस्य च ।
महतः पञ्चमूलस्य मूर्वाशार्ङ्गेष्टयोरपि ॥३३॥
सुधा हैमवती चैव त्रिफलातिविषे वचाम् ।
सहत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥३४॥
कुर्य्यान्नि क्वाथमेकस्मिन्नेकस्मिन् चूर्णमेव तु ।
तुषांस्तस्मिंस्तु नि क्वाथे भावयेद्बहुशो यवान् ॥३५॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ।
चतुर्थं भागमावाप्य चूर्णानामनुकीर्त्तितम् ॥३६॥
प्रक्षिप्य कलसे सम्यक् समस्तं तदनन्तरम् ।
तेषां मेव कषायेण शीतलेन सुयोजितम् ।३७॥
पूर्ववत्सन्निदध्यात्तु ज्ञेयं सौवीरकं हि तत् ॥३८॥
पूर्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ।
भागं सतुषं संसृज्य यवान् स्थाल्यामधिश्रयेत् ॥३९॥
अजस्रञ्चा कषायेण तानभ्यासिच्य साधयेत् ।
सुसिद्धाश्चावतार्य्यैतानौषधिभ्यो विवेचयेत् ।४०॥
विमृद्य सतुषान् सम्यक् ततस्तान् पूर्ववन्मितान् ।
पूर्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्ववत् ॥४१॥
तेनैव सह यूषेण कलसे पूर्ववन्न्यसेत् ।
ज्ञात्वा जातरसञ्चापि तत्तुषोदकमादिशेत् ॥४२॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्त्तितः ।
षड्रावात् सप्तरात्राद्वा ते च पेये प्रकीर्त्तिते ॥४३॥
वैरेचनेषु द्रव्येषु त्रिवृन्मूलविधिः स्मृतः ।
दन्तीद्रवन्त्योर्मूलानि विशेषान्स्तत्क्रमान्तरे ॥४४॥
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत् ।

ततस्तृद्दद्विधानेन योजयेत् श्लेष्मपित्तयो ॥४५॥
तयो कल्ककषायाभ्या चक्रतैल विपाचयेत्।
सपिश्च पक्व वीसर्पकासादाहाल्लजीर्जयेत् ॥४६॥
मेहगुल्मानिलश्लेष्मविबन्धास्तैलमेव च।
चतु स्नेह प्रकच्छुक्रवातसरोधजा रुज. ॥४७॥
दन्तीद्रवन्तीमरिचकनकाह्वय वासकै.।
विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितै. ॥४८॥
सप्ताह सपिषा चूर्ण योज्यमेतद्विरेचनम।
जीर्णे सन्तर्पणं चौद्र पित्तश्लेष्मरुजापहम।
अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिवर्हणम् ॥४९॥
गुडस्याष्टपले पथ्या विंशति स्यु पल पलम्।
दन्तीचित्रकयो' कर्षौ पिप्पलीत्वृतोर्दश ॥५०॥
कृत्वा तान्मोदकानेक दशमे दशमेऽहनि।
तत. खादेदुष्णतोयसेवो निर्यन्त्रणास्त्विमे ॥५१॥
दोषघ्ना ग्रहणीपाण्डुरोगार्श कुष्ठनाशना।
व्योष त्रिजातक मुस्ता विडङ्गामलके तथा ॥५२॥
नवतानि समांशानि त्रिवृदष्टगुणानि वै।
श्लक्ष्णचूर्णीकृतानीह दन्तीभागद्वय तथा ॥५३॥
सर्वाणि चूर्णितानीह गालितानि विमिश्रयेत्।
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिके ॥५४॥
पिण्डित भक्षयित्वा तु तत शीताम्बु पाययेत्।
वस्तिरुकतृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ॥५५॥
निर्यन्त्रणमिद सर्व विषघ्नन्तु विरेचनम्।
त्रिवृदष्टकसञ्ज्ञोऽय प्रशस्त. पित्तरोगिणाम् ॥५६॥

भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः।
भक्ष्यरूपसधर्मत्वादाढ्येष्वेव विधीयते ॥५७॥
तिल्वकस्य त्वचं बाह्यामन्तर्वल्कविवर्जिताम्।
चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत् ॥५८॥
तृतीय भावित तेन भागं शुष्कन्तु भावितम्।
दशमूलकषायेण तद्वदस्य प्रयोजयेत् ॥५९॥
विधान त्वक्षु निर्दिष्ट फलानामथ वक्ष्यते।
हरीतक्या फल त्वस्थिवियुक्त दोषवर्जितम् ॥६०॥
योज्य तद्वद्विधानेन सर्वव्याधिनिवर्हणम्।
रसायन पर मेध्य दुष्टान्तर्व्रणशोधनम ॥६१॥
हरीतकी विडङ्गानि सैन्धव नागर त्रिवृत्।
मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम ॥६२॥
हरीतकी भद्रदारु कुष्ठ पूगफल तथा।
सैन्धव शृङ्गवेरञ्च गोमूत्रेण विरेचनम् ॥६३॥
नीलिनीफलचूर्णञ्च नागराभययोस्तथा।
लिह्याद्‌ गुडेन सलिलं पश्चादुष्णं पिबेन्नर ॥६४॥
पिप्पल्यादिकषायेण पिबेत्पिष्टा हरीतकीम्।
सैन्धवोपहित सद्य एष योगो विरेचयेत् ॥६५॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥६६॥
वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी।
सन्तर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ॥६७॥
शीतमामलक रूक्ष पित्तमेद कफापहम्।
बिभीतकमनुष्णन्तु कफपित्तनिवर्हणनम ॥६८॥

तीक्ष्णान्यम्लकषायाणि सतिक्तमधुराणि च।
त्रिफला सर्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥६९॥
वयसः स्थापनं चापि कुर्य्यात् सततसेविता।
हरीतकीविधानेन फलान्येव प्रयोजयेत् ॥७०॥
विरेचनानि सर्वाणि विशेषाच्चतुरङ्गुलात्।
फलं काले समुद्धृत्य सिकतायां निधापयेत् ॥७१॥
सप्ताहमातपे शुष्कं ततो मज्जानमुद्धरेत्।
तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च ॥७२॥
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश।
लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम्।
सुखोदकञ्चानुपिबेदेष योगो विरेचयेत् ॥७३॥
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन तु।
युक्तं पीतं तथा क्षीररसाभ्यान्तु विरेचयेत्।
बालवृद्धक्षतक्षीणसुकुमारेषु योजितम् ॥७४॥
फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत।।
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ॥७५॥
अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्म्मविभ्रमात्।
विजानता प्रयुक्तन्तु महान्तमपि सञ्चयम् ॥७६॥
भिनत्त्याशेव दोषाणां रोगान् हन्ति च दुस्तरान्।
महत्या पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ॥७७॥
कषायैः समभागन्तु तदङ्गारैर्विशोषितम्।
अम्लादिभिः पूर्ववत्तु प्रयोज्यं कोलसम्मितम् ॥७८॥
महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता।
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥७९॥

लेहो वा साधितः सम्यक् स्नुहीक्षीरसिताघृतैः ।
भाविताश्च स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ॥८०॥
चूर्णं काम्पिल्लकं वापि तत्पीतं गुटिकीकृतम् ।
सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ॥८१॥
मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् ।
कीर्णं तेनैव चूर्णेन माल्यं वसनमेव च ॥८२॥
आघ्रायावृत्य वा सम्यक् मृदुकोष्ठो विरिच्यते ।
क्षीरत्वक्फलमूलानां विधाने परिकीर्त्तिते ।
अवेक्ष्य सम्यग्योगादीन् यथावदुपयोजयेत् ॥८३॥
त्रिवृच्छ्यामामितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारभागास्तिस्रश्च चूर्णिताः ॥८४॥
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुडेन वा ।
भक्षयेन्निर्व्यथीहारमेतत् श्रेष्ठं विरेचनम् ॥८५॥
गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ।८६॥
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ।
भक्ष्यान्नलेह्येषु च तेषु तेषु विरेचनान्यग्रमतिर्विदध्यात् ॥८७॥
क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम् ।
कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः ॥८८

---

## पञ्चचत्वारिंशत्तमोऽध्यायः ।

अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ।

पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रा-

निद्रादाहप्रशमनमीकान्तत पथ्यतमञ्च तदेवावनिपतित-मन्यतम रसमुपलभत स्थानविशेषान्नदीनदसरस्तडागवा-पीकूपचुण्टीप्रस्रवणोद्भिदिकिरकेदारपल्वलादिषु स्थानेष्व-वस्थितमिति ।१॥

तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि सम्भ-वन्तीत्येके भाषन्ते । तत्तु न सम्यक् । तत्र पृथिव्यादीनाम-न्योन्यानुप्रवेशकृत सलिलरसो भवत्युत्कर्षापकर्षेण । तत्र स्वगुणभूयिष्ठाया भूमावम्ल लवणञ्च । अम्बुगुणभूयिष्ठाया मधुरम् । तेजोगुणभूयिष्ठाया कटुक तिक्तञ्च । वायुगुण-भूयिष्ठाया कषायञ्च । आकाशगुणभूयिष्ठायामव्यक्तरस-मव्यक्त ह्याकाशमित्यतस्तत् प्रधानमव्यक्तरसत्वात् तत्पेय-मान्तरीक्षालाभे ॥२॥

तत्रान्तरीक्ष चतुर्विधम् । तद्यथा । धार कार तौषार हैममिति । तेषा धार प्रधान लघुत्वात् पुनर्द्वि-विध गाङ्ग सामुद्र चेति । तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति तयोर्द्वयोरपि परीक्षण कुर्वीत शाल्योदन-पिण्डमकुथितमविदग्ध रजतभाजनोपहित वर्षति देवे वहिष्कुर्वीत । स यदि मुहूर्त्त स्थितस्तादृश एव भवति तदा गाङ्ग पततीत्यवगन्तव्य वर्णान्यत्वे सिक्थक्लेदे च सामुद्र-मिति विद्यात् तन्नोपादेयम् । सामुद्रमप्याश्वयुजे मा सि गृहीत गाङ्गवद्भवति । गाङ्ग पुन प्रधान तदुपाददीता-श्वयुजे मासि शुचिशुक्लविततपटैकदेशच्युतमथवा हर्म्यत लपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीत सौवर्णे राजते

मृण्मये वा पात्रे निदध्यात्तत्सर्वकालमुपयुञ्जीत तस्यालाभे भौमम्। तच्चाकाशगुणबहुलम्। तत् पुनः सप्तविधम्। तद्यथा। कौप नादेयं सारस ताडाग प्रास्रवणमौद्भिद चौण्ट्यमिति। तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत महागुणत्वात् शरदि सर्वं प्रसन्नत्वात् हेमन्ते सारसं ताडागं वा वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवं प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्वञ्चेति॥३॥

कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्।
तृणपर्णोत्करयुतं कलुषं विषसंयुतम्॥४॥
योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम्।
स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु॥५॥

तत्र यत् शैवालपङ्कहटतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद् व्यापन्नमिति विद्यात्। तस्य स्पर्शरूपरसगन्धवीर्य्यविपाक-दोषाः षट् सम्भवन्ति। तत्र खरता पैच्छिल्यमौष्ण्यं दन्त-ग्राहिता च स्पर्शदोषाः। पङ्कसिकता शैवालबहुवर्णता रूपदोषः। व्यक्तरसता रसदोषः। अनिष्टगन्धता गन्ध-दोषः। यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः। यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोष इति। त एते आन्तरिक्षे न सन्ति। व्याप-न्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकता-लोष्ट्राणां वा निर्वापणं प्रसादनञ्च कर्त्तव्यं नागचम्पको-त्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति॥६॥

सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा।

पुष्पावतंसं भौमं वा सुगन्धि सलिलं पिबेत् ॥७॥
व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम् ।
दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत् ॥८॥
व्यापन्नं सलिलं यस्तु पिबतीहाप्रसाधितम् ।
श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम् ॥९॥
श्वासकासप्रतिश्यायशूलगुल्मोदराणि च ।
अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च ॥१०॥

तत्र सप्त कलुषस्य प्रसादनानि भवन्ति। तद्यथा। कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति। पञ्च निक्षेपणानि भवन्ति। तद्यथा। फलकं त्र्यष्टकं मुञ्जवलयं उदकमञ्चिका शिक्यञ्चेति। सप्त शीतीकरणानि भवन्ति। प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं वालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति ॥११॥

निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥१२॥

तत्र नद्यः पश्चिमाभिमुखाः पथ्या लघूदकत्वात्। पूर्वाभिमुखास्तु न प्रशस्यन्ते गुरूदकत्वात्। दक्षिणाभिमुखा नातिदोषला साधारणत्वात्। तत्र सह्यप्रभवाः कुष्ठञ्जनयन्ति विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगञ्च मलयप्रभवाः क्रिमीन् महेन्द्रप्रभवाः श्लीपदोदराणि हिमवत्प्रभवाः हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्। प्राच्यावन्त्या अपरावन्त्याश्चार्शांसि उपजनयन्ति पारियात्रप्रभवाः पथ्या बलारोग्यकर्य्य इति ॥१३॥

नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ।

गुर्व्वी शैवालसञ्छन्ना कलुषा मन्दगाश्च या ॥१४॥
प्रायेण नद्यो मरुषु सतिक्ता लवणान्विता।
ईषत्कषाया मधुरा लघुपाका बले हिता ॥१५॥

तत्र सर्वेषां भौमानां ग्रहणं प्रत्यूषसि तत्र ह्यमलत्वं शैत्यञ्चाधिकं भवति स एव चापां परो गुण इति ॥१६॥

दिवार्क्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः।
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥१७॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥१८॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम्।
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥१९॥
मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये।
भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥२०॥
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते।
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥२१॥
आध्माते स्तिमिते कोष्ठे सद्यः शुद्धे नवज्वरे।
हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेत् ॥२२॥
नादेयं वातलं रूक्षं दीपनं लघु लेखनम्।
तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥२३॥
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु।
ताडागं वातलं स्वादु कषायं कटु पाकि च ॥२४॥
वातश्लेष्महरं वाप्यं सक्षारं कटुपित्तलम्।
सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥२५॥
चौण्ट्यमग्निकरं रूक्षं मधुरं कफकृन्न च।

कफघ्न दीपन हृद्य लघु प्रस्रवणोद्भवम् ॥२६॥
मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम्।
वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥२७॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम्।
तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत् ॥२८॥
सामुद्रमुदकं विस्रं लवणं सर्व्वदोषकृत्।
अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम् ॥२९॥
एभिर्दोषैरसंयुक्तं निरवद्यन्तु जाङ्गलम्।
पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम् ॥३०॥
दीपनं स्वादु शीतञ्च तोयं साधारणं लघु।
कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ॥३१॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा।
यत् क्वाथ्यमानं निर्वेगं निःफेनं निर्म्मलं लघु ॥३२॥
चतुर्भागावशेषन्तु तत्तोयं गुणवत् स्मृतम्।
न च पर्य्युषितं देयं कदाचिद्वारि जानता ॥३३॥
अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे।
मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥३४॥
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते।
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ॥३५॥
वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु।
दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु ॥३६॥
शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च।
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥३७॥
मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा।

व्रणे च मधुमेहे च पानीय मन्दमाचरेत् ॥१८॥

इति जलवर्गः।

गव्यमाजन्तथा चौष्ट्रमाविक माहिषञ्च यत्।
अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत्पय ॥१॥
तत्त्वनेकौषधिरसप्रसाद प्राणद गुरु।
मधुर पिच्छिल शीत स्निग्ध श्लक्ष्ण सर मृदु।
सर्वेषा प्राणिना तस्मात् सात्म्य क्षीरमिहोच्यते ॥२॥

तत्र सर्वमेव क्षीर प्राणिनामप्रतिषिद्ध जातिसात्म्यात्। वातपित्तशोणितमानसविकारेष्वविरुद्धम। जीर्णज्वरकास श्वासशोषक्षय-गुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिपाण्डुरोगग्रहणी-दोषार्श -शूलोदावर्त्तातिसार-प्रवाहिका-योनिरोग-गर्भास्राव-रक्तपित्त श्रम क्लमहर पाप्मापह बल्य वृष्य वाजीकरण रसायन मेध्य सन्धानमास्थापन वय स्थापनमायुष्य जीवन बृहण वमन विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणाना क्षुद्व्यवायव्यायामकर्शितानाञ्च पथ्यतमम् ॥३॥

गोक्षीरमनभिष्यन्दि स्निग्ध गुरु रसायनम।
रक्तपित्तहर शीत मधुर रसपाकयो ॥४॥
जीवनीय तथा वातपित्तघ्न परम स्मृतम्।
गव्यतुल्यगुण त्वाज विशेषाच्छोषिणा हितम् ॥५॥
दीपन लघु सग्राहि श्वासकासास्रपित्तनुत्।
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥६॥
नात्यम्बुपानाद् व्यायामात्सर्वव्याधिहर पय।
रुक्षोष्ण लवण किञ्चिदौष्ट्र स्वादुरस लघु ॥७॥

शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम्।
आविकं मधुरं स्निग्धं गुरु पित्तकफावहम्॥८॥
पथ्यं केवलवातेषु कासे चानिलसम्भवे।
महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम्॥९॥
निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु।
उष्ट्रा चैकशफं बल्यं शाखावातहरं पयः॥१०॥
मधुराम्लरसं रूक्षं लवणानुरसं लघु।
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम्॥११॥
नस्याश्चोतनयोः पथ्यं जीवनं लघु दीपनम्।
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु॥१२॥
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम्।
प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम्॥१३॥
रात्रौ सौम्यगुणत्वाच्च व्यायामाभावतस्तथा।
दिवाकराभितप्तानां व्यायामानिलसेवनात्॥१४॥
वातानुलोमं श्रान्तिघ्नं चक्षुष्यं चापराह्णिकम्।
पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्॥१५॥
तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम्।
वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम्॥१६॥
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा।
तदेवातिशृतं सर्व्वं गुरु बृंहणमुच्यते॥१७॥
अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्॥१८॥

इति क्षीरवर्गः।

दधि तु मधुरमम्लमत्यम्लञ्चेति। तत्कषायानुरसं स्निग्ध-

मुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापह वृष्यं प्राणकरं मङ्गल्यञ्च ॥१॥

महाभिष्यन्दि मधुर कफमेदोविवर्द्धनम्।
कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥२॥
विदाहि सृष्टविण्मूत्र मन्दजातं त्रिदोषकृत्।
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ॥३॥
वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम्।
दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥४॥
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम्।
विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ॥५॥
बलासवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम्।
विपाके कटु सक्षारं गुरु भेदौष्ट्रिकं दधि ॥६॥
वातमर्शांसि कुष्ठानि क्रिमीन् हन्त्युदराणि च।
कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥७॥
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम्।
दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥८॥
रूक्षमुष्णं कषायञ्च कफमूत्रापहञ्च तत्।
स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु ॥९॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम्।
लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम् ॥१०॥
कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम्।
दध्न्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥११॥
विज्ञेयमेषु सर्वेषु गव्यमेव गुणोत्तरम्।
वातघ्नं कफकृत् स्निग्धं वृंहणं न च पित्तकृत् ॥१२॥

कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम्।
शृतात् चीरात्तु यज्जात गुणवद्दधि तत् स्मृतम्॥१३॥
वातपित्तहरं रुच्य धात्वग्निबलवर्द्धनम्।
दध्न सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः॥१४॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः।
दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम्॥१५॥
दीपनीयं लघुतरं सकषाय रुचिप्रदम्।
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्॥१६॥
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते।
तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्॥१७॥
अम्लं कषायं मधुरमवृष्य कफवातनुत्।
प्रह्लादन प्रीणनञ्च भिनत्त्याशु मलञ्च तत्॥१८॥
बलमावहते चापि भक्तच्छन्दं करोति च॥१९॥

स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतचीरभवं सरञ्च।
असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्मृता मस्तुगुणास्तथैव॥२०॥

इति दधिवर्गः।

तक्रं मधुरमम्लं कषायानुरसमुष्णवीर्य्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शः प्लीहगुल्मारोचक विषमज्वर-तृष्णाच्छर्दि प्रसेकशूलमेदः श्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यञ्च॥१॥

मन्थनादिपृथग्भूतस्नेहमर्द्धोदकन्तु यत्।
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे।
यत्तु सस्नेहमजलं मथितं घोलमुच्यते॥२॥
तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्बले।

न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥३॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥४॥

तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनञ्च। अम्लं वातघ्नं पित्तकरञ्च ॥५॥

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम्।
पिबेत्तक्रं कफे चापि व्योषक्षारसमायुतम् ॥६॥
ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका।
तक्रात्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥७॥
गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः।
मधुरौ वृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥८॥

नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं सग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणशोषार्शोऽर्दितापहं गुरुकफमेदोविवर्द्धनं बलकरं वृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते। क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहं माधुर्य्ययुक्तमतिशीतं सौकुमार्य्यकरं चक्षुष्यं सग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनञ्च। सन्तानिका पुनर्वातघ्नी तर्पणी बल्या वृष्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्वी च ॥९॥

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः।
विकल्पानवशिष्टांस्तु क्षीरवीर्य्यात्समादिशेत् ॥१०॥

अथ घृतम्।

घृतन्तु सौम्यं शीतवीर्य्यं मृदु मधुरमल्पाभिष्यन्दि

स्नेहनमुदावर्त्तोन्मादापस्मार-शूलज्वरानाहवातपित्तप्रशमनमग्निदीपन स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरमायुष्य वृष्य मेध्य वयःस्थापन गुरु चक्षुष्य श्लेष्माभिवर्द्धन पाप्मालक्ष्मीप्रशमन विषहर रक्षोघ्नञ्च ॥११॥

विपाके मधुर शीतं वातपित्तविषापहम्।
चक्षुष्यमग्र्य बल्यञ्च गव्यं सर्पिर्गुणोत्तरम ॥१२॥
आज घृत दीपनीयं चक्षुष्य बलवर्द्धनम।
कासे श्वासे क्षये चापि पथ्य पाके च तल्लघु ।१३॥
मधुर रक्तपित्तघ्न गुरु पाके कफावहम्।
वातपित्तप्रशमन सुशीत माहिष घृतम ॥१४॥
औष्ट्र कटुरस पाके शोफक्रिमिविषापहम्।
दीपन कफवातघ्न कुष्ठगुल्मोदरापहम् ॥१५॥
पाके लघ्वाविक सर्पिर्न च पित्तप्रकोपणे।
कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥१६॥
पाके लघूष्णवीर्य्यञ्च कषाय कफनाशनम।
दीपन बद्धमूत्रञ्च विद्यादैकशफ घृतम ॥१७॥
चक्षुष्यमग्र्य स्त्रीणान्तु सर्पि स्यादमृतोपमम।
वृद्धि करोति देहाग्न्योर्लघुपाक विषापहम ॥१८॥
कषाय बद्धविण्मूत्रं तिक्तमग्निकरं लघु।
हन्ति कारेणवं सर्पि कफकुष्ठविषक्रिमीन् ।१९॥

क्षीरघृत पुन सग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमन नेत्ररोगहितञ्च। सर्पिर्मण्डस्तु मधुर सरो योनिश्रोत्राक्षिशिरसा शूलघ्नो वस्तिनस्याक्षिप्रपूरणेषूपदिश्यते। सर्पि

पुराणं सर कटुविपाक त्रिदोषापह मूर्च्छामेदउन्मादो-दरज्वरगरशोफापस्मारयोनिश्रोत्राक्षिशिर शूलघ्न दीपन वस्तिनस्याक्षिपूरणेषूपदिश्यते ॥२०॥

भवन्ति चात्र ।

पुराण तिमिरश्वासपीनसज्वरकासनुत् ।
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ।२१॥
एकादशशतञ्चैव वत्सरानुषित घृतम् ।
रक्षोघ्न कुम्भसर्पि. स्यात् परतस्तु महाघृतम् ॥२२॥
पेय महाघृत भूतै कफघ्न पवनाधिकै. ।
बल्य पवित्र मेध्यञ्च विशेषात्तिमिरापहम् ॥२३॥
सर्वभूतहरञ्चैव घृतमेतत् प्रशस्यते ॥२४॥

अथ तैलानि ।

तैल त्वाग्नेयमुष्ण तीक्ष्ण मधुर मधुरविपाक बृहण प्रीणन व्यवायि सूक्ष्म विशद गुरु सर विकासि वृष्य त्वक्प्रसादन मेधामार्दवमांसस्थैर्य्यवर्णबलकर चक्षुष्य बद्ध मूत्र लेखन तिक्तकषायानुरस पाचनमनिलबलासक्षयकर क्रिमिघ्नमशीतपित्तजनन योनिशिर कर्णशूलप्रशमन गर्भाशयशोधनञ्च तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथित-क्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहत-दुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहेषु तिलतैल प्रशस्यते ॥१॥

तद्वस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे ।
अन्नपानविधौ चापि प्रयोज्य वातशान्तये ॥२॥

एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरञ्च ३॥

निम्बातसीकुसुम्भमूलकजीमूतकवृक्षककृतवेधनार्कक-म्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चला-विडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेहशिरो-रोगहराणि चेति ॥४॥

वातघ्नं मधुरं तेषु क्षौमं तैलं बलावहम्।
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम् ॥५॥
कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु।
कफमेदोऽनिलहरं लेखनं कटु दीपनम् ॥६॥
कृमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु।
कुष्ठामयकृमिहरं दृष्टिशुक्रबलापहम् ॥७॥
विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत्।
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥८॥

किराततिक्तकाऽतिमुक्तकविभीतकनालिकेरकोलाक्षो-डजीवन्ती-पियालकर्वुदारसूर्य्यवल्लीत्रपुसैर्वारुककर्कारुकुष्मा-ण्डप्रभृतीनां तैलानि मधुराणि मधुरवीर्य्यविपाकानि वात-पित्तप्रशमनानि शीतवीर्य्याण्यभिष्यन्दीनि सृष्टविण्मूत्रा-ण्यग्निसादनानि चेति ॥९॥

मधूककाश्मर्य्यपलाशतैलानि मधुकषायाणि कफपित्त-प्रशमनानि ॥१०॥

तुवरकभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वात-
कफकुष्ठमेदोमेहक्रिमिहरे उभयतोभागदोषहरे च ॥११॥

सरलदेवदारुगण्डीरशिंशपागुरुसारस्नेहास्तिक्तकटुक-
षाया दुष्टव्रणशोधनाः क्रिमिकफकुष्ठानिलहराश्च ॥१२॥

तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पि-
ल्लकशङ्खिनीस्नेहास्तिक्तकटुकषाया अधोभागदोषहराः
क्रिमिकफकुष्ठानिलहरा दुष्टव्रणशोधनाश्च ॥१३॥

यवतिक्ततैलं सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं
लेखनं मेध्यं पथ्यं रसायनञ्च ॥१४॥

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं
श्लेष्माभिवर्द्धनम् ॥१५॥

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं
मधुरकषायं रसवन्नातिपित्तकरञ्च ॥१६॥

फलोद्भवानि तैलानि यान्यनुक्तानि कानिचित् ।
गुणान् कर्म च विज्ञाय फलवत्तानि निर्दिशेत् ॥१७॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्त्तिताः ।
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥१८॥
सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते ।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥१९॥

ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा
वातघ्ना जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्त-
पित्तघ्नाः प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामे-
दोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥२०॥

अथ मधुवर्गः।

मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं बल्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनञ्च तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधुर्य्यात्कषायभावाच्च वातपित्तघ्नम् ॥१॥

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥२॥
विशेषात्पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात्।
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥३॥
पैच्छिल्यात् स्वादुभूयस्त्वाद् भ्रामरं गुरुसंज्ञितम्।
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥४॥
तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम्।
श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥५॥
स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित्।
श्वित्रमेहक्रिमिहरं विद्याच्छात्रं गुणोत्तरम् ॥६॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम्।
कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥७॥
औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम्।
कषायमुष्णमम्लञ्च पित्तकृत् कटुपाकि च ॥८॥
छर्दिमेहप्रशमनं मधु रूक्षं दालं भ्रमम्।
बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥९॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम्।

दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत्॥१०॥
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्।
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु॥११॥
तत्तु नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानां पुष्परसानां सविषमक्षिकासम्भवत्वाच्चानुष्णोपचारम्॥१२॥
उष्णैर्विरुध्यते सर्वं विषान्वयतया मधु।
उष्णार्त्तमुष्णैरुष्णे वा तं निहन्ति यथाविषम्॥१३॥
तत्सौकुमार्य्याच्च तथैव शैत्यान्नानौषधीनां रससम्भवाच्च।
उष्णैर्विरुध्येत विशेषतश्च तथान्तरीक्षेण जलेन चापि॥१४॥
उष्णेन मधु संयुक्तं वमनेष्ववचारितम्।
अपाकादनवस्थानान्न विरुध्येत पूर्ववत्॥१५॥
मध्वामात्परतस्त्वन्यदामं कष्टं न विद्यते।
विरुद्धोपक्रमत्वात्तत् सद्यो हन्ति यथाविषम्॥१६॥

अथेक्षुवर्गः।

इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः क्रिमिकफकराश्चेति। ते चानेकविधाः। तद्यथा॥१॥
पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः॥२॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत्।
इत्येता जातयः स्थौल्याद् गुणान् वक्ष्याम्यतः परम्॥३॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः।
अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा॥४॥
आभ्यां तुल्यगुणः किञ्चित्सक्षारो वंशको मतः।

वंशवच्छतपोरस्तु किञ्चिदुष्णः स वातहा ॥५॥
कान्तारतापसाविक्षू वंशकानुगुणौ मयि।
एवङ्गुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः ॥६॥
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥७॥
कोषकारो गुरुः शीतो रक्तपित्तक्षयापहः।
अतीवमधुरो मूले मध्ये मधुर एव तु ॥८॥
अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः।
अविदाही कफकरो वातपित्तनिवारणः।
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः ॥९॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः।
पक्वो गुरुः सरः स्निग्धः स तीक्ष्णः कफवातनुत् ॥१०॥

फाणितं गुरु मधुरमभिष्यन्दि वृंहणमवृष्यं त्रिदोषकृच्च। गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकफकरो बल्यो वृष्यश्च ॥११॥

पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः।
स पुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥१२॥

मत्स्यण्डिकाखण्डशर्कराविमलजाता उत्तरोत्तरं शीताः स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रसादनास्तृष्णाप्रशमनाश्च ॥१३॥

यथा यथैषां वैमल्यं मधुरत्वं तथा तथा।
स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा ॥१४॥
यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः।
तेन तेनैव निर्दिश्यस्तेषां विस्रावणो गुणः ॥१५॥

सारस्थिता सुविमला निःसारा च यथा यथा ।
तथा तथा गुणवती विज्ञेया शर्करा बुधैः ॥१६॥
मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रह्लादनी कषायमधुरा मधुरविपाका च । यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥१७॥
यावत्यः शर्कराः प्रोक्ताः सर्वा दाहप्रणाशनाः ।
रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः ॥१८॥
रूक्षं माधूकपुष्पोत्थं फाणितं वातपित्तकृत् ।
कफघ्नं मधुरं पाके कषायं वस्तिदूषणम् ॥१९॥

अथ मद्यवर्गः ।

सर्वं पित्तकरं मद्यमम्लं दीपनरोचनम् ।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥१॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ।
विकासि सृष्टविण्मूत्रं शृणु तस्य विशेषणम् ॥२॥
मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा ।
रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥३॥
मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु ।
लघुपाकि सरं शोषविषमज्वरनाशनम् ॥४॥
मार्द्वीकाल्पान्तरं किञ्चित् खार्जूरं वातकोपनम् ।
तदेव विशदं रुच्यं कफघ्नं कर्षणं लघु ॥५॥
कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ।
कासार्शोग्रहणीदोषमूत्राघातानिलापहाः ॥६॥
स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ।
कासार्शोग्रहणीश्वासप्रतिश्यायविनाशनी ॥७॥

श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ।
छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी ॥८॥
प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ।
पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपणी ॥९॥
विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ।
रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता ॥१०॥
त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ।
ग्राह्युष्णो जगलः पक्वो रूक्षस्तृट्कफशोफहृत् ॥११॥
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ।
बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ॥१२॥
दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ।
कषायो मधुरः सीधुर्गौडः पाचनदीपनः ॥१३॥
शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः ।
वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः ॥१४॥
तद्वत् पक्वरसः सीधुर्बलवर्णकरः सरः ।
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः ॥१५॥
कर्षणः शीतरसिकः श्वयथूदरनाशनः ।
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः ॥१६॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ।
कषायमधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः ॥१७॥
जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ।
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥१८॥
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ।
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥१९॥

तिल. कषायश्शोफघ्नस्तीक्ष्ण स्वादुरवातकृत् ।
तीक्ष्ण कषायो मदकृद् दुर्नामकफगुल्महृत् ॥२०॥
कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरु ।
बल्य पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासव ॥२१॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रद ।
रूक्ष कषायकफहृद्वातपित्तप्रकोपण ॥२२॥
निर्दिशेद्रसतश्चान्यान कन्दमूलफलासवान् ।
नव मद्यमभिष्यन्दि गुरु वातादिकोपनम ॥२३॥
अनिष्टगन्ध विरसमहृद्यञ्च विदाहि च ।
सुगन्धि दीपनं हृद्य रोचिष्णु कृमिनाशनम् ॥२४॥
स्फुटस्रोतस्कर जीर्णं लघु वातकफापहम् ।
अरिष्टो द्रव्यसयोगसस्काराद्धिको गुणै ॥२५॥
बहुदोषहरश्चैव दोषाणां शमनश्च स ।
दीपन कफवातघ्न सर. पित्तविरोधन ॥२६॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसा हित ।
पिप्पल्यादिकृतो गुल्मकफरोगहर स्मृत. ॥२७॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहरा पृथक् ।
अरिष्टासवसीधूना गुणान् कर्माणि चादिशेत् । २८
बुद्ध्वा यथास्व सस्कारमवेक्ष्य कुशलो भिषक् ।
सान्द्रं विदाहि दुर्गन्ध विरस कृमिल गुरु ॥२९॥
अहृद्य तरुण तीक्ष्णमुष्ण दुर्भाजनस्थितम् ।
अल्पौषध पर्य्युषितमत्यच्छ पिच्छिलञ्च यत् ॥३०॥
तद्वर्ज्य सर्वदा मद्य किञ्चिच्छेषन्तु यद्भवेत् ।
तत्र यत् स्तोकसम्भार तरुण पिच्छिल गुरु ॥३१॥

कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः।
पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च ॥३२॥
अहृद्यं फेनिलं पूति कृमिलं विरसं गुरु।
तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम् ॥३३॥
सर्वदोषैरुपेतन्तु सर्वदोषप्रकोपणम्।
चिरस्थितं जातरसं दीपनं कफवातजित् ॥३४॥
रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्।
तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः ॥३५॥
सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना।
समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम् ॥३६॥
विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्।
चिरेण श्लैष्मिके पुंसि पानतो जायते मदः।
अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु ॥३७॥
सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः।
गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥३८॥
राजसे दुःखशीलत्वमात्मत्यागं ससाहसम्।
कलहं सानुबन्धन्तु करोति पुरुषे मदः ॥३९॥
अशौचनिद्रामात्सर्य्यागम्यागमनलोलता।
असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः ॥४०॥
रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम्।
वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥४१॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च।
तद्वत्तदासुतं सर्वं रोचनञ्च विशेषतः ॥४२॥
गौडानि रसशुक्तानि मधुशुक्तानि यानि च।

यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥४३॥
तुषाम्बु दीपन हृद्य हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोविकारघ्न भेदि सौवीरक तथा ॥४४॥
धान्याम्ल धान्ययोनित्वाद्दीपनं दाहनाशनम् ।
स्पर्शात्पानात् तु पवनकफतृष्णाहर लघु ॥४५॥
तैक्ष्ण्याच्च निर्हरेदाशु कफ गण्डूषधारणात् ।
मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम् ॥४६॥
दीपन जरणं भेदि हितमास्थापनेषु च ।
समुद्रमाश्रितानाञ्च जनाना सात्म्यमुच्यते ॥४७॥

अथ मूत्राणि ।

गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमिमेदोविषगुल्मार्श-उदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च समान्यत ॥१॥

भवन्ति चात्र ।

तत्सर्वं कटु तीक्ष्णोष्ण लवणानुरस लघु ।
शोधन कफवातघ्न क्रिमिमेदोविषापहम् ॥२॥
अर्शोजठरगुल्मघ्न शोफारोचकनाशनम् ।
पाण्डुरोगहर भेदि हृद्य दीपनपाचनम् ॥३॥
गोमूत्र कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ।
लघ्वग्निदीपन मेध्यं पित्तल कफवातजित् ॥४॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु ।
मूत्रप्रयोगसाध्येषु गव्य मूत्र प्रयोजयेत् ॥५॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ।

आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥६॥
कासश्वासापहं शोषकामलापाण्डुरोगनुत् ।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम ॥७॥
कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम ।
सक्षारन्तिक्तकटुकमुष्णं वातघ्नमाविकम ॥८॥
दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् ।
आश्वं कफहरं मूत्रं क्रिमिदद्रुषु शस्यते ॥९॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम ।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥१०॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ।
दीपनं गार्दभं मूत्रं क्रिमिवातकफापहम ॥११॥
शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम ।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम ॥१२॥
द्रवद्रव्याणि सर्वाणि समासात् कीर्त्तितानि तु ।
कालदेशविभागज्ञो नृपतेर्दातुमर्हति ॥१३॥

---

## षट्चत्वारिंशत्तमोऽध्याय ।

अथातोऽन्नपानविधिमध्यायं व्याख्यास्याम ।

धन्वन्तरिमभिवाद्य सुश्रुत उवाच प्रागभिहितं प्राणिना पुनर्मूलमाहारो बलवर्णौजसा च । स षट्सु रसेष्वायत्त । रसा. पुनर्द्रव्याश्रयिणो द्रव्यरसगुणवीर्य्यविपाकनिमित्ते च क्षयवृद्धी दोषधातूना साम्यञ्च । ब्रह्मादेरपि च लोकस्याहार स्थित्युत्पत्तिविनाशहेतुराहारादेवाभिवृद्धिर्बलमारोग्य वर्णेन्द्रियप्रसादश्च तथाहारवैषम्यादस्वास्थ्यम् । तस्याशितपीत-

लीढखादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविधप्रभावस्य पृथक् पृथक् द्रव्यरसगुणवीर्य्यविपाकप्रभाववक्तुमीच्छामि ज्ञातुं न ह्यनवबुद्धस्वभावा भिषज स्वस्थानुवृत्ति रोगनिग्रहणञ्च कर्त्तुं समर्था । आहारमूलाश्च सर्वप्राणिनो यस्मात्तस्मादन्नपानविधिमुपदिशतु मे भगवानित्युक्त प्रोवाच भगवान् धन्वन्तरिरथ खलु वत्स सुश्रुत ! यथाप्रश्नमुच्यमानमुपधारयस्व । तत्र लोहितकशालिकलमकर्दमकपाण्डुक-सुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकरोध्रपुष्पकदीर्घशूककाञ्चनक-महिषमस्तकहायनकदूषकमहादूषकप्रभृतय शालय ॥१॥

मधुरा वीर्य्यत शीता लघुपाका बलावहा ।
पित्तघ्नाल्पानिलकफा स्निग्धा बद्धाल्पवर्चस ॥२॥
तेषां लोहितक श्रेष्ठो दोषघ्न शुक्रमूत्रलः ।
चक्षुष्यो वर्णबलकृत् स्वर्य्यो हृद्य श्रमापह ॥३॥
व्रण्यो ज्वरहरश्चैव सर्वदोषविषापह ।
तस्मादल्पान्तरगुणा क्रमश शालयोऽवरा ॥४॥

षष्टिककाङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारकप्रभृतय षष्टिका ॥५॥

रसे पाके च मधुरा शमना वातपित्तयो ।
शालीनाञ्च गुणैस्तुल्या बृंहणा कफशुक्रला ॥६॥
षष्टिक प्रवरस्तेषां कषायानुरसो लघु ।
मृदु स्निग्धस्त्रिदोषघ्न स्थैर्य्यकृद् बलवर्द्धन ॥७॥
विपाके मधुरो ग्राही तुल्यो लोहितशालिभि ।
शेषास्त्वल्पान्तरगुणा षष्टिका क्रमशो गुणै ॥८॥

कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाचत्वरित-कककुक्कुटाण्डकपारापतकपाटलप्रभृतयो व्रीहय ॥९॥

कषायमधुरा पाके मधुरा वीर्य्यतोऽहिमा ।
अल्पाभिष्यन्दिनस्तुल्या षष्टिकैर्बद्धवर्चस ॥१०॥

कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघु ।
तस्मादल्पान्तरगुणा क्रमशो व्रीहयोऽपरे ॥११॥

दग्धायामवनौ जाता शालयो लघुपाकिन ।
कषाया बद्धविण्मूत्रा रूक्षा श्लेष्मापकर्षणा ॥१२॥

स्थलजा कफपित्तघ्ना कषाया कटुकान्वया: ।
किञ्चित्सतिक्तमधुरा पवनानलवर्द्धना ॥१३॥

केदारा मधुरा वृष्या बल्या पित्तनिवर्हणा ।
ईषत्कषायाल्पमला गुरव कफशुक्रला ॥१४॥

रोप्यातिरोप्या लघव शीघ्रपाका गुणोत्तरा ।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धना ॥१५॥

शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चस ।
तिक्ता कषाया पित्तघ्ना लघुपाका कफावहा ॥१६॥

विस्तरेणायमुद्दिष्ट शालिवर्गो हिताहित ।
तद्वत् कुधान्यमुद्गादिमाषादीनाञ्च वक्ष्यते ॥१७॥

अथ कुधान्यवर्ग ।

कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकाप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकवरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतय कुधान्यविशेषा ॥१॥

उष्णा कषायमधुरा रूक्षा कटुविपाकिन: ।
श्लेष्मघ्ना बद्धनिस्यन्दा वातपित्तप्रकोपणा: ॥२॥

कषायमधुरास्तेषां शीतपित्तापहा स्मृता ।
कोद्रवश्च सनीवार श्यामाकश्च सशान्तनु ॥३॥
कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गव ।
यथोत्तर प्रधाना स्यूरूक्षा कफहरा स्मृता ॥४॥
मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा ।
विशोषी तत्र भूयिष्ठ वरुक. समुकुन्दक ॥५॥
रूक्षा वेणुयवा ज्ञेया वीर्य्योष्णा कटुपाकिन ।
बद्धमूत्रा. कफहरा. कषाया वातकोपना: ॥६॥

मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेणवाढ़कीप्रभृतयो वैदला ॥७॥

कषायमधुरा शीता कटुपाका मरुत्कराः ।
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥८॥
नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादना. ।
प्रधाना हरितास्तत्र वन्या मुद्गसमा स्मृता ॥९॥
विपाके मधुरा प्रोक्ता मसूरा बद्धवर्चस ।
मकुष्ठका क्रिमिकरा कलाया प्रचुरानिला ॥१०॥
आढकी कफपित्तघ्नी नातिवातप्रकोपणी ।
वातला शीतमधुरा सकषाया विरूक्षणा. ।११॥
कफशोणितपित्तघ्नाश्चणका. पुंस्त्वनाशना ।
हरेणव सतीनाश्च विज्ञेया बद्धवर्चस. ॥१२॥
इति मुद्गमसूराभ्यामन्ये त्वाध्मानकारका ॥१३॥

माषो गुरुर्भिन्नपुरीषमूत्र स्निग्धोष्णवृष्यो मधुरोऽनिलघ्न ।
सन्तर्पण स्तन्यकरो विशेषाद्बलप्रद. शुक्रकफावहश्च ॥१४॥
कषायभावान्न पुरीषभेदी

न मूत्रलो नैव कफस्य कर्त्ता ।
स्वादुर्विपाके मधुरोऽलसान्द्र
सन्तर्पण स्तन्यरुचिप्रदश्च ॥१५॥
माषै समानं फलमात्मगुप्त-
मुक्तञ्च काकाण्डफल तथैव ।
आरण्यमाषा गुणत प्रदिष्टा
रूक्षा कषाया अविदाहिनश्च ॥१५॥
उष्ण कुलत्थो रसत कषाय.
कटुर्विपाके कफमारुतघ्नः ।
शुक्राश्मरीगुल्मनिषूदनश्च
सग्राहक पीनसकासहारी ॥१६॥
आनाहमेदोगुदकीलहिक्का-
श्वासापह शोणितपित्तकृच्च ।
कफस्य हन्ता नयनामयघ्नो
विशेषतो वन्यकुलत्थ उक्त ॥१७॥
ईषत्कषायो मधुर सतिक्त
सग्राहक पित्तकरस्तथोष्ण ।
तिलो विपाके मधुरो बलिष्ठ
स्निग्धो व्रणालेपन एव पथ्य ॥ १८ ॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्र-
स्त्वच्योऽथ केश्योऽनिलहा गुरुश्च ।
तिलेषु सर्वेष्वसित प्रधानो
मध्य सितो हीनतरास्तथान्ये ॥ १९ ॥
यव कषायो मधुरो हिमश्च

कटुर्विपाके कफपित्तहारी ।
व्रणेषु पथ्यास्तिलवच्च नित्य
प्रबद्धमूत्रो बहुवातवर्चा ॥ २० ॥
स्थैर्य्याग्निमेधास्वरवर्णकृच्च
स पिच्छिल स्थूलविलेखनश्च ।
मेदोमरुत्तृड्हरणोऽतिरूक्ष
प्रसादन शोणितपित्तयोश्च ॥ २१ ॥
एभिर्गुणैर्हीनतरास्तु किञ्चिद्
विद्याद् यवेभ्योऽतियवान् विशेषै ।
गोधूम उक्तो मधुरो गुरुश्च
बल्य स्थिर शुक्ररुचिप्रदश्च ॥ २२ ॥
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता
सन्धानकृत् श्लेष्मकर: सरश्च ।
रूक्ष: कषायो विषशोफशुक्र-
बलासदृष्टिक्षयकृद् विदाही ॥ २३ ॥
कटुर्विपाके मधुरस्तु शिम्ब.
प्रभिन्नविण्मारुतपित्तलश्च ।
सितासिता पीतकरक्तवर्णा
भवन्ति येऽनेकविधास्तु शिम्बा ॥ २४ ॥
यथोदितास्ते गुणत प्रधाना
ज्ञेया कटूष्णा रसपाकयोश्च ।
सहादय मूलकजाश्च शिम्बा
कुशिम्बिवल्लीप्रभवास्तु शिम्बा. ॥ २५ ॥
ज्ञेया विपाके मधुरा रसे च

बलप्रदा पित्तनिवर्हणाश्च ।
विदाहवन्तश्च भृशञ्च रूक्षा
विष्टभ्य जीर्य्यन्त्यनिलप्रदाश्च ॥ २६ ॥
रुचिप्रदाश्चैव सुदुर्जराश्च
सर्वे स्मृता वैदलिकास्तु शिम्बा ।
कटुर्विपाके कटुकः कफघ्नो
विदाहिभावादहितः कुसुम्भः ॥२७॥
उष्णातसी स्वादुरसाऽनिलघ्नी
पित्तोल्वणा स्यात् कटुका विपाके ।
पाके रसे चापि कटुः प्रदिष्टः
सिद्धार्थकः शोणितपित्तकोपी ॥२८॥
तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि ॥२९॥
अनार्त्तवं व्याधिहतमपर्य्यागतमेव च ।
अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥ ३०॥
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥३१॥
शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः ।
कालप्रमाणसंस्कारमात्राः सम्परिकीर्त्तिताः ॥३२॥

अत ऊर्द्धं मांसवर्गानुपदेक्ष्यामः ।

तद्यथा । जलेशया आनूपा ग्राम्याः क्रव्यभुजः एकशफा जाङ्गलाश्चेति षण्मांसवर्गास्तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः । ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः । तद्यथा। जङ्घाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा बिलेशया ग्राम्याश्चेति । तेषां

जाङ्गलविष्किरौ प्रधानतमौ। तावेणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जाङ्गला मृगा कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥१॥

कषायो मधुरो हृद्य पित्तासृक्कफरोगहा ।
संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः ॥२॥
मधुरो मधुर पाके दोषघ्नोऽनलदीपन ।
शीतलो बद्धविण्मूत्र सुगन्धिर्हरिणो लघु ॥३॥
एण कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ।
न कृष्णो न च ताम्रश्च कुरङ्ग सोऽभिधीयते ॥४॥
शीतासृक्पित्तशमनी विज्ञेया मृगमातृका ।
सन्निपातक्षयश्वासकासहिक्काऽरुचिप्रणुत् ॥५॥

लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रककुतित्तिरिकुरबाहुकयवलकप्रभृतयस्त्वाह्वला विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च ॥६॥

संग्राही दीपनश्चैव कषायमधुरो लघु ।
लावः कटुविपाकश्च सन्निपाते च पूजितः ॥७॥
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः ।
तित्तिरि सर्वदोषघ्नो ग्राही वर्णप्रसादनः ॥८॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरि ।
रक्तपित्तहर शीतो लघुश्चापि कपिञ्जल ॥९॥
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ।
वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः ॥१०॥

लघव क्रकरा हृद्यास्तथा चैवोपचक्रकाः ।
कषाय. स्वादुलवणस्त्वच्य केश्यो रुचिप्रद. ॥११॥
मयूर. स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्य कृत् ।
स्निग्धोष्णोऽनिलहा वृष्य स्वेदस्वरबलावहः ॥१२॥
वृहण कुक्कुटो वन्यस्तद्वद् ग्राम्यो गुरुस्तु स ।
वातरोगक्षयवमीविषमज्वरनाशन ॥१३॥

कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्ग-गृहकुलिङ्गगोक्षोडकडिण्डिमाणकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुली-गिरिशालट्टालट्टूषकसुगृही-खञ्जरीटकहारीतदात्यूहप्रभृतय. प्रतुदा ॥१४॥

कषायमधुरा रूक्षा. फलाहारा मरुत्करा ।
पित्तश्लेष्महरा शीता बद्धमूत्राल्पवर्चस ॥१५॥
सर्वदोषकरस्तेषा भेदाशी मलदूषक. ।
कषायस्वादुलवणो गुरुः काणकपोतकः ॥१६॥
रक्तपित्तप्रशमन. कषायविशदोऽपि च ।
विपाके मधुरश्चापि गुरुः पारावतः स्मृत ॥१७॥
कुलिङ्गो मधुरः स्निग्ध कफशुक्रविवर्द्धन. ।
रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रल ॥१८॥

सिंहव्याघ्रवृकतरक्षु ऋक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयो गुहाशया. ॥१९॥

मधुरा गुरव स्निग्धा बल्या मारुतनाशनाः ।
उष्णवीर्य्या हिता नित्य नेत्रगुह्यविकारिणाम् ॥२०॥

काककङ्ककुररचाषभासशशघात्युलूक-चिल्लिश्येनगृध्रप्रभृतय. प्रसहा. ॥२१॥

एते सिद्धार्दिभिः सर्वैं समाना वायसादयः ।
रसवीर्य्यविपाकेषु विशेषाच्छोषिणे हिताः ॥२२॥

मद्गुमूर्षिकवृक्षशायिकावकुशपूतिघास-वानरप्रभृतयः पर्णमृगाः ॥२३॥

मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः ।
सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ।
समुद्रजेभ्यो नादेया वृंहणत्वाद् गुणोत्तराः ॥२४॥

श्वविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाऽजगरसर्पमूर्षिकनकुलमहावभ्रुप्रभृतयो विलेशयाः ॥२५॥

वर्चोमूत्रं संहतं कुर्य्युरेते
वीर्य्ये चोष्णाः पूर्ववत् स्वादुपाकाः ।
वातं हन्युः श्लेष्मपित्ते च कुर्य्युः
स्निग्धाः कासश्वासकार्श्यापहाश्च ॥२६॥

कषायमधुरस्तेषां शशः पित्तकफापहः ।
नातिशीतलवीर्य्यत्वाद्वातसाधारणो मतः ॥२७॥

गोधा विपाके मधुरा कषायकटुका स्मृता ।
वातपित्तप्रशमनी वृंहणी बलवर्द्धनी ॥ २८ ॥

शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।
प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः ॥२९॥

दुर्नामानिलदोषघ्नाः क्रिमिदूषीविषापहाः ।
चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्द्धनाः ॥३०॥

दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ।
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥३१॥

अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेद.पुच्छकप्रभृतयो ग्राम्या ॥३२॥

ग्राम्या वातहरा सर्वे बृंहणा कफपित्तला: ।
मधुरा रसपाकाभ्या दीपना बलवर्द्धना ॥३३॥
नातिशीतो गुरु स्निग्धो मन्दपित्तकफ: स्मृत. ।
छगलस्त्वनभिष्यन्दी तेषा पीनसनाशन: ॥३४॥
बृंहण मासमौरभ्र पित्तश्लेष्मावह गुरु ।
मेद.पुच्छोद्भव वृष्यमौरभ्रसदृश गुणै ॥३५॥
श्वासकासप्रतिश्यायविषमज्वरनाशनम् ।
श्रमात्यग्निहित गव्य पवित्रमनिलापहम् ॥३६॥
औरभ्रवत्सलवण मासमेकशफोद्भवम ।
अल्पाभिष्यन्द्ययं वर्गो जाङ्गल समुदाहृत: ॥३७॥
दूरे जनान्तनिलया दूरे पानीयगोचरा ।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मता: ॥३८॥
अतीवासन्ननिलया समीपोदकगोचरा: ।
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥३९॥

आनूपवर्गस्तु पञ्चविध । तद्यथा। कूलचरा. प्लवा: कोशस्था पादिनो मत्स्याश्चेति। तत्र गजगवयमहिषरुरुचमरसृमररोहितवराह खड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतय. कूलचरा पशव ॥४०॥

वातपित्तहरा वृष्या मधुरा रसपाकयो' ।
शीतला बलिन स्निग्धा मूत्रला कफवर्द्धना ॥४१॥
विरूक्षणो लेखनश्च वीर्य्योष्ण पित्तदूषण ।
स्वाद्वम्ललवणस्तेषा गज. श्लेष्मानिलापह. ॥४२॥

गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ।
विपाके मधुरं चापि व्यवायस्य तु वर्द्धनम् ॥ ४३॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ।
निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांसदार्ढ्यकृत् ॥४४॥
रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् ॥४५॥
तथा चमरमांसन्तु स्निग्धं मधुरकासजित् ।
विपाके मधुरं चापि वातपित्तप्रणाशनम् ॥४६॥
सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् ॥४७॥
स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु ।
स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम् ॥४८॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥४९॥
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ।
विपाके मधुरञ्चापि रक्तपित्तविनाशनम् ॥५०॥

हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतचरणप्रभृतयः प्लवाः संघातचारिणः ॥५१॥

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ।
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥५२॥
गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
बृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः ॥५३॥

शङ्खशङ्खनशुक्तिशम्बूकभल्लूकप्रभृतय कोशस्था । कूर्म-कुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतय पादिन ।५४॥

शङ्खकूर्मादय स्वादुरसपाका मरुन्नुद ।
शीता स्निग्धा हिता पित्ते वर्चस्या श्लेषवर्द्धना ॥५५॥
कृष्णकर्कटकस्तेषा बल्य कोष्णोऽनिलापह ।
शुक्ल सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥५६॥

मत्स्यास्तु द्विविधा नादेया सामुद्राश्च। तत्र नादेया । रोहितपाठीनपाटलाराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुञ्जार-मुरलसहस्रदंष्ट्रप्रभृतयो नादेया ॥५७॥

नादेया मधुरा मत्स्या गुरवो मारुतापहाः।
रक्तपित्तकराश्चोष्णा वृष्या स्निग्धाल्पवर्चस ॥५८॥
कषायानुरसस्तेषा शष्पशैवालभोजन ।
रोहितो मारुतहरो नात्यर्थं पित्तकोपन ॥५९॥
पाठीनः श्लेष्मलो वृष्यो निद्रालु' पिशिताशन' ।
दूषयेद्रक्तपित्तन्तु कुष्ठरोग' करोत्यसौ ॥६०॥
मुरलो बृंहणो वृष्य स्तन्यश्लेष्मकरस्तथा।
सरस्तडागसम्भूता स्निग्धा स्वादुरसा स्मृता ॥६१॥
महाह्रदेषु बलिन स्वल्पेऽम्भस्यबला स्मृता ॥६२॥

तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारल-कमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतय सामुद्रा ॥६३॥

सामुद्रा गुरव स्निग्धा मधुरा नातिपित्तला ।
उष्णा वातहरा वृष्या वर्चस्या श्लेषवर्द्धना ॥६४॥
बलावहा विशेषेण मासाशित्वात्समुद्रजाः।
तेषामप्यनिलघ्नत्वाच्छैत्यात्कौष्ण्यौ गुणोत्तरौ।

स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणोत्तरा ॥६५॥
नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ।
सरस्तडागजानान्तु विशेषेण शिरो लघु ॥६६॥
अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ।
किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥६७॥
अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः ।
उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम् ॥६८॥
इत्यानूपो महाभिष्यन्दिमांसवर्गो व्याख्यातः ।

तत्र शुष्कपूतिव्याधितविषसर्पहतदिग्धविद्धजीर्णकृश-बालानामसात्म्यचारिणां मांसान्यभक्ष्याणि यस्माद्विगत-व्यापन्नापहतपरिणताल्पासम्पूर्णवीर्यत्वाद्दोषकराणि भवन्ति ॥ ६९ ॥

अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम् ।
विषव्याधिहतं मृत्युं बालं छर्दिञ्च कोपयेत् ॥७०॥
कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् ।
क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥७१॥

एभ्योऽन्येषामुपादेयं मांसमिति। स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेष्वल्पशरीरा अल्पशरीरेषु महा-शरीराः प्रधानतमाः एवमेकजातीयानां महाशरीरेभ्यः कृश-शरीराः प्रधानतमाः ॥७२॥

स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तद्यथा । रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरासु गुरुतरास्तथा सक्‌-थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्मकालेयकयकृदन्त्राणि ॥ ७३ ॥

शिर स्कन्ध कटी पृष्ठ सक्थिनी चात्मपक्षयो ।
गुरुपूर्वं विजानीयाद्धातवस्तु यथोत्तरम् ॥७४॥
सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृत ।
पूर्वभागो गुरु पुसामधोभागस्तु योषिताम् ॥७५॥
उरोग्रीव विहङ्गाना विशेषेण गुरु स्मृतम ।
पक्षोत्क्षेपात्समो दिष्टो मध्यभागस्तु पक्षिणाम् ॥७६॥
अतीवरूक्ष मासन्तु विहङ्गाना फलाशिनाम ।
बृहण मासमत्यर्थं खगाना पिशिताशिनाम् ॥७७॥
मत्स्याशिन पित्तकर वातघ्न धान्यचारिणाम ।
जलजानूपजा ग्राम्या क्रव्यादैकशफास्तथा ॥७८॥
प्रसहा विलवासाश्च ये च जङ्घालसज्ञिता ।
प्रतुदा विष्किराश्चैव लघव स्युयथोत्तरम ।
अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा ॥७९॥

प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च । सर्वप्राणिना सर्वशरीरेभ्यो ये प्रधानतमा भवन्ति यकृत्प्रदेशवर्त्तिनस्तानाददीत प्रधानलाभाभावे मध्यमवयस्क सद्यस्कमक्लिष्टमुपादेय मासमिति ॥८०॥

भवति चात्र ।

वय शरीरावयवा स्वभावो धातव क्रिया ।
लिङ्ग प्रमाण सस्कारो मात्रा चास्मिन् परीक्षिता ॥८१॥

इति मासवर्ग ।

अत ऊर्द्ध फलवर्गानुपदेक्ष्याम । तद्यथा। दाडिमामलकवदरकोलकर्कन्धुसौवीरसिम्बितिकाफलककपित्थमातुलुङ्गाम्राम्रातककरमर्दपियालत्कुचभव्यपारावतवेत्रफलप्रा-

चीनामलकतिन्तिडीकनीपकोशाम्राम्लीकानारङ्गजम्बीरप्रभृतीनि ॥१॥

अम्लानि रसतः पाके गुरूण्युष्णानि वीर्य्यतः ।
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥२॥
कषायानुरसं तेषां दाडिमं नातिपित्तलम् ।
दीपनीयं रुचिकरं हृद्यं वर्च्चोविबन्धनम् ॥३॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ।
त्रिदोषघ्नञ्च मधुरमम्लं वातकफापहम् ॥४॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ।
चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् ॥५॥
हन्ति वातं तदम्लत्वात्पित्तं माधुर्य्यशैत्यतः ।
कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकञ्च तत् ॥६॥
कर्कन्धुकोलबदरमामं पित्तकफावहम् ।
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥७॥
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ।
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥८॥
कषायं स्वादु संग्राहि शीतं सिञ्चितिकाफलम् ।
आमं कपित्थमस्वर्य्यं कफघ्नं ग्राहि वातलम् ॥९॥
कफानिलहरं पक्वं मधुराम्लरसं गुरु ।
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥१०॥
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ।
त्वक् तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा ॥११॥
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ।
मेध्यं शूलानिलच्छर्दिकफारोचकनाशनम् ॥१२॥

दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केसरम ।
शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते ॥१३॥
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ।
पित्तानिलकरं बालं पित्तलं बद्धकेसरम ॥१४॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम ।
कषायानुरसं स्वादु वातघ्नं वृंहणं गुरु ॥१५॥
पित्ताविरोधि सम्पक्कमाम्रं शुक्रविवर्द्धनम ।
वृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्य्यति ॥१६॥
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्द्धनम ।
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम ॥१७॥
अम्लं तृष्णापहं रुच्यं पित्तकृत् कारमर्दकम् ।
वातपित्तहरं वृष्यं पियालं गुरु शीतलम ॥१८॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ।
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम ॥१९॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत् ।
गरदोषहरं नीपं प्राचीनामलकं तथा ॥२०॥
वातापहं तिन्तिडीकमामं पित्तबलासकृत् ।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं कफवातनुत् ॥२१॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ।
अम्लीकाया फलं पक्वं तद्वद्भेदि तु केवलम् ॥२२॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम ।
वातघ्नं दुर्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥२३॥
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ।
वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ।

ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥२४॥

क्षीरवृक्षफलजाम्बवराजादनतोदनतिन्दुकवकुलधन्वनाश्मन्तकाश्वकर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्त्तिविल्वविम्बीप्रभृतीनि ॥२५॥

फलान्येतानि शीतानि कफपित्तहराणि च ।
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥२६॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥२७॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ।
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥२८॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ।
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम् ॥२९॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु संपक्वं मधुरं कफपित्तजित् ॥३०॥
मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलम् ।
स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते ॥३१॥
कषायञ्च हिमं स्वादु धान्वनं कफवातजित् ।
तद्वद्गाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥३२॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ।
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥३३॥
वातघ्नं पित्तजननमामं विद्यात परूषकम् ।
तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ॥ ४॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ।
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं गुरु ॥ ५॥

कफानिलहरं तीक्ष्णं स्निग्धं सग्राहि दीपनम् ।
कटुतिक्तकषायोष्णं बाल विल्वमुदाहृतम ॥३६॥
तदेव विद्यात् सम्पक्वं मधुरानुरस गुरु ।
विदाहि विष्टम्भकर दोषकृत् पूतिमारुतम ॥३७॥
बिम्बीफलं स्वादुरसं स्तन्यकृत् कफपित्तजित् ।
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् ॥३८॥
तालनारिकेलपनसमोचप्रभृतीनि ॥३९॥
स्वादुपाकरसान्याहुर्वातपित्तहराणि च ।
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥४०॥
फलं स्वादुरसं तेषां तालजं गुरु पित्तजित् ।
तद्वीजं स्वादुपाकन्तु मूत्रलं वातपित्तजित् ॥४१॥
नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ।
बलमांसप्रदं हृद्यं बृंहणं वस्तिशोधनम् ।४२॥
पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु ।
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥४३॥
द्राक्षाकाश्मर्य्यमधूकपुष्पखर्जूरप्रभृतीनि ॥४४॥
रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च ।
तेषां द्राक्षा सरा स्वर्य्या मधुरा स्निग्धशीतला ॥४५॥
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ।
हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ॥४६॥
केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते ।
क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥४७॥
रसे पाके च मधुरं खार्जूरं रक्तपित्तजित् ।

बृंहणीयमहृद्यञ्च मधूककुसुमं गुरु ।
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥४८॥

वाताममाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥४९॥

पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ।
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥५०॥
कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम् ।
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥५१॥
वसिरं शीतपाक्यञ्च सारुष्करनिबन्धनम् ।
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ॥५२॥
विपाके मधुरञ्चापि रक्तपित्तप्रणाशनम् ।
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥५३॥
शीतं कषायं मधुरं टङ्कं मारुतकृद् गुरु ।
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥५४॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ।
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥५५॥
करीराक्षिकपीलूनि तृणशून्यफलानि च ।
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥५६॥
तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ।
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् ॥५७॥
आरुष्करं तौवरकं कषायं कटुपाकि च ।
उष्णं क्रिमिज्वरानाहमेहोदावर्त्तनाशनम् ॥५८॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ।
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥५९॥

रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ।
तिक्तमीषद्विषहितं विडङ्गं क्रिमिनाशनम् ॥६०॥
व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत् ।
कषायं दीपनं चाम्लं, चक्षुष्यं चाभयाफलम् ॥६१॥
भेदनं लघु रूक्षोष्णं वैस्वर्य्ये क्रिमिनाशनम् ।
चक्षुष्यं स्वादुपाक्यक्षं कषायं कफपित्तजित् ॥६२॥
कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम् ।
कषायमीषन्मधुरं किञ्चित् पूगफलं सरम् ॥६३॥
जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ।
कक्कोलकं लवङ्गञ्च तिक्तं कटु कफापहम् ॥६४॥
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ।
सतिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः ॥६५॥
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ।
लताकस्तूरिका तद्वत् शीता वस्तिविशोधनी ॥६६॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
वैभीतको मदकरः कफमारुतनाशनः ॥६७॥
कषायो मधुरो मज्जा कोलानां पित्तनाशनः ।
तृष्णाच्छर्द्यनिलघ्नश्च तद्वच्चामलकस्य च ॥६८॥
वीजपूरकशम्याकमज्जा कोशाम्रसम्भवः ।
स्वादुपाकोऽग्निबलकृत् स्निग्धः पित्तानिलापहः ॥६९॥
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
यस्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत् ॥७०॥
फलेषु परिपक्वं यद् गुणवत्तदुदाहृतम् ।
विल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ॥७१॥

आम्लुष्णं दीपनं तद्धि कषायं कटुतिक्तकम्।
व्याधितं कृमिजुष्टञ्च पाकातीतमकालजम्।
वर्जनीयं फलं सर्वमपर्य्यागतमेव च॥७२॥

इति फलवर्गः।

शाकान्यत ऊर्द्धं वक्ष्यामः।

तत्र पुष्पफलाऽलाबुकालिन्दकप्रभृतीनि॥१॥

पित्तघ्नान्यनिलं कुर्य्युस्तथा मन्दकफानि च।
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च॥२॥
पित्तघ्नं तेषु कुष्माण्डं बालं मध्यं कफावहम्।
पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम्॥३॥
सर्व्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम्।
दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत्॥४॥
अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्वतिशीतला।
तिक्तालाबुरहृद्या तु वामनी वातपित्तजित्॥५॥

त्रपुसैर्वारुकर्कारुकशीर्णवृन्तप्रभृतीनि॥६॥

गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च।
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च॥७॥
बालं सुनीलं त्रपुसं तेषां पित्तहरं स्मृतम्।
तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम्॥८॥
एर्व्वारुकं सकर्कारु सम्पक्वं कफवातकृत्।
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम्॥९॥
सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम्।
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु॥१०॥

पिप्पलीमरिचशृङ्गवेरार्द्रकहिङ्गुजीरककुस्तुम्बुरुजम्बी-

रक्तसुमुखसुरसार्जकभूस्तृण सुगन्धककासमर्दककालमालकुठेरकक्षवकखरपुष्पशिग्रु-मधुशिग्रुफणिज्झकसर्षपराजिकाकुला। हलवेणुगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकपोतिकालशुनपलाण्डु कलायप्रभृतीनि ॥११॥

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ।
कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥१२॥
तेषां गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ।
शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी ॥१३॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ।
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥१४॥
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम् ।
गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषत ॥१५॥
नागरं कफवातघ्नं विपाके मधुरं कटु ।
वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥१६॥
कफानिलहरं स्वर्य्यं विबन्धानाहशूलनुत् ।
कटूष्णं रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम् ॥१७॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ।
कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥१८॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् ।
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥१९॥
कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ।
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥२०॥
आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी ॥२१॥

दोषघ्नी कटुका किञ्चित्तिक्ता स्रोतोविशोधनी।
जम्बीर पाचनस्तीक्ष्ण क्रमिवातकफापह ॥२२॥
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारक ।
कफानिलविषश्वासकासदौर्गन्ध्यनाशन ॥२३॥
पित्तकृत्पार्श्वशूलघ्न सुरस समुदाहृत ।
तद्वत् तु सुमुखो ज्ञेयो विशेषाद्गरनाशन ॥२४॥
कफघ्ना लघवो रूक्षा स्निग्धोष्णा पित्तवर्द्धना ।
कटुपाकरसाश्चैव सुरसार्जकभूस्तृणा ॥२५॥
मधुर. कफवातघ्न. पाचन कण्ठशोधन. ।
विशेषत पित्तहर. सतिक्त कासमर्दक ॥२६॥
कटु सक्षारमधुर शिग्रुस्तिक्तोऽथ पित्तल ।
मधुशिग्रु सरस्तिक्त शोफघ्नो दीपन कटु ॥२७॥
विदाहि बद्धविण्मूत्र रूक्ष तीक्ष्णोष्णमेव च।
त्रिदोष सार्षप शाक गाण्डीर वेगनाम च ॥२८॥
चित्रकस्तिलपर्णी च कफशोफहरे लघू।
वर्षाभू कफवातघ्नी हिता शोफादरार्शसाम् ॥२९॥
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी।
सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका।३०॥
महत्तद्गुरु विष्टम्भि तीक्ष्णमाम त्रिदोषकृत्।
तदेव स्निग्धसिद्धन्तु पित्तनुत् कफवातजित् ॥३१॥
त्रिदोषशमन शुष्क विषदोषहर लघु।
विष्टम्भि वातल शाक शुष्कमन्यत्र मूलकात् ॥३२॥

पुष्पञ्च पत्रञ्च फल तथैव
यथोत्तर ते लघव. प्रदिष्टा ।

तेषान्तु पुष्पं कफपित्तहन्तृ
फलं निहन्यात् कफमारुतौ च ॥३३॥
स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च
गुरुः सरः स्वादुरसश्च बल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षु-
र्भग्नास्थिसन्धानकरो रसोनः ॥३४॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
विबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तु
समीरणश्वासकफांश्च हन्ति ॥३५॥
नात्युष्णवीर्य्योऽनिलहा कटुश्च
तीक्ष्णो गुरुर्नातिकफावहश्च ।
बलावहः पित्तकरोऽथ किञ्चित्
पलाण्डुरग्निञ्च विवर्द्धयेच्च ॥३६॥
स्निग्धो रुचिस्थः स्थिरधातुकर्त्ता
बल्योऽथ मेधाकफपुष्टिदश्च ।
स्वादुर्गुरुः शोणितपित्तशस्तः
सपिच्छिलः क्षीरपलाण्डुरुक्तः ॥३७॥
कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु ।
कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥३८॥
चुच्चूयूथिकातर्कारीजीवन्तीविम्बीतिकानन्दीभल्लातकच्छ-
गलान्त्री-वृक्षादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्बु-
दारकोविदारप्रभृतीनि ॥३९॥
कषायस्वादुतिक्तानि रक्तपित्तहराणि च ।

कफघ्नान्यनिलं कुर्य्युः संग्राहीणि लघूनि च ॥४०॥
लघु पाके च जन्तुघ्नं पिच्छिलो ग्रहिणां हितः ।
कषायमधुरो ग्राही चुञ्चूस्तेषां त्रिदोषहा ॥४१॥
चक्षुष्या सर्वदोषघ्नी जीवन्ती समुदाहृता ।
हृद्‌ह्लादनी वातहरा फञ्जी त्वल्पबला मता ॥४२॥
क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ।
शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥४३॥
पुनर्नवावरुणतर्कार्य्युरुवूकवत्सादनीविल्वशाकप्रभृतीनि ॥४४॥
उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ।
तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥४५॥
तण्डुलीयकोपोदिकाऽश्ववलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि ॥४६॥
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ।
मन्दवातकफान्याहू रक्तपित्तहराणि च ॥४७॥
मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ।
तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥४८॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ।
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥४९॥
कटुर्विपाके क्रिमिहा मेधाग्निबलवर्द्धनः ।
सक्षारः सर्वदोषघ्नो वास्तूको रोचनः सरः ॥५०॥
चिल्ली वास्तूकवत् ज्ञेया पालङ्क्या तण्डुलीयवत् ।
वातकृत् बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ।
शाकमाश्ववलं रूक्षं बद्धविण्मूत्रमारुतम् ॥५१॥
मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चलाब्रह्मसुवर्चलापिप्प

लीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडावल्गुजसतीनवृहतीकण्टकारिकाफलपटोलवार्त्ताकुकारवेल्लककटुकिकाकेवुकोरुवूकपर्पटककिराततिक्तकर्कोटकारिष्टकोशातकीवेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ॥५२॥

रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च ।
कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥५३॥
कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ।
लघ्वी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥५४॥
अविदाही त्रिदोषघ्नः सग्राही सुनिषण्णकः ।
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥५५॥
ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ।
नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् ॥५६॥
कण्डूकुष्ठक्रिमिघ्नानि कफवातहराणि च ।
फलानि बृहतीनान्तु कटुतिक्तलघूनि च ॥५७॥
कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ।
पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥५८॥
वार्त्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ।
तद्वत्कर्कोटकं प्रोक्तं कारवेल्लकमेव च ॥५९॥
अटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ।
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥६०॥
कफापहं शाकमुक्तं वरुणप्रपुन्नाडयोः ।
रूक्षं लघु च शीतञ्च वातपित्तप्रकोपणम् ॥६१॥
दीपनं कालशाकन्तु गरदोषहरं कटु ।
कौसुम्भं मधुरं रूक्षमुष्णं श्लेष्महरं लघु ॥६२॥

वातलं नालिकाशाकं पित्तघ्नं मधुरञ्च तत् ।
ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता ।
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी ॥६३॥

लोणिकाजातुकपर्णिकापत्तूरजीवकसुवर्चलाकुरुवककठिञ्जरकुन्तलिकाकुरण्टिकाप्रभृतीनि ॥६४॥

स्वादुपाकरसा शीता कफघ्ना नातिपित्तला ।
लवणानुरसा रूक्षा सक्षारा वातला सरा ॥६५॥
स्वादुतिक्ता कुन्तलिका सकषाया कुरण्टिका ॥६६॥
सग्राहि शीतलञ्चापि लघु दोषविरोधि च ।
राजक्षवकशाकन्तु सटीशाकन्तु तद्विधम् ॥६७॥
स्वादुपाकरसं शाकं दुर्जरं हरिमन्थजम् ।
भेदनं मधुरं रूक्षं कषायमतिवातलम् ॥६८॥
स्रंसनं कटुकं पाके लघु वातकफापहम् ।
शोफघ्नमुष्णवीर्य्यन्तु पत्रं पूतिकरञ्जजम् ॥६९॥
ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ।
सुगन्धि विशदं तिक्तं स्वर्य्यं वातकफापहम् ॥७०॥
स्रंसकं कटुकं पाके कषायं वह्निदीपनम् ।
वक्त्रकण्डूमलक्लेददौर्गन्ध्यादिविशोधनम् ॥७१॥

अथ पुष्पवर्गः ।

कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च । वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि । मधुशिग्रुकरीरकुसुमानि कटु विपाकानि वातहराणि स्रष्टमूत्रपुरीषाणि च ॥१॥

आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ।

रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ॥२॥
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ।
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥३॥
मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ।
तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥४॥
सिन्धुवारं विजानीयाद्धितं पित्तविनाशनम् ।
मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥५॥
सुगन्धि विशदं हृद्यं बाकुलं पाटलानि च ।
श्लेष्मपित्तविषघ्नन्तु नागं तद्वच्च कुङ्कुमम् ॥६॥
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ।
किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् ॥७॥
यथा वृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ।
मधुशिग्रुकरीराणि कटुश्लेष्महराणि च ॥८॥
छवककुलेचरवंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्रपुरीषाणि ॥९॥
छवक्रं शमिलं लघु स्वादुपाकं सपिच्छिलम् ।
विस्यन्दि वातलं नातिपित्तश्लेष्मकरञ्च तत् ॥१०॥
वेणो करीरा कफला मधुरा रसपाकतः ।
विदाहिनो वातकरा सकषाया विरूक्षणा ॥११॥
उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि । तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनञ्च। इक्षुजं मधुरं कषायानुरसं कटुकं शीतलञ्च। तद्वदेवोष्णं कारीषं कषायं वातकोपनञ्च। वेणुजातं कषायं वातकोपनञ्च। भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥१२॥

पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि सर्वदोषप्रकोपणानि ॥१३॥

विष्टम्भिनः स्मृताः सर्वे वटका वातकोपनाः ।
सिण्डाकी वातला सान्द्रा रुचिष्यानलदीपनी ॥१४॥
विशेषेण गुरु रूक्षञ्च प्रायो विष्टम्भि दुर्जरम् ।
सकषायञ्च सर्वं हि स्वादु शाकमुदाहृतम् ॥१५॥
पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ।
कर्कशं परिजीर्णञ्च कृमिजुष्टमदेशजम् ।
वर्जयेत् पत्रशाकं तत् यदकालविरोहि च ॥१६॥

कन्दानत ऊर्द्ध्वं वक्ष्यामः ।

विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुक-रक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ॥१॥

रक्तपित्तहराण्याहुः शीतानि मधुराणि च ।
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥२॥
मधुरो वृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः ।
विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः ॥३॥
वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी ।
महती चैव हृद्या च मेधाग्निबलवर्द्धिनी ॥४॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥५॥
अविदाहि विसं प्रोक्तं रक्तपित्तप्रसादनम् ।
विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥६॥
गुरुविष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ।

पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥७॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटु पित्तकृत्।
वेणो करीरा गुरवः कफमारुतकोपनाः ॥८॥
स्थूलसूरणमाणकप्रभृतयः कन्दा ईषत्कषाया कटुका रूक्षा विष्टम्भिनो गुरवः कफवातला पित्तहराश्च ॥९॥
माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम्।
स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकीलहा ॥१०॥
कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः।
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥११॥
वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः।
मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः ॥१२॥
तालनारिकेलखर्जूरप्रभृतीनां मस्तकान्यतः ॥१३॥
स्वादुपाकरसानाहुरक्तपित्तहराणि तथा।
शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि ॥१४॥
बालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम्।
कन्दं विवर्जयेत् सर्वं यो वा सम्यक् न रोहति ॥१५॥

अथ लवणवर्गः।

सैन्धवसामुद्रविड़सौवर्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥१॥
चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम्।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥२॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥३॥

सक्षारं दीपनं सूक्ष्मं शूलहृद्रोगनाशनम् ।
रोचनं तीक्ष्णमुष्णञ्च विडं वातानुलोमनम् ॥४॥
लघु सौवर्चलं पाके वीर्य्योष्णं विशदं कटु ।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥५॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ।
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥६॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ।
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥७॥
पजवातक्रिमिहरं लेखनं पित्तकोपनम् ।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥८॥
ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम् ।
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥९॥
यवक्षारस्वर्जिकाक्षारपाकिमटङ्कणक्षारा ॥१०॥
गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशना ।
क्षारास्तु पाचना सर्वे रक्तपित्तकरा स्मृता ॥११॥
तैक्ष्ण्याद्वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ।
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥१२॥
उष्णोऽनिलघ्न प्रक्लेदी जपक्षारो बलापह ।
मेदोघ्न. पाकिम क्षारो मूत्रवस्तिविशोधन. ॥१३॥
विरूक्षणोऽनिलकर श्लेष्मघ्न पित्तदूषण ।
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कण क्षार उच्यते ॥१४॥
सुवर्णं स्वादु हृद्यञ्च बृंहणीयं रसायनम् ।
दोषत्रयघ्नं शीतञ्च चक्षुष्यं विषसूदनम् ॥१५॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ।

ताम्रं कषायं मधुरं लेखनं शीतलं सरम्॥१६॥
तिक्तं कांस्यं लेखनञ्च चक्षुष्यं कफवातजित्।
वातकृत् शीतलं लोहं तृष्णापित्तकफप्रणुत्॥१७॥
कटु क्रिमिघ्ने लवणे त्रपुसीसे विलेखने।
मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादयः॥१८॥
चक्षुष्या मणयः शीता लेखना विषसूदनाः।
पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः॥१९॥
धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात्।
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद् द्रव्यमनल्पबुद्धिः॥२०॥
षष्टिका यवगोधूमा लोहिता ये च शालयः।
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः॥२१॥
लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः।
मयूरवर्म्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह॥२२॥
दाडिमामलकं द्राक्षा खर्ज्जूरं सपरूषकम्।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते॥२३॥
सतीनो वास्तुकश्चुचूचिल्लीमूलकपोतिका।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते॥२४॥
गव्यं क्षीरं घृतं श्रेष्ठं सैन्धवं लवणेषु च।
धात्री दाडिममम्लेषु पिप्पली नागरं कटौ॥२५॥
तिक्ते पटोलवार्त्ताके मधुरे घृतमुच्यते।
क्षौद्रं पूगफलं श्रेष्ठं कषाये सपरूषकम्॥२६॥
शर्करेक्षुविकारेषु पाने मध्वासवौ तथा।
परिसंवत्सरं धान्यं मांसं वयसि मध्यमे॥२७॥
अपर्य्युषितमन्नन्तु संस्कृतं मात्रया शुभम्।

फल पर्य्यागत शाकमशुष्क तरुण नवम् ॥२८॥
अत पर प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥ २९ ॥
लाजमण्डो विशुद्धाना पथ्य पाचनदीपन. ।
वातानुलोमनो हृद्य पिप्पलीनागरायुत: ॥३०॥
स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी ।
क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥३१॥
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धनी ।
पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥३२॥
हृद्या सन्तर्पणी वृष्या वृंहणी बलवर्द्धनी ।
शाकमांसफलैर्युक्ता यवाग्वस्ताश्च दुर्जरा: ॥३३॥
सिक्थैर्विरहितो मण्ड पेया सिक्थसमन्विता ।
विलेपी बहुसिक्था स्याद् यवागूर्विरलद्रवा ॥३४॥
विष्टम्भी पायसो बल्यो मेद कफकरो गुरु. ।
कफपित्तकरी बल्या कृशराऽनिलनाशनी ॥३५॥
धौतस्तु विमल शुद्धो मनोज्ञ सुरभि. सम ।
स्विन्न' सुप्रस्नुतस्तूष्णो विशदस्त्वोदनो लघु ॥३६॥
अधौतोऽप्रस्नुतोऽस्विन्न शीतश्चाप्योदनो गुरु' ।
लघु सुगन्धि कफहा विज्ञेयो भृष्टतण्डुल: ॥३७॥
स्नेहैर्मांसै फलै कन्दैर्वैदलाम्लैश्च संयुता ।
गुरवो वृंहणा बल्या ये च क्षीरोपसाधिता ॥३८॥
सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हित ।
स्विन्न निष्पीडित शाक हित स्यात् स्नेहसंस्कृतम् ॥३९॥
अस्विन्न स्नेहरहितमपीडितमतोऽन्यथा ।
मांसं स्वभावतो वृष्य स्नेहन बलवर्द्धनम् ॥४०॥

स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह ।
सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु ॥४१॥
तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ।
विद्यात्पित्तकफोद्रेकि बलमांसाग्निवर्द्धनम् ॥४२॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ।
रोचनं बलमेधाग्निमांसौजःशुक्रवर्द्धनम् ॥४३॥
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ।
परिशुष्कगुणैर्युक्तं वह्नौ पक्वमतो लघु ॥४४॥
तदेव शूलिकाप्रोतमङ्गारे परिपाचितम् ।
ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः ॥४५॥
उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ।
परिशुष्कं प्रदग्धञ्च शूल्यं यच्चान्यदीदृशम् ॥४६॥
मांसं यत्तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु ।
लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् ॥४७॥
अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ।
प्रीणनं प्राणजननं श्वासकासक्षयापहं ॥४८॥
वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ।
स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् ॥४९॥
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ।
आप्यायनः संहननः शुक्रौजोबलवर्द्धनः ॥५०॥
सदाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ।
यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् ॥५१॥
विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ।
दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः ॥५२॥

मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम्।
पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम्।
एकध्यं पाचयेत्सम्यक् वेसवार इति स्मृतः॥५३॥
वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः।
प्रीणनः सर्वधातूनां विशेषान्मुखशोषिणाम्॥५४॥
क्षुत्तृष्णापहरं श्रेष्ठं सौरावं स्वादुशीतलम्।
कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि॥५५॥
ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः।
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः॥५६॥
रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत्।
मसूरमुद्गगोधूमकुलत्थलवणैः कृतः॥५७॥
कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते।
मृद्वीकादाडिमैर्युक्तः स एवोक्तोऽनिलार्दिते॥५८॥
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते।
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ॥५९॥
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ।
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान्॥६०॥
हन्ति मूलकयूषस्तु कफमेदोगलामयान्।
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः॥६१॥
तूणीप्रतूणीकासार्शोगुल्मोदावर्त्तनाशनः।
दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः॥६२॥
प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित्।
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः॥६३॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः।

सर्वधान्यकृतस्तद्वद् बृंहणः प्राणवर्द्धनः ॥६४॥
खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ।
बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः ॥६५॥
दध्यम्लः कफकृद् बल्यः स्निग्धो वातहरो गुरुः ।
तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥६६॥
खडाः खडयवागूश्च षाडवाः पानकानि च ।
एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥६७॥
अस्नेहलवणं सर्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम् ॥६८॥
अथ गोरसधान्याम्लफलाम्लैरन्वितश्च यत् ।
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसे ॥६९॥
दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः ।
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥७०॥
सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च ।
तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च ॥७१॥
लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ।
तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः ॥७२॥
रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी ।
स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् ॥७३॥
सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ।
नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ॥७४॥
मन्थः सद्योबलकरः पिपासाश्रमनाशनः ।
साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्त्तनाशनः ॥७५॥
शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ।

द्राक्षामधूकसंयुक्तं कफरोगनिवर्हणं ॥७६॥
वर्गत्रयेणोपहितो मलदोषानुलोमनः।
गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥७७॥
तदेव खण्डमृद्वीकाशर्करासहितं पुनः।
साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम् ॥७८॥
मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम्।
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥७९॥
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राश्च सर्वतः।
पानकानां यथायोगं गुरुलाघवमादिशेत् ॥८०॥

इति कृतान्नवर्गः।

वक्ष्यन्ते परं भक्ष्यान् रसवीर्य्यविपाकतः ॥१॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः।
अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥२॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः।
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥३॥
वृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः।
अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः ॥४॥
मधुमस्तकसंयावाः पूपा ये ते विशेषतः।
गुरवो वृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥५॥
रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः।
गुरुर्मृष्टतमश्चैव सट्टकः प्राणवर्द्धनः ॥६॥
हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः।
वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः ॥७॥
वृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः।

हृद्या पथ्यतमास्तेषां लघव फेनकादय ॥८॥
सुश्रादिवेसवाराणां पूर्णा विष्टम्भिनी मता ।
वेसवारै सपिष्टितै सम्पूर्णा गुरुबृंहणा ॥९॥
पालला श्लेषजनना श्रष्कुल्य कफपित्तला ।
वीर्य्योष्णा पैष्टिका भक्ष्या कफपित्तप्रकोपणा ॥१०॥
विदाहिनो नातिबला गुरवश्च विशेषत ।
वैदला लघवो भक्ष्या कषाया सृष्टमारुता ॥११॥
विष्टम्भिन पित्तहरा श्लेष्मघ्ना भिन्नवर्चस ।
बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिता ॥१२॥
कूर्चिका विकृता भक्ष्या गुरवो नातिपित्तला ।
विरूढकाकृता भक्ष्या गुरवोऽनिलपित्तला ॥१३॥
विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणा ।
हृद्या सुगन्धिनो भक्ष्या लघवो घृतपाचिता ॥१४॥
वातपित्तहरा बल्या वर्णदृष्टिप्रसादना ।
विदाहिनस्तैलकृता गुरव कटुपाकिन ॥१५॥
उष्णा मारुतदृष्टिघ्ना पित्तलास्त्वक्प्रदूषणा ।
फलमांसेक्षुविकृतितिलमाषोपसंस्कृता ॥१६॥
भक्ष्या बल्यास्तु गुरवो बृंहणा हृदयप्रिया ।
कपालाङ्गारपक्वास्तु लघवो वातकोपना ॥१७॥
सुपक्वास्तनवश्चापि भूयिष्ठं लघवो मता ।
सकिलाटादयो भक्ष्या गुरव कफवर्द्धना ॥१८॥
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चस ।
उदावर्तहरो वाट्य कासपीनसमेहनुत् ।
धानोलुम्पास्तु लघव कफमेदोविशोषणा ॥१९॥

सक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ।
पीताः सद्यो बलकरा भेदिनः पवनापहाः ॥२०॥
गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्य्ययात् ।
सक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥२१॥
लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ।
बल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥२२॥
तृट्छर्द्दिदाहघर्मार्त्तिनुदस्तत्सक्तवो मताः ।
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥२३॥
पृथुका गुरवः स्निग्धा बृंहणाः कफवर्द्धनाः ।
बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्चसः ॥२४॥
सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ।
सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥२५॥
द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु ।
यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा ।
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥२६॥

अतः सर्वाण्यनुपानान्युपदेक्ष्यामः ।

अम्लेन केचिद्विहता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति ।
तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥१॥
शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम् ।
यस्यानुपानन्तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥२

व्याधिञ्च कालञ्च विभाव्य धीरै-
र्द्रव्याणि भोज्यानि च तानि तानि ।
सर्वानुपानेषु वरं वदन्ति
मेध्यं यदम्भः शुचिभाजनस्थम् ।३।

लोकस्य जन्मप्रभृति प्रशस्त तोयात्मका सर्वरसाश्च दृष्टाः ।
सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतः परं विस्तरतो विधास्ये ॥४॥

उष्णोदकानुपानन्तु स्नेहानामथ शस्यते ।
ऋते भल्लातकस्नेहात् स्नेहात् तौवरकात्तथा ॥५॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिके ।
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥६॥
दधिपायसमद्यार्त्तिविषजुष्टे तथैव च ।
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥७॥
पयोमांसरसो वापि शालिमुद्गादिभोजिनाम् ।
युद्धाध्वातपसन्तापविषमद्यरुजासु च ॥८॥
माषादेरनुपानन्तु धान्याम्लं दधि मस्तु वा ।
मद्यं मद्योचितानान्तु सर्वमांसेषु पूजितम् ॥९॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ।
क्षीरं घर्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥१०॥
सुराकृशानां स्थूलानामनुपानं मधूदकम् ।
निरामयानां चित्रन्तु भुक्तमध्ये प्रकीर्त्तितम् ॥११॥
स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते ।
अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥१२॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ।
अर्कशेलुशिरीषाणामासवास्तु विषार्त्तिषु ॥१३॥
अतः परन्तु वर्गाणामनुपानं पृथक् पृथक् ।
प्रवक्ष्याम्यानुपूर्वेण सर्वेषामेव मे शृणु ॥१४॥

तत्र पूर्वशस्यजातीनां बदराम्लं वैदलानां धान्याम्लं जङ्गलानां धन्वजानाञ्च पिप्पल्यासवः । विष्किराणां कोल-

वदरासव । प्रतुदानान्तु चोरकासव । गुहाशयानान्तु खर्जूरनालिकेलासव.। प्रसहानामश्वगन्धासवः। पर्णमृगाणां कृष्णगन्धासव। विलेशयानां फलसारासव। एकशफानां त्रिफलासव.। अनेकशफानां खदिरासव। कूलचराणान्तु शृङ्गाटककशेरुकासव.। कोशवासिनां पादिनाञ्च तदेव। प्लवानामिक्षुरसासव.। नादेयानां मृणालासव.। सामुद्राणां मातुलुङ्गासव। अम्लानां फलानां पद्मोत्पलकन्दासव। कषायाणां दाडिमवेत्रासवः। मधुराणां त्रिकटुकयुक्त कन्दासव। तालफलादीनां धान्याम्लम। कटुकानां दूर्वानलवेत्रासव। पिप्पल्यादीनां श्वदंष्ट्रावसुकासव.। कुष्माण्डादीनां दार्वीकरीरासव। चुचूप्रभृतीनां लोध्रासव.। जीवन्त्यादीनां त्रिफलासव.। कुसुम्भशाकस्य स एव। मण्डूकपर्ण्यादीनां महापञ्चमूलासव.। बालमस्तकादीनामम्लफलासव। सैन्धवादीनां सुरासव आरनालञ्च। तोयं वा सर्वत्रेति ॥१५॥

भवन्ति चात्र।

सर्वेषामनुपानानां माहेन्द्रतोयमुत्तमम्।
सात्म्यं यस्य तु यत् तोयं तत् तस्मै हितमुच्यते ॥१६॥
उष्णं [illegible] कफे तोयं पित्ते रक्ते च शीतलम्।
दोष[illegible] वा भुक्तमतिमात्रमथापि वा ॥१७॥
यथो[illegible] नुपानेन सुखमन्नं प्रजीर्य्यति।
रोच[illegible] [illegible] हृष्यं दोषसङ्घातभेदनम् ॥१८॥
तर्पण[illegible] [illegible]र्वकरं श्रमक्लमहरं सुखम्।
दीपन[illegible] शमनं पिपासाच्छेदनं परम् ॥१९॥

बल्य वर्णकरं सम्यगनुपानं सदोच्यते।
तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम्॥२०॥
पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत्।
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम्॥२१॥
भवत्याबाधजननमनुपानमतः पिबेत्।
न पिबेच्छ्वासकासार्त्तो रोगे चाप्यूर्द्ध्वजत्रुगे॥२२॥
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः।
पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत्॥२३॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम्।
स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद् बहून्॥२४॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्त्तते।
तथा संस्कारमात्रा न कालश्चाप्युत्तरोत्तरम्॥२५॥
मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः।
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्तिता॥२६॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः।
कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्त्यते॥२७॥

इति सर्वानुपानवर्गः।

अथाहारविधिं वत्स! विस्तरेणाखिलं शृणु।
आप्तान्वितमसङ्कीर्णं शुचि कार्य्यं महानसम्॥१॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम्।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक्॥२॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः।
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत्॥३॥
वक्ष्याम्यतः परं कृत्स्नमाहारस्योपकल्पनाम्।

घृत काष्णायसे देय पेया देया तु राजते ॥४॥
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च ।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥५॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
कट्वराणि खडांश्चैव सर्वान् शैलेषु दापयेत् ॥६॥
दद्यात् ताम्रमये पात्रे सुशीतं सुशृत पय ।
पानीय पानक मद्य मृण्मयेषु प्रदापयेत् ॥७॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ।
दद्याद्वैदूर्य्यपात्रेषु रागषाडवसट्टकान् ॥८॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूद सूपौदन दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥९॥
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥१०॥
प्रद्रवाणि रसांश्चैव पानीय पानक पय ।
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥११॥
सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ।
पुरस्तात स्थापयेत् प्राज्ञो द्वयोरपि च मध्यत ॥१२॥
एव विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ।
भोक्तार विजने रम्ये निसम्बाधे शुभे शुचौ ॥१३॥
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् ।
विशिष्टमिष्टसंस्कारै पथ्यैरिष्टैरसादिभि ॥१४॥
मनोज्ञ शुचि नात्युष्ण प्रत्यग्रमशन हितम् ।
पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ॥१५॥
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ।

आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ॥१६॥
ततः पेयास्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम्।
घनम्पूर्वं समश्नीयात् केचिदाहुर्विपर्य्ययम् ॥१७॥
आदावन्ते च मध्ये च भोजनस्य तु शस्यते।
निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥१८॥
मृणालबिसशालूककन्देक्षुप्रभृतीनि च।
पूर्वं योज्यानि भिषजा न तु भुक्ते कथञ्चन ॥१९॥
सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः।
काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम् ॥२०॥
बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः।
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते। २१॥
लघु शीघ्रं व्रजेत्पाकं स्निग्धोष्णं बलवह्निदम्।
क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ॥२२॥
सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च।
अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ॥२३॥
तेषु तत् प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु।
येषु चापि भवेयुश्च दिवसा भृशमायताः ॥२४॥
तेषु तत्कालविहितमपराह्णे प्रशस्यते।
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥२५॥
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम्।
नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥२६॥
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥२७॥
अतीतकाले भुञ्जानो वायुनोपहतेऽनले।

कृच्छ्राद्विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति ॥२८॥
हीनमात्रमसन्तोषं करोति च बलक्षयम्।
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥२९॥
तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम्।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ॥३०॥
विभज्य कालदोषादीन् कालयोरुभयोरपि।
अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्टवत् ॥३१॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत्।
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥३२॥
अशान्तमुपदग्धञ्च तथा स्वादु न लक्ष्यते।
यद्यत् स्वादुतरं तत्र विदध्यादुत्तरोत्तरम् ॥३३॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः।
विशुद्धरसने तस्मै रोचतेऽन्नमपूर्ववत् ॥३४॥
स्वादुना तस्य रसनं प्रथमेनापि तर्पितम्।
न तथा स्वादयेदन्यत् तस्मात् प्रक्षाल्यमन्तरा ॥३५॥
सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम्।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥३६॥
भुक्त्वा च यत् प्रार्थयते भूयस्तत् स्वादु भोजनम्।
अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥३७॥
दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः।
कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम् ॥३८॥
जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु।
भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत् कफम् ॥३९॥
धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः।

पूगकक्कोलकर्पूरलवङ्गसमनःफलैः ॥४०॥
कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥४१॥
भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ।
ततः पदशतं गत्वा वामपार्श्वेन संविशेत् ॥४२॥
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ।
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥४३॥
शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः ।
अशुच्यन्नं तथाभुक्तमतिहास्यञ्च वामयेत् ॥४४॥
शयनं चासनं वापि नेच्छेद्वापि द्रवोत्तरम् ।
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥४५॥
न चैकरससेवायां प्रसज्येत कदाचन ।
शाकावरान्नभूयिष्ठमम्लञ्च न समाचरेत् ॥४६॥
एकैकशः समस्तान् वा नाभ्यश्नीयाद्रसान् सदा ।
प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥४७॥
पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ।
मात्रागुरु परिहरेदाहारं द्रव्यतश्च यः ॥४८॥
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ।
द्विगुणञ्च पिबेत्तोयं सुखं सम्यक् प्रजीर्य्यति ।
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद् यथोत्तरम् ॥४९॥
गुरूणामर्द्धसौहित्यं लघूनां नातितृप्तता ।
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥५०॥
द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते ।
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥५१॥

पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति।
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥५२॥
विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते।
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥५३॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥५४॥

अत्यम्बुपानाद्विषमाशनाद्वा
सन्धारणात् स्वप्नविपर्ययाच्च।
कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥५५॥

ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीडितेन।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥५६॥
माधुर्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम्।
किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमाबद्धविरुद्धवातम् ॥५७॥
उद्गारशुद्धावपि भुक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य।
रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥५८॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः।
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥५९॥
तत्रामे लङ्घनं कार्यं विदग्धे वमनं हितम्।
विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥६०॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना।
कार्यं चानशनं तावद्यावन्न प्रकृतिं भजेत् ॥६१॥
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत्।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥६२॥

हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ।
बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् ॥ ६३॥
साजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ।
त्रयमेतं निहन्त्याशु बहून् व्याधीन् करोति वा ॥ ६४॥

अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात् ॥ ६५॥
विदह्यते यस्य तु भुक्तमात्रे
दह्येत हृत्कण्ठगलञ्च यस्य ।
द्राक्षाऽभया माक्षिकसम्प्रयुक्ता
लीढ्वाभया वा स सुखं लभेत ॥ ६६॥
भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
प्रातः स शुण्ठीमभयामशङ्को
भुञ्जीत सम्प्राश्य हितं हितार्थी ॥ ६७॥
स्वल्पं यदा दोषविबद्धमामं
लीनं न तेजःपथमावृणोति ।
भवत्यजीर्णेऽपि तदा बुभुक्षा
सा मन्दबुद्धिं विषवन्निहन्ति ॥ ६८॥

अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ।
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ ६९॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ।
उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः ॥ ७०॥

स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा ।
रूक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः ॥७१॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ।
विशदो विपरीतोऽस्मात् क्लेदाकर्षणरोपणः ॥७२॥
दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा ।
सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः ॥७३॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ।
दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥७४॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ।
द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः ।
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा ॥७५॥
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ।
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥७६॥
सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः ।
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥७७॥
विकासी विकसन्नेव धातुबन्धान् विमोचयेत् ।
आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥७८॥
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतस्स्वनुसरः स्मृतः ।
गुणा विंशतिरित्येवं यथावत्परिकीर्त्तिताः ।
संप्रवक्ष्याम्यतश्चोर्द्ध्वमाहारगतिनिश्चयम् ॥७९॥
पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः ।
विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेत् ॥८०॥
अविदग्धः कफं पित्तं विदग्धः पवनं पुनः ।
सम्यग्विपक्वो निःसार आहारः परिबृंहयेत् ॥८१॥

नित्यं भुक्तमाहारनलं सारं प्राणीरितो रसः ।
स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत् ॥८२॥
कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥८३॥
दिवाविबुद्धे हृदये जाग्रतः पुण्डरीकवत् ।
अन्नमक्लिन्नधातुत्वादजीर्णे पिहितं निशि ॥८४॥
हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः ।
क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥८५॥

इमं विधिं योऽनुमतं महामुने-
र्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ।
स भूमिपालाय विधातुमौषधं
महात्मनाञ्चार्हति सूरिसत्तमः ॥८६॥

इति श्रीसुश्रुताचार्य्यविरचिते आयुर्वेदशास्त्रे
सुश्रुते सूत्रस्थानं समाप्तम् ।

——

# अथ निदानस्थानम् ।

---

## प्रथमोऽध्याय ।

अथातो वातव्याधिनिदान व्याख्यास्याम ॥१॥

धन्वन्तरि धर्मभृता वरिष्ठममृतोद्भवम ।
चरणावुपसंगृह्य सुश्रुत परिपृच्छति ॥२॥

वायो प्रकृतिभूतस्य व्यापन्नस्य च कोपने ।
स्थान कर्म च रोगांश्च वद मे वदता वर ॥३॥

तस्य तद्वचन श्रुत्वा प्राब्रवीद्भिषजा वर ।
स्वयम्भूरेष भगवान् वायुरित्यभिशब्दित ॥४॥

स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ।
सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृत ॥५॥

स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ।
अव्यक्तो व्यक्तकर्मा च रूक्ष शीतो लघु खर ॥६॥

तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च ।
अचिन्त्यवीर्य्यो दोषाणा नेता रोगसमूहराट् ॥७॥

आशुकारी मुहुश्चारी पक्वाधानगुदालय ।
देहे विचरतस्तस्य लक्षणानि निबोध मे ॥८॥

दोषधात्वग्निसमता सम्प्राप्ति विषयेषु च ।
क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिल ॥९॥

यथाग्नि पञ्चधा भिन्नो नामस्थानात्मकर्मभि ।
भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥१०॥

प्राणोदानौ समानश्च व्यानश्चापान एव च।
स्थानस्था मारुता पञ्च यापयन्ति शरीरिणम् ॥११॥
वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्।
सोऽन्नं प्रवेशयत्यन्त प्राणांश्चाप्यवलम्बते ॥१२॥
प्रायश· कुरुते दुष्टो हिक्काश्वासादिकान् गदान्।
उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तम ॥१३॥
तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते।
ऊर्द्ध्वं जत्रुगतान् रोगान् करोति च विशेषत· ॥१४॥
आमपक्काशयचर समानो वह्निसङ्गत ।
सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि ॥१५॥
गुल्माग्निसदातीसारप्रभृतीन् कुरुते गदान्।
कृत्स्नदेहचरो व्यानो रससंवहनोद्यत ॥१६॥
स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि।
क्रुद्धश्च कुरुते रोगान् प्रायश सर्वदेहगान् ॥१७॥
पक्काधानालयोऽपान काले कर्षति चाप्ययम्।
समीरण सकृन्मूत्रशुक्रगर्भार्त्तवान्यध ।
क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥१८॥
शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजा ।
युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम् ॥१९॥
अत ऊर्द्ध्वं प्रवक्ष्यामि नानास्थानान्तराश्रित ॥२०॥
वहुश कुपितो वायुर्विकारान् कुरुते हि यान्।
वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते गदान् ॥२१॥
मोह मूर्च्छा पिपासाञ्च हृद्ग्रह पार्श्ववेदनाम्।
पक्काशयस्थोऽन्त्रकूज शूल नाभौ करोति च ॥२२॥

कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ।
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः ॥२३॥
वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमुचुमायनम् ।
त्वक्स्थो निस्तोदनं कुर्य्यात्त्वग्भेदं परिपोटनम् ॥२४॥
व्रणांश्च रक्तगो ग्रन्थीन् सशूलान् मांससंश्रितः ।
तथा मेदःश्रितः कुर्य्याद् ग्रन्थीन्मन्दरुजोऽव्रणान् ॥२५॥
कुर्य्यात्सिरागतः शूलं सिराकुञ्चनपूरणम् ।
स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥२६॥
हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ।
अस्थिशोषञ्च भेदञ्च कुर्य्याच्छूलञ्च तत्स्थितः ॥२७॥
तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ।
अप्रवृत्तिः प्रवृत्तिर्वा विकृतिः शुक्रगेऽनिले ॥२८॥
हस्तपादशिरोधातून् स्तथा सञ्चरति क्रमात् ।
व्याप्नुयादखिलं देहं वायुः सर्वगतो नृणाम् ॥२९॥
स्तम्भनाक्षेपणस्वापशोफशूलानि सर्वगः ।
स्थानेष्वेतेषु मिश्रश्च समिश्रा कुरुते रुजः ॥३०॥
कुर्य्यादवयवप्राप्तो मारुतस्त्वभितान् गदान् ।
दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥३१॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ।
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ॥३२॥
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ।
प्राणे पित्तावृते छर्द्दिर्दाहश्चैवोपजायते ॥३३॥
दौर्बल्यं सदनं तन्द्रा वैवर्ण्यञ्च कफावृते ।
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥३४॥

स्पर्शोद्विग्नौ तोदभेदप्रशोष-
स्वापोपेतौ वातरक्तेन पादौ ।
पित्तासृग्भ्यां संप्रदाहौ भवेता-
मत्यर्थोष्णौ रक्तशोफौ मृदू च ॥ ४४ ॥
कण्डूमन्तौ स्निग्धतौ रुक्षोकौ
शीतस्तब्धौ श्लेष्मदुष्टे तु रक्ते ।
सर्वैर्दुष्टे शोणिते चापि दोषाः
स्वं स्वं रूपं पादयोर्दर्शयन्ति ॥ ४५ ॥

पादावपि शिथिलौ खिन्नौ शीतलौ सन्निपर्व्वणौ ।
वैवर्ण्यतोदसुप्तत्वगुरुत्वोषसमन्वितौ ॥ ४६ ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ ४७ ॥
आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतञ्च यत् ।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ ४८ ॥
शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ।
यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥ ४९ ॥
तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ।
मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ५० ॥
सोऽपतानकसंज्ञो यः पातयत्यन्तरान्तरा ।
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥ ५१ ॥
स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः ।
हनुग्रहस्तदात्यर्थं सोऽन्नं कृच्छ्रान्निषेवते ॥ ५२ ॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ।
अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ ५३ ॥

स्नायुप्रतानमनिलो यदा चिपति वेगवान् ।
विष्टब्धाच स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥५४॥
अभ्यन्तरं धनुरिव यदा नमति मानवः ।
तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥५५॥
वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च ।
तमसाध्यं बुधा पाहुर्वचः कट्यूरुभञ्जनम् ॥५६॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः ।
कुर्य्यादाचेपकं त्वन्यं चतुर्थमभिघातजम् ॥५७॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥५८॥
अधोगमाः सतिर्य्यग्गा धमनीरूर्द्ध्वदेहगाः ।
यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥५९॥
तदान्यतरपचस्य सन्धिबन्धान् विमोचयन् ।
हन्ति पचं तमाहुर्हि पचाघातं भिषग्वराः ॥६०॥
यस्य कृत्स्नं शरीरार्द्धमकर्मण्यमचेतनम् ।
ततः पतत्यसून् वापि जहात्यनिलपीडितः ॥६१॥
शुद्धवातहतं पचं कृच्छ्रसाध्यतमं विदुः ।
साध्यमन्येन संसृष्टमसाध्यं चयहेतुकम् ॥६२॥
वायुरूर्द्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः ।
शङ्खौ च पीडयत्यङ्गान्याचिपेन्नमयेच्च सः ॥६३॥
निमीलिताचो निश्चेष्टः स्तब्धाचो वापि कूजति ।
निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वसान्नष्टचेतनः ॥६४॥
स्वस्थः स्याद्धृदये मुक्ते आवृते च प्रमुह्यति ।
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥६५॥

दिवास्वप्नासमस्थानविकृतोर्द्ध्वनिरीक्षणैः।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणा वृतः ॥६६॥
गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये।
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ॥६७॥
हसतो जृम्भतो भाराद्विषमाच्छयनादपि।
शिरोनासौष्ठचिवुकललाटेक्षणसन्धिगः ॥६८॥
अर्दयित्वाऽनिलो वक्त्रमर्दितं जनयत्यतः।
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ॥६९॥
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम्।
ग्रीवाचिवुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥७०॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम्।
वायुरूर्द्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः।
तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥७१॥
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः।
न सिध्यत्यर्दितं वाढं त्रिवर्षं वेपनस्य च ॥७२॥
पार्ष्णिप्रत्यङ्गुलीनान्तु कण्डरा यानिलार्दिता।
सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता ॥७३॥
तलं प्रत्यङ्गुलीनान्तु कण्डरा बाहुपृष्ठतः।
बाह्वोः कर्मक्षयकरी विश्वाचीति हि सा स्मृता ॥७४॥
वातशोणितजः शोफो जानुमध्ये महारुजः।
शिरः क्रोष्टुकपूर्वन्तु स्थूलः क्रोष्टुकमूर्द्धवत् ॥७५॥
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्बधात् ॥७६॥
प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति।

कलायखञ्ज त विद्यान्मुक्तसन्धिप्रबन्धनम ॥७७॥
न्यस्ते तु विषमे पादे रुज कुर्य्यात्समीरण ।
वातकण्टक इत्येष विज्ञेय खुडकाश्रित ॥७८॥
पादयो कुरुते दाह पित्तासृक्सहितोऽनिल ।
विशेषतश्च क्रमत पाददाह तमादिशेत् ॥७९॥
हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत्।
पादहर्ष स विज्ञेय कफवातप्रकोपज ॥८०॥
असदेशस्थितो वायु शोषयित्वासबन्धनम ।
शिरास्वाकुञ्चय तत्रस्थो जनयत्यवबाहुकम ॥८१॥
यदा शब्दवह स्रोतो वायुरावृत्य तिष्ठति ।
शुद्ध. श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते ॥८२॥
हनुशङ्खशिरोग्रीव यस्य भिन्द्न्निवानिल ।
कर्णयो कुरुते शूल कर्णशूल तदुच्यते ॥८३॥
आवृत्य वायु सकफो धमनी शब्दवाहिनी ।
नरान् करोत्यक्रियकान्मूकमिन्मिणगद्गदान् ॥८४॥
अधो या वेदना याति वर्चोमूत्राशयोत्थिता ।
भिन्दन्तीव गुदोपस्थ सा तूणीत्युपदिश्यते ॥८५॥
गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी ।
वेग पक्वाशय याति प्रतितूणी तु सा स्मृता ॥८६॥
साटोपमत्युग्ररुजमाध्मातमुदर भृशम ।
आध्मानमिति जानीयाद्धोर वातनिरोधजम् ॥८७॥
विमुक्तपार्श्वहृदय तदेवामाशयोत्थितम् ।
प्रत्याध्मान विजानीयात् कफव्याकुलितानिलम् ॥८८॥
अष्ठीलावद्घन ग्रन्थिमूर्द्धमायतमुन्नतम् ।

वाताष्ठीला विजानीयाद्बहिर्मार्गविरोधिनीम् ॥८९॥
एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम् ॥९०॥

---

द्वितीयोऽध्यायः ।

अथातोऽर्शसां निदानं व्याख्यास्यामः ।

षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति । तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कुटकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याऽधोगत्वा गुदमागम्य प्रदूष्य वलीर्मांसप्ररोहान् जनयन्ति विशेषतो मन्दाग्नेस्तथा तृणकाष्ठोपललोष्टवस्त्रादिभिः शीतोदकसंस्पर्शनाद्वा कन्दाः परिवृद्धिमासादयन्ति तान्यर्शांसीत्याचक्षते । तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुस्तस्मिन् वलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरसम्भूताः प्रवाहणी विसर्जनी संवरणी चेति चतुरङ्गुलायताः सर्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः ॥१॥

शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः ।
गजतालुनिभाश्चापि वर्णतः सम्प्रकीर्त्तिताः ॥२॥
रोमान्तेभ्यो यवाध्यर्द्धो गुदौष्ठः परिकीर्त्तितः ॥३॥

प्रथमा तु गुदौष्ठादङ्गुलमात्रे । तेषान्तु भविष्यतां पूर्वरूपाण्यन्ने न श्रद्धा कृच्छ्रात्पक्तिरम्लीका सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोः श्वयथुरन्त्रकूजनं गुद-

परिकर्त्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां कास-श्वासौ भ्रमस्तन्द्रानिद्रेन्द्रियदौर्बल्यञ्च जातेष्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति ॥४॥

तत्र मारुतात्परिशुष्कारुणवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाडीमुखसूचीमुखाकृतीनि च भवन्ति। तैरुपद्रुतः सशूलं संहतमुपवेश्यते कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति। कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥५॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति। तैरुपद्रुतः सदाहं सरुधिरमतिसार्य्यते ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति। पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥६॥

श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति। तैरुपद्रुतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्य्यते शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति। शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥७॥

रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्तलक्षणानि च यदावगाढ़पुरीषप्रपीड़ितानि भवन्ति

तदात्ययं दुष्टमनल्पमसृक् सहसा विसृजन्ति। तस्यैवातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति। सन्निपातजानि सर्वदोषलक्षणयुक्तानि ॥८॥

सहजानि दुष्टशोणितशुक्रनिमित्तानि। तेषां दोषत एव प्रसाधनं कर्त्तव्यं विशेषतश्चात्र दुर्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्मुखानि। तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवणरोगवान् सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥९॥

भवति चात्र।

बाह्यमध्यबलिस्थानां प्रतिकुर्य्याद्भिषग्वरः।

अन्तर्बलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम् ॥१०॥

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति। तत्र कण्डूयनात् क्षतं समुपजायते। तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्चकिनोऽभ्यन्तरमुपरिष्टाद्वा ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वं योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीरान् जनयन्ति। त एवोर्द्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिवर्त्तयन्ति। तत्र कर्णजेषु वाधिर्य्यं शूलं पूतिकर्णता च नेत्रजेषु वर्त्मावरोधो वेदनास्रावो दर्शननाशश्च। घ्राणजेः प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्च। वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति।

व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य बहिःस्थिराणि कीलवदर्शांसि निर्वर्त्तयन्ति तानि चर्मकीलान्यर्शांसीत्याचक्षते ॥११॥

भवन्ति चात्र।

तेषु कीलेषु निस्तोदो मारुतेनोपजायते।
श्लेष्मणा तु सवर्णत्वं ग्रथितत्वञ्च निर्दिशेत् ॥१२॥
पित्तशोणितजं रौक्ष्यं कृष्णत्वं शुक्लता तथा।
समुद्रोणखरत्वञ्च च० कालस्य लक्ष [illegible] ॥१३॥
अर्शसां लक्षणं व्यासादुक्तं स[illegible] तु यत्।
तत्सर्व प्राग्विनि[illegible] ॥१४॥
अर्शःसु दृश्यते रूपं यस्मा[illegible] तु।
संसर्गं त विजानीय[illegible] स च [illegible] ॥१५॥
त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत्।
द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च ॥१६॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च।
सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥१७॥
सर्वा स्युर्वलया येषां दुर्नामभिरुपद्रुताः।
तेषु प्रतिहतो वायुरपानः सन्निवर्त्तते ॥१८॥
ततो व्यानेन सङ्गम्य ज्योतिर्हन्ति देहिनाम् ॥१९॥

---

## तृतीयोऽध्यायः।

अथातोऽश्मरीणां निदानं व्याख्यास्यामः।

चतस्रोऽश्मर्यो भवन्ति श्लेष्माधिष्ठानास्तद्यथा श्लेष्मणा वातेन पित्तेन शुक्रेण चेति। तत्रासंशोधनशीलस्यापथ्यका-

रिण प्रकुपित श्लेष्मा मूत्रसम्पृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति। तासां पूर्वरूपाणि वस्तिपीडारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति ॥१॥

यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम् ।
पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥२॥

अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदकप्रकाशमनाविलं ससिकतं विसृजति। धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति ॥३॥

तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याथ परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति। तां श्लैष्मिकीमिति विद्यात् ॥४॥

पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतीघाताद्दूयते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति। तां पैत्तिकीमिति विद्यात् ॥५॥

वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रती-

वालात्तीव्रा वेदना भवति तथात्यर्थं पीड्यमानो दन्तान् खादति नाभिं पीडयति मेढ्रं मृद्नाति पायुं स्पृशति विशर्द्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति। अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति। तां वातिकीमिति विद्यात् ॥६॥

प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद् विशेषेण बालानां भवन्ति। तेषामेवाल्पवस्तिकायत्वादनुपचितमांसत्वाच्च वस्ते सुखग्रहणाहरणा भवन्ति। महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनाभिघातादतिमैथुनाद्वा शुक्रश्चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभित सङ्गृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं वस्तिवेदना वृषणयोश्च श्वयथुमापादयति पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते। तां शुक्राश्मरीमिति विद्यात् ॥७॥

भवन्ति चात्र।

शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम्।
अश्मर्यां शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥८॥
पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः।
सा भिन्नमूर्त्तिं वातेन शर्करेत्यभिधीयते ॥९॥
हृत्पीडा सक्थिसदनं कुक्षिशूलं सवेपथु।
तृष्णोर्द्ध्वगोऽनिलः कार्श्यं दौर्बल्यं पाण्डुगात्रता ॥१०॥
अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च।

मूत्रमार्गप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान् ॥११॥
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम् ।
पाण्डुत्वमुष्णवातञ्च तृष्णा हृत्पीडनं वमिम् ॥१२॥
नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः ॥१३॥
अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः ।
वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम् ॥१४॥
एकसम्बन्धिनो ह्येते गुदास्थिविवराश्रिताः ।
मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥१५॥
पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः ।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥१६॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ।
नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥१७॥
जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते ।
आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः ॥१८॥
घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते ।
एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा ॥१९॥
मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ।
अपः स्वच्छास्वपि यथा निषिक्तासु नवे घटे ॥२०॥
कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा ।
सृजन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः ॥२१॥
तद्वद्बलासं वस्तिस्थमुष्मा संहन्ति सानिलः ।
मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते ॥२२॥
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥२३॥

मूत्राघाता प्रमेहाश्च शुक्रदोषास्तथैव च ।
मूत्रदोषाश्च ये केचिद्वस्तावेव भवन्ति हि ॥२४॥

---

चतुर्थोऽध्यायः ।

अथातो भगन्दराणां निदानं व्याख्यास्यामः ।

वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते । अपक्वाः पिडकाः पक्वास्तु भगन्दराः । तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति ॥१॥

तत्रापथ्यसेविनो वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति । सास्य तोदादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्य्यते तानि च छिद्राण्यजस्रं फेनानुविद्धमधिकमास्रावं स्रवन्ति व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते गुदञ्चावदीर्य्यते वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति । तं भगन्दरं शतपोनकमित्याचक्षते ॥२॥

पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति । सास्य चोषादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमा-

स्राव स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति। तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥३॥

श्लेष्मा तु प्रकुपित समीरणेनाध प्रेरित पूर्ववदवस्थित शुक्लावभासा स्थिरा कण्डूमती पिडका जनयति। सास्य कण्ड्वादीन् वेदनाविशेषाञ्जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च कठिन संरम्भी कण्डूप्राय पिच्छिलमजस्रमास्राव स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति। त भगन्दर परिस्राविणमित्याचक्षते ॥४॥

वायु प्रकुपित प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधोगत्वा पूर्ववदवस्थित पादाङ्गुष्ठप्रमाणा सर्वलिङ्गा पिडका जनयति। सास्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च नानाविधवर्णमास्राव स्रवति पूर्णनदीशम्बूकावर्त्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषा। त भगन्दर शम्बूकावर्त्तमित्याचक्षते ॥५॥

मूढेन मासलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदावगाढपुरीषोन्मिश्रमपानेनाध प्रेरितमसम्यगागतं गुदं क्षिणोति तत्र क्षतनिमित्त कोथ उपजायते तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नाया क्रिमय. सञ्जायन्ते ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति। तस्य तैर्मार्गैः क्रिमिकृतैर्वातमूत्रपुरीषरेतास्यभिनि सरन्ति त भगन्दरमुन्मार्गिणमित्याचक्षते ॥६॥

भवन्ति चात्र।

उत्पद्यतेऽल्परुक्शोफा क्षिप्र चाप्युपशाम्यति।
पाय्वन्तदेशे पिडका सा ज्ञेयान्या भगन्दरात् ॥७॥

भागन्दरी तु विज्ञेया पिडकाऽतो विपर्य्ययात् ।
पायो स्याद् द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा ॥८॥
यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान् ।
पायुर्भवेद्रुज कट्या पूर्वरूप भगन्दरे ॥९॥
घोरा साधयितु दुःखा सर्वं एव भगन्दरा ।
तेष्वसाध्यस्त्रिदोषोत्थ क्षतजश्च भगन्दर ॥१०॥

---

पञ्चमोऽध्याय ।

अथात कुष्ठनिदान व्याख्यास्याम । मिथ्याहाराचारस्य विशेषाद् गुरुविरुद्धासात्म्याजीर्णाहिताशिन स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमासानि वा पयसाभीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्त सहसा छर्दिर्वा प्रतिहन्ति तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिल' प्रवृद्धस्तिर्य्यग्गा सिरा, सम्प्रतिपद्य समुद्धूय बाह्य माग प्रति समन्ताद्विक्षिपति । यत्र यत्र च दोषो विक्षिप्तो नि सरति तत्र तत्र मण्डलानि प्रादुर्भवन्त्येवमुत्पन्नस्त्वचि दोषस्तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तर प्रतिपद्यते धातून् दूषयन् । तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्माद्रोमहर्ष कण्डू स्वेदबाहुल्यमस्वेदन वाङ्गप्रदेशाना स्वाप क्षतविसर्पणमसृज कृष्णता चेति ॥१॥

तत्र सप्त महाकुष्ठान्येकादश क्षुद्रकुष्ठान्येवमष्टादश कुष्ठानि भवन्ति । तत्र महाकुष्ठान्यरुणोदुम्बरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति ॥२॥

क्षुद्रकुष्ठान्यपि स्थूलारुष्क महाकुष्ठैककुष्ठचर्मदल विसर्प परिसर्प सिध्म विचर्चिका किटिम पामा रकसा चेति। सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युत्पन्नतस्तु दोषग्रहणमभिभवात् ॥२॥

तत्र वातेनारुण पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणकानि। श्लेष्मणा पौण्डरीक दद्रुकुष्ठञ्चेति। तेषान्तु महत्त्व क्रियागुरुत्वमुत्तरोत्तर धात्वनुप्रवेशादसाध्यत्वञ्चेति ॥३॥

तत्र वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि। पित्तेन पक्वोडुम्बरफलाकृतिवर्णान्यौडुम्बराणि। ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि। कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि। काकणन्तिकाफलसदृशान्यतीवरक्तकृष्णानि काकणकानि। तेषाञ्चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाक-भेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि ॥४॥

पुण्डरीकपत्त्राकाशानि पौण्डरीकाणि। अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्ति च दद्रुकुष्ठानि। तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्व चेति सामान्यरूपाणि ॥५॥

क्षुद्रकुष्ठान्यत ऊर्द्ध्वं वक्ष्याम ।
स्थूलानि सन्धिष्वतिदारुणानि
स्थूलारुषि स्युः कठिनान्यरूंषि ।
त्वक्सङ्कोचभेदस्वपनाङ्गसादा
कुष्ठे महत्पूर्वयुते भवन्ति ॥६॥
कृष्णारुण येन भवेच्छरीरं

तदेककुष्ठं प्रवदन्त्यसाध्यम।
स्थुर्येन कण्ड्व्यथनौषचोषा-
स्तलेषु तच्चर्मदलं वदन्ति ॥७॥
विसर्पवत् सर्पति सर्वतो य-
स्त्वगस्रमांसान्यभिभूय शीघ्रम।
मूर्च्छाविदाहारतितोदपाकान्
कृत्वा विसर्पं स भवेद् विकारः ॥८॥
शनैः शरीरे पिडकाः स्रवत्यः
सर्पन्ति यास्तं परिसर्पमाहुः।
कण्ड्वन्वितं श्वेतमपायि सिध्म
विद्यात्तनु प्रायश ऊर्द्ध्वकाये ॥९॥
राज्योऽतिकण्ड्वर्त्तिरुजः सरूक्षा
भवन्ति गात्रेषु विचर्चिकायाम्।
कण्डूमती दाहरुजोपपन्ना
विपादिका पादगतेयमेव ॥१०॥
यत् स्रावि वृत्तं घनमुग्रकण्डु,
तत् स्निग्धकृष्णं किटिमं वदन्ति।
सास्रावकण्डूपरिदाहवद्भि
र्यामाणुकाभिः पिडकाभिरुग्रा ॥११॥
स्फोटैः सदाहैररतिः सैव कच्छूः
स्फिक्पाणिपादप्रभवैर्निरूप्या।
कण्ड्वन्विता या पिडका शरीरे
संस्रावहीना रकसोच्यते सा ॥१२॥
अन् सांसिधं रकसा महच्च

यच्चैककुष्ठं कफजान्यमूनि।
वायोः प्रकोपात्परिसर्पमेकं
शेषाणि पित्तप्रभवाणि विद्यात्॥१३॥

किलासमपि कुष्ठविकल्प एव। तत्त्रिविधं वातेन पित्तेन श्लेष्मणा चेति। कुष्ठकिलासयोरन्तरं त्वग्गतमेव किलासमपरिस्रावि च। तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च। पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहञ्च। श्लेष्मणापि श्वेतं स्निग्धं बहुलं कण्डूमच्च। तेषु संसृष्टमण्डलमन्त्यजातं रक्तरोम चाऽसाध्यमाग्निदग्धञ्च। कुष्ठेषु रुक् त्वक्सङ्कोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन। पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन। कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा। तत्रादिबलप्रवृत्तं पौण्डरीकं काकणं चासाध्यम्॥१४॥

भवन्ति चात्र।

यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्।
अन्तर्भूमिं विगाहेत मूलैस्त्विविरूढिते॥१५॥
एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षितं।
क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः॥१६॥
स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते।
वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते॥१७॥
त्वक्स्वापो रोमहर्षश्च स्वेदस्याभिप्रवर्त्तनम्।
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते॥१८॥
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः।
तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते॥१९॥

दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ।
गात्राणां भेदनञ्चापि कुष्ठे मेदःसमाश्रिते ॥२०॥
नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसम्भवः ।
भवेत् स्वरोपघातश्च अस्थिमज्जसमाश्रिते ॥२१॥
कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ।
शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥२२॥
स्त्रीपुंसयोः कुष्ठदोषाद् दुष्टशोणितशुक्रयोः ।
यदपत्यन्तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥२३॥
कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ।
मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥२४॥
ब्रह्मस्त्रीसज्जनबधपरस्वहरणादिभिः ।
कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम् ॥२५॥
म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ।
नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्त्तितम् ॥२६॥
आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ।
औषधीनां विशिष्टानां तपसश्च निषेवणात् ॥२७॥
यस्तेन मुच्यते जन्तुः स पुण्याङ्गतिमाप्नुयात् ॥२८॥
प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥२९॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च सङ्क्रामन्ति नरान्नरम् ॥३०॥

———

## षष्ठोऽध्यायः ।

अथातः प्रमेहनिदानं व्याख्यास्यामः ।

दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति । तस्य चैवं प्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा बस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति । तेषां तु पूर्वरूपाणि हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् । तत्राविलप्रभूतमूत्रलक्षणाः सर्व एव प्रमेहाः । सर्व एव सर्वदोषसमुत्थाः सह पिडकाभिः ॥१॥

तत्र कफादुदकेक्षुसुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्या दोषदूष्याणां समक्रियत्वात् । पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्या दोषदूष्याणां विषमक्रियत्वात् । वातात्सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमा महात्ययिकत्वात् ॥२॥

तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान् कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥३॥

तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति । इक्षुरसतुल्यमिक्षुमेही सुरामेही सुरातुल्यं सरुजं सिकतानुविद्धं सिकतामेही शनैः सकफं सतन्तु शनैर्मेही विशदं लवण-

तुल्य लवणमेही इष्टरोमा पिष्टरसतुल्य पिष्टमेही आविल सान्द्र सान्द्रमेही शुक्रतुल्य शुक्रमेही स्तोक्ष स्तोक सफेनं फेनमेही मेहति ॥४॥

अत ऊर्द्ध पित्तनिमित्तान् वक्ष्याम । सफेनमच्छ नील नीलमेही मेहति । सदाह हरिद्राभ हरिद्रामेही अम्लरस-गन्धमम्लमेही सुतक्षारप्रतिम क्षारमेही मञ्जिष्ठोदक-प्रकाश मञ्जिष्ठामेही शोणितप्रकाश शोणितमेही मेहति ॥५॥

अत ऊर्द्ध वातनिमित्तान् वक्ष्याम । सर्पि प्रकाश सर्पिर्मेही मेहति । वसाप्रकाश वसामेही क्षौद्ररसवर्ण क्षौद्रमेही मत्तमातङ्गवदनुप्रबद्ध हस्तिमेही मेहति ॥६॥

मक्षिकोपसर्पणमालस्य मासोपचय प्रतिश्याय शैथि-ल्यारोचकाविपाका कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवा ७॥

वृषणयोरवदरण वस्तिभेदो मेढ़्रतोदो हृदि शूलमम्ली-का ज्वरातीसारारोचका वमथु परिधूमायन दाहो मूर्च्छा पिपासा निद्रानाश पाण्डुरोग पीतविण्मूत्रनेत्रत्वञ्चेति पैत्तिकानाम । हृद्ग्रहो लौल्यमनिद्रा स्तम्भ कम्प शूल बद्धपुरीषत्वञ्चेति वातजानाम । एवमेते विंशति प्रमेहा सोपद्रवा व्याख्याता । तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातो प्रमेहिणो दश पिडका जायन्ते । तद् यथा । शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति ॥८॥

शरावमाना तद्रूपा निम्नमध्या शराविका।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥९॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः।
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥१०॥
महती पिडका नीला पिडका विनता स्मृता।
महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्त्रिणी ॥११॥
मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका।
रक्तासिता स्फोटवती दारुणा त्वलजी भवेत् ॥१२॥
विदारी कन्दवद्वृत्ता कठिना च विदारिका।
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥१३॥
ये यन्मया स्मृता मेहास्तेषामेतास्तु तत्कृताः।
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मणि चोत्थिताः।
सोपद्रवा दुर्बलस्य पिडकाः परिवर्जयेत् ॥१४॥
कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः।
अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः ॥१५॥
प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते।
किञ्चिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत् ॥१६॥
कृत्स्नान्यर्द्धानि वा यस्मिन् पूर्वरूपाणि मानवे।
प्रवृत्तमूत्रमत्यर्थं तं प्रमेहिणमादिशेत् ॥१७॥
पिडकापीडितं गाढमुपसृष्टमुपद्रवैः।
मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः ॥१८॥
स चापि गमनात् स्थानं स्थानादासनमिच्छति।
आसनाद्वृणुते शय्यां शयनात् स्वप्नमिच्छति ॥१९॥
यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगवि-

श्लेष्मेण श्वबलवभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नाना कारणं भवति ॥२०॥

भवति चात्र ।

सर्वं एव प्रमेहास्तु कालेनाप्रतिकारिणः ।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥२१॥

---

सप्तमोऽध्यायः ।

अथात उदराणां निदानं व्याख्यास्यामः ।

धन्वन्तरिर्धर्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमो बभूव ।
ब्रह्मर्षिपुत्रं विनयोपपन्नं शिष्यं शुभं सुश्रुतमन्वशात्सः ॥१॥
पृथक्समस्तैरपि चेह दोषैः प्लीहोदरं बद्धगुदं तथैव ।
आगन्तुकं सप्तममष्टमञ्च दकोदरञ्चेति वदन्ति तानि ॥२॥
सुदुर्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद्वा ।
स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ॥३॥
गुल्माकृतिव्यञ्जितलक्षणानि कुर्वन्ति घोराण्युदराणि दोषाः ।
कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः ॥४॥
त्वचं समुन्नम्य शनैः समन्ताद्
विवर्द्धमानो जठरं करोति ।
तत्पूर्वरूपं बलवर्णकाङ्क्षा-
बलीविनाशो जठरे हि राज्यः ॥५॥
जीर्णापरिज्ञानविदाहवत्यो

वस्तौ रुज पादगतश्च शोफ ।
सङ्गृह्य पार्श्वोदरपृष्ठनाभी-
र्यद् वर्द्धते कृष्णसिरावनद्धम् ॥६॥
सशूलमानाहवदुग्रशब्द
सतोदभेद पवनात्मक तत् ।
यच्चोषतृष्णाज्वरदाहयुक्तं
पीत सिरा यत्र भवन्ति पीता. ॥७॥
पीताक्षिविण्मूत्रनखाननस्य
पित्तोदर तत्त्वचिराभिवृद्धि ।
यच्छीतल शुक्लसिरावनद्ध
गुरु स्थिर शुक्लनखाननस्य ॥८॥
स्निग्धं महच्छोफयुत ससाद कफोदर तच्च चिराभिवृद्धि ॥९॥
स्त्रियोऽन्नपान नखरोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ता ।
यस्मै प्रयच्छन्त्यरयो गराश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥१०॥
तेनाशु रक्तं कुपिताश्च दोषा.
कुर्वन्ति घोर जठर त्रिलिङ्गम् ।
तच्छीतवाताभ्रसमुद्भवेषु
विशेषत कुप्यति दह्यते च ॥११॥
स चातुरो मूर्च्छति सम्प्रसक्तं
पाण्डु कृश शुष्यति तृष्णया च ।
प्रकीर्त्तित दूष्युदरन्तु घोर
प्लीहोदरं कीर्त्तयतो निबोध ॥१२॥
विदाह्यभिष्यन्दिरतस्य जन्तोः
प्रदुष्टमत्यर्थमसृक् कफश्च ।

प्लीहाभिवृद्धिं सततं करोति
प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः ॥१३॥
वामे च पार्श्वे परिवृद्धिमेति
विशेषतः सीदति चातुरोऽत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गै-
रुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥१४॥
सव्येतरस्मिन् यकृति प्रदुष्टे
ज्ञेयं यकृद्दाल्युदरं तदेव ।
यस्यान्त्रमन्नैरुपलेपिभिर्वा
बालाश्मभिर्वा सहितैः पृथग्वा ॥१५॥
सञ्चीयते यत्र मलः सदोषः
क्रमेण नाड्यामिव सङ्करो हि ।
निरुध्यते चास्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पम् ॥१६॥
हृन्नाभिमध्ये परिवृद्धिमेति
यच्चोदरं विट्समगन्धिकञ्च ।
प्रच्छर्दयन् बद्धगुदी विभाव्य
स्ततः परिस्राव्युदरं निबोध ॥१७॥
शल्यं यदन्नोपहितं तदन्त्रं
भिनत्ति यस्यागतमन्यथा वा ।
तस्मात् स्रुतान्त्रात् सलिलप्रकाशः
स्रावः स्रवेद्वै गुदतस्तु भूयः ॥१८॥
नाभेरधश्चोदरमेति वृद्धिं
निस्तुद्यतेऽतीव विदह्यते च ।

एतत् परिस्राव्युदरं प्रदिष्टं
दकोदरं कीर्त्तयतो निबोध ॥१९॥
यः स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढः ।
पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥२०॥
स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति ।
स्निग्धं महत्सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च ।
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्
॥२१॥

आध्मानं गमने शक्तिर्दौर्बल्यं दुर्बलाग्निता ।
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥२२॥
अन्ते सलिलभावन्तु भजन्ते जठराणि तु ।
सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत् ॥२३॥

---

अष्टमोऽध्यायः ।

अथातो मूढगर्भनिदानं व्याख्यास्यामः ।

ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनादभिघातविशेषैः । स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरजस्रं समानः कोष्ठसङ्क्षो-

भमापादयति । तस्या जठरसङ्क्षोभाद्वायुरपानो मूढ पार्श्व-वस्तिशीर्षोदरयोनि-शूलानाह-मूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति। तरुण शोणितस्रावेण तमेव कदाचिद्वि-वृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्य-सम्मोहित गर्भं मूढगर्भमित्याचक्षते ॥१॥

तत्र सकील: प्रतिखुरो वीजक. परिघ इति । तत्र ऊर्द्ध्वबाहुशिर.पादो यो योनिमुखं निरुणद्धि कील इव स कील. । नि स्रुतहस्तपादशिरा. कायसङ्गी प्रतिखुर. । यस्तु निर्गच्छत्येकशिरोभुज स वीजक । परिघ इव योनि-मुखमावृत्य तिष्ठेत् स परिघ इति चतुर्विधो भवतीत्येके भाषन्ते तत्तु न सम्यक् कस्मात् स यदा विगुणानिलप्रपी-डितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते ॥२॥

तत्र कश्चित् द्वाभ्या सक्थिभ्या योनिमुख प्रतिपद्यते। कश्चिदाभुग्नैकसक्थिरेकेन। कश्चिदाभुग्न-सक्थिशरीरः स्फिग्देशेन तिर्य्यगागत.। कश्चिदुर.-पार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्त.-पार्श्वापवृत्तशिरा. कश्चिदेकेन बाहुना । कश्चिदाभुग्नशिरा बाहुद्वयेन । कश्चिदाभुग्नमध्यो हस्तपादशिरोभि । कश्चिदे-केन सक्थ्ना योनिमुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्ट-विधा मूढगर्भगतिर्निर्दिष्टा समासेन। तत्र द्वावन्त्यावसा-ध्यौ मूढगर्भौ शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंश-संवरणमक्कलश्वासकासभ्रमनिपीडितान् परिहरेत् ।३।

भवन्ति चात्र ।

कालस्य परिणामेन मुक्त वृन्ताद् यथा फलम् ।

प्रपद्येत स्वभावेन नान्यथा पतितु फलम् ॥४॥
एव कालप्रकर्षेण मुक्ता नाडीविबन्धनात् ।
गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥५॥
क्रमिवाताभिघातैस्तु तदेवोपद्रुत फलम् ।
पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युति ॥६॥
आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविच्युति ।
तत स्थिरशरीरस्य पात पञ्चमषष्ठयो ॥७॥
प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ।
नीलोद्धतसिरा हन्ति सा गर्भ स च ता तथा ॥८॥
गर्भास्पन्दनमावीना प्रणाश श्यावपाण्डुता ।
भवत्युच्छ्वासपूतित्व शूल चान्तर्मृते शिशौ ॥९॥
मानसागन्तुभिर्मातुरुपतापै प्रपीडित ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडित ॥१०॥
वस्तमारविपन्नाया कुक्षि प्रस्पन्दते यदि ।
तत्क्षणाज्जन्मकाले त पाटयित्वोद्धरेद्भिषक् ॥११॥

## नवमोऽध्याय ।

अथातो विद्रधीना निदान व्याख्यास्याम ।
सर्वामरगुरु श्रीमान् निमित्तान्तरभूमिप ।
शिष्यायोवाच निखिलमिद विद्रधिलक्षणम् ॥१॥
त्वग्रक्तमासमेदांसि प्रदूष्यास्थिसमाश्रिता ।
दोषा शोफ शनैर्घोर जनयन्त्युच्छ्रिता भृशम् ॥२॥
महामूल रुजावन्त वृत्त चाप्यथवायतम् ।
तमाहुर्विद्रधि धीरा विज्ञेय षड्विध स च ॥३॥
पृथग्दोषै समस्तैश्च क्षतेनाप्यसृजा तथा ।

षसामपि हि तेषान्तु लक्षणं सम्प्रवक्ष्यते ॥४॥
कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदन ।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भव ॥५॥
पक्वोडुम्बरसङ्काश श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भव ॥६॥
शरावसदृश पाण्डु शीत. स्तब्धोऽल्पवेदन. ।
चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थित ॥७॥
तनुपीतसिताश्चैषामास्रावा क्रमशः स्मृता ।
नानारूपरुजास्रावो घाटालो विषमो महान् ॥८॥
विषम पच्यते वापि विद्रधि सान्निपातिक ॥९॥
तैस्तैर्भावैरभिहते क्षते चापथ्यसेविन ।
क्षतोष्मा वायुविसृत सरक्त पित्तमीरयेत ॥१०॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिन ।
एष विद्रधिरागन्तु पित्तविद्रधिलक्षण ॥११॥
कृष्णस्फोटावृत श्यावस्तीव्रदाहरुजाज्वर ।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥१२॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वज ।
आभ्यन्तरानतस्तूर्द्ध्व विद्रधीन् परिचक्षते ॥१३॥
गुर्वसात्म्यविरुद्धान्नशुष्कसङ्कीर्णभोजनात् ।
अतिव्यवायव्यायामवेगाघातविदाहिभि ॥१४॥
पृथक् सम्भूय वा दोषा कुपिता गुल्मरूपिणम् ।
वल्मीकवत्समुन्नद्धमन्त कुर्वन्ति विद्रधिम् ॥१५॥
गुदे वस्तिमुखे नाभ्या कुक्षौ वङ्क्षणयोस्तथा ।
वृक्कयो प्लीह्नि यकृति हृदये क्लोम्नि वा तथा ॥१६॥

तेषां लिङ्गानि जानीयाद् बाह्यविद्रधिलक्षणैः।
आमपक्वैषणीयेन पक्वापक्वं विनिर्दिशेत् ॥१७॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः।
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ॥१८॥
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम्।
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणाख्ये तु विद्रधौ ॥१९॥
वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम्।
सर्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः।
श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका ॥२०॥
आमो वा यदि वा पक्वो महान् वा यदि वेतरः।
सर्वो मर्मोत्थितश्चापि विद्रधिः कष्ट उच्यते ॥२१॥
नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः।
जीवत्यधो निःसृतेषु सृतेषूर्ध्वं न जीवति ॥२२॥
हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः।
जीवेत्कदाचित् पुरुषो नेतरेषु कदाचन ॥२३॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः।
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥२४॥
अपि सम्यक् प्रजातानामसृक्कायादनिःसृतम्।
रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कल्लसञ्ज्ञितम् ॥२५॥
सप्ताहान्नोपशान्तश्चेत्ततोऽसौ सम्प्रपच्यते।
विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः ॥२६॥
तुल्यदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च।
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ॥२७॥
गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते।

विवरानुचरो ग्रन्थिरम्, बुद्बुदको यथा ॥२८॥
एवंप्रकारो गुल्मस्तु तस्मात्पाकं न गच्छति ।
मांसशोणितबाहुल्यात्पाकं गच्छति विद्रधिः ॥२९॥
मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति ।
गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ।
विद्रधिः पच्यते तस्माद् गुल्मश्चापि न पच्यते ॥३०॥
हृन्नाभिवस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ।
अथ मज्जपरीपाको घोरः समुपजायते ॥३१॥
सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा ।
ततः स व्याधिना तेन ज्वलनेनेव दह्यते ॥३२॥
अस्थिमज्जोष्मणा तेन शोष्यते दह्यमानवत् ।
विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम् ॥३३॥
अथास्य कर्मणा व्याधिर्द्वारन्तु लभते यदा ।
ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ॥३४॥
भिन्नेऽस्थ्नि स्रवेत् पूयमेतदस्थिगतं विदुः ।
विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम् ॥३५॥

---

दशमोऽध्यायः ।

अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः ।

त्वङ्मांसशोणितगताः कुपितास्तु दोषाः
सर्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ।
कुर्वन्ति यं विततमुन्नतमाशु शोफं
तं सर्वतो विसरणाच्च विसर्पमाहुः ॥१॥
वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-

सर्व्वोद्रतोद्रपवनज्वरलिङ्गयुक्तः ।
गण्डैर्यदा तु विषमैरतिदूषितत्वाद्
युक्तः स एव कथितः खलु वर्जनीयः ॥२॥
पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-
स्फोटप्रभेदबहुलः क्षतजप्रकाशः ।
दोषप्रवृद्धिहतमांससिरो यदा स्यात्
स्रोतोजकर्दमनिभो न तदा स सिध्येत् ॥३॥
श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः
स्निग्धः सितः श्वयथुरल्परुगुग्रकण्डुः ।
सर्व्वात्मकस्त्रिविधवर्णरुजोऽवगाढ़ः
पक्वो न सिध्यति च मांससिराप्रणाशात् ॥४॥
सद्यः क्षतव्रणमुपेत्य नरस्य पित्तं
रक्तञ्च दोषबहुलस्य करोति शोफम् ।
श्यावः सलोहितमतिज्वरदाहपाकः
स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥५॥
सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्व्वात्मकः क्षतकृतश्च न सिद्धिमेति ।
पैत्तानिलावपि च दर्शितपूर्व्वलिङ्गौ
सर्व्वे च मर्म्मसु भवन्ति हि कृच्छ्रसाध्याः ॥६॥
शोफं न पक्वमिति पक्वमुपेक्षते यो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि ततः स पूयः ॥७॥
तस्यातिमात्रगमनाद्गतिरित्यतश्च

नाडीव यद्वहति तेन मता तु नाडी ।
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
सम्मूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥८॥
तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपायाम ।
तृट्तापतोदमदनज्वरभेदहेतु
पीत स्रवत्यधिकमुष्णमहः सु पित्तात् ॥९॥
ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
रात्रिस्रुति स्तिमितरुक्कठिना सकण्डु ।
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभासु विद्यात् ॥ १०॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्या भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत्पवनपित्तकफप्रकोपा-
द्घोरामसुक्षयकरीमिव कालरात्रिम् ॥११॥
नष्ट कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गति करोति ।
सा फेनिल मथितमच्छमसृग्विमिश्र-
मुष्ण करोति सहसा सरुजा च नित्यम् ॥१२॥
यावत्यो गतयो यैश्च कारणै सम्भवन्ति हि ।
तावन्त स्तनरोगा स्यु स्त्रीणा तैरेव हेतुभि. ॥१३॥
धमन्य. संवृतद्वारा कन्याना स्तनसंश्रिता ।
दोषाविसरणात्तासा न भवन्ति स्तनामया' ॥१४॥
तासामेव प्रजाताना गर्भिणीनान्तु ता' पुन. ।

स्वभावादेव विवृता जायन्ते सम्भवन्त्यतः ॥१५॥
रसप्रसादो मधुरः पक्वाहारनिमित्तजः ।
कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥१६॥
विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते ।
सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥१७॥
तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ।
शब्दसंश्रवणात् स्पर्शात् हर्षाच्च प्रवर्त्तते ॥१८॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥१९॥
तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि ।
ग्रहणाच्च शरीरस्य शुक्रवत्सम्प्रवर्त्तते ॥२०॥
स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ।
तत् कषायं भवेद्वातात् क्षिप्तञ्च प्लवतेऽम्भसि ॥२१॥
पित्तादम्लञ्च कटुकं राज्योऽम्भसि च पीतिकाः ।
कफाद्घनं पिच्छिलञ्च जले चाप्यवसीदति ।
सर्वैर्दुष्टैः सर्वलिङ्गमभिघाताच्च दुष्यति ॥२२॥
यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ।
मधुरञ्चाविवर्णञ्च प्रसन्नं तद्विनिर्दिशेत् ॥२३॥
सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ।
रक्तं मांसञ्च सन्दूष्य स्तनरोगाय कल्पते ॥२४॥
पञ्चानामपि तेषान्तु हित्वा शोणितविद्रधिम् ।
लक्षणानि समानानि वाह्यविद्रधिलक्षणैः ॥२५॥

———

## एकादशोऽध्याय ।

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डाना निदान व्याख्यास्याम ।
वातादयो मांसमसृक् प्रदुष्टा सन्दूष्य मेदश्च कफानुविद्धम् ।
वृत्तोन्नत विग्रथितन्तु शोफ कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्ट ॥१॥
आयम्यते व्यथ्यत एति तोद प्रत्यस्यते कृत्यत एति भेदम् ।
कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्न स्रवेच्चानिलजोऽस्रमच्छम्
॥२॥
दन्दह्यते धूप्यति चातिमात्र पापच्यते प्रज्वलतीव चापि ।
रक्त सपीतोऽप्यथवापि पित्ताद्भिन्न स्रवेदुष्णमतीव चास्रम्
॥३॥
शीतो विवर्णोऽल्परुजोऽतिकण्डु पाषाणवत्संहननोपपन्न ।
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्न स्रवेच्छुक्लघनञ्च पूयम ॥४॥
शरीरवृद्धिक्षयवृद्धिहानि स्निग्धो महानल्परुजोऽतिकण्डु ।
मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पि प्रतिमन्तु मेदः
॥५॥
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानम् ।
सपीड्य सङ्कोच्य विशोष्य वापि ग्रन्थि करोत्युन्नतमाशु वृत्तम्
॥६॥
ग्रन्थि सिराज स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ।
अरुक् स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः
॥७॥
हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषूपचितन्तु मेद ।
ग्रन्थि स्थिर वृत्तमथायतं वा स्निग्ध कफश्चाल्परुज करोति
॥८॥

त ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥९॥

कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः
स्रवन्ति नश्यन्ति भवन्ति चान्ये।
मेदःकफाभ्यां खलु रोग एषः
सुदुस्तरो वर्षगणानुबन्धी ॥१०॥

गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्च्छिता मांसमभिप्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥११॥
कुर्वन्ति मांसोपचयन्तु शोफं तदर्बुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च ॥१२॥

तज्जायते तस्य च लक्षणानि
ग्रन्थेः समानानि सदा भवन्ति।
दोषः प्रदुष्टो रुधिरं सिरास्तु
सम्पीड्य सङ्कोच्य गतस्तु पाकम् ॥१३॥
सास्रावमुन्नह्यति मांसपिण्डं
मांसाङ्कुरैराचितमाशु वृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकं स्यात् ॥१४॥

रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु।
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम्
॥१५॥
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्।
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य ॥१६॥
मांसार्बुदं त्वेतदसाध्यमुक्तं साध्येष्वपीमान्युपवर्जयेत्तु।

सम्प्रसुत मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्
॥१७॥

यज्जायतेऽन्यत् खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ।
यद्‌ द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥१८

न पाकमायान्ति कफाधिकत्वान्मेदोऽधिकत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वाद्‌ ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥१९

वातः कफश्चैव गले प्रवृद्धौ मन्ये तु संसृत्य तथैव मेदः ।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः
॥२०॥

तोदान्वितः कृष्णसिरावनद्धः
कृष्णोऽरुणो वा पवनात्मकस्तु ।
मेदोऽन्वितश्चोपचितश्च कालाद्‌-
भवेत् प्रदिग्धश्च गलेऽरुजश्च ॥२१॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रशोषः ॥२२॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डुः
शीतो महांश्चापि कफात्मकस्तु ।
चिराभिवृद्धिं कुरुते चिराद्वा
प्रपच्यते मन्दरुजः कदाचित् ॥२३॥
माधुर्य्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रलेपः ।
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो

मेद कृतो नीरुगथातिकण्डु ॥२४॥

प्रलम्बतेऽलावुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्त ।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्
॥२५॥

कृच्छ्रात् श्वसन्तं मृदु सर्वगात्रं संवत्सरातीतमरोचकार्त्तम।
क्षीणन्तु वैद्यो गलगण्डिनं तं भिन्नस्वरं चैव विवर्जयेत्तु ॥२६

निबद्ध श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान् वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत् ॥२७॥

---

द्वादशोऽध्याय ।

अथातो वृद्ध्युपदंशश्लीपदाना निदानं व्याख्यास्याम' ।

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ता. सप्त वृद्धय । तासा मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतु-रन्यतम । अथ प्रकुपितोऽन्यतमो हि दोष फलकोशवाहिनीरभिप्रपद्य धमनी फलकोशयोर्वृद्धिं जनयति। तां वृद्धिमित्याचक्षते। तासा भविष्यतीना पूर्वरूपाणि वस्ति-कटीमुष्कमेढ्रेषु वेदना मारुतनिग्रह: फलकोशशोफश्चेति ॥१॥

तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिमित्ता-निलरुजं वातवृद्धिमाचक्षते पक्वोडुम्बरसङ्काशा ज्वरदाहोष्मवती चाशुसमुत्थानपाका पित्तवृद्धि कठिनामल्पवेदना शीता कण्डूमती श्लेष्मवृद्धि कृष्णस्फोटावृता पित्तवृद्धिलिङ्गा रक्तवृद्धि मृदुस्निग्धा कण्डूमतीमल्पवेदना तालफलप्रकाशा मेदोवृद्धिम्। मूत्रसाधारणशीलस्य मूत्रवृद्धिर्भवति। सा

गच्छतोऽम्बुपूर्णो दृतिरिव क्षुभ्यति मूत्रकृच्छ्रं वेदनां वृषणयो श्वयथु कोषयोश्चापादयति। तां मूत्रवृद्धिं विद्यात्। भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्ध प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं द्विगुणमादायाधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोषं प्रविश्य मुष्कशोफमापादयत्याध्मातो वस्तिरिवाततः प्रदीर्घं शोफो भवति। सशब्दमवपीडितश्चोर्द्ध्वमुपैति। विमुक्तश्च पुनराध्मति। तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥२॥

तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणी चिरोत्सृष्टा रजस्वला दीर्घरोमा कर्कशरोमा सङ्कीर्णरोमा निगूढरोमामल्पद्वारा महाद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिमक्षालितयोनि योनिरोगोपसृष्टा स्वभावतो वा दुष्टयोनि वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद्दर्न्दनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनादवपीडनाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषा. क्षतेऽक्षते वा श्वयथुमुपजनयन्ति। तमुपदंशमित्याचक्षते ॥३॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैक। तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदना ॥४॥

पैत्तिके ज्वर' श्वयथु. पक्वोडुम्बरसङ्काशस्तीव्रदाह. क्षिप्रपाक पित्तवेदनाश्च ॥५॥

श्लैष्मिके श्वयथु कण्डूमान् कठिन स्निग्ध श्लेष्मवेद्नश्च। रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमस्रकप्रवृत्ति. पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च याप्यश्चैव कदाचित् ॥६॥

सर्वजे सर्वलिङ्गदर्शनमवदरणं शेफस: क्रिमिप्रादुर्भावो मरणं चेति ॥७॥

कुपितास्तु दोषा वातपित्तश्लेष्माणोऽध प्रपन्ना वङ्क्षणोरुजानुजङ्घास्ववतिष्ठमाना कालान्तरेण पादमाश्रित्य शनै शोफ जनयन्ति तत् श्लीपदमित्याचक्षते। तत्त्रिविधं वातपित्तकफनिमित्तमिति। तत्र वातज खर कृष्ण परुषमनिमित्तानिलरुज परिस्फुटति च बहुश । पित्तजन्तु पीतावभासमीषन्मृदुज्वरदाहप्रायञ्च। श्लेष्मजन्तु श्वेत स्निग्धावभास मन्दवेदन भारिकमिति महाग्रन्थिक कण्टकैरुपचितञ्च। तत्र संवत्सरातीतमतिमहदल्मीकजात प्रस्रुतमिति वर्जनीयानि ॥८॥

भवन्ति चात्र।

त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात् ॥९॥
पुराणोदकभूयिष्ठा. सर्वर्त्तुषु च शीतला. ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषत. ॥१०॥
पादयोर्हस्तयोश्चापि श्लीपदं जायते नृणाम् ।
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विद ॥११॥

## त्रयोदशोऽध्याय ।

अथात क्षुद्ररोगाणा निदान व्याख्यास्याम' ।

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा । अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्दभो जालगर्दभ कक्षा विस्फोटकोऽग्निरोहिणी चिप्प कुनखोऽनुशयी विदारिका शर्कराऽर्बुद पामा विचर्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्तौ दारुणकोऽरुषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्मशकश्चर्मकीलस्तिलकालको न्यच्छं व्यङ्ग परिवर्त्तिकाऽवपाटिका निरुद्धप्रकश निरुद्धगुदोऽहिपूतन वृषणकच्छूर्गुदभ्र शश्चेति ॥१॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥२॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पिडका श्लेष्मवाताभ्या यवप्रख्येति सोच्यते ॥३॥
घनामवक्त्रा पिडकामुन्नता परिमण्डलाम् ।
अन्धालजीमल्पपूया ता विद्यात् कफवातजाम् ॥४॥
विवृतास्या महादाहा पक्कोडुम्बरसन्निभाम ।
विवृतामिति ता विद्यात्पित्तोत्था परिमण्डलाम ॥५॥
ग्रथित पञ्च वा षड् वा दारुणा कच्छपोन्नता ।
कफानिलाभ्यामुद्भूता विद्यात्ता कच्छपीमिति ॥६॥
पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्व जत्रुणि ।
ग्रन्थिर्वल्मीकवद्यस्तु शनै समुपचीयते ॥७॥
तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृत: ।

व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भव ॥८॥
पद्मपुष्करवन्मध्ये पिडकाभि समाचिताम् ।
इन्द्रवृद्धान्तु ता विद्याद्वातपित्तोत्थिता भिषक् ॥९॥
कर्णौ परिसमन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ।
शालूकवत्पनसिका ता विद्यात् श्लेष्मवातजाम् ॥१०॥
हनुसन्धौ समुद्भूत शोफमल्परुज स्थिरम् ।
पाषाणगर्दभं विद्याद् बलासपवनात्मकम् ॥११॥
विसर्पवत् सर्पति यो दाहज्वरकरस्तनु ।
अपाक श्वयथु पित्तात् स ज्ञेयो जालगर्दभ ॥१२॥
बाहुपार्श्वांसकक्षासु कृष्णस्फोटा सवेदनाम् ।
पित्तप्रकोपात् सम्भूता कक्षामिति विनिर्दिशेत् ॥१३॥
अग्निदग्धनिभा स्फोटा सज्वरा रक्तपित्तत ।
क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति ॥१४॥
कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणा ।
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभा ॥१५॥
सप्ताहाद् द्वादशाहाद् वा पक्षाद् वा घ्नन्ति मानवम् ।
तामग्निरोहिणी विद्यादसाध्या सन्निपातत ॥१६॥
नखमांसमधिष्ठाय पित्त वातश्च वेदनाम् ।
करोति दाहपाकौ च तं व्याधि चिप्पमादिशेत् ॥१७॥
तदेव चतरोगाख्य तथोपनखमित्यपि ।
अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसित: खर ॥१८॥
भवेत्तु कुनख विद्यात् कुलीनमिति सञ्ज्ञितम् ।
गम्भीरामल्पसरम्भा सवर्णामुपरिस्थिताम् ॥१९॥
कफादल्पप्रपाकान्ता विद्यादनुशयी भिषक् ।

विदारीकन्दवद् वृत्तां कक्षावङ्क्षणसन्धिषु ॥२०॥
रक्ता विदारिका विद्यात् सर्वजा सर्वलक्षणाम ।
प्राप्य मांससिरास्नायु श्लेष्मा मेदस्तथाऽनिल. ॥२१॥
ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् ।
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिल ॥२२॥
मांस विशोष्य ग्रथिता शर्करा जनयेत् पुन ।
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं तत सिरा ॥२३॥
स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम् ।
पामाविचर्च्यौ कुष्ठेषु रकसा च प्रकीर्त्तिता ॥२४॥
परिक्रमणशीलस्य वायुरत्यर्थं रूक्षयो ।
पादयो कुरुते दारी सरुजा तलसश्रिताम ॥२५॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभि ।
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम ॥२६॥
सकील: कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा ।
कीलमात्र सरुक् स्रावा जायते कदरस्तु स: ॥२७॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ ।
दुष्टकर्दमसस्पर्शादलस त विनिर्दिशेत् ॥२८॥
रोमकूपानुगं पित्त वातेन सह मूर्च्छितम ।
प्रच्यावयति रोमाणि तत श्लेष्मा सशोणित ॥२९॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भव ।
तदिन्द्रलुप्त खालित्य रुज्येति च विभाव्यते ॥३०॥
दारुणा कण्डुरा रूक्षा केशभूमि प्रजायते ।
कफवातप्रकोपेण विद्याद्दारुणकन्तु तम ॥३१॥
अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि ।

कफासृक्क्रिमिकोपेन नृणां विद्याद्रु षिकाम् ।
क्रोधशोकश्रमकृत शरीरोष्मा शिरोगत ॥३२॥
पित्तञ्च केशान् पचति पलित तेन जायते ।
दाहज्वररुजावन्तस्ताम्रा स्फोटा सपीतका ॥३३॥
गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिका' ।
शाल्मलीकण्टकप्रख्या कफमारुतशोणिते ॥३४॥
जायन्ते पिडका यूना वक्त्रे या मुखदूषिका ।
कण्टकैराचितं वृत्त कण्डु,मत्पाण्डु मण्डलम् ॥३५॥
पद्मिनीकण्टकप्रख्यैस्तदाख्य कफवातजम् ।
नीरुज सममुत्पन्न मण्डल कफरक्तजम् ॥३६॥
सहज रक्तमीषञ्च श्लक्ष्ण जतुमणि विदु' ।
अवेदन स्थिरञ्चैव यस्य गात्रेषु दृश्यते ॥३७॥
माषवत् कृष्णमुत्सन्नमनिलान्मशकं दिशेत् ।
कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥३८॥
वातपित्तकफोद्रेकात्तान् विद्यात्तिलकालकान् ।
मण्डल महदल्प वा श्याम वा यदि वा सितम् ॥३९॥
सहज नीरुज गात्रे न्यच्छमित्यभिधीयते ।
समुत्थाननिदानाभ्या चर्मकील प्रकीर्त्तितम् ॥४०॥
क्रोधायासप्रकुपितो वायुः पित्तेन सयुत. ।
सहसा मुखमागम्य मण्डल विसृजेत्तत ॥४१॥
नीरुज तनुक श्याव मुखे व्यङ्ग तमादिशेत् ।
मर्दनात्पीडनाच्चापि तथैवाप्यभिघातत' ॥४२॥
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चर ।
तदा वातोपसृष्टन्तु चर्म प्रतिनिवर्त्तते ॥४३॥

मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ।
सवेदन सदाहश्च पाकञ्च व्रजति क्वचित् ॥ ४४ ॥
मारुतागन्तुसम्भूता विद्यात्ता परिवर्त्तिकाम ।
सकण्डू कठिना चैव सैव श्लेष्मसमुत्थिता ॥ ४५ ॥
अल्पीयसा यदा हर्षाद् बाला गच्छेत् स्त्रिय नर ।
हस्ताभिघातादथवा चर्मण्युद्वर्त्तिते बलात् ॥ ४६ ॥
मर्द्दनात्पीडनाद्वापि शुक्रवेगविघातत ।
यस्यावपाट्यते चर्म ता विद्यादवपाटिकाम् ॥ ४७ ॥
वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम ।
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥ ४८ ॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम ।
मूत्र प्रवर्त्तते जन्तोर्मणिर्न च विदीर्य्यते ॥ ४९ ॥
निरुद्धप्रकश विद्याद् दुरूढा चावपाटिकाम ।
वेगसन्धारणाद्वायुर्विहतो गुदमाश्रित. ॥ ५० ॥
निरुणद्धि महत् स्रोत सूक्ष्मद्वार करोति च ।
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीष तस्य गच्छति ॥ ५१ ॥
सन्निरुद्धगुद व्याधिमेन विद्यात् सुदुस्तरम् ।
अकल्मूत्रसमायुक्तोऽधौतेऽपाने शिशोर्भवेत् ॥ ५२ ॥
स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ।
कण्डूयनात्तत क्षिप्र स्फोट स्रावश्च जायते ॥ ५३ ॥
एकीभूत व्रणैर्घोर त विद्यादहिपूतनम् ।
स्नानोत्सादनहीनस्य मलो वृषणयोश्रित ॥ ५४ ॥
प्रक्लिद्यते यदा स्वेदात् स कण्डू जनयेत्तदा ।
तत्र कण्डूयनात् क्षिप्र स्फोट स्रावश्च जायते ॥ ५५ ॥

प्रादुर्दूषयकच्छू ता श्लेषरक्तप्रकोपजाम् ।
प्रवाहणातिसाराभ्या निर्गच्छति गुद वहि ।
रुचदुर्बलदेहस्य त गुदभ्रमादिशेत् ॥५६॥

---

## चतुर्दशोऽध्याय ।

अथात शूकदोषनिदान व्याख्यास्याम' ।

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्ताना शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते । तद्यथा । सर्षपिका । अष्ठीलिका । ग्रथितम् । कुम्भीका । अलजी । मृदितम् । सम्मूढपिडका । अवमन्थ । पुष्करिका । स्पर्शहानि. । उत्तमा । शतपोनक । त्वक्पाक. । शोणितार्बुदम् । मासार्बुदम् । मासपाक. । विद्रधिः । तिलकालकश्चेति ॥१॥

गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका ।
पिडका कफरक्ताभ्या ज्ञेया सर्षपिका बुधै ॥२॥
कठिना विषमैरन्तैर्मारुतस्य प्रकोपत ।
शूकैस्तु विषसयुक्तै पिडकाऽष्ठीलिका भवेत् ॥३॥
शूकैर्यत् पूरितं शश्वद् ग्रथितं तत् कफोत्थितम् ।
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ॥४॥
अलजीलक्षणैर्युक्तामलजीञ्च वितर्कयेत् ।
मृदित पीडित यत्तु सरब्ध वायुकोपत ॥५॥
पाणिभ्या भृशसंमूढे समूढपिडका भवेत् ।
दीर्घा बह्वाश्च पिडका दीर्य्यन्ते मध्यतस्तु या. ॥६॥
सोऽवमन्थ कफासृग्भ्या वेदनारोमहर्षकृत् ।
पित्तशोणितसम्भूता पिड़का पिडकाचिता ॥७॥

पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ।
जनयेत् स्पर्शहानिन्तु शोणित शूकदूषितम् ॥८॥
मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा ।
उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥९॥
छिद्रैरणुमुखैर्यत् तु चित मेढ्र समन्तत ।
वातशोणितजो व्याधिर्विज्ञेय शतपोनक ॥१०॥
पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ।
कृष्णस्फोटै सरक्तैश्च पिडकाभिश्च पीडितम् ।
यस्य वस्तिरुजश्चोग्रा ज्ञेय तच्छोणितार्बुदम् ॥११॥
मासदोषेण जानीयादर्बुद माससम्भवम् ।
शीर्य्यन्ते यस्य मासानि यस्य सर्वाश्च वेदना ॥१२॥
विद्यात्तं मासपाकन्तु सर्वदोषकृत भिषक् ।
विद्रधि सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥१३॥
कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ।
पातितानि पचन्त्याशु मेढ्र निरवशेषत ॥१४॥
कालानि भूत्वा मासानि शीर्य्यन्ते यस्य देहिन ।
सन्निपातसमुत्थान त विद्यात्तिलकालकम् ॥१५॥
तत्र मासार्बुद यच्च मासपाकश्च य स्मृत ।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालका ॥१६॥

———

## पञ्चदशोऽध्याय. ।

अथातो भग्नाना निदान व्याख्यास्याम ।

पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघात-विशेषैरनेकविधमस्था भङ्गमुपदिशन्ति । तत्तु भङ्गजात-

मनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्च ॥१॥

तत्र सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम्। तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाऽशक्तिरुग्ररुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥२॥

विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति। विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च। विवर्त्तिते तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च। अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वञ्च। अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च। तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति ॥३॥

काण्डभग्नमत ऊर्द्ध्वं वक्ष्यामः। कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम्। श्वयथुबाहुल्यं स्पन्दनविवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम् ॥४॥

विशेषतस्तु सम्मूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकम्। अश्वकर्णवदुन्नतमश्वकर्णकम्। चूर्णितमास्फालितं तु शब्दस्पर्शाभ्यां बोद्धव्यम्। पिच्चितं पृथुतां गतम् अ-शोफम्। पार्श्वयोरस्थि हीनोन्नतमस्थिच्छल्लितम्। क्षिप्तं प्रकम्पमानं काण्डभग्नत्वम्। अस्थ्यवयवोऽस्थिमध्यमनुप्र-

विश्य मज्जानमनुबध्नातीति मज्जानुगतम् । अस्थि निःशेषत-श्छिन्नमतिपातितम । आभुग्नमविमुक्तास्थि वक्रम । अन्यतरपार्श्वावशिष्ट छिन्नम् । पाटितमणुबहुविदारितं वेदनावच्च । शूकपूर्णमिवाध्मात विपुल विस्फुटीकृत स्फुटितमिति । तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालाना क्षतक्षीणकुष्ठश्वासिना सन्ध्युपगतञ्चेति ॥५॥

भवन्ति चात्र ।

भिन्न कपाल कट्यान्तु सन्धिमुक्त तथा च्युतम् ।
जघनं प्रतिपिष्टञ्च वर्जयेत्तच्चिकित्सकः ॥६॥
असश्लिष्ट कपालन्तु ललाटे चूर्णितञ्च यत् ।
भग्न स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥७॥
आदितो यच्च दुर्जातमस्थि सन्धिरथापि वा ।
सम्यक् सहितमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात् ॥८॥
सङ्क्षोभाद्वापि यद्गच्छेद्विक्रियां तत् तु वर्जयेत् ।
मध्यस्य वयसोऽवस्थास्तिस्रो या परिकीर्त्तिताः ॥९॥
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ।
तरुणान्यस्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥१०॥
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥११॥

## षोडशोऽध्यायः ।

अथातो मुखरोगाणां निदान व्याख्यास्याम ।

मुखे तु । पञ्चषष्टि. सप्तस्वायतनेषु तत्रायतनान्योष्ठौ दन्तमूलानि दन्ता जिह्वा तालु कण्ठः सर्वाणि चेति ।

तत्राष्टावोष्ठयोः । पञ्चदश दन्तमूलेषु । अष्टौ दन्तेषु । पञ्च जिह्वायाम् । नव तालुनि । सप्तदश कण्ठे । त्रयः सर्वेष्वायतनेषु ॥१॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः ॥२॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ ।
दाल्येते परिपुट्येते ओष्ठौ मारुतकोपतः ॥३॥
आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम् ।
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥४॥
सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ।
कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥५॥
सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥६॥
खर्जूरफलवर्णाभिः पिडकाभिः समाचितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥७॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुन्नतौ ।
जन्तवश्चात्र मूर्च्छन्ति सृक्कस्योभयतो मुखात् ॥८॥
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ।
अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू ॥९॥
क्षतजाभौ विदीर्य्येते पाट्येते चाभिघाततः ।
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥१०॥

दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशो दन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति ॥११॥

शोणित दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥१२॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधि कफशोणितसम्भव ॥१३॥
दन्तयोस्त्रिषु वा यस्य श्वयथु सरुजो महान् ।
दन्तपुप्पुटको ज्ञेय कफरक्तनिमित्तज ॥१४॥
स्रवन्ति पूयरुधिर चला दन्ता भवन्ति च ।
दन्तवेष्ट स विज्ञेयो दुष्टशोणितसम्भव. ॥१५॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तत ।
लालास्रावो स विज्ञेय कण्डूमान् शौषिरो गद ॥१६॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।
दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते ।
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञक. ॥१७॥
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेय परिदरो हि स ॥१८॥
वेष्टेषु दाह. पाकश्च तेभ्यो दन्ताश्चलन्ति च ।
आघट्टिता. प्रस्रवन्ति शोणित मन्दवेदना ॥१९॥
आध्मायन्ते स्रुते रक्ते मुख पूति च जायते ।
यस्मिन्नुपकुश. स स्यात् पित्तरक्तकृतो गदः ॥२०॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
भवन्ति च चला दन्ता. स वैदर्भोऽभिघातज ॥२१॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
वर्द्धन. स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥२२॥
हानव्ये पश्चिमे दन्ते महान् शोथो महारुज. ।

लालास्रावी कफकृतो विज्ञेय सोऽधिमांसक ॥२३॥
दन्तमूलगता नाड्य पञ्च ज्ञेया यथेरिता ॥२४॥
दन्तगतास्तु दालन क्रिमिदन्तको दन्तहर्षो भञ्जनक
शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति ॥२५॥
दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विता ।
दालन स इति ज्ञेय सदागतिनिमित्तज ॥२६॥
कृष्णश्छिद्री चल स्रावी ससंरम्भो महारुज ।
अनिमित्तरुजो वाताद्विज्ञेय क्रिमिदन्तक ॥२७॥
दशना शीतमुष्णञ्च सहन्ते स्पर्शन न च ।
यस्य त दन्तहर्षन्तु व्याधि विद्यात्समीरणात् ॥२८॥
वक्त्रं वक्र भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् ।
कफवातकृतो व्याधि स भञ्जनकसञ्ज्ञित ॥२९॥
शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै ।
सा दन्ताना गुणघ्नी तु विज्ञेया दन्तशर्करा ॥३०॥
दलन्ति दन्तवल्कानि यदा शर्करया सह ।
ज्ञेया कपालिका सैव दशनाना विनाशिनी ॥३१॥
योऽसृग्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषत ।
श्यावता नीलता वापि गत. स श्यावदन्तक ॥३२॥
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहत ।
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षण ॥३३॥
जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका चेति ॥३४॥

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता
भवेच्च शाकच्छदनप्रकाशा ॥३५॥

पित्तेन पीता परिदह्यते च
चिता सरक्तैरपि कण्टकैश्च।
कफेन गुर्वी बहुला चिता च
मांसोद्गमैः शाल्मलिकण्टकाभैः॥३६॥
जिह्वातले यः श्वयथुः प्रगाढः
सोऽलाससञ्ज्ञः कफरक्तमूर्त्तिः।
जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले तु जिह्वा भृशमेति पाकम्॥३७॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-
मुन्नम्य जातः कफरक्तयोनिः।
प्रसेककण्डूपरिदाहयुक्ता
प्रकथ्यतेऽसावुपजिह्विकेति॥३८॥

तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यध्रुषो मांसकच्छ-पोऽर्बुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति॥३९॥

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो
दीर्घः शोफो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत्सम्प्रदिष्टो
व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना॥४०॥
शोफः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु।
शोफः स्तब्धो लोहितस्तालुदेशे
रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥४१॥
कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा

ऽरक्तो ज्ञेय कच्छप श्लेष्मणा स्यात्।
पद्माकार तालुमध्ये तु शोफ
विद्याद्रक्तादर्बुद प्रोक्तलिङ्गम्॥४२॥
दुष्ट मास श्लेष्मणा नीरुजञ्च
ताल्वन्तस्थ मासमङ्घातमाहु।
नीरुक् स्थायी कोलमात्र कफात्स्या
न्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥४३॥
शोषोऽत्यर्थं दीर्य्यते चापि तालु
श्वासो वातात्तालुशोष सपित्तात्।
पित्त कुर्य्यात् पाकमत्यर्थघोरं
तालुन्यन तालुपाक वदन्ति॥४४॥

कण्ठगतास्तु रोहिण्य. पञ्च कण्ठशालूकमधिजिह्वो बलयो बलास एकवृन्दो वृन्द शतघ्नी गिलायुर्गलविद्रधिर्गलौघ स्वरघ्नो मासतानो विदारी चेति॥४५॥

गलेऽनिल पित्तकफौ च मूर्च्छितौ
पृथक समस्ताश्च तथैव शोणितम्।
प्रदुष्य मास गलरोधिनोऽङ्कुरान्
सृजन्ति यान् साऽसुहरा तु रोहिणी॥४६॥
जिह्वा समन्ताद् भृशवेदना ये
मासाङ्कुरा कण्ठनिरोधिन स्यु।
ता रोहिणीं वातकृता वदन्ति
वातात्मकोपद्रवगाढयुक्ताम्॥४७॥
क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तत. स्यात्।

स्रोतोनिरोधिन्यपि मन्दपाका
गुर्वी स्थिरा सा कफसम्भवा वै ॥४८॥
गम्भीरपाकाऽप्रतिवारवीर्य्या
त्रिदोषलिङ्गा त्वयसम्भवा स्यात् ।
स्फोटाचिता पित्तसमानलिङ्गा
ऽसाध्या प्रदिष्टा रुधिरात्मिकेयम् ॥४९॥
कोलास्थिमात्र कफसम्भवो यो
ग्रन्थिर्गले कण्टकशूकभूत ।
खर स्थिर शस्त्रनिपातसाध्य-
स्त कण्ठशालूकमिति ब्रुवन्ति ॥५०॥

जिह्वाग्ररूप श्वयथु कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्र ।
ज्ञेयो ऽधिजिह्व खलु रोग एष विवर्जयेदागतपाकमेनम् ॥५१
बलास एवायतमुन्नतञ्च शोफ करोत्यन्नगति निवार्य्य ।
त सर्वथैवाप्रतिवारवीर्य्य विवर्जनीयं बलय वदन्ति ॥५२॥

गले च शोफ कुरुत प्रवृद्धौ
श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिद दुस्तरमेतदाहु-
र्बलाससञ्ज्ञ निपुणा विकारम् ॥५३॥
वृत्तोन्नतो य श्वयथु: सदाह
कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च ।
नाम्नैकवृन्द परिकल्पितोऽसौ
व्याधिर्बलासक्षतजप्रसूत: ॥५४॥

समुन्नत वृत्तममन्ददाह तीव्रज्वर वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनास्रजं तम् ॥५५

वर्त्तिर्घना कण्ठनिरोधिनी या
चिताऽतिमात्रं पिशितप्ररोहैः।
नानारुजोच्छ्रायकरी त्रिदोषाज्
ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥५६॥
ग्रन्थिर्गले त्वामलकास्थिमात्रः
स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः।
संलक्ष्यते सक्तमिवाशनञ्च
स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥५७॥
सर्वं गलं व्याप्य समुत्थितो यः
शोफो रुजो यत्र वसन्ति सर्वाः।
स सर्वदोषो गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्वजस्य ॥५८॥
शोफो महानन्नजलावरोधी
तीव्रज्वरो वातगतेर्निहन्ता।
कफेन जातो रुधिरान्वितेन
गले गलौघः परिकीर्त्त्यतेऽसौ ॥५९॥
योऽतिप्रताम्यन् श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥६०॥
प्रतानवान् यः श्वयथुः सुकष्टो
गलोपरोधं कुरुते क्रमेण।
स मांसतानः कथितोऽवलम्बी
प्राणप्रणुत् सर्वकृतो विकारः ॥६१॥

सदाहतोद श्वयथु सरक्त
मन्तर्गले पूतिविशीर्णमासम ।
पित्तेन विद्याद्वदने विदारीं
पार्श्वे विशेषात स तु येन शेते ॥६२॥

सर्वसरास्तु वातपित्तकफशोणितनिमित्ता ॥६३॥

स्फोटै सतोदैर्वदन समन्ताद्
यस्याचितं सर्वसरः स वातात् ।
रक्तै. सदाहैस्तनुभि सपीतै-
र्यस्याचितं वापि स पित्तकोपात् ॥६४॥
कण्डूयुतैरल्परुजै सवर्णै-
र्यस्याचित चापि स वै कफेन ।
रक्तेन पित्तोदित एक एव
कैश्चित् प्रदिष्टो मुखपाकसंज्ञ. ॥६५॥

इति सुश्रुत आयुर्वेदशास्त्रे निदानस्थानं
समाप्तम् ।

---

# अथ शारीरस्थानम्।



## प्रथमोऽध्याय.।

अथात सर्वभूतचिन्ताशारीरं व्याख्यास्याम ।

सर्वभूताना कारणमकारणं सत्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगत सम्भवहेतुरव्यक्तं नाम। तदेकं बहूना क्षेत्रज्ञानामधिष्ठानं समुद्र इवोदकाना भावानाम् ॥१

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसो भूतादिरिति। तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्हस्तोपस्थपायुपादमनासीति। तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्मेन्द्रियाणि। उभयात्मक मन ॥२॥

भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा। शब्दतन्मात्र स्पर्शतन्मात्र रूपतन्मात्रं रसतन्मात्र गन्धतन्मात्रमिति। तेषां विशेषा: शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्य.। एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥३॥

तत्र बुद्धीन्द्रियाणां शब्दादयो विषया । कर्मेन्द्रियाणां यथासङ्ख्य वचनादानानन्दविसर्गविहरणानि। अव्यक्त महानहङ्कार. पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतय.। शेषा. षोडश

विकारा। स्व स्वश्चैषां विषयोऽधिभूतम। स्वयमध्यात्ममधिदैवतञ्च। अथ बुद्धेर्ब्रह्मा। अहङ्कारस्येश्वर। मनसश्चन्द्रमा। दिश श्रोत्रस्य। त्वचो वायु। सूर्य्यश्चक्षुषो। रसनस्याप। पृथिवी घ्राणस्य। वचसोऽग्नि। हस्तयोरिन्द्र। पादयोर्विष्णु। पायोर्मित्रम्। प्रजापतिरुपस्थस्येति। तत्र सर्व एवाचेतन एष वर्ग पुरुष पञ्चविंशतितम स च कार्य्यकारणसयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति क्षीरादींश्च हेतूनुदाहरन्ति ॥४॥

अत ऊर्द्ध्वं प्रकृतिपुरुषयो साधर्म्यवैधर्म्ये व्याख्यास्याम। तद्यथा। उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौ च सर्वगताविति। एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति। बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्मिणोऽप्रसवधर्मिणो मध्यस्थधर्मिणश्चेति ॥५॥

तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व एवैते विशेषा सत्वरजस्तमोमया भवन्ति। तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥६॥

वैद्यके तु।

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा।
परिणामञ्च मन्यन्ते प्रकृतिं पृथुदर्शिन ॥७॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्।
तैश्च तल्लक्षण कृत्स्नो भूतग्रामो व्यजायत ॥८॥

तस्योपयोगोऽभिहितश्चिकित्सा प्रति सर्वदा।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते ॥९॥

यतोऽभिहितं तत्सम्भवद्रव्यसमूहो भूतादिरुक्तः। भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः ॥१०॥

भवति चात्र।

इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥११॥

न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञा नित्याश्च। असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषव्यापकान् हेतूनुदाहरन्ति। आयुर्वेदशास्त्रेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्माधर्मनिमित्तं त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसः सन्निपातेष्वभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति। स एव कर्मपुरुषश्चिकित्साधिकृतः ॥१२॥

तस्य सुखदुःखेच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः। सात्त्विकास्तु आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च। राजसास्तु दुःखबहुलताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च। तामसास्तु विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्वमकर्मशीलता निद्रालुत्वञ्चेति। आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो

विविक्तता च। वायव्यास्तु स्पर्श स्पर्शेन्द्रिय सर्वचेष्टासमूह सर्वशरीरस्पन्दन लघुता च। तैजसास्तु रूप रूपेन्द्रिय वर्ण सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्य शौर्य्यञ्च। आप्यास्तु रसो रसनेन्द्रिय सर्वद्रवसमूहो गुरुता शैत्य स्नेहो रेतश्च। पार्थिवास्तु गन्धो गन्धेन्द्रिय सर्वमूर्त्ति समूहो गुरुता चेति। तत्र सत्वबहुलमाकाशम। रजो-बहुलो वायु। सत्वरजोबहुलोऽग्नि.। सत्वतमोबहुला आप.। तमोबहुला पृथिवीति ॥१३॥

श्लोकौ चात्र भवत'।

अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्द्दिशेत्।
स्वे स्वे द्रव्ये तु सर्वेषा व्यक्त लक्षणमिष्यते ॥१४॥
अष्टौ प्रकृतय प्रोक्ता विकारा षोडशैव तु।
क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयो ॥१५॥

---

## द्वितीयोऽध्याय।

अथात: शुक्रशोणितशुद्धिनाम शारीर'व्याख्यास्याम'।

वातपित्तश्लेष्मकुणपग्रन्थिपूतिपूयक्षीणमूत्र पुरीषरेतस: प्रजोत्पादनेन समर्था भवन्ति। तेषु वातवर्णवेदनं वातेन। पित्तवर्णवेदन पित्तेन। श्लेष्मवर्णवेदन श्लेष्मणा। शोणितवर्णवेदन कुणपगन्ध्यनल्प रक्तेन। ग्रन्थिभूत श्लेष्म-वाताभ्याम्। पूतिपूयनिभ पित्तश्लेष्मभ्याम। क्षीण प्रागुक्त पित्तमारुताभ्याम्। मूत्रपुरीषगन्धि सन्निपातेनेति। तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतस कृच्छ्रसाध्या.। मूत्रपुरीषरे-तसस्त्वसाध्या. साध्यमन्यच्चेति ॥१॥

आर्त्तवमपि त्रिभिर्दोषै शोणितचतुर्थैं पृथग्द्वन्द्वै समस्तैश्चोपसृष्टमवीज भवति। तदपि दोषवर्णवेदनादिभिर्विज्ञेयम्। तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्य साध्यमन्यद्भवति ॥२॥

भवति चात्र।

तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत्।
क्रियाविशेषैर्मतिमांस्तथाचोत्तरवस्तिभि. ॥३॥
पाययेत नर सर्पिर्भिषक् कुणपरेतसि।
धातकोपुष्पखदिरदाडिमार्जुनसाधितम ॥४॥
पाययेदथवा सर्पि शालसारादिसाधितम्।
ग्रन्थिभूते शठोसिद्ध पालाशे वापि भस्मनि ॥५॥
परूषकवटादिभ्या पूयप्रख्ये च साधितम्।
प्रागुक्त वक्ष्यते यच्च तत् कार्य्यं क्षीणरेतसि ॥६॥
विट्प्रभे पाययेत् सिद्ध चित्रकोशीरहिङ्गुभि।
स्निग्ध वान्त विरिक्तञ्च निरूढमनुवासितम् ॥७॥
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना।
विधिमुत्तरवस्त्यन्त कुर्य्यादार्त्तवशुद्धये ॥८॥
स्त्रीणां स्नेहादियुक्ताना चतसृष्वार्त्तवार्त्तिषु।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥९॥
ग्रन्थिभूते पिबेत् पाठा त्र्यूषण वृक्षकाणि च।
दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ॥१०॥
पिबेद्भद्रश्रिय क्वाथञ्चन्दनक्वाथमेव च।
शुक्रदोषहराणाञ्च यथास्वमवचारणम ॥११॥
दोषाणा शुद्धिकरण शेषास्वप्यार्त्तवार्त्तिषु।

अन्न शालियव मद्य हितं मांसञ्च पित्तलम् ॥१२॥
स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ।
शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभं तथा ॥१३॥
शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम् ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥१४॥
तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि ।
असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात् ॥१५॥
असृग्दरो भवेत् सर्वं साङ्गमर्दं सवेदनः ।
तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा तमस्तृषा ॥१६॥
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ।
तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक् ॥१७॥
रक्तपित्तविधानेन यथावत्समुपाचरेत् ।
दोषैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः ॥१८॥
तत्र मत्स्यकुलत्थाम्लतिलमाषसुरा हिताः ।
पाने मूत्रमुदश्विच्च दधि शुक्तञ्च भोजने ॥१९॥
क्षीणं प्रागीरितं रक्तं सलक्षणचिकित्सितम् ।
तथाप्यत्र विधातव्यं विधानं नष्टरक्तवत् ॥२०॥

एवमदुष्टशुक्रः शुद्धार्त्तवा । ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत् । किङ्कारणम् । दिवा स्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनाद्विकृतदृष्टिः स्नानानुलेपनाद्दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखापकर्त्तनात् कुनखी प्रधावनाच्चञ्चलो हसनाच्छ्यावदन्तौष्ठतालुजिह्वः प्रलापी चातिकथना-

इतिशब्दश्रवणाद् बधिरोऽवलेखनात् खलतिर्मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् । दर्भसंस्तरशायिनी करतलशरावपर्णान्यतमभोजिनी हविष्यं त्र्यहञ्च भर्त्तुः संरक्षेत् । ततः शुद्धस्नाता चतुर्थेऽहन्यहतवाससमलङ्कृता कृतमङ्गलस्वस्तिवाचना भर्त्तारं दर्शयेत् । तत् कस्य हेतोः ॥२१॥

पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः ॥२२॥
ततो विधानं पुत्रीयमुपाध्यायः समाचरेत् ।
कर्मान्ते च क्रमं ह्येनमारभेत विचक्षणः ॥२३॥

ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिरभिविश्वास्य विकल्प्यैवञ्चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्यां चोपेयादिति पुत्रकामः ॥२४॥

एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च ।
प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै ॥२५॥

अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः । त्रयोदशीप्रभृतयो निन्द्याः ॥२६॥

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति । चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति । न च प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति । यथा

नद्या प्रतिस्रोत प्लावि द्रव्य' प्रक्षिप्त' प्रतिनिवर्त्तते नोर्द्ध' ग-
च्छति तद्वदेव द्रष्टव्यम्। तस्मान्नियमवतीं त्रिरात्रं परि-
हरेत्। अत' पर मासादुपेयात् ॥२७॥

लब्धगर्भायाश्चैतेष्वह'सु लक्षणावटशुङ्गासहदेवाविश्वदे-
वानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून् दद्यात्।
दक्षिणे नासापुटे पुत्रकामायै न च तान्निष्ठीवेत् ॥२८॥

ध्रुवञ्चतुर्णा सान्निध्याद्गर्भ स्याद्विधिपूर्वकः।
ऋतुक्षेत्राम्बुवीजाना सामग्र्यादङ्कुरो यथा ॥२९॥
एवं जाता रूपवन्तो महासत्त्वाश्चिरायुष।
भवन्त्यृणस्य मोक्षार सत्पुत्रा पुत्रिणे हिता ॥३०॥

तत्र तेजोधातु सर्ववर्णानां प्रभव स यदा गर्भोत्पत्ता-
वब्धातुप्रायो भवति तदा गर्भ गौर करोति पृथिवीधातु-
प्रायः कृष्ण पृथिव्याकाशधातुप्राय कृष्णश्याम तोयाकाश-
धातुप्रायो गौरश्यामम्। यादृग्वर्णमाहारमुपसेवते गर्भिणी
तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते। तत्र दृष्टिभागमप्रति-
पन्न' तेजो जात्यन्ध करोति। तदेव रक्तानुगत रक्ताक्षं
पित्तानुगत पिङ्गाक्ष श्लेष्मानुगत शुक्लाक्ष वातानुगत विकृ-
ताक्षमिति ॥३१॥

भवन्ति चात्र।

घृतपिण्डो यथैवाग्निमाश्रित प्रविलीयते।
विसर्पत्यार्त्तव नार्य्यास्तथा पु सा समागमे ॥३२॥
वीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ।
यमावित्यभिधीयेते धर्मेतरपुर सरौ ॥३३॥
पित्रोरत्यल्पवीजत्वादासेक्य पुरुषो भवेत्।

स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥३४॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः।
स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥३५॥
स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते।
कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम् ॥३६॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते।
ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम् ॥३७॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते।
ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः ॥३८॥
ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि।
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥३९॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा।
सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः ॥४०॥
अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः।
हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥४१॥
आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥४२॥
यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥४३॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत्।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥४४॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥४५॥
सर्पवृश्चिककुष्माण्डविकृताकृतयश्च ये।

गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम् ॥४६॥
गर्भो वातप्रकोपेण दौहृदे चावमानिते।
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिण एव च ॥४७॥
मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः।
वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात् ॥४८॥
मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च।
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि ॥४९॥
जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते।
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥५०॥
निःश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति।
मातुर्निःश्वसितोच्छ्वाससङ्क्षोभस्वप्नसम्भवान् ॥५१॥
सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ।
तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः ॥५२॥
भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्वभूयिष्ठाः पूर्वजातिस्मरा नराः ॥५३॥
कर्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान् ॥५४॥

---

## तृतीयोऽध्यायः।

अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्यामः।

सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात्परस्परानुग्रहात्परस्परानुप्रवेशाच्च ॥१॥

तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति।

ततस्तेजोऽनिलसन्निपाताच्छुक्र च्युत योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन। ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुष स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभि पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते ॥२॥

तत्र शुक्रबाहुल्यात् पुमानार्त्तवबाहुल्यात् स्त्री साम्यादुभयोर्नपुंसकमिति। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तव। अदृष्टार्त्तवाप्यस्तीत्येके भाषन्ते ॥३॥

भवन्ति चात्र।

पीनप्रसन्नवदना प्रक्लिन्नात्ममुखद्विजाम्।
नरकामा प्रियकथा स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥४॥
स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम्।
हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति ॥५॥
नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा।
ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा ॥६॥
मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत् ॥७॥
तद्वर्षाद्द्वादशात् काले वर्त्तमानमसृक् पुनः।
जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ॥८॥
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला।

पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रिय व्रजेत् ॥८॥

तत्र सद्योगृहीतगर्भाया लिङ्गानि श्रमो ग्लानि पिपासा सक्थि सदन शुक्रशोणितयोरवबन्ध स्फुरणञ्च योनेः ॥९॥

स्तनयो कृष्णमुखता रोमराज्युद्गमस्तथा।
अक्षिपक्ष्माणि चाप्यस्या संमील्यन्ते विशेषत' ॥१०॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात्।
प्रसेक सदनञ्चापि गर्भिण्या लिङ्गमुच्यते ॥११॥

तदा प्रभृत्येव व्यायाम व्यवायमपतर्पणमतिकर्षणं दिवास्वप्न रात्रिजागरण शोक यानावरोहण भयमुत्कुट-कासन चैकान्तत स्नेहादिक्रिया शोणितमोक्षणं चाकाले वेगविधारणञ्च न सेवेत ॥१२॥

दोषाभिघातैर्गर्भिण्या यो यो भाग प्रपीड्यते।
स स भाग. शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥१३॥

तत्र प्रथमे मासि कलल जायते। द्वितीये शीतोष्मा-निलैरभिप्रपच्यमानाना महाभूताना सङ्घातो घन सञ्जा-यते। यदि पिण्ड पुमान् स्त्री चेत्पेशी नपुंसकश्चेदर्बुद-मिति। तृतीये हस्तपादशिरसा पञ्च पिण्डका निर्वर्त्त-न्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति। चतुर्थे सर्वाङ्गप्रत्य-ङ्गविभाग प्रव्यक्ततरो भवति गर्भहृदयप्रव्यक्तभावाच्चेतना-धातुरभिव्यक्तो भवति कस्मात् तत्स्थानत्वात्तस्माद् गर्भ-श्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति द्विहृदयाच्च नारी दौहृदिनीमाचक्षते। दौहृदविमाननात् कुब्ज कुणि खञ्जं जडं वामनं विकृताक्षमनक्ष वा नारी सुत जनयति।

तस्मात् सा यद्यदिच्छेत् तत्तस्यै दापयेत्। लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति ॥१४॥

भवन्ति चात्र।

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी।
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥१५॥
सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम्।
अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥१६॥
येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना।
प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥१७॥
राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः।
अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥१८॥
दुकूलपट्टकौशेयभूषणादिषु दौहृदात्।
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥१९॥
आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते।
देवताप्रतिमायान्तु प्रसूते पार्षदोपमम्।
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ॥२०॥
गोधामांसाऽशने पुत्रं सुषुप्सुं धारणात्मकम्।
गवां मांसे च बलिनं सर्व्वक्लेशसहन्तथा ॥२१॥
माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतम्।
वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम् ॥२२॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम्।
सृमराद्विग्नमनसं नित्यभीतं च तैत्तिरात् ॥२३॥
अतोऽनुक्तेषु या नारी समभिध्याति दौहृदम्।
शरीराचारशीलैः सा समानं जनयिष्यति ॥२४॥

कर्मणा चोदितं जन्तोर्भवितव्य पुनर्भवेत्।
यथा तथा दैवयोगाद्दौहृद जनयेद्धृदि ॥२५॥

पञ्चमे मन प्रतिबुद्धतर भवति। षष्ठे बुद्धि। सप्तमे सर्वाङ्गप्रत्यङ्गविभाग प्रव्यक्ततर। अष्टमेऽस्थिरी भवत्योजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च ततो बलि मांसौदनमस्मै दापयेत्। नवमदशमैकादशद्वादशानामन्यतमञ्जायते। अतोऽन्यथा विकारी भवति ॥२६॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा सास्य मातुराहाररसवीर्य्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति।२७॥

गर्भस्य हि सम्भवत पूर्व शिर सम्भवतीत्याह शौनक. शिरो मूलत्वाद्देहेन्द्रियाणाम। हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात्। नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिन। पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य। मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्वगात्रसम्भवस्य। तत तु न सम्यक्। सर्वाङ्गप्रत्यङ्गानि सम्भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च। तद्यथा। चूतफले परिपक्वे केशरमांसास्थिमज्जान पृथग् दृश्यन्ते। कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां काल प्रव्यक्तता करोति। एतेनैव वंशाङ्कुरोऽपि व्याख्यात.। एव गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि

सौक्ष्म्यादनुपलब्धि । तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥२८॥

तत्र गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीरलक्षणानि व्याख्याम । गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेत प्रभृतीनि स्थिराणि पितृजानि । मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि । शरीरोपचयो बल वर्ण. स्थितिर्हानिश्च रसजानि । इन्द्रियाणि ज्ञान विज्ञानमायु सुखदु खादिकञ्चात्मजानि। सत्त्वजान्युत्तर व्याख्याम । वीर्य्यमारोग्य बलवर्णौ मेधा च सात्म्यजानि ॥२९॥

तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शन भवति दक्षिणाक्षिमहत्त्वञ्च पूर्वञ्च दक्षिण सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति ता ब्रूयात् पुत्रमियं जनयिष्यतीति तद्विपर्य्यये कन्याम् । यस्या पार्श्वद्वयमुन्नत पुरस्तान्निर्गतमुदर प्रागभिहितलक्षणं च तस्या नपुसकमिति विद्यात् । यस्या मध्ये निम्न द्रोणाप्रभूतमुदर सा युग्म प्रसूयत इति ॥३०॥

भवन्ति चात्र ।

देवता ब्राह्मणपरा शौचाचारहिते रता ।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान् ॥३१॥
अङ्गप्रत्यङ्गनिर्वृत्ति स्वभावादेव जायते ।
अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणा ।
ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजा. ॥३२॥

चतुर्थोऽध्यायः।

अथातो गर्भव्याकरणं नाम शारीरं व्याख्यास्यामः।

अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ॥१॥

तस्य खल्वेवम्प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमाऽवभासिनी नाम या सर्ववर्णानवभासयति पञ्चविधाञ्च छायां प्रकाशयति सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना। द्वितीया लोहिता नाम षोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना। तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्मदलाजगल्लीमशकाधिष्ठाना। चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना। पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना। षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुदश्लीपद-गलगण्डाधिष्ठाना। सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना। यदेतत् प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटे सूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येदिति। कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्यादाः ॥२॥

भवतश्चात्र।

यथा हि सारः काष्ठेषु छिद्यमानेषु दृश्यते।
तथा धातुर्हि मांसेषु छिद्यमानेषु दृश्यते ॥३॥
स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः ॥४॥

तासां प्रथमा मांसधरा नाम । यस्यां मांसे सिरास्ना-
युधमनीस्रोतसां प्रताना भवन्ति ॥५॥

भवति चात्र ।

यथा विसमृणालानि विवर्द्धन्ते समन्ततः ।
भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः ॥६॥

द्वितीया रक्तधरा नाम । मांसस्याभ्यन्तरतस्तस्यां शोणितं
विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति ॥७॥

भवति चात्र ।

वृक्षाद्यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत् ।
मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते ॥८॥

तृतीया मेदोधरा नाम । मेदो हि सर्वभूतानामुदरस्थ-
मण्वस्थिषु च, महत्सु च मज्जा भवति ॥९॥

भवति चात्र ।

स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः ।
अथेतरेषु सर्वेषु सरक्तं मेद उच्यते ।
शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता ॥१०॥

चतुर्थी श्लेष्मधरा नाम । सर्वसन्धिषु प्राणभृतां भवति
॥११॥　　　　भवति चात्र ।

स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते ।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥१२॥

पञ्चमी पुरीषधरा नाम । यान्तःकोष्ठे मलमभिविभ-
जते पक्वाशयस्था ॥१३॥

भवति चात्र ।

यकृत्समन्तात् कोष्ठञ्च तथान्त्राणि समाश्रिता ।

उण्डुकस्थ विभजते मल मलधरा कला ॥१४॥

षष्ठी पित्तधरा नाम । या चतुर्विधमन्नपानमुपयुक्तमा-
माशयात् प्रच्युत पक्काशयोपस्थित धारयति ॥१५॥

भवति चात्र ।

आशित खादित पीत लीढ कोष्ठगतं नृणाम ।
तज्जीर्य्यति यथाकाल शोषित पित्ततेजसा ॥१६॥

सप्तमी शुक्रधरा नाम । या सर्वप्राणिना सर्वशरीर-
व्यापिनी ॥१७॥

भवन्ति चात्र ।

यथा पयसि सर्पिस्तु गूढश्चेक्षो रसो यथा ।
शरीरेषु तथा शुक्र नृणा विद्याद्भिषग्वर ॥१८॥
द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यध ।
मूत्रस्रोत.पथा च्छुक्र पुरुषस्य प्रवर्त्तते ॥१९॥
कृत्स्नदेहाश्रित शुक्र प्रसन्नमनसस्तथा ।
स्त्रीषु व्यायच्छतश्चापि हर्षात् तत् सम्प्रवर्त्तते ॥२०॥

गृहीतगर्भाणामार्त्तववहाना स्रोतसा वर्त्मान्यवरुध्यन्ते
गर्भेण तस्मादगृहीतगर्भाणामार्त्तव न दृश्यते। ततस्तदध.
प्रतिहतमूर्द्धमागतमपरञ्चोप-चीयमानमपरेत्यभिधीयते।
शेषञ्चोर्द्धतरमागतं पयोधरावभिप्रतिपद्यते तस्माद्गर्भिण्य.
पीनोन्नतपयोधरा भवन्ति ॥२१॥

गर्भस्य यकृत्प्लीहानौ शोणितजौ। शोणितफेनप्रभव.
फुप्फुस शोणितकिट्टप्रभव उण्डुक. ॥२२॥

असृज श्लेष्मणश्चापि य प्रसाद. परो मत. ।
त पच्यमान पित्तेन वायुश्चाप्यनुधावति ॥२३॥

ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः ।
उदरे पच्यमानानामाध्मानादुक्मसारवत् ॥२४॥
कफशोणितमांसानां सारो जिह्वा प्रजायते ।
यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत् ॥२५॥
अनुप्रविश्य पिशितं पेशीर्विभजते तथा ।
मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात् ॥२६॥
सिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः ।
आशय्याऽभ्यासयोगेन करोत्याशयसम्भवम् ॥२७॥

रक्तमेदःप्रसादाद्वृक्कौ मांसासृक्कफमेदःप्रसादाद्वृषणौ शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः । तस्याधोवामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च ॥२८॥

तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्वप्राणिनः स्वपन्ति ॥२९॥

भवति चात्र ।

पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकशति स्वपतश्च निमीलति ॥३०॥

निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति । सा स्वभावत एव सर्वप्राणिनोऽभिस्पृशति ॥३१॥

तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा सम्भवत्यनवबोधिनी सा प्रलयकाले । तमोभूयिष्ठानामहःसु निशासु च भवति । रजोभूयिष्ठानामनिमित्तम् । सत्वभूयिष्ठानामर्द्धरात्रे । क्षीण-

श्लेष्माणामनिलबहुलानां मन:शरीराभितापबलाच्च नैव सा वैकारिकी भवति ॥३२॥

भवन्ति चात्र ।

हृदयञ्चेतनास्थानमुक्तं सुश्रुत ! देहिनाम् ।
तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम् ॥३३॥
निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते ।
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्त्यते ॥३४॥
पूर्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः ।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् ॥३५॥
करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते ।
अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥३६॥

सर्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात् । प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवास्वपनमप्रतिषिद्धम् । रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः । विकृतिर्हि दिवास्वप्नो नाम । तत्र स्वपतामधर्मः सर्वदोषप्रकोपश्च । तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकज्वराग्निदौर्बल्यानि भवन्ति । रात्रावपि जागरितवतां वातपित्तनिमित्तास्त एवोपद्रवाः भवन्ति ॥३७॥

भवन्ति चात्र ।

तस्मान्न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्जयेत् ।
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितञ्चरेत् ॥३८॥

अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः ।
नातिस्थूलकृशः श्रीमान्नरो जीवेत समाः शतम् ॥३९॥
निद्रा सात्मीकृता यैस्तु रात्रौ च यदि वा दिवा ।
न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥४०॥
निद्रानाशोऽनिलात्पित्तान्मनस्तापात् क्षयादपि ।
सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥४१॥
निद्रानाशेऽभ्यङ्गयोगो मूर्ध्नि तैलनिषेवणम् ।
गात्रस्योद्वर्त्तनञ्चैव हितं संवाहनानि च ॥४२॥
शालिगोधूमपिष्टान्नभक्ष्यैरैक्षवसंस्कृतैः ।
भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः ॥४३॥
रसैर्विलेशयानाञ्च विष्किराणां तथैव च ।
द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि ॥४४॥
शयनासनयानानि मनोज्ञानि मृदूनि च ।
निद्रानाशे तु कुर्वीत तथान्यान्यपि बुद्धिमान् ॥४५॥
वमनं निद्रातियोगे तु कुर्य्यात् संशोधनानि च ।
लङ्घनं रक्तमोक्षञ्च मनोव्याकुलनानि च ॥४६॥
कफमेदोविषार्त्तानां रात्रौ जागरणं हितम् ।
दिवास्वप्नश्च तट्शूलहिक्काऽजीर्णातिसारिणाम् ॥४७॥
इन्द्रियार्थेष्वसम्प्राप्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥४८॥
पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः ।
यः मुञ्चति सनेत्रास्रं स जृम्भ इति सञ्ज्ञितः ॥४९॥
योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥५०॥

सुखस्पर्शप्रसक्तित्वं दुःखद्वेषणलोलता ।
शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥५१॥
उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् ।
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥५२॥
वक्त्रं मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ।
न चान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥५३॥
आर्द्रचर्मावनद्धं हि यो गात्रमभिमन्यते ।
तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ॥५४॥
मूर्च्छां पित्ततमःप्राया रजःपित्तानिलाद् भ्रमः ।
तमोवातकफात् तन्द्रा निद्रा श्लेष्मतमोभवा ॥५५॥
गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धिर्भवति ॥५६॥

भवन्ति चात्र ।

तस्यान्तरेण नाभिस्तु ज्योतिःस्थानं ध्रुवं स्मृतम् ।
तदाधमति वातस्तु देहस्तेनास्य वर्द्धते ॥५७॥
ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः ।
ऊर्द्ध्वं तिर्य्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥५८॥
दृष्टिश्च रोमकूपाश्च न वर्द्धन्ते कदाचन ।
ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥५९॥
शरीरे क्षीयमाणेऽपि वर्द्धेते द्वाविमौ सदा ।
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥६०॥
सप्त प्रकृतयो भवन्ति । दोषैः पृथक् द्विशः समस्तैश्च ॥६१॥
शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ।

प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥६२॥

तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मात्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति ॥६३॥

अधृतिरदृढसौहृदः कृतघ्नः
कृशपरुषो धमनीततः प्रलापी।
द्रुतगतिरटनोऽनवस्थितात्मा
वियदपि गच्छति सम्भ्रमेण सुप्तः ॥६४॥

अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः।
किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥६५॥

वातिकाश्चाजगोमायुशशाखूष्ट्रशुनां तथा।
गृध्रकाकखरादीनामनूकैः कीर्त्तिता नराः ॥६६॥

स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलमध्यमायुश्च भवति ॥६७॥

मेधावी निपुणमतिर्विगृह्य वक्ता
तेजस्वी समितिषु दुर्निवारवीर्य्यः।
सुप्तः सन् कनकपलाशकर्णिकारान्
सम्पश्येदपि च हुताशविद्युदुल्काः ॥६८॥

न भयात् प्रणमेदनतेष्वमृदुः
प्रणतेष्वपि सान्त्वनदानरुचिः।
भवतीह सदा व्यथितास्यगतिः
स भवेदिह पित्तकृतप्रकृतिः ॥६९॥

भुजङ्गोलूकगन्धर्वयक्षमार्जारवानरैः।
व्याघ्रर्चनकुलानूकैः पैत्तिकास्तु नराः स्मृताः ॥७०॥

दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढवैरश्च भवति ॥७१॥

शुक्लाक्षः स्थिरकुटिलातिनीलकेशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः।
सुप्तः सन् सकलहंसचक्रवाकान्
सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥७२॥

रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः।
क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥७३॥

दृढशास्त्रमतिः स्थिरमित्रधनः
परिगण्य चिरात् प्रददाति बहु।
परिनिश्चितवाक्यपदः सततं
गुरुमानकरश्च भवेत् स सदा ॥७४॥

ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः।
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः ॥७५॥
द्वयोर्वा तिसृणां वापि प्रकृतीनान्तु लक्षणैः।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत् ॥७६॥
प्रकोपो वाऽन्यथाभावः क्षयो वा नोपजायते।
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥७७॥
विषजातो यथा कीटो न विषेण विपद्यते।
तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥७८॥
प्रकृतिमिह नराणां भौतिकीं केचिदाहुः

पवनदहनतोये कीर्त्तितास्तासु तिस्रः।
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्
शुचिरथ चिरजीवी नाभसः खैर्महद्भिः॥७९॥
शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम्।
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम्॥८०॥
माहात्म्यं शौर्य्यमाज्ञा च सततं शास्त्रबुद्धिता।
भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणम्॥८१॥
शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता।
प्रियवादित्वमित्येतद्वारुणं कायलक्षणम्॥८२॥
मध्यस्थता सहिष्णुत्वमर्थस्यागमसञ्चयौ।
महाप्रसवशक्तित्वं कौवेरं कायलक्षणम्॥८३॥
गन्धमाल्यप्रियत्वञ्च नृत्यवादित्रकामिता।
विहारशीलता चैव गान्धर्वं कायलक्षणम्॥८४॥
प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमान् शुचिः।
रागमोहभयद्वेषैर्वर्जितो याम्यसत्त्ववान्॥८५॥
जपव्रतब्रह्मचर्य्यहोमाध्ययनसेविनम्।
ज्ञानविज्ञानसम्पन्नमृषिसत्त्वं नरं विदुः॥८६॥
सप्तैते सात्त्विकाः काया राजसास्तु निबोध मे॥८७॥
ऐश्वर्य्यवन्तं रौद्रञ्च शूरं चण्डमसूयकम्।
एकाशिनं चौदरिकमासुरं सत्त्वमीदृशम्॥८८॥
तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा।
विहाराचारचपलं सर्पसत्त्वं विदुर्नरम्॥८९॥
प्रवृद्धकामसेवी चाप्यजस्राहार एव च।
अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम्॥९०॥

एकान्तग्राहिता रौद्रमसूया धर्मबाह्यता ।
भृशमात्र तमश्चापि राक्षस कायलक्षणम् ॥९१॥
उच्छिष्टाहारता तैक्ष्ण्य साहसप्रियता तथा ।
स्त्रीलोलुपत्व नैर्लज्ज्य पैशाच कायलक्षणम ।९२॥
असविभागमलस दु खशीलमसूयकम् ।
लोलुपञ्चाप्यदातार प्रेतसत्व विदुर्नरम् ॥९३॥
षडेते राजसा कायास्तामसास्तु निबोध मे ॥९४॥
दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ।
निराकरिष्णुता चैव विज्ञेया पाशवा गुणा ।९५॥
अनवस्थितता मौर्ख्यं भीरुत्व सलिलार्थिता ।
परस्पराभिमर्दश्च मत्स्यसत्वस्य लक्षणम् ॥९६॥
एकस्थानरतिर्नित्यमाहारे केवले रत ।
वानस्पत्यो नर सत्त्वधर्मकामार्थवर्जित ।९७॥
इत्येते त्रिविधा काया प्रोक्ता वै तामसास्तथा ।
कायाना प्रकृतीर्ज्ञात्वा त्वनुरूपा क्रिया चरेत् ॥९८॥
महाप्रकृतयस्त्वेता रज सत्वतम कृता ।
प्रोक्ता लक्षणत. सम्यग्भिषक् ताश्च विभावयेत् ।९९॥

---

पञ्चमोऽध्याय. ।

अथात. शरीरसख्याव्याकरण शारीर व्याख्यास्याम ।

शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसमूर्च्छितं गर्भ इत्युच्यते। तच्च चेतनावस्थितं वायुर्विभजति। तेज एन पचति। आप क्लेदयन्ति। पृथिवी सहन्त्याकाश विवर्द्धयति। एवं विवर्द्धित. स यदा हस्तपादजिह्वाघ्राण-

कर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति सञ्ज्ञां लभते। तच्च षडङ्ग शाखाश्चतस्रो मध्य पञ्चम षष्ठ शिर इति ॥१॥

अत. पर प्रत्यङ्गानि वक्ष्यन्ते। मस्तकोदरपृष्ठनाभिललाटनासाचिबुकवस्तिग्रीवा इत्येता एकैका। कर्णनेत्रनासाभ्रूशङ्खासगण्डकक्षस्तनवृषणपार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे। विंशतिरङ्गुलय। स्रोतांसि च वक्ष्यमाणानि। एष प्रत्यङ्गविभाग उक्त ॥२॥

तस्य पुन सङ्ख्यानम्। त्वच कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जव: सेवन्य' सङ्घाता. सीमन्ता अस्थीनि सन्धय स्नायव. पेश्यो मर्माणि सिरा धमन्यो योगवहानि स्रोतांसि च ॥३॥

त्वच सप्त। कला' सप्त। आशया' सप्त। धातव: सप्त। सप्त सिराशतानि। पञ्च पेशीशतानि। नव स्नायुशतानि। त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धिशते। सप्तोत्तर मर्मशतम्। चतुर्विंशतिर्धमन्य। त्रयो दोषास्त्रयो मला.। नव स्रोतांसीति समास. ॥४॥

विस्तारोऽत ऊर्ध्वम्। त्वचोऽभिहिता कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदय वृक्कौ च ॥५॥

आशयास्तु वाताशय' पित्ताशय श्लेष्माशयो रक्ताशय. आमाशय. पक्वाशयो मूत्राशय स्त्रीणा गर्भाशयोऽष्टम इति ॥६॥

र. ऐतिह्यामान्यन्त्राणि पु सा स्त्रीणामर्द्धव्याममहीनानि।

श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां वहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहञ्च ॥७॥

षोडश कण्डरा । तासाञ्चतस्रः पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु । तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहाः । ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां मेढ्रं श्रोणिपृष्ठनिबन्धनीनामधोभागगतानां विम्बः । मूर्द्धोरुवक्षोऽक्षिपिण्डादीनाञ्च ॥८॥

मांससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि । तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति तैर्गवाक्षितमिदं शरीरम् ॥९॥

षट् कूर्च्चास्ते हस्तपादग्रीवामेढ्रेषु । हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोरेकैकः ॥१०॥

महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे वाह्ये आभ्यन्तरे च द्वे ॥११॥

सप्त सेवन्यः । शिरसि विभक्ताः पञ्च जिह्वाशेफसोरेकैका ताः परिहर्त्तव्या शस्त्रेण ॥१२॥

चतुर्दशास्थ्नां सङ्घाताः । तेषां त्रयो गुल्फजानुवङ्क्षणेषु । एतेनेतरसक्थि बाहू च व्याख्यातौ । त्रिकशिरसोरेकैकः ॥१३॥

चतुर्दशैव सीमन्ताः । ते चास्थिसंघातवद्गणनीया यतस्तैर्युक्ता अस्थिसङ्घाताः । ये प्रोक्ताः सङ्घातास्तु खल्वष्टादशैकेषाम् ॥१४॥

त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते । शल्यतन्त्रे तु त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु । सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरोरःसु । ग्रीवां प्रत्यूर्द्ध्वं त्रिषष्टिः । एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते ॥१५॥

एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश । तलकूर्च्चगुल्फसंश्रितानि दश । पार्ष्ण्यामेकम् । जङ्घायां द्वे । जानुन्येकम् । एकमूराविति । त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ । श्रोण्यां पञ्च तेषां गुदभगनितम्बेषु चत्वारि । त्रिकसंश्रितमेकम् । पार्श्वे षट्त्रिंशदेवमेकस्मिन् द्वितीयेऽप्येवम् । पृष्ठे त्रिंशत् । अष्टावुरसि । द्वे अक्षकसंज्ञे ग्रीवायां नवकम् । कण्ठनाड्यां चत्वारि । द्वे हन्वोः । दन्ता द्वात्रिंशत् । नासायां त्रीणि । एकं तालुनि । गण्डकर्णशङ्खेष्वेकैकम् । षट् शिरसि ॥१६॥

एतानि पञ्चविधानि भवन्ति । तद्यथा । कपालरुचकतरुणवलयनलकसंज्ञानि । तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि । दशनास्तु रुचकानि घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि । पाणिपादपार्श्वपृष्ठोदरोरःसु वलयानि । शेषाणि नलकसंज्ञानि ॥१७॥

भवन्ति चात्र ।

अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥१८॥

तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम् ॥१९॥
मांसान्यत्र निबद्धानि सिराभिः स्नायुभिस्तथा ।
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥२०॥
सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च ।
शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः ।
शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥२१॥

सङ्ख्यातस्तु दशोत्तरे द्वे शते तेषां शाखास्वष्टषष्टिरेकोनषष्टिः कोष्ठे ग्रीवां प्रत्यूर्द्ध त्र्यशीतिः । एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे ते चतुर्दश । जानुगुल्फवङ्क्षणेष्वेकैक । एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ । त्रयः कटीकपालेषु । चतुर्विंशतिः पृष्ठवंशे । तावन्त एव पार्श्वयोः । उरस्यष्टौ । तावन्त एव ग्रीवायाम् । त्रयः कण्ठे । नाडीषु हृदयक्लोमनिबद्धास्वष्टादश । दन्तपरिमाणा दन्तमूलेषु एकः । काकलके नासायाञ्च । द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ । गण्डकर्णशङ्खेष्वेकैकः । द्वौ हनुसन्धी । द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च । पञ्च शिरःकपालेषु । एको मूर्ध्नि ॥२२॥

त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः । कक्षावङ्क्षणदशनेषूदूखलाः । अंसपीठगुदभगनितम्बेषु सामुद्गाः । ग्रीवापृष्ठवंशयोः प्रतराः । शिरःकटीकपालेषु तुन्नसेवनी । हन्वोरुभयतस्तु वायसतुण्डाः । कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः ।

श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ता। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥२३॥

अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः।
पेशीस्नायुसिराणान्तु सन्धिसङ्ख्या न विद्यते ॥२४॥

नव स्नायुशतानि तासां शाखासु षट्शतानि। द्वे शते त्रिंशच्च कोष्ठे। ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः। एकैकस्यान्तु पादाङ्गुल्यां षट्‌निचितास्तास्त्रिंशत्। तावत्य एव तलकूर्चगुल्फेषु। तावत्य एव जङ्घायाम्। दश जानुनि। चत्वारिंशदूरौ। दश वङ्क्षणे। शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। षष्टिः कट्याम्। अशीतिः पृष्ठे। पार्श्वयोः षष्टिः। उरसि त्रिंशत्। षट्‌त्रिंशद्‌ ग्रीवायाम। मूर्द्ध्नि चतुस्त्रिंशत्। एवं नव स्नायुशतानि व्याख्यातानि ॥२५॥

भवन्ति चात्र।

स्नायुश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्वश्च शुषिरास्तथा ॥२६॥
प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह ॥२७॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥२८॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥२९॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥३०॥

न ह्यस्थीनि न वा पेश्यो न सिरा न च सन्धयः ।
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ॥२१॥
यः स्नायूः प्रविजानाति वाह्याश्चाभ्यन्तरास्तथा ।
स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहिनाम् ॥२२॥

पञ्च पेशीशतानि भवन्ति। तासां चत्वारि शतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवां प्रत्यूर्द्धं चतुस्त्रिंशत् ॥२३॥

एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश। दश प्रपदे। पादोपरि कूर्चसन्निविष्टास्तावत्य एव। दश गुल्फतलयोः। गुल्फजान्वन्तरे विंशतिः। पञ्च जानुनि। विंशतिरूरौ। दश वङ्क्षणे। शतमेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। तिस्रः पायौ। एका मेढ्रे। सेवन्यां चापरा। द्वे वृषणयोः। स्फिचोः पञ्च पञ्च। द्वे वस्तिशिरसि। पञ्चोदरे। नाभ्यामेका। पृष्ठोर्द्धसन्निविष्टाः पञ्च पञ्च दीर्घाः। षट् पार्श्वयोः। दश वक्षसि। अक्षकांसौ प्रति समन्तात् सप्त। द्वे हृदयामाशययोः। षट् यकृत्प्लीहोण्डुकेषु। ग्रीवायाञ्चतस्रः। अष्टौ हन्वोः। एकैका काकलकगलयोः। द्वे तालुनि। एका जिह्वायाम्। ओष्ठयोर्द्वे। घोणायां द्वे। द्वे नेत्रयोः। गण्डयोश्चतस्रः। कर्णयोर्द्वे। चतस्रो ललाटे। एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥२४॥

सिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम् ।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥२५॥

स्त्रीणान्तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धिः। अपत्यपथे

चतस्रस्तासां प्रसूतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे। गर्भच्छिद्रसंश्रितास्तिस्र । शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव । पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति ॥३६॥

तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावा. सन्ध्यस्थिसिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥३७॥

भवति चात्र ।

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः ।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥३८॥

मर्मसिराधमनीस्रोतसामन्यत्र प्रविभाग. ॥३९॥

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥४०॥

यथा रोहितमत्स्यस्य मुखं भवति रूपत ।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधा' ॥४१॥

आभुग्नोऽभिमुख शेते गर्भो गर्भाशये स्त्रियाः ।
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥४२॥

त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चय. ।
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥४३॥

तस्मान्नि संशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता ।
शोधयित्वा मृतं सम्यग् द्रष्टव्योऽङ्गविनिश्चय ॥४४॥

प्रत्यक्षतो हि यद् दृष्टं शास्त्रदृष्टञ्च यद्भवेत् ।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥४५॥

तस्मात्समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं नि'सृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं

पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत् सम्यकप्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरबालवेणुवल्कलकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥४६॥

श्लोकौ चात्र भवतः।

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥४७॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥४८॥

---

## षष्ठोऽध्यायः।

अथातः प्रत्येकमर्म्मनिर्देशं शारीरं व्याख्यास्यामः।

सप्तोत्तरं मर्म्मशतम्। तानि मर्म्माणि पञ्चात्मकानि। तद्यथा। मांसमर्म्माणि। सिरामर्म्माणि। स्नायुमर्म्माणि। अस्थिमर्म्माणि। सन्धिमर्म्माणि चेति ॥१॥

न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते ॥२॥

तत्रैकादश मांसमर्म्माणि। एकचत्वारिंशत् सिरामर्म्माणि। सप्तविंशति स्नायुमर्म्माणि। अष्टावस्थिमर्म्माणि। विंशतिः सन्धिमर्म्माणि। तदेतत् सप्तोत्तरं मर्म्मशतम् ॥३॥

तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। उदरोरसोर्द्वादश। चतुर्द्दश पृष्ठे। ग्रीवां प्रत्यूर्द्धं सप्तत्रिंशत् ॥४॥

तत्र सक्थिमर्माणि चिप्रतलहृदयकूर्चकूर्चशिरोगुल्फे-न्द्रवस्तिजान्वाख्युर्वीलोहिताचाणि विटपञ्चेति। एतेने-तर सक्थि व्याख्यातम् ॥५॥

उदरोरसोस्तु। गुदवस्तिनाभिहृदयस्तनमूलस्तनरो-हितापलापान्यपस्तम्भौ चेति। पृष्ठमर्माणि तु कटीकत-रुणकुकुन्दरनितम्बपार्श्वसन्धिवृहत्यंसफलकान्यंसौ चेति। बाहुमर्माणि तु चिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रव-स्तिकूर्पराख्युर्वीलोहिताचाणि कचधरञ्चेति। एतेनेतरो बाहुर्व्याख्यात ॥६॥

जत्रूर्द्ध्वं मर्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृका-टिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्ये-कोऽधिपतिरिति ॥७॥

तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्माणि ॥८॥

नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूला-पलापापस्तम्भहृदय नाभिपार्श्वसन्धि-वृहतीलोहिताचोर्व्यः सिरामर्माणि ॥९॥

आणिविटपकचधरकूर्चकूर्चशिरोवस्तिचिप्रांसविधुरोत्-क्षेपाः स्नायुमर्माणि ॥१०॥

कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि ॥११॥

जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्त-कृकाटिकाश्चेति सन्धिमर्माणि ॥१२॥

तान्येतानि पञ्चविकल्पानि मर्माणि भवन्ति। तद्यथा।

सद्यःप्राणहराणि कालान्तरप्राणहराणि विशल्यघ्नानि वैकल्यकराणि रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोनविंशतिः। कालान्तरप्राणहराणि त्रयस्त्रिंशत्। त्रीणि विशल्यघ्नानि। चतुश्चत्वारिंशद्वैकल्यकराणि। अष्टौ रुजाकराणीति ॥१३॥

भवन्ति चात्र।

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्।
हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥१४॥
वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः।
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥१५॥
नितम्बाविति चैतानि कालान्तरहराणि तु।
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत् ॥१६॥
लोहिताक्षाणि जानूर्वीकूर्चा विटपकूर्परा:।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥१७॥
असांसफलकापाङ्गा नीले मन्ये फणौ तथा।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥१८॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्चशिरांसि च।
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्।
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥१९॥

मर्माणि नाम मांससिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति। तस्मान्मर्मस्वभिहतास्तांस्तान् भावानापद्यन्ते ॥२०॥

तत्र सद्यःप्राणहराण्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु घ्नन्ति। कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुण-

ण्यास्तु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुर्निष्क्रामति। तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके ॥२१॥

केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानाञ्च समवायात् सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि। एकस्मिन्नेव रुजाकराणीति। यतश्चैवमतोऽस्थिमर्मस्वप्यभिहतेषु शोणितागमनं भवति ॥२२॥

चतुर्विधा यास्तु सिराः शरीरे
प्रायेण ता मर्मसु सन्निविष्टाः।
स्नाय्वस्थिमांसानि तथैव सन्धीन्
सन्तर्प्य देहं प्रतिपालयन्ति ॥२३॥
ततः क्षते मर्मणि ताः प्रवृद्धः
समन्ततो वायुरभिस्तृणोति।
विवर्द्धमानस्तु स मातरिश्वा
रुजः सुतीव्राः प्रतनोति काये ॥२४॥
रुजाभिभूतन्तु पुनः शरीरं
प्रलीयते नश्यति चास्य संज्ञा।
अतो हि शल्यं विनिहर्त्तुमिच्छन्

मर्माणि यत्नेन परीक्ष्य कर्षेत् ॥२५॥

एतेन शेषं व्याख्यातम् ॥२६॥

तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति। कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति। विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाञ्च करोति। रुजाकरमतीव्रवेदनं भवति ॥२९॥

तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति। कालान्तरप्राणहराणि पक्षान्मासाद्वा। तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति ॥२८॥

अत ऊर्द्ध्वं प्रत्येकशो मर्मस्थानान्यनुव्याख्यास्याम। तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म। तत्र विद्धस्याक्षेपकेण मरणम्। मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम। तत्रापि रुजाभिर्मरणम्। क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो नाम। तत्र पादस्य भ्रमणवेपने भवतः। गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम। तत्र रुजाशोफौ। पादजङ्घयोः सन्धाने गुल्फो नाम। तत्र रुजः स्तब्धपादता खञ्जता वा। पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम। तत्र शोणितक्षये मरणम्। जङ्घोर्व्वोः सन्धाने जानु नाम। तत्र खञ्जता। जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम। तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च। ऊरुमध्ये ऊर्व्वी नाम। तत्र शोणितक्षयात् सक्थिशोषः। ऊर्व्व्या ऊर्ध्वमधो वङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम। तत्र लोहितक्षयेण पक्षाघातः। वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र

षाण्ढ्यमल्पशुक्रता वा भवति। एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि। एतेनेतरसक्थि बाहू च व्याख्यातौ ॥२८॥

विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि तानि बाहौ मणिबन्धकूर्परकक्षधराणि। यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्ष कक्षयोर्मध्ये कक्षधरं तस्मिन् विद्धे त एवोपद्रवा। विशेषतस्तु मणिबन्धे कुण्ठता। कूर्पराख्ये कुणिः। कक्षधरे पक्षाघात। एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि ॥२९॥

अत ऊर्द्ध्वमुदरोरसोर्म्मर्म्मस्थानान्यनुव्याख्यास्याम.। तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म, तत्र सद्योमरणम्। अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम, तत्रापि सद्योमरणमश्मरीव्रणादृते तत्राप्युभयतो भिन्ने न जीवत्येकतो भिन्ने मूत्रस्रावी व्रणो भवति। स तु यत्नेनोपक्रान्तो रोहति। पक्वामाशययोर्मध्ये सिराप्रभवा नाभिर्नाम, तत्रापि सद्य एव मरणम्। स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम, तत्र सद्य एव मरणम्। स्तनयोरधस्ताद् द्व्यङ्गुलमुभयत. स्तनमूले नाम मर्म्मणी, तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते। स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयत स्तनरोहितौ नाम, तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते। अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम, तत्र रक्तेन पूयभावं गतेन मरणम्। उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम, तत्र वातपूर्णकोष्ठतया कासश्वासा-

भ्याच्च मरणम्। एवमेतान्युदरोरसोर्द्दादश मर्माणि व्याख्यातानि ॥२०॥

अत ऊर्द्ध्वं पृष्ठमर्माण्यनुव्याख्यास्याम। तत्र पृष्ठवंशमुभयत: प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म, तत्र शोणितचयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते। पार्श्वजघनवहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्मणी, तत्र स्पर्शाज्ञानमध:काये चेष्टोपघातश्च। श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम, तत्राध:कायशोषो दौर्ब्बल्याच्च मरणम्। अध:पार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम, तत्र लोहितपूर्णकोष्ठतया म्रियते। स्तनमूलादुभयत: पृष्ठवंशस्य वृहती नाम, तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते। पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम, तत्र बाह्वो: स्वाप शोषो वा। बाहुमूर्द्धग्रीवामध्येऽंसपीठस्कन्धनिबन्धनावंसौ नाम, तत्र स्तब्धबाहुता। एवमेतानि चतुर्द्दश पृष्ठमर्माणि व्याख्यातानि ॥२१॥

अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्याम:। तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन, तत्र मूकता स्वरवैकृतमरसग्राहिता च। ग्रीवाया-मुभयतश्चतस्र: सिरा मातृकास्तत्र सद्योमरणम्। शिरोग्रीवयो: सन्धाने कृकाटिके नाम। तत्र चलमूर्द्धता। कर्णपृष्ठतोऽध: संश्रिते विधुरे नाम, तत्र वाधिर्य्यम्। घ्राणमार्गमुभयत: स्रोतोमार्गप्रतिबद्धे अभ्यन्तरत: फणे नाम, तत्र

गन्धाज्ञानम्। भ्रूपुच्छान्तयोरधोऽक्ष्णोर्वाह्यतोऽपाङ्गौ नाम, तत्रान्ध्यं दृष्ट्युपघातो वा। भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम, तत्राप्यान्ध्यं दृष्ट्युपघातश्च। भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम, तत्र सद्योमरणम्। शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम, तत्र सशल्यो जीवति पाकात् पतितशल्यो वा नोद्धृतशल्यः। भ्रुवोर्मध्ये स्थपनी नाम, तत्रोत्क्षेपवत्। पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम, तत्रोन्मादभयचित्तनाशैर्मरणम्। घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां सिराणां मध्ये सिरासन्निपाताः शृङ्गाटकानि तानि चत्वारि मर्माणि तत्रापि सद्योमरणम्। मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिस्तत्रापि सद्योमरणम्। एवमेतानि सप्तत्रिंशदूर्ध्वजत्रुगतानि मर्माणि व्याख्यातानि ॥२२॥

भवन्ति चात्र।

ऊर्व्यः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमिता स्तनपूर्वमूलम्।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥२३॥
हृद्बस्तिकूर्चगुदनाभि वदन्ति मूर्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे।
तानि स्वपाणितलकुञ्चितसम्मितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम् ॥२४॥
एतत्प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्मकरणं परिहृत्य मर्म।

पार्श्वाभिघातितमपीह निहन्ति मर्म
तस्माद्धि मर्मसदन परिवर्जनीयम् ॥३५॥
छिन्नेषु पाणिचरणेषु सिरा नराणा
सङ्कोचमीयुरसृगल्पमतो निरेति।
प्राप्यामितव्यसनमुग्रमतो मनुष्या
सञ्छिन्नशाखतरुवन्निधन न यान्ति ॥३६॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्त
गच्छत्यतीव पवनश्च रुज करोति।
एव विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधविघातनिकृत्तमूला ॥३७॥
तस्मात्तयोरभिहतस्य तु पाणिपाद
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे।
मर्माणि शल्यविषयार्द्धमुदाहरन्ति
यस्माच्च मर्मसु हता न भवन्ति सद्य ॥३७॥
जीवन्ति तत्र यदि वैद्यगुणेन केचित्
ते प्राप्नुवन्ति विकलत्वमसशय हि
सम्भिन्नजर्जरितकोष्ठशिर कपाला
जीवन्ति शस्त्रविहतैश्च शरीरदेशै ।
छिन्नैश्च सक्थिभुजपादकरैरशेषै
येषा न मर्मपतिता विविधा प्रहारा ॥३८॥
सोममारुततेजासि रज सत्वतमासि च।
मर्मसु प्रायशः पु सा भूतात्मा चावतिष्ठते ॥३९॥
मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिण ।
इन्द्रियार्थेष्वसम्प्राप्तिर्मनोबुद्धिविपर्य्यय. ॥४ ॥

रुजश्च विविधास्तीव्रा भवन्त्याशु हरे हते ।
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ॥४१॥
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ।
हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥४२॥
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ।
विशल्यघ्नेषु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥४३॥
रुजाकराणि मर्माणि क्षतानि विविधा रुजः ।
कुर्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥४४॥
छेदभेदाभिघातेभ्यो दहनाद्दारणादपि ।
उपघातं विजानीयान्मर्मणान्तुल्यलक्षणम् ॥४५॥

मर्माभिघातस्तु न कश्चिदस्ति
योऽल्पात्ययो वापि निरत्ययो वा ।
प्रायेण मर्मस्वभिताडितास्तु
वैकल्यमृच्छन्त्यथवा म्रियन्ते ॥४६॥
मर्माण्यधिष्ठाय हि ये विकाराः
मूर्च्छन्ति काये विविधा नराणाम् ।
प्रायेण ते कृच्छ्रतमा भवन्ति
नरस्य यत्नैरपि साध्यमानाः ॥४७॥

---

सप्तमोऽध्यायः ।

अथातः सिरावर्णनविभक्तिनाम शारीरं व्याख्यास्यामः ।

सप्त सिराशतानि भवन्ति । याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः । द्रुमपत्रसेवनी-

नाभिव च तासा प्रतानास्तासा नाभिमूल ततश्च प्रसरन्त्यूर्द्धं मधस्तिर्य्यक् च ॥१॥

भवेतश्चात्र।

यावत्यस्तु सिरा काये सम्भवन्ति शरीरिणाम।
नाभ्या सर्वा निबद्धास्ता प्रतन्वन्ति समन्तत' ॥२॥
नाभिस्था प्राणिना प्राणा प्राणान्नाभिर्व्युपाश्रिता।
सिराभिरावृता नाभिश्चक्रनाभिरिवारकै ॥३॥

तासा मूलसिराश्चत्वारिंशत्तासा वातवाहिन्यो दश पित्तवाहिन्यो दश कफवाहिन्यो दश दश रक्तवाहिन्य'। तासान्तु वातवाहिनीना वातस्थानगतानां पञ्चसप्ततिशतं भवति तावत्य एव पित्तवाहिन्य पित्तस्थाने कफवाहिन्यश्च कफस्थाने रक्तवाहिन्यश्च यकृत्प्लीह्नोरेवमेतानि सप्त सिराशतानि ।४॥

तत्र वातवाहिन्य सिरा एकस्मिन् सक्थ्नि पञ्चविंशति । एतेनेतरसक्थि बाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासा गुदमेढ्राश्रिता, श्रोण्यामष्टौ द्वे द्वे पार्श्वयो षट् पृष्ठे तावत्य एव चोदरे दश वक्षसि। एकचत्वारिंशज्जत्रुण ऊर्ध्वं तासा चतुर्दश ग्रीवायाम्। कर्णयोश्चतस्र:। नव जिह्वायाम। षट् नासिकायाम्। अष्टौ नेत्रयो । एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणा व्याख्यातम। एष एव विभाग शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश कर्णयोर्द्वे। एव रक्तवहा' कफवहाश्च। एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि ॥५॥

भवन्ति चात्र ।

क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम् ।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन् ॥६॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते ।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः ॥७॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् ।
संसर्पत् स्वाः सिराः पित्तं कुर्य्याच्चान्यान् गुणानपि ॥८॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥९॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम् ।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन् ॥१०॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते ।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥११॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि ॥१२॥
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥१३॥
न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा ।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः ॥१४॥
प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम् ।
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः ॥१५॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः ।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात् ।
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः ॥१६॥

अत ऊर्द्धं प्रवक्ष्यामि न विध्येद् या' सिरा भिषक् ।
वैकल्य मरणञ्चापि व्यधात्तासा ध्रुव भवेत् ॥१७॥
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान् ।
षटत्रिंशच्च शतं कोष्ठे चतु षष्टिञ्च मूर्द्धनि ॥१८॥
शाखासु षोडश सिरा कोष्ठे द्वात्रिंशदेव तु ।
पञ्चाशज्जत्रुणश्चोर्द्ध मवेध्या परिकीर्त्तिता: ॥१९॥

तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति । तासा जालधरा त्वेका तिस्रश्चाभ्यन्तरास्तत्रोर्वीसञ्ज्ञे द्वे लोहिताचसंज्ञा चैकैतास्त्ववेध्या एतेनेतरसक्थि बाहू च व्याख्यातावेवमश-स्त्रकृत्या षोडश शाखासु ॥२०॥

द्वात्रिंशत् श्रोण्यां तासामष्टावशस्त्रकृत्या द्वे द्वे विटपयो कटीकतरुणयोश्च । अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकेकामूर्द्धगा परिहरेत् पार्श्वसन्धिगते च द्वे । चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासामूर्द्धगामिन्यौ द्वे द्वे परिहरेद्वृहतीसिरे । तावत्य एवोदरे तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत् । चत्वारिंशद्वक्षसि तासा चतुर्दशाशस्त्रकृत्या हृदये द्वे द्वे द्वे स्तनमूले स्तनरोहिता-पलापस्तम्भेषूभयतोऽष्टौ । एव द्वात्रिंशदशस्त्रकृत्या. पृष्ठो-दरोर स्सु भवन्ति ॥२१॥

चतु षष्टिसिराशत जत्रुण ऊर्द्धं भवति । तत्र षट्पञ्चा-शच्छिरोधरायां तासामष्टौ चतस्रश्च मर्मसञ्ज्ञा' परिहरेद् द्वे कृकाटिकयोर्द्वे विधुरयो' । एव ग्रीवायां षोडशा-व्यध्या । हन्वोरुभयतोऽष्टावष्टौ तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत् ॥२२॥

षट्त्रिंशज्जिह्वायां तासामत्र षोडशाशस्त्रकृत्या रसवहे द्वे वाग्वहे च द्वे। द्विर्दश नासायां तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येका मृदावुद्देशे। अष्टात्रिंशदुभयोर्नेत्रयोस्तासामेकैकामपाङ्गयोः परिहरेत्॥२३॥

कर्णयोर्दश तासां शब्दवाहिनीनामेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिस्तासां केशान्तानुगताश्चतस्रः॥२४॥

आवर्त्तयोरेकैका स्थपन्याञ्चैका परिहर्त्तव्या। शङ्खयोर्दश तासां शङ्खसन्धिगतामेकैकां परिहरेत्॥२५॥

द्वादश मूर्ध्नि तासामुत्क्षेपयोर्द्वे परिहरेत्। सीमन्तेष्वेकैकामेकामधिपताविति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्ध्वमिति॥२६॥

भवति चात्र।

व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥२७॥

---

## अष्टमोऽध्यायः।

अथातः सिराव्यधविधिशारीरं व्याख्यास्यामः।

बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तस्त्रीमद्याध्वकर्षितमत्तवान्तविरिक्तास्थापितानुवासितजागरितक्लीवकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीड़ितानाञ्च सिरां न विध्येद्यात्र्य(व्य-

ध्या व्यध्याश्चाद्दष्टा दृष्टाश्चायन्त्रिता यन्त्रिताश्चानुत्थिता इति ॥१॥

शोणितावसेकसाध्याश्च विकारा. प्रागभिहितास्तेषु चापक्केष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत् ॥२॥

प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिकेषु, सिराव्यधनमप्रतिषिद्धम् ॥३॥

तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत् ॥४॥

नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।
सिराणां व्यधनं कार्य्यमरोगे वा कदाचन ॥५॥

तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परसन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टीमन्ययो स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्टोरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयाद्दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयेत्यसृक्स्रावणार्थं यन्त्रं पृष्ठमध्ये च पीडयेति कर्मपुरुषञ्च वायुपूर्णमुखं स्थापयेदेष उत्तमाङ्गगतानामन्तर्मुखवर्ज्यानां सिराणां व्यधने यन्त्रणविधिः ॥६॥

तत्र पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थाप-

यित्वान्य पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुस-न्धेरध शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं व्यध्यप्रदेशस्यो-परि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्धा पादसिरां विध्येत्। अथोपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्धा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परः स्यात्। श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य वि-स्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्न-मितशिरस्कस्य विस्फूर्जितदेहस्य। बाहुभ्यामवलम्ब्य-मानदेहस्य पार्श्वयोः। अवनामितमेढ्रस्य मेढ्रे। उन्ना-मितविदष्टजिह्वाग्रस्याधोजिह्वायाम्। अतिव्यात्ताननस्य तालुनि दन्तमूलेषु च। एवं यन्त्रोपायानन्यांश्च सिरोत्था-पनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात्। मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यात्ततोऽन्येष्वर्द्ध-यवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन। अस्थामुपरि कुठा-रिकया विध्येदर्द्धयवमात्रम् ॥७॥

भवन्ति चात्र।

व्यभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले।
हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥८॥
सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक्।
मुहूर्त्तं रुद्धा तिष्ठेच्च सुविद्धां तां विनिर्दिशेत् ॥९॥
यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका।
तथा सिरासु विद्धासु दुष्टमग्रे प्रवर्त्तते ॥१०॥
मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च।

न वहन्ति सिरा विद्धास्तथानुत्थितयन्त्रिता ॥११॥
क्षीणस्य बहुदोषस्य मूर्च्छयाभिद्रुतस्य च ।
भूयोऽपराह्णे विस्राव्या सापरेद्युस्त्र्यहेऽपि वा ॥१२॥
रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः ।
न चातिप्रस्रुतं कुर्य्याच्छेषं संशमनैर्जयेत् ॥१३॥
बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः ।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥१४॥

तत्र पाददाहपादहर्षावबाहुकचिप्पविसर्पवातशोणित-वातकण्टकविचर्चिकापाददारीप्रभृतिषु क्षिप्रमर्मण उपरिष्टाद् द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्। श्लीपदे तच्चिकित्सिते यथा वक्ष्यते। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले। अपच्यामिन्द्रवस्तेरधस्ताद् द्व्यङ्गुले। जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले गृध्रस्याम्। ऊरुमूलसंश्रितायान्तु गलगण्डे। एतेनेतरसक्थि बाहू च व्याख्यातौ ॥१५॥

विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा। एवं दक्षिणबाहौ यकृद्दाल्ये कफोदरे चैतामेव च कासश्वासयोरप्यादिशन्ति। गृध्रस्यामिव विश्वाच्याम्। श्रोणिप्रतिसमन्ताद् द्व्यङ्गुले प्रवाहिकायां शूलिन्याम्। परिकर्त्तिकोपदंशशूकदोष-शुक्रव्यापत्सु मेढ्रमध्ये। वृषणयोः पार्श्वे मूत्रवृद्ध्याम। नाभेरधश्चतुरङ्गुले सेवन्यां वामपार्श्वे दकोदरे वाम पार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च। बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे। त्रिकसन्धिमध्य-

गता तृतीयके । अथ स्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां चतुर्थके । हनुसन्धिमध्यगतामपस्मारे । शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादेऽपस्मारे च । जिह्वारोगेष्वधोजिह्वाया दन्तव्याधिषु च । तालुनि तालव्येषु । कर्णयोरुपरि समन्तात् कर्णमूले तद्रोगेषु च । गन्धग्रहणे नासारोगेषु च नासाग्रे । तिमिराक्षिपाकप्रभृतिष्वामयेषूपनासिके ललाट्याम पाङ्ग्याश्चैता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति ॥१६॥

अत ऊर्द्ध्वं दुष्टव्यधनमनुव्याख्यास्याम । तत्र दुर्विद्धा-तिविद्धा कुञ्चिता पिच्चिता कुट्टिता अप्रस्रुता अत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिता अनुत्थितविद्धा शस्त्रहता तिर्य्यग्विद्धा अविद्धा अव्यध्या विद्रुता धेनुका पुन पुनर्विद्धा शिरास्नायुस्थिसन्धिमर्मसु चेति विंशति-दुष्टव्यधा ॥१७॥

तत्र या सूक्ष्मशस्त्रविद्धा न व्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्विद्धा । प्रमाणातिरिक्तविद्धायामन्त प्रविशति शोणित शोणितातिप्रवृत्तिर्वा सातिविद्धा । कुञ्चितायामप्येवम् । कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता । अनासादिता पुन पुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता । शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता । तीक्ष्णमहामुखशस्त्रविद्धा अत्युदीर्णा । अल्परक्तस्राविण्यविद्धा । क्षीणशोणितस्यानिलपूर्णा परिशुष्का । चतुर्भागावसादिता किञ्चित्प्रवृत्तशोणिता कूणिता । दुःस्थानबन्धनाद्विषमानाया. शोणितसम्मोहो भवति सा वेपिता । अनु-

स्थितविद्धायामप्येवम्। छिन्नातिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता। तिर्य्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा। बहुशःक्षता कुण्ठशस्त्रप्रणिधानेनापविद्धा। अशस्त्रकृत्या अव्यध्या। अनवस्थितविद्धा विद्रुता। प्रदेशस्य बहुशोऽवघट्टनादारोहव्यधा मुहुर्मुहुः शोणितस्रावा धेनुका। सूक्ष्मशस्त्रव्यधनाद्बहुशो विच्छिन्ना पुनःपुनर्विद्धा। स्नायुस्थिशिरासन्धिमर्म्मसु विद्धा वा रुजा शोषं वैकल्यं मरणं वापादयति ॥१८॥

भवन्ति चात्र।

सिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः।
मत्स्यवत् परिवर्त्तन्ते तस्माद्यत्नेन ताडयेत् ॥१९॥
अजानता गृहीते तु शस्त्रे कायनिपातिते।
भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥२०॥
स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि।
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात् ॥२१॥
सिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः।
यथा प्रणिहितः सम्यग्वस्तिः कायचिकित्सिते ॥२२॥

तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परिहर्त्तव्यानि क्रोधायासमैथुनदिवास्वप्नवाग्व्यायामयानोत्थानासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबललाभान्मासमेके मन्यन्ते। एतेषां विस्तरमुपरिष्टाद्वक्ष्यामः ॥२३॥

भवतश्चात्र।

सिराविषाणतुम्बैस्तु जलौकाभिः पदैस्तथा।

अवगाढं यथापूर्वं निर्हरेद् दुष्टशोणितम् ॥२४॥
अवगाढे जलौका स्यात् प्रच्छन्नं पिण्डिते हितम् ।
सिराङ्गव्यापके रक्ते शृङ्गालावू त्वचि स्थिते ॥२५॥

---

## नवमोऽध्यायः ।

अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः ।

चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः । तत्र केचिदाहुः सिराधमनीस्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसि चेति । तत्तु न सम्यक् । अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः, कस्माद्व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव कर्मसु भवति ॥१॥

तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः ॥२॥

ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति । तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत् । तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश शब्दरूपरसगन्धानष्टाभिर्गृह्णीते । द्वाभ्यां भाषते च द्वाभ्यां घोषं करोति द्वाभ्यां स्वपिति द्वाभ्यां प्रतिबुध्यते । द्वे चाश्रुवाहिन्यौ । द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते । ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः । तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः एताभिरूर्द्ध्वं नाभेरु-

दरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च ॥३॥

भवति चात्र।

ऊर्ध्वं गतास्तु कुर्वन्ति कर्माण्येतानि सर्वशः।
अधोगमास्तु वक्ष्यामि कर्म तासां यथायथम् ॥४॥

अधोगतास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थमेवान्नपानरसं विपक्व-मौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोर्द्ध्वगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति मूत्र पुरीषस्वेदांश्च विवेचयन्त्यामपक्वाशयान्तरे च त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश द्वे अन्नवाहिन्यावन्त्राश्रिते तोयवहे द्वे मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे शुक्रवहे द्वे शुक्रप्रादु-र्भावाय द्वे विसर्गाय ते एव रक्तमभिवहतो नारीणामार्त्त-वसञ्ज्ञम्। द्वे वर्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे। अष्टावन्या-स्तिर्य्यग्गाणां धमनीनां स्वेदमर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याता एताभिरधोनाभेः पक्वाशयकटीमूत्र-पुरीषगुदवस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च ॥५॥

भवति चात्र।

अधोगमास्तु कुर्वन्ति कर्माण्येतानि सर्वशः।
तिर्य्यग्गाः सम्प्रवक्ष्यामि कर्म तासां यथायथम् ॥६॥

तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते। तास्त्वसङ्ख्यास्ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च। तासां मुखानि रोम-कूपप्रतिबद्धानि। यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पय-

न्यस्तर्वोभिश्च तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्याण्य-
न्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि तैरेव स्पर्शंसुख-
मसुखं वा गृह्णाति। तास्त्वेताश्चतस्रो धमन्यः सर्वाङ्गगताः
सविभागा व्याख्याताः ॥७॥

भवतश्चात्र।

यथा स्वभावतः खानि मृणालेषु बिसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते ॥८॥

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति।
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥९॥

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि येष्वधिकार एकेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यस्तत्र विद्धस्याध्मानं शूलोऽन्नद्वेषो छर्दिः पिपासाऽऽन्ध्यं मरणं वा। उदकवहे द्वे तयोर्मूलं तालु क्लोम च ॥१०॥

तत्र विद्धस्य पिपासा सद्योमरणञ्च। रसवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यस्तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च। रक्तवहे द्वे तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यस्तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति। मांसवहे द्वे तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यस्तत्र विद्धस्य

श्वयथुर्मांसशोष सिराग्रन्थयो मरणम । मेदोवहे द्वे तयो-र्मूलं कटीवृक्कौ च तत्र विद्धस्य स्वेदागमन स्निग्धाङ्गता तालुशोष स्थूलशोफता पिपासा च । मूत्रवहे द्वे तयोर्मूलं वस्तिर्मेढ्रञ्च तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधं स्तब्ध-मेढ्रता च । पुरीषवहे द्वे तयोर्मूलं पक्वाशयो गुदञ्च तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च । शुक्रवहे द्वे तयो-र्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च । आर्त्तववहे द्वे तयोर्मूलं गर्भाशय आर्त्तव-वाहिन्यश्च धमन्यस्तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्व-मार्त्तवनाशश्च । सेवनीच्छेदाद्रुजाप्रादुर्भाव. । वस्ति-गुदविद्धलक्षण प्रागुक्तमिति । स्रोतोविद्धन्तु प्रत्याख्यायो-पचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत् ॥११॥

मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत् ।
स्रोतस्तदिति विज्ञेय सिराधमनिवर्जितम् ॥१२॥

———

## दशमोऽध्यायः ।

अथातो गर्भिणीव्याकरण शारीरं व्याख्यास्याम' ।

गर्भिणी प्रथमदिवसात् प्रभृति नित्य प्रहृष्टा शुच्यल-ङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवे-न्मलिनविकृतहीनगात्राणि न स्पृशेद् दुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः शुष्क पर्य्युषितं कुथित क्लिन्न चान्न नोपभुञ्जीत वहिर्निष्क्रमण शून्यागारचैत्यश्मशान-वृक्षाश्रयान् क्रोधभयसङ्कराश्च भारानुच्चैर्भाष्यादिकं परि-

हरेद् यानि च गर्भं व्यापादयन्ति न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत न चायासयेच्छरीरं पूर्वोक्तानि च परिहरेत्। शयनासन मृद्वास्तरण नात्युच्चमपाश्रयोपेतमसम्बाध विदध्यात्। हृद्य द्रव मधुरप्राय स्निग्ध दीपनीयसंस्कृतञ्च भोजन भोजयेत् सामान्यमेतदाप्रसवात् ॥१॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदन पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहित हृद्यमन्न भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्ट षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागू वा सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्याय्यते गर्भः। अष्टमे वदरोदकेन वलातिवलशतपुष्पपललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुख प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते। नवमे मासि सूतिकागारमेना प्रवेशयेत् प्रशस्ततिथ्यादौ तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु विल्वन्यग्रोधतिन्दुकभल्लातकनिर्मितं सर्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतञ्चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम् ॥२॥

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने ।
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥३॥

ततोपस्थितप्रसवाया कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ।४॥

प्रजननिश्चलाणा कृतमङ्गलस्वस्तिवाचना कुमारपरिवृता पुन्नागफलहस्ता स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत् । तत कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्र स्त्रिय परिणतवयस प्रजननकुशला कर्त्तितनखा परिचरेयुरिति ।५॥

अथास्या विधिवद्योन्यन्तरमनुलोममनुसुखमभ्यज्यात् ब्रूयाच्चैनामेका सुभगे प्रवाहस्वेति न चाप्रावीप्रवाहस्व । ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहेथा शनै शनै । ततो गर्भनिर्गमे प्रगाढ ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात् ॥६॥

अकालप्रवाहणाद्बधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जायते । तत्र प्रतिलोममनुलोमयेत् ॥७॥

गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा । बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्चलां विशल्यां वा ।८॥

अथ जातस्योल्बं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्ध्नि पिचुं दद्यात्ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण

बद्धा छेदयेत् । तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग् बध्नीयात् ॥९॥

अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधु सर्पिरनन्ताब्राह्मीरसेन सुवर्णमङ्गुल्यानामिकया लेहयेत् । ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च ॥१०॥

धमनीनां हृदिस्थानां विवृतत्वादनन्तरम् ।
चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥११॥

तस्मात् प्रथमेऽह्नि मधु सर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद् द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च । ततः प्राङ्निवारितं स्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत् ॥१२॥

अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिक्वाथेनोपाचरेत् सशेषदोषां तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत् । एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादादुष्टशोणितात् । विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत्त्रिरात्रम् । ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलञ्चावेक्ष्य । अनेन विधिनाध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात् पुनरार्त्तवदर्शनादित्येके ॥१३॥

धन्वभूमिजाता सूतिका घृततैलयोरन्यतरस्य मात्रां

पाययेत् पिप्पल्यादिकषायानुपानं स्नेहनित्या च त्रिरात्रं पञ्चरात्रं वा बलवतीमबला यवागूं पाययेत्त्रिरात्रं पञ्चरात्रं वा। अत ऊर्द्ध्वं स्निग्धेनान्नसंसर्गेणोपाचरेत् प्रायश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्। क्रोधायासमैथुनादीन् परिहरेत् ॥१४॥

भवतश्चात्र।

मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात् ॥१५॥
तस्मात्तां देशकालौ च व्याधिसात्म्येन कर्मणा।
परीक्ष्योपचरेदेवं नैयमत्ययमाप्नुयात् ॥१६॥

अथापरापतन्त्यानाहाध्मानौ कुरुते। तस्मात्कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत्। कटुकालाबुकृतवेधनसर्षपसर्पनिर्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्। लाङ्गलीमूलकल्केन वास्याः पाणिपादतलमालिम्पेत्। मूर्ध्नि वास्या महावृक्षक्षीरमनुसेचयेत्। कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्। शालिमूलकल्कं वा पिप्पल्यादिं वा मद्येन सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण सुरामण्डेन वास्थापयेत। एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरवस्तिं दद्यात् स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत ॥१७॥

प्रजातायाश्च नार्य्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगतेनातिरुद्धं नाभेरधःपार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभि... दर-

शूलानि भवन्ति। सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशय । समन्तादाधानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम् । तत्र वीरतर्वादिसिद्ध जलमूषकादिप्रतीवाप पाययेत्। यवक्षारचूर्णं वा सर्पिषा सुखोदकेन वा लवणचूर्णं वा पिप्पल्यादिक्वाथेन पिप्पल्यादिचूर्णं वा सुरामण्डेन वरुणादिक्वाथ वा पञ्चकोलैलाप्रतीवाप पृथक्पर्ण्यादिक्वाथं वा भद्रदारुमरिचसंसृष्ट पुराणगुड वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्र खादेदच्छ वा पिबेदरिष्टमिति ॥१८॥

अथ बाल क्षौमपरिवृत क्षौमवस्त्रास्तृताया शय्याया शाययेत् । पीलुवदरीनिम्बपरूषकशाखाभिश्चैन वीजयेत् । मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत् धूपयेच्चैन रक्षोघ्नैर्धूपै । रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत् । तिलातसीसर्षपकणाश्चात्र प्रकिरेत्। अधिष्ठाने चाग्निं प्रज्वालयेत् । व्रणितोपासनीयञ्चावेक्षेत ॥१९॥

ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचन कृत्वा नाम कुर्य्याता यदभिप्रेत नक्षत्रनाम वा ॥२०॥

ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयसमरोगा शीलवतीमचपलामलोलुपामकृशामस्थूला प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्द्ध्वस्तनीमव्यङ्गामव्यसनिनी जीवद्वत्सा दोग्ध्रीं वत्सलामक्षुद्रकर्मिणीं कुले जातामतोभूयिष्ठैश्च गुणैरन्विता श्यामामारोग्यबलवृद्धये बालस्य। तत्रोर्द्ध्वस्तनी करालं कुर्य्यात्। लम्बस्तनी नासिकामुख छाद-

यित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातामहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ॥२१॥

चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः ।
भवन्तु सुभगे ! नित्यं बालस्य बलवृद्धये ॥२२॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ! ।
दीर्घमायुरवाप्नोतु देवा प्राश्यामृतं यथा ॥२३॥

अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद्व्याधिजन्म भवति। अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्सुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः । तस्मादेवंविधानं स्तन्यं न पाययेत् ॥२४॥

क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति। अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनलिकालाबू-कालशाकप्रभृतीनि विदध्यात् ॥२५॥

अथास्याः स्तन्यमप्सु परीक्षेत। तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात्तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधितशोकार्त्तश्रान्त-प्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्तविरुद्धाहारतर्पितायाः स्तन्यं पाययेन्नाजीर्णौषधञ्च बालं दोषौषधमलानां तीव्रवेगोत्पत्तिभयात् ॥२६॥

भवन्ति चात्र।

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥२७॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः।
दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ॥२८॥
भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत्।
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ॥२९॥
मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति।
निमीलिताक्षो मूर्द्धस्थे शिरो रोगे न धारयेत् ॥३०॥
वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति।
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ॥३१॥
कोष्ठे दोषान् विजानीयात् सर्वत्रस्थांश्च रोदनैः ॥३२॥

तेषु च यथाभिहितं स्नेहच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात् क्षीरान्नादस्यात्मनि धात्र्याश्चान्नादस्य कषायादीनात्मन्येव न धात्र्याः। तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलिपर्व्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात् कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय कोलसम्मितामन्नादायेति ॥३३॥

येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥३४॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे।
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥३५॥
न च तृष्णाभयादस्य पाययेत शिशुं स्तनौ।
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात् ॥३६॥

मस्तुलुङ्गक्षयाद्यस्य वायुस्तात्वस्थि नामयेत्।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ॥३७॥
पानाभ्यञ्जनयोर्योज्यं शीताम्बु द्वेजनं तथा।
वातेनाध्मापिता नाभिं सरुजा तुण्डिसञ्ज्ञिताम् ॥३८॥
मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः।
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥३९॥

क्षीराहाराय सर्पिः पाययेत्। सिद्धार्थकवचामांसीपयस्यापामार्गशतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धं क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धमन्नादाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुविडङ्गद्राक्षाद्विब्राह्मीसिद्धम्। तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ॥४०॥

बालं पुनर्गात्रसुखं गृह्णीयान्न चैनं तर्जयेत् सहसा न प्रतिबोधयेद्वित्रासभयात् सहसा नापहरेदुत्क्षिपेद्वा वातादिविघातभयान्नोपवेशयेत् कौब्जभयात् नित्यं चैनमनुवर्त्तेत प्रियशतैरजिघांसुः। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ॥४१॥

नाशुचौ विसृजेद् बालं नाकाशे विषमे न च।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥४२॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा।
दद्यादास्तन्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया ॥४३॥

षण्मासमच्चैनमन्नं प्राशयेल्लघु हितञ्च। नित्यमवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात्। प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ॥४४॥

अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसञ्ज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्द्धं निरीक्षते फेणमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं विस्तरेणोत्तरे वक्ष्यामः ॥४५॥

शक्तिमन्तञ्चैनं ज्ञात्वा यथावर्णं विद्यां ग्राहयेत्। अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पितृधर्मार्थकामप्रजाः प्राप्स्यतीति ॥४६॥

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥४७॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥४८॥

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत। पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति ॥४९॥

तत्र पूर्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशयकटीवङ्क्षणवस्तिशूलानि रक्तदर्शनञ्च तत्र शीतैः परिषेकावगाहप्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च गर्भस्फुरणे मुहुर्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत्। प्रसं-

समाने सदाहपार्श्वपृष्ठशूलासृग्दरानाहमूत्रसङ्गाः स्थानात् स्थानञ्चोपक्रामति गर्भे कोष्ठे सरम्भस्तत्र स्निग्धशीताः क्रिया वेदनायां महासहाक्षुद्रसहामधुकश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत् मूत्रसङ्गे दर्भादिसिद्धम् आनाहे हिङ्गुसौवर्चललशुनवचासिद्धम् अत्यर्थं स्रवति रक्तकोष्ठागारिकागारधूमत्वक्समङ्गाधातकीकुसुमनवमालिकागैरिकसर्जरसरसाञ्जनचूर्णं मधुनावलिह्यात्तथालाभं न्यग्रोधादित्वक्प्रवालकल्कं वा पयसा पाययेदुत्पलादिकल्कं वा कशेरुशृङ्गाटकशालूककल्कं वा शृतेन पयसोडुम्बरफलोदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टं न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत् । अथाहृष्टशोणितवेदनायां मधुकदेवदारुपयस्यासिद्धं पयः पाययेत् तदेवाश्मन्तकशतावरीपयस्याभिसिद्धं विदारिगन्धादिसिद्धं वा बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं वैवं क्षिप्रमुपक्रान्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते ॥५०॥

व्यवस्थिते च गर्भे मद्यैनोडुम्बरशलाटुसिद्धेन पयसा भोजयेत् । अतीते लवणस्नेहवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासाः गर्भस्य तावन्त्यहानि । वस्त्युदरशूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा । वातोपद्रवग्रहीतत्वात् स्रोतसां लीयते गर्भः सोऽतिकालमवतिष्ठमानो व्यापद्यते तां मृदुना स्नेहादिक्रमेणोपचरेत् । उत्क्रोशरससिद्धामनल्पस्नेहां यवागूं पाययेत् । माषतिलबिल्वशलाटुसिद्धान्

वा कुल्माषान् भक्षयेन्मधु माध्वीकं चानुपिबेत् सप्तरात्रम् । कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मूषलेनाभिहन्याद्विषमे वा यानासने सेवेत । वाताभिपन्न एव शुष्यति गर्भः । स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च तं बृंहणीयैः पयोभिर्मांसरसैश्चोपाचरेत् । शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं तत् कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुस्तत्रापि लीनवत् प्रतीकारः ॥५१॥

अत ऊर्द्ध्वं मासानुमासिकं वक्ष्यामः ।
मधुकं शाकबीजञ्च पयस्या सुरदारु च ।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥५२॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥५३॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम् ।
पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका ॥५४॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता ।
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ॥५५॥
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः ।
कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिकाः ॥५६॥
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ।
नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥५७॥
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्यादृशमे हितम् ।
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ॥५८॥

एवमप्याय्यते गर्भस्तीव्रा रुक् चोपशाम्यति ॥५९॥

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्धं प्रसवमानाया नार्य्यां कुमारोऽल्पायुर्भवति ॥६०॥

अथ गर्भिणी व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेनान्नोपहितेनानुलोमयेच्च संशमनीयञ्च मृदु विदध्यादन्नपानयोरश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥६१॥

भवन्ति चात्र।

सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा।
मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम् ॥६२॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा।
हेमचूर्णानि कैटर्य्यं श्वेता दूर्वा घृतं मधु ॥६३॥
चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः ॥६४॥

इति सुश्रुते आयुर्वेदशास्त्रे तृतीयं शारीरस्थानं समाप्तम्।

———

# अथ चिकित्सितस्थानम्।



## प्रथमोऽध्यायः।

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः।

द्वौ व्रणौ भवतः शारीर आगन्तुकश्चेति। तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः। आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः। तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद् द्विव्रणीय इत्युच्यते। सर्वस्मिन्नेवागन्तुव्रणे तत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थं पित्तवच्छीतक्रियावधारणविधिरविशेषः सन्धानार्थञ्च मधुघृतप्रयोगः इत्येतद् द्विकारणोत्थानप्रयोजनमुत्तरकालन्तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः। दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः प्रसरणसामर्थ्याद् यथोक्तो व्रणप्रश्नाधिकारे शुद्धत्वात् षोडशप्रकार इत्येके। तस्य लक्षणं द्विविधं सामान्यं वैशेषिकञ्च। तत्र सामान्यं रुक् व्रणगात्रविचूर्णने व्रणतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः॥१॥

तत्र श्यावारुणाभस्तनुः शीतपिच्छिलाल्पस्रावी रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति वातात्॥२॥

श्चिग्ज पीतनीलाभ किंशुकोदकाभोष्णस्रावी दाह-पाकरागविकारी पीतपिडकाजुष्टश्चेति पित्तात् ॥३॥

प्रततचण्डकण्डूबहुल स्थूलो घन स्तब्धसिरास्नायु-जालावतत. कठिन पाण्डुवभासो मन्दवेदन शुक्लशीतसा-न्द्रपिच्छिलास्रावी गुरुश्चेति कफात् ॥४॥

प्रवालदलनिचयप्रकाश कृष्णस्फोटपिडकाजालोप-चितस्तुरङ्गस्थानगन्ध सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात् ॥५॥

तोददाहधूमायनप्राय पीतारुणाभास्तद्वर्णस्रावी चेति वातपित्ताभ्याम ॥६॥

कण्डूयनशील सनिस्तोदो दारुणो मुहुर्मुह शीतपि-च्छिलस्रावी चेति वातश्लेषभ्याम ॥७॥

गुरु. सदाह उष्ण पीत. पाण्डुस्रावी चेति पित्तश्ले-षभ्याम् ॥८॥

रूक्षस्तनुस्तोदबहुल सुप्त इव च रक्तारुणाभस्तद्वर्ण-स्रावी चेति वातशोणिताभ्याम् ॥९॥

घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्पी कृष्ण-स्रावी चेति पित्तशोणिताभ्याम् ॥१०॥

रक्तो गुरु पिच्छिल' कण्डूप्राय: स्थिर' सरक्तपाण्डु-स्रावी चेति श्लेषशोणिताभ्याम् ॥११॥

स्फुरणतोददाहधूमायनप्राय पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्य ॥१२॥

कण्डूस्फुरणचुमचुमायनप्राय. पाण्डुघनरक्तस्रावी चेति वातश्लेषशोणितेभ्य: ॥१३॥

दाहपाकरागकण्डूप्राय पाण्डुघनरक्तास्रावी चेति श्लेष्मपित्तशोणितेभ्य. ॥१४॥

त्रिविधवर्णवेदनास्रावविशेषोपेत पवनपित्तकफेभ्य ॥१५॥

निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वाप-बहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफ-शोणितेभ्यः ॥१६॥

जिह्वातलाभो मृदु स्निग्ध श्लक्ष्णो विगतवेदन सुव्य-वस्थितो निरास्रावश्चेति शुद्धो व्रण इति ॥१७॥

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति (तद्यथा) अपतर्पण-मालेप परिषेकोऽभ्यङ्ग स्वेदो विम्लापनमुपनाह पाचनं विस्रावण स्नेहो वमनं विरेचन भेदन छेदन दारण लेख-नमेषणमाहरण व्यधन विस्रावण सीवन सन्धान पीडनं शोणितास्थापन निर्वापणमुत्कारिका कषायो वर्त्ति कल्क सर्पिस्तैल रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म दारुणकर्म क्षारकर्माग्निकर्म कृष्णकर्म पाण्डुकर्म प्रतिसारण रोमसञ्जनन लोमापहरण वस्तिकर्मोत्तरवस्ति-कर्म बन्ध पत्रदान क्रमिघ्न बृंहणं विषघ्न शिरोविरेचनं नस्य कवलधारण धूमो मधुसर्पिर्यन्त्रमाहारो रक्षावि-धानम् ॥१८॥

तेषु कषायो वर्त्ति कल्क सर्पिस्तैलं रसक्रियावचूर्णन-मिति शोधनरोपणानि। तेष्वष्टौ शस्त्रकृत्या। शोणिता-स्थापन क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि। स्नेहस्वेदनवमनविरेचनवस्त्युत्तरवस्तिशिरोवि-

रेचननस्यधूमकवलधारणाभ्यञ्जन वक्ष्यामः। यदन्यद्व-शिष्टमुपक्रमजातं तदिह वक्ष्यते ॥१८॥

षड्विध प्रागुपदिष्टः शोफस्तस्यैकादशोपक्रमा भवन्त्य-पतर्पणाद्यो विरेचनान्तास्ते च विशेषेण शोफप्रतीकारा वर्त्तन्ते व्रणभावमापन्नस्य च न विरुध्यन्ते शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव। अपतर्पणन्त्वाद्य उपक्रम एष सर्व-शोफाना सामान्य प्रधानतमश्च ॥२०॥

दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः।
अवेक्ष्य दोष प्राणञ्च कार्य्यं स्यादपतर्पणम् ॥२१॥
ऊर्द्धं मारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः।
न कार्य्यं गर्भिणीवृद्धबालदुर्बलभीरुभिः ॥२२॥
शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च।
यथास्वैरौषधैर्लेप प्रत्येकञ्चैव कारयेत् ॥२३॥
यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम्।
क्षिप्र प्रशमयत्यग्निमेवमालेपन रुजः ॥२४॥
प्रह्लादने शोधने च शोफस्य हरणे तथा।
उत्सादने रोपणे च लेप स्यात्तु तदर्थकृत् ॥२५॥

वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमास-रसवातहरौषधनि क्वाथैरशीते. परिषेकान् कुर्वीत ॥२६॥

पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करो-दकेक्षुरसमधुरौषधक्षीरवृक्षक्वाथैरुष्णैः परिषेकान् कुर्वीत ॥२७॥

श्लेष्मशोफे तु तैलमू[illegible] सुराशुक्तकफघ्नौषधनिः[illegible]
क्वाथैरशीतै परिषेकान् [illegible] ॥

यथाम्बुभि. सिच्यमानः शान्तिमग्निर्नियच्छति।
दोषाग्निरेव सहसा परिषेकेण शाम्यति॥२९॥
अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशम मृदुताञ्च करोति॥३०॥
स्वेदविम्लापनादीना क्रियाणां प्राक् स उच्यते।
पश्चात्कर्मसु चादिष्ट स च विस्रावणादिषु॥३१॥
रुजावतां दारुणाना कठिनाना तथैव च।
शोफाना स्वेदन कार्य्यं ये चाप्येवविधा व्रणा.॥३२॥
स्थिराणा रुजता मन्द कार्य्यं विम्लापन भवेत्।
अभ्यज्य स्वेदयित्वा तु वेणुना वा शनैः शनै॥३३॥
विमर्दयेद्भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा।
शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयो॥३४॥
अविदग्ध. शम याति विदग्ध पाकमेति च।
निवर्त्तते न य शोफो विरेकान्तैरुपक्रमै।
तस्य सम्पाचन कुर्य्यात् समाहृत्यौषधानि तु॥३५॥
दधितक्रसुक्तधान्याम्लैर्योजितानि तु।
स्निग्धानि लवणीकृत्य पचेदुत्कारिका शुभाम्॥३६॥
सैरण्डपत्रया शोफ नाहयेदुष्णया तया।
हित सम्भोजन चापि पाकायाभिमुखो यदि॥३७॥
वेदनोपशमार्थाय तथा पाकशमाय च।
अचिरोत्पतिते शोफे कुर्य्याच्छोणितमोक्षणम्॥३८॥
सशोफे कठिने श्यामे सरक्ते वेदनावति।
संरब्धे विषमे वापि व्रणे विस्रावण हितम्॥३९॥
सविषे च विशेषेण जलौकाभिः पदैस्तथा।

वेदनायाः प्रशान्त्यर्थं पाकास्याप्राप्तये तथा ॥४०॥
सोपद्रवाणां रूक्षाणां कृशानां व्रणशोषिणाम् ।
यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ॥४१॥
उत्सन्नमांसशोफे तु कफजुष्टे विशेषतः ।
संक्लिष्टश्यामरुधिरे व्रणे प्रच्छर्दनं हितम् ॥४२॥
वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ।
विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥४३॥
अपाकेषु तु रोगेषु कठिनेषु स्थिरेषु च ।
स्नायुकोथादिषु तथाच्छेदनं प्राप्तमुच्यते ॥४४॥
अन्तः पूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ।
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥४५॥
बालवृद्धासहक्षीणभीरूणां योषितामपि ।
मर्मोपरि च जातेषु रोगेषूक्तञ्च दारणम् ॥४६॥
सुपक्वे पिण्डिते शोफे पीडनैरवपीडिते ।
पाकोद्वृत्तेषु दोषेषु तत्तु कार्य्यं विजानता ॥४७॥
सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः ।
कठिनान् स्थूलवृत्तौष्ठान्दीर्य्यमाणान् पुनः पुनः ।
कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥४८॥
समं लिखेत्सुलिखितं लिखेन्निरवशेषतः ।
वर्त्मानुप्रमाणेन समं शस्त्रेण निर्लिखेत् ॥४९॥
क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम् ।
कर्कशानि च पत्राणि लेखनार्थे प्रदापयेत् ॥५०॥
नडीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः ।
करीरबालाङ्गुलिभिरेषण्या वेषयेद्भिषक् ॥५१॥

नेत्रवर्त्मगुदाभ्यासनाब्योऽवक्ता. सशोणिता ।
क्षुद्रपोदकजै स्नग्धै. करीरैरेषयेत् तु ता' ॥५२॥
सव्रतासव्रताख्येषु व्रणेषु मतिमान् भिषक् ।
यथोक्तमाहरेच्छल्य प्राप्तोद्धरणलक्षणम् ॥५३॥
रोगे व्यधनसाध्ये तु यथोद्दिष्टं प्रमाणत ।
शस्त्रं निदध्याद्दोषञ्च स्रावयेत् कीर्त्तितं यथा ॥५४॥
अपाकोपद्रुता ये च मासस्था विव्रताश्च ये ।
यथोक्तं सीवन तेषु कार्य्यं सन्धानमेव च ॥५५॥
पूयगर्भानणुद्वारान् व्रणान्मर्मगतानपि ।
यथोक्तै पीडनद्रव्यै समन्तात्परिपीडयेत् ॥५६॥
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ।
न चाभिमुखमालिम्पेत् तथा दोष प्रसिच्यते ॥५७॥
तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम ।
कार्य्यं यथोक्त वैद्येन शोणितास्थापन भवेत् ॥५८॥
दाहपाकज्वरवता व्रणाना पित्तकोपत' ।
रक्तेन चाभिभूताना कार्य्यं निर्वापणं भवेत् ॥५९॥
यथोक्तैः शीतलद्रव्यै क्षीरपिष्टैर्घृतप्लुतै ।
दिह्यादबहलान्लेपान् सुशीताश्चावचारयेत् ॥६०॥
व्रणेषु क्षीणमासेषु तनुस्रावित्वपाकिषु ।
तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ।
वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥६१॥
स्नेहिकेषु च वीजेषु पचेदुत्कारिका शुभाम् ।
तेषाञ्च स्वेदन कार्य्यं स्थिराणा वेदनावताम ॥६२॥
दुर्गन्धाना क्लेदवतां पिच्छिलाना विशेषतः ।

कषाये शोधनं कार्य्यं शोधनै प्रागुदीरितैः ॥६३॥
अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ।
शोधनद्रव्ययुक्ताभिर्वर्त्तिभिस्तान् यथाक्रमम् ॥६४॥
पूतिमांसप्रतिच्छन्नान्महादोषांश्च शोधयेत् ।
कल्कीकृतैर्यथालाभं वर्त्तिद्रव्यैः पुरोदितै ॥६५॥
पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान् ।
कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा ॥६६॥
उत्सन्नमांसानस्निग्धानल्पास्रावान् व्रणांस्तथा ।
सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥६७॥
तैलेनाशुध्यमानानां शोधनीया रसक्रियाम् ।
व्रणानां स्थिरमांसानां कुर्य्याद् द्रव्यैरुदीरितैः ॥६८॥
कषाये विधिवत्तेषां कृते व्यामिश्रयेत् पुनः ।
सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलाम् ॥६९॥
हरितालञ्च मतिमांस्ततस्तामवचारयेत् ।
मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्द्दिताम ॥७०॥
व्रणेषु दत्त्वा तां तिष्ठेत् त्रींस्त्रींश्च दिवसान् परम ।
गम्भीरान् मेदसा जुष्टान्दुर्गन्धांश्चूर्णशोधनैः ॥७१॥
उपाचरेद्भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्त्तिजैः ।
शुद्धलक्षणयुक्तानां कषायं रोपणं हितम ॥७२॥
तत्र कार्य्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता ।
अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥७३॥
हिता रोपणवर्त्त्यस्तु कृता रोपणवर्त्तयः ।
अपेतपूतिमांसानां मांसस्थानामरोहताम ॥७४॥
कल्कः संरोहणः कार्य्यस्तिलजो मधुसंयुतः ।

स माधुर्य्यात्तथौष्ण्याच्च स्नेहाच्चानिलनाशनः ॥७५॥
कषायभावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तहृत् ।
औष्ण्यात्कषायभावाच्च तिक्तत्वाच्च कफे हितः ॥७६॥
शोधयेद्रोपयेच्चापि युक्तः शोधनरोपणे ।
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥७७॥
पूर्वाभ्यां सर्पिषा चापि युक्तः संरोपणो भवेत् ।
तिलवच्चवकल्कन्तु केचिदाहुर्मनीषिणः ॥७८॥
शमयेदविदग्धञ्च विदग्धमपि पाचयेत् ।
पक्वं भिनत्ति भिन्नञ्च शोधयेद्रोपयेत्तथा ॥७९॥
पित्तरक्तविषागन्तून् गम्भीरानपि च व्रणान् ।
रोपयेद्रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥८०॥
कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ।
कारयेद्रोपणं तैलं भेषजैस्तद्यथोदितैः ॥८१॥
अवन्ध्यानाञ्चलस्थानां शुद्धानाञ्च प्रदुष्यताम् ।
हिहरिद्रायुतां कुर्य्याद्रोपणार्थां रसक्रियाम् ॥८२॥
समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् ।
चूर्णं निदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा ॥८३॥
शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्त्तितः ।
सर्वव्रणानां सामान्ये नोक्तोदोषा विशेषतः ॥८४॥
एष आगमसिद्धत्वात्तथैव फलदर्शनात् ।
मन्त्रवत्सम्प्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥८५॥
स्वबुद्ध्या चापि विभजेत्कषायादिषु सप्तसु ।
भेषजानि यथायोगं यान्युक्तानि पुरा मया ॥८६॥
आद्ये द्वे पञ्चमूल्यौ तु गणौ यश्चानिलापहः

स वातदुष्टे दातव्यः कषायादिषु सप्तसु ॥८७॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः।
तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु ॥८८॥
आरग्वधादिस्तु गणो यश्चोक्तः परिकीर्त्तितः।
तौ देयौ कफदुष्टे तु संसृष्टे संयुता गणाः ॥८९॥
वातात्मकानुग्ररुजान् सास्रावानपि च व्रणान्।
सक्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत् ॥९०॥
परिशुष्काल्पमांसानां गम्भीराणां तथैव च।
कुर्य्यादुत्सादनीयानि सर्पींष्यालेपनानि च ॥९१॥
मांसाशिनाञ्च मांसानि भक्षयेद्विधिवन्नरः।
विशुद्धमनसस्तस्य मांसं मांसेन वर्द्धते ॥९२॥
उत्सन्नमृदुमांसानां व्रणानामवसादनम्।
कुर्य्याद् द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह ॥९३॥
कठिनानामसांसानां दुष्टानां मातरिश्वना।
मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत् ॥९४॥
वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत्।
व्रणेषु मृदुमांसेषु दारुणीकरणं हितम् ॥९५॥
धवप्रियङ्गुशोकानां रोहिण्याश्च त्वचस्तथा।
त्रिफलाधातकीपुष्परोध्रसर्जरसान् समान्।
कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत् ॥९६॥
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान्।
तथैव खलु दुःशोधान् शोधयेत् क्षारकर्म्मणा ॥९७॥
स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः।
निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्म्मणा ॥९८॥

दुरूढत्वात्तु शुक्लाना कृष्णकर्म हितं भवेत् ॥९९॥
भल्लातकान्वासयेत्तु क्षीरे प्राक्मूत्रभावितान्।
ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत् ॥१००॥
कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत्।
मुखं मुखेन सन्धाय गोमयैर्दाहयेत्ततः ॥१०१॥
यः स्नेहस्त्रवते तस्माद् ग्राहयेत शनैर्भिषक्।
ग्राम्यानूपशफान्दग्ध्वा सूक्ष्मचूर्णानि कारयेत् ॥१०२॥
तैलेनानेन संसृष्टं शुक्लमालेपयेद् व्रणम्।
भल्लातकविधानेन सारस्नेहांस्तु कारयेत् ॥१०३॥
ये च केचित् फलस्नेहा विधानं तेषु कीर्त्तितम्।
दुरूढत्वात्तु कृष्णाना पाण्डुकर्म हितं भवेत् ॥१०४॥
सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम्।
तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम् ॥१०५॥
नवं कपालिकाचूर्णं वैदुलं सर्जनाम च।
कासीसं मधुकञ्चैव क्षौद्रयुक्तं प्रलेपयेत् ॥१०६॥
कपित्थमुद्गते मांसे मूत्रेणाजेन पूरयेत्।
कासीसं रोचनां तुत्थं हरितालं मनःशिलाम् ॥१०७॥
वेणुनिर्लेखनं चापि प्रपुन्नाडरसाञ्जनम्।
अधस्तादर्जुनस्यैतन्मासं भूमौ निधापयेत् ॥१०८॥
मासादूर्द्धं ततस्तेन कृष्णमालेपयेद् व्रणम्।
कुक्कुटाण्डकपालानि कतकं मधुकं समम् ॥१०९॥
तथा समुद्रमण्डूकीमणिचूर्णञ्च दापयेत्।
गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणम् ॥११०॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।

रोमाख्येतेन जायन्ते लेपात्पाणितलेष्वपि ॥१११॥
चतुष्पदाना त्वग्रोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुन ॥११२॥
कासीस नक्तमालस्य पल्लवांश्चैव सहरेत् ।
कपित्थरसपिष्टानि रोमसञ्जनन परम् ॥११३॥
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति ।
क्षुरकर्त्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत् ॥११४॥
शङ्खचूर्णस्य भागौ द्वौ हरितालञ्च भागिकम् ।
शुक्तेन सह पिष्टानि लोमशातनमुत्तमम् ॥११५॥
तैलं भल्लातकस्याथ स्नुहीचीर तथैव च ।
प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमम् ॥११६॥
कदलीदीर्घवृन्ताभ्या भस्मालं लवण शमी ।
वीज शीतोदपिष्ट वा रोमशातनमाचरेत् ॥११७॥
आगारगोधिकापुच्छ रम्भाल वीजमैङ्गुदम् ।
दग्ध्वा तद्भस्मतैलाम्बु सूर्य्यपक्वं कचान्तकृत् ॥११८॥
वातदुष्टो व्रणो यस्तु रूक्षश्चात्यर्थवेदन. ।
अध काये विशेषेण तत्र वस्तिर्विधीयते ॥११९॥
मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे ।
तथैवार्त्तवदोषे च वस्तिरप्युत्तरो हितः ॥१२०॥
यस्माच्छुध्यति बन्धेन व्रणो याति च मार्दवम् ।
रोहत्यपि च नि शङ्कस्तस्माद् बन्धो विधीयते ॥१२१॥
स्थिराणामल्पमासानां रौक्ष्यादनुपरोहताम् ।
पत्रदान भवेत्कार्य्यं यथादोष यथर्त्तु च ॥१२२॥
एरण्डभूर्जपूतीकहरिद्राणान्तु वातजे ।

पत्रमाश्वबल यच्च काश्मरीपत्रमेव च ॥१२३॥
पत्राणि चीरवृक्षाणामौदकानि तथैव च।
दूषिते रक्तपित्ताभ्यां व्रणे दद्याद्विचक्षणः ॥१२४॥
पाठामूर्वागुडूचीनां काकमाचीहरिद्रयोः।
पत्रञ्च शुकनासाया योजयेत्कफजे व्रणे ॥१२५॥
अर्कपत्रमहि ऋभ्रमजाणं सुकुमारकम्।
अजन्तुजग्ध मृदु च पत्रं गुणवदुच्यते ॥१२६॥
स्नेहमौषधसारञ्च पट्टवन्काश्मरीकृतम्।
न दूषयति यत्पत्रं लेपस्योपरि दापयेत् ॥१२७॥
शैत्योष्णजननार्थाय स्नेहसंग्रहणाय च।
दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता ॥१२८॥
मक्षिका व्रणजातस्य निक्षिपन्ति यदा कृमीन्।
श्वयथुर्भक्षितं तैस्तु जायते भृशदारुणः ॥१२९॥
तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते।
सुरसादिर्हितस्तत्र धावने पूरणे तथा ॥१३०॥
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः।
हिता गोमूत्रपिष्टाश्च सेकः चारोदकेन वा ॥१३१॥
प्रच्छाद्य मांसपेश्या च कृमीनपहरेद्व्रणात्।
विंशतिं कृमिजातीस्तु वक्ष्याम्युपरिभागशः ॥१३२॥
दीर्घकालातुराणान्तु कृशानां व्रणशोषिणाम्।
बृंहणीयो विधिः सर्वः कार्य्योऽग्निं परिरक्षता ॥१३३॥
विषजुष्टस्य विज्ञानं विषनिश्चयमेव च।
चिकित्सितञ्च वक्ष्यामि कल्पे तु प्रतिभागशः ॥१३४॥
काण्डूमन्तः सशोफाश्च ये च जतूपरि व्रणाः।

शिरोविरेचनं तेषु विदध्यात् कुशलो भिषक् ॥१३५॥
रुजावन्तोऽनिलाविष्टा रूक्षा ये चोर्द्ध्वजत्रुजा
व्रणेषु तेषु कर्त्तव्यं नस्यं वैद्येन जानता ॥१३६॥
दोषप्रच्यवनार्थाय रुजादाहक्षयाय च।
जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च ॥१३७॥
शोधनो रोपणश्चैव व्रणस्य मुखजस्य वै।
उष्णो वा यदि वा शीतः कवलग्रह इष्यते ॥१३८॥
ऊर्द्ध्वजत्रुगतान् रोगान् व्रणांश्च कफवातजान्।
शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत् ॥१३९॥
क्षतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च।
सद्योव्रणेष्वायतेषु चौद्रसर्पिर्विधीयते ॥१४०॥
अवगाढास्त्वणुमुखा ये व्रणा शल्यपीडिताः।
निवृत्तहस्तोद्धरणा यन्त्रं तेषु विधीयते ॥१४१॥
लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः।
सर्वव्रणेभ्यो देयस्तु सदाहारो विजानता ॥१४२॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः।
रक्षाविधानैरुद्दिष्टैर्यमैः सनियमैस्तथा ॥१४३॥
षण्मूलोऽष्टपरिस्राही पञ्चलक्षणलक्षितः।
षष्ट्युपक्रमनिर्दिष्टैश्चतुर्भिः साध्यते व्रणः ॥१४४॥
योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया।
द्रव्याणां तत्समानानां तत्रावापो न दुष्यति ॥१४५॥
प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः।
यथोपपत्ति तत्रापि कार्य्यमेव चिकित्सितम् ॥१४६॥
गणोक्तमपि यद् द्रव्यं भवेद् व्याधावयौगिकम्।

तद्वद्वैद्यौगिकन्तु प्रचिपेद्ध्यकीर्त्तितम् ॥१४७॥
उपद्रवास्तु विविधा व्रणस्य व्रणितस्य च ।
तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः ॥१४८॥
ज्वरातिसारौ मूर्च्छा च हिक्काच्छर्दिररोचकः ।
श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य च ॥१४९॥
व्रणक्रियास्त्विमाश्च व्याधेनोक्तास्वपि क्रियाम् ।
भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते ॥१५०॥

---

## द्वितीयोऽध्यायः ।

अथात सद्योव्रणचिकित्सितं व्याख्यास्यामः ।
धन्वन्तरिर्धर्मभृतां वरिष्ठो वाग्विशारदः ।
विश्वामित्रात्मजमृषिं शिष्यं सुश्रुतमन्वशात् ॥१॥
नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः ।
नानारूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणम् ॥२॥
आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा ।
अर्द्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥३॥
शरावनिम्नमध्याश्च यवमध्यास्तथापरे ।
एवंप्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥४॥
दोषजा वा स्वयं भिन्ना न तु वैद्यनिमित्तजाः ।
भिषग् व्रणाकृतिज्ञो हि न मोहमधिगच्छति ॥५॥
अमन्दुर्दर्शरूपेषु व्रणेषु विकृतेष्वपि ।
अनेकाकृतिरागन्तुः स भिषग्भिः पुरातनैः ।
समासतो लक्षणतः षड्विधः परिकीर्त्तितः ॥६॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ।

दृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥७॥
तिरश्चीन ऋजुर्वापि यो व्रणश्चायतो भवेत्।
गात्रस्य पातनं चापि छिन्नमित्युपदिश्यते ॥८॥
कुन्तशक्त्यृष्टिखड्गाग्रविषाणादिभिराशय।
हतं किञ्चित् स्रवेत् तद्धि भिन्नलक्षणमुच्यते ॥९॥
स्थानान्यामाग्निपक्वाना मूत्रस्य रुधिरस्य च।
हृदुण्डुक फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥१०॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ॥११॥
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति।
मूर्च्छाश्वासतृडाध्मानमभक्तच्छन्द एव च ॥१२॥
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता।
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च।
हृच्छूल पार्श्वयोश्चापि विशेषश्चात्र मे शृणु ॥१३॥
आमाशयस्थे रुधिरे रुधिरं छर्दयेत् पुनः।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ॥१४॥
पक्वाशयगते चापि रुजो गौरवमेव च।
शीतता चाप्यधोनाभेः खेभ्यो रक्तस्य चागमः ॥१५॥
अभिन्नेऽप्याशयेऽन्त्राणां खे, सूक्ष्मै रन्ध्रपूरणम्।
पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवम् ॥१६॥
सूक्ष्मास्यशल्याभिहितं यदङ्ग त्वाशयादिना।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥१७॥
नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम्।
विषमं व्रणमङ्गे यत् तत् क्षतन्त्वभिनिर्दिशेत् ॥१८॥
प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतम्।

साखि तत्पिच्छित विद्यान्मज्जरक्तपरिप्लुतम् ॥१९॥
त्रिमतस्त्वन्यदङ्ग हि सङ्घर्षादन्यथापि वा ।
उषास्रावान्वितं तत् तु घृष्टमित्युपदिश्यते ॥२०॥
छिन्ने भिन्ने तथा विद्धे क्षते वास्रगतिस्रवेत् ।
रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशम् ॥२१॥
स्नेहपानं हितं तत्र तत्सेको विहितस्तथा ।
वेशवारैः सकृशरैः सुस्निग्धैश्चोपनाहनम् ॥२२॥
धान्यस्वेदांश्च कुर्वीत स्निग्धान्यालेपनानि च ।
वातघ्नौषधसिद्धैश्च स्नेहैर्बस्तिर्विधीयते ॥२३॥
पिच्चिते च विघृष्टे च नातिस्रवति शोणितम् ।
आगच्छति भृशं तस्मिन् दाहः पाकश्च जायते ॥२४॥
तत्रोष्मणो निग्रहार्थं तथा दाहप्रपाकयोः ।
शीतमालेपनं कार्य्यं परिषेकश्च शीतलः ॥२५॥
षट्स्वेतेषु यथोक्तेषु छिन्नादिषु समासतः ।
ज्ञेयं समर्पितं सर्वं सद्योव्रणचिकित्सितम् ॥२६॥
अत ऊर्द्धं प्रवक्ष्यामि छिन्नानान्तु चिकित्सितम् ॥२७॥
ये व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः ।
तान् सीव्येद्विधिनोक्तेन बध्नीयाद्गाढमेव च ॥२८॥
कर्णं स्थानादपहृतं स्थापयित्वा यथास्थितम् ।
सीव्येद्यथोक्तं तैलेन स्रोतश्चाप्यभितर्पयेत् ॥२९॥
कृकाटिकान्ते छिन्ने तु गच्छत्यपि समीरणे ।
सम्यङ्निवेश्य बध्नीयात् सीव्येच्चापि निरन्तरम् ॥३०॥
आजेन सर्पिषा चैव परिषेकन्तु कारयेत् ॥३१॥
उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः ।

शाखासु पतितास्तिर्य्यक् प्रहारान् विहतान् भ्रमम् ॥२२॥
सीव्येत् सम्यङ्निवेश्याशु सन्ध्यस्थीन्यनुपूर्वशः।
बद्धा वेल्लितकेनाशु ततस्तैलेन सेचयेत्।
चर्म्मणा गोफणाबन्धः कार्य्यो यो वा हितो भवेत् ॥२३॥
पृष्ठे व्रणो यस्य भवेदुत्तानं शाययेत्तु तम्।
अतोऽन्यथा चोरसिजे शाययेत् पुरुषं व्रणे ॥२४॥
छित्वा निःशेषतः शाखां दग्ध्वा तैलेन बुद्धिमान्।
बध्नीयात् कोशबन्धेन प्राप्तं कार्य्यञ्च रोपणम् ॥२५॥
चन्दनं पद्मकं रोध्रमुत्पलानि प्रियङ्गवः।
हरिद्रा मधुकञ्चैव पयः स्यादष्टमम् ॥२६॥
तैलमेभिर्विपक्वन्तु प्रधानं व्रणरोपणम् ॥२७॥
चन्दनं कर्कटाख्या च सहेमाख्याह्वयाऽमृता।
हरेणवो मृणालञ्च त्रिफला पद्मकोत्पलम् ॥२८॥
न्यग्रोधाद्यं विपक्वमेतद्वा पयसान्वितम्।
तैलं विपक्वं सेकार्थं हितं तु व्रणरोपणे ॥२९॥
अत ऊर्द्ध्वं प्रवक्ष्यामि भिन्नानान्तु चिकित्सितम् ॥४०॥
भिन्नं नेत्रमकर्मण्यमभिन्नं लम्बते तु यत्।
तन्निवेश्य यथास्थानमव्याविद्धसिरं शनैः ॥४१॥
पीडयेत्पाणिना सम्यक् पद्मपत्रान्तरेण तु।
ततोऽस्य तर्पणं कार्य्यं नस्यं चानेन सर्पिषा ॥४२॥
आजं घृतं क्षीरपात्रं मधुकं चोत्पलानि च।
जीवकर्षभकौ चैव पिष्ट्वा सर्पिर्विपाचयेत् ॥४३॥
सर्वनेत्राभिघाते तु सर्पिरेतत् प्रशस्यते ॥४४॥
उदरान्मेदसो वर्त्तिर्निर्गता यस्य देहिनः।

कषायभस्ममृत्कीर्णां बद्ध्वा सूत्रेण सूत्रवित् ।
अग्नितप्तेन शस्त्रेण छिन्द्यान्मधुसमायुतम् ॥४५॥
बद्ध्वा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते ।
स्नेहपानादृते चापि पयःपानं विधीयते ॥४६॥
शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया ।
चित्रासमन्वितञ्चैव रुजादाहविनाशनम् ॥४७॥
आटोपो मरणं वा स्याच्छूलो वाऽक्लिद्यमानया ।
स्वेदोष्मौ च यत्तैलं वक्ष्यते तच्च योजयेत् ॥४८॥
त्वचोऽतीत्य शिरादीनि भित्त्वा वा परिहृत्य वा ।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान् ॥४९॥
तत्रान्तर्लोहितं पाण्डु शीतपादकराननम् ।
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्जयेत् ॥५०॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम् ॥५१॥
आस्थापनञ्च निःस्नेहं कार्य्यं मूत्रैर्विशोधनैः ।
यवकोलकुलत्थानां निःस्नेहेन रसेन च ॥५२॥
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ।
अतिनिस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक् ॥५३॥
स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः ।
अनुपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः ॥५४॥
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नान्यथा भवेत् ।
पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ॥५५॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ।
प्रवेशयेत् कृत्तनखो घृतेनाक्तं शनैः शनैः ॥५६॥

प्रवेशयेत् चीरसिक्तं शुष्कमन्त्रं घृताप्लुतम ।
अङ्गुल्याभिमृशेत्कण्ठं जलेनोद्वेजयेदपि ॥५७॥
हस्तपादेषु संगृह्य समुत्थाप्य महाबला. ।
भवत्यन्त.प्रवेशस्तु यथा निर्हुनुयुस्तथा ।
तथान्त्राणि विशन्त्यन्तः स्वाकुला पोडयन्ति च ॥५८॥
व्रणात्यल्पत्वाद् बहुत्वाद्वा दुष्प्रवेशम्भवेत्तु यत् ।
तद्दापाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥५९॥
यथास्थान निविष्टे च व्रण सीव्येदतन्द्रितः ।
स्थानादपेतमादत्ते प्राणान् गुम्फितमेव वा ॥६०॥
वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत् ।
घृतं पिबेत् सुखोष्णञ्च चित्रातैलसमन्वितम् ॥६१॥
मृदुक्रियार्थं शकृतो वायोश्चाधःप्रवृत्तये ।
ततस्तैलमिदं कुर्य्याद्रोपणार्थं चिकित्सकः ॥६२॥
त्वचोऽश्वकर्णधवयोर्मोचकीमेषशृङ्गयो ।
शल्लक्यर्जुनयोश्चापि विदार्य्याः चीरिणां तथा ।
बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत् ॥६३॥
व्रण संरोपयेत्तेन वर्षमात्र यतेत च ॥६४॥
पादौ निरस्तमुष्कस्य जलेन प्रोच्य चाक्षिणी ।
प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत्ततः परम् ॥६५॥
कार्य्यो गोफणिकाबन्धः कव्यामावेश्य वल्कलम् ।
न कुर्य्यात् क्लेदसेकञ्च तेन क्लिद्यति हि व्रणः ॥६६॥
कालानुसार्य्यागुर्वेलाजातीचन्दनपद्मकैः ।
[illegible]दाद्यैर्घृतातुल्यैस्तैल कुर्वीत रोपणम ॥६७॥
शिरसोऽपहृते शुष्के वालवर्त्तिं प्रवेशयेत् ।

बालवर्त्यामदत्तायां मस्तुलुङ्गं व्रणात् स्रवेत् ॥६८॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत् ॥६९॥
व्रणे रोहति चैवैव शनैर्बालमपक्षिपेत्।
गात्राद् व्यपहृतोऽन्यस्मात् स्नेहवर्त्तिं प्रवेशयेत्।
क्षते निःशोणिते चापि विधिः सद्यःक्षते हितः ॥७१॥
दूरावगाढाः सूक्ष्मास्युर्ये व्रणास्तान् विशोणितान्।
छित्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत् ॥७२॥
समङ्गा रजनी पद्मा त्रिवर्गं तुल्यमेव च।
विडङ्गं कटुका पथ्या गुडूचीं सकरञ्जिकाम्।
संहृत्य विपचेत्काले तैलं रोपणमुत्तमम् ॥७३॥
तालीशं पद्मकं मांसी हरेणुर्गुरुचन्दनम्।
हरिद्रे पद्मबीजानि सोशीरं मधुकञ्च तैः।
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ॥७४॥
च्युते घृतविधिः कार्य्यः पिच्चिते भग्नवद्विधिः ॥७५॥
घृष्टे रुजो निगृह्याशु चूर्णैरुपचरेद् व्रणम्।
विश्लिष्टदेहं पतितं मथितं हतमेव च ॥७६॥
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनम्।
अयमेव विधिः कार्य्यः क्षीणे मर्म्महते तथा ॥७७॥
रोपणे सपरीषेके पाने च व्रणिनां सदा।
तैलं घृतं वा संयोज्यं शरीरस्यानपेक्ष्य हि ॥७८॥
घृतानि यानि वक्ष्यामि यत्र पित्तविद्रधौ।
सद्योव्रणेषु देयानि तानि वैद्येन जानता ॥७९॥
सद्यश्छिन्नव्रणं वैद्यः सशूलं परिषेचयेत्।
सर्पिषा नातिशीतेन बलातैलेन वा पुनः ॥८०॥

समङ्गां रजनीं पद्मां पथ्यां तुत्थं सुवर्च्चलाम्।
पद्मकं रोध्रमधुकं विडङ्गानि हरेणुकम्॥८१॥
तालीशपत्रं बलदं चन्दनं पद्मकेशरम्।
मञ्जिष्ठां क्षीरकाकोलीं पौरिशं चापि पद्मवान्॥८२॥
पियालबीजं तिन्दुक्यास्त्वचमाम्रफलानि च।
यथालाभं समाहृत्य तैलमेभिर्विपाचयेत्॥८३॥
सद्योव्रणानां सर्वेषामदुष्टानाञ्च रोपणम्।
कषायमधुराः शीताः क्रियाः स्निग्धाश्च शोधयेत्॥८४॥
सद्योव्रणानां सप्ताहं पश्चात् पूर्वोक्तमाचरेत्।
दुष्टव्रणेषु कर्त्तव्यमूर्द्ध्वं धावनं शोधनम्॥८५॥
विशोषणं तथाहारः शोणितस्य च मोक्षणम्।
कषायं राजवृक्षादौ सुरसादौ च धावनम्॥८६॥
तयोरेव कषायेण तैलं शोधनमिष्यते।
क्षारकल्पेन वा तैलं क्षारद्रव्येण साधितम्॥८७॥
द्रवन्ती चिरबिल्वश्च दन्ती चित्रकमेव च।
पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च॥८८॥
त्रिवृत्तेजोवती नीली हरिद्रे सैन्धवं तिलाः।
भूमीकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया॥८९॥
मेघावी जालिनी चैव मदयन्ती मृगादनी।
सुधामूर्व्वार्ककीटारिहरितालकरञ्जिकाः॥९०॥
यथोपपत्ति कर्त्तव्यं तैलमेभिस्तु शोधनम्।
घृतं वा यदि वा प्राप्तं कल्काः संशोधनास्तथा॥९१॥
सैन्धवं त्रिवृदेरण्डपत्रकल्कास्तु वातिके।
निशाहरिद्रामधुककल्काः पैत्ते तिलैर्युताः॥९२॥

कफजे तिलतैलाक्ता दन्तीसर्जिकचित्रका ।
दुष्टव्रणविधिः कार्य्यो मेहकुष्ठव्रणेष्वपि ॥८३॥
षड्विधः प्राक् प्रदिष्टो य सद्योव्रणविनिश्चयः ।
नात शक्य पर वक्तुमपि निखिलवादिभिः ॥८४॥
उपसर्गैर्निपातैश्च तत्तु पण्डितमानिन. ।
केचित्प्रयोज्य भाषन्ते बहुधा मानगर्विता: ॥८५॥
बहु तद्भाषित तेषा षट्स्वेवावतिष्ठते ।
विशेषा इव सामान्ये षट्त्वन्तु परमं मतम् ॥८६॥

---

## तृतीयोऽध्यायः ।

अथातो भग्नानां चिकित्सितं व्याख्यास्याम ।

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।
उपद्रवैर्वा जुष्टस्य भग्न कृच्छ्रेण सिध्यति ॥१॥
लवण कटुक क्षारमम्ल मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रुक्षान्नमेव च ॥२॥
शालिर्मांसरस: क्षीर सर्पिर्यूष सतीनजः ।
बृ हण चान्नपान स्याद्देयं भग्नाय जानता ॥३॥
मधूकोडुम्बराश्वत्थपलाशककुभत्वच ।
वशसर्जवटानां वा कुशार्थमुपसहरेत् ॥४॥
आलेपनार्थं मञ्जिष्ठा मधुक रक्तचन्दनम् ।
शतधौतघृतोन्मिश्र शालिपिष्टञ्च सहरेत् ॥५॥
सप्ताहादथ सप्ताहात्सौम्येष्वृतुषु बन्धनम् ।
साधारणेषु कर्त्तव्य पञ्चमे पञ्चमेऽहनि ॥६॥
आग्नेयेषु त्र्यहात् कुर्य्याद्भग्नदोषवशेन वा ।

तत्रातिशिथिल बद्धे सन्धिस्थैर्य्यं न जायते ॥७॥
गाढ नापि त्वगादीना शोफो रुक्पाक एव च।
तस्मात् साधारण बन्ध भग्ने शसन्ति तद्विद: ॥८॥
न्यग्रोधादिकषायैन्तु सुशीत परिषेचने।
पञ्चमूलीविपक्वन्तु चीर कुर्य्यात् सवेदने ॥९॥
सुखोष्णमवचार्य्यं वा चक्रतैल विजानता।
विभज्य काल दोषञ्च दोषघ्नौषधसयुतम् ॥१०॥
परिषेक प्रदेहञ्च विदध्याच्छीतमेव च।
गृष्टिचीर ससर्पिष्क मधुरौषधसाधितम् ॥११॥
शीतल लाचया युक्त प्रातर्भग्न पिबेन्नर.।
सत्रणस्य तु भग्नस्य व्रण सर्पिर्मधूत्तरै. ॥१२॥
प्रतिसार्य्य कषायैस्तु शेष भग्नवदाचरेत्।
प्रथमे वयसि त्वेव भग्न सुकरमादिशेत् ॥१३॥
अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके।
प्रथमे वयसि त्वेव मासात्सन्धि स्थिरो भवेत् ॥१४॥
मध्यमे द्विगुणात्कालादुत्तरे त्रिगुणात् स्मृत'।
अवनामितमुन्नह्येदुन्नत चावपीडयेत् ॥१५॥
आञ्छेदतिचिप्तमधो गतं चोपरि वर्त्तयेत्।
आञ्छनै पीडनैश्चैव सङ्क्षेपैर्बन्धनैस्तथा ॥१६॥
सन्धीन् शरीरे सर्वांस्तु चलानप्यचलानपि।
एतैस्तु स्थापनोपायै स्थापयेन्मतिमान् भिषक् ॥१७॥
उत्पिष्टमथ विश्लिष्ट सन्धि वैद्यो न घट्टयेत्।
तस्य शीतान् परीषेकान् प्रदेहाश्चावचारयेत् ॥१८॥
अभिघाते हृते सन्धि स्वा याति प्रकृतिं पुन.।

घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि ॥१९॥
पट्टोपरि कुशां दत्त्वा यथावद्वन्धमाचरेत् ।
प्रत्यङ्गबन्धस्य विधिरत ऊर्द्ध्वं प्रवक्ष्यते ॥२०॥
नखसन्धि समुत्पिष्टं रक्तानुगतमारया ।
अवमृश्य सुते रक्ते शालिपिष्टेन लेपयेत् ॥२१॥
भग्नां वा सन्धिमुक्तां वा स्थापयित्वाङ्गुलीं समम् ।
अणुनावेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥२२॥
अभ्यज्य सर्पिषा पादं तलभग्नं क्रमोत्तरम् ।
वस्त्रपट्टेन बध्नीयान्न च व्यायाममाचरेत् ॥२३॥
अभ्यज्यायामयेज्जङ्घामूरुञ्च सुसमाहितः ।
दत्त्वा द्रुमत्वचः शीता वस्त्रपट्टैर्वेष्टयेत् ॥२४॥
अतिमात्रक्रियोगेन आञ्छेदूर्वस्थि निर्गतम् ।
स्फुटितं पिच्चितं चापि बध्नीयात् पूर्ववद्भिषक् ॥२५॥
आञ्छेदूर्द्ध्वमधो वापि कटीभग्नन्तु मानवम् ।
ततः स्थानस्थिते सन्धौ वस्तिभिः समुपाचरेत् ॥२६॥
पर्शुकास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः ।
दक्षिणास्वथवा वामास्वनुमृज्य निबन्धनीः ॥२७॥
ततः कवलिकां दत्त्वा वेष्टयेत् सुसमाहितः ।
तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरम् ॥२८॥
मुषलेनोत्क्षिपेत् कक्षामंससन्धौ विसङ्गते ।
स्थानस्थितञ्च बध्नीत स्वस्तिकेन विचक्षणः ॥२९॥
कूर्परन्तु तथा सन्धिमङ्गुष्ठेनानुमार्जयेत् ।
अनुमृज्य ततः सन्धिं पीडयेत् कूर्परान्तरम् ॥३०॥
प्रसार्य्याकुञ्चयेच्चैनं स्नेहसेकञ्च दापयेत् ।

एवं जानुनि गुल्फे च मणिबन्धे च कारयेत् ॥२१॥
उभे तले समे कृत्वा तलभग्नस्य देहिनः।
बध्नीयाद्दामतैलेन परिषेकञ्च कारयेत् ॥२२॥
प्राग्गोमयमय पिण्ड धारयेन्मृण्मय ततः।
हस्ते जातबले चापि कुर्य्यात्पाषाणधारणम् ॥२३॥
सवक्षुत्रमयेत् खिन्नमचक मुषलेन तु।
तथोन्नत पीड़येच्च बध्नीयाद्गाढमेव च ॥२४॥
जत्रवद्वापि कर्त्तव्य बाहुभग्नचिकित्सितम्।
ग्रीवाया तु विवृत्तायां प्रविष्टायामधोऽपि च ॥२५॥
अवटावथ हन्वोश्च प्रगृह्योन्नमयेन्नरम्।
तथा कुशान् समं दत्त्वा वस्त्रपट्टेन वेष्टयेत् ॥२६॥
उत्तान शाययेच्चैव सप्तरात्रमतन्द्रित।
हन्वस्थिनी समानीय हनुसन्धौ विसंहते ॥२७॥
स्वेदयित्वा स्थिते सम्यक् पञ्चाङ्गीं वितरेद्भिषक्।
वातघ्नमधुरैः सर्पिः सिद्ध नस्ये च पूजितम ॥२८॥
अभग्नांश्चलितान् दन्तान् सरक्तानवपीडयेत्।
तरुणस्य मनुष्यस्य शीतैराक्षेपयेद्बहिः ॥२९॥
सिक्ताम्बुभिस्तत. शीतै' सन्धानीयैरुपाचरेत्।
उत्पलस्य च नालेन क्षीरपान विधीयते ॥३०॥
जीर्णस्य तु मनुष्यस्य वर्जयेच्चलितान् द्विजान्।
नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया ॥३१॥
पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ सम्प्रवेशयेत्।
तत' पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥३२॥
भग्न कर्णञ्च बध्नीयात् सम कृत्वा घृतप्लुतम्।

सद्य घृतविधानञ्च तत पश्चात्समाचरेत् ॥४३॥
मस्तुलुङ्गादिना भिन्ने कपाले मधुसर्पिषी।
दत्त्वा ततो निबध्नीयात्सप्ताहञ्च पिबेद् घृतम् ॥४४॥
पतनादभिघाताद्वा शूनमङ्ग यदक्षतम्।
शीतान् प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत् ॥४५॥
अथ जङ्घोरुभग्नाना कपाटशयन हितम्।
कीलका बन्धनार्थञ्च पञ्च कार्य्या विजानता ॥४६॥
यथा न चलन तस्य भग्नस्य क्रियते तथा।
सन्धेरुभयतो द्वौ द्वौ तले चैकश्च कीलकः ॥४७॥
श्रोण्या वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा।
भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् ॥४८॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धान् स्विन्नान्मृदूकृतान्।
उक्तैर्विधानैर्बुद्ध्या च सम्यक् प्रकृतिमानयेत् ॥४९॥
काण्डभग्ने प्ररूढे तु विषमोल्वणसंहिते।
आपीड्य शमयेद्भग्न ततो भग्नवदाचरेत् ॥५०॥
कल्पयेन्निर्गत शुष्क व्रणान्तेऽस्थि समाहित।
सन्ध्यन्ते वा क्रिया कुर्य्यात्सव्रणे व्रणभग्नवत् ॥५१॥
ऊर्द्ध्वकाये तु भग्नाना मस्तिक्य कर्णपूरणम्।
घृतपान हित नस्य प्रशाखास्वनुवासनम् ॥५२॥
अत ऊर्द्ध्व प्रवक्ष्यामि तैल भग्नस्य साधकम् ॥५३॥
रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवा दिवा शोषयित्वा गवा क्षीरेण भावयेत् ॥५४॥
तृतीय सप्तरात्र वा भावयेन्मधुकाम्बुना।
ततः क्षीरे पुन पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥५५॥

काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा ।
कुष्ठं सर्जरसं मांसी सुरदारु सचन्दनम् ॥५६॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थञ्च कर्त्तव्यं सर्वगन्धशृतं पयः ॥५७॥
चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् ।
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥५८॥
रोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिणम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥५९॥
पिष्ट्वा शृङ्गाटकञ्चैव पूर्वोक्तान्यौषधानि च ।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥६०॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षघाते तालुशोषे तथार्दिते ॥६१॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥६२॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥६३॥
मुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥६४॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः ।
त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह ॥६५॥
वसां दत्त्वा यथालाभं क्षीरे दशगुणे पचेत् ।
[illegible]होकरमिदं चाशु कुर्य्याद्भग्नप्रसाधनम् ॥६६॥
पानाभ्यञ्जनस्नेह[illegible] [illegible]कर्माणि सेचने ।
[illegible] [illegible] [illegible] तथा भिषक् ॥६७॥

पक्वमांससिरास्नायु तद्धि कृच्छ्रेण सिध्यति।
भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्बणम्।
सुखचेष्टाप्रचारञ्च संहितं सम्यगादिशेत्॥६८॥

---

चतुर्थोऽध्यायः।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः।
आमाशयगते वाते छर्दयित्वा यथाक्रमम्।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना॥१॥
चित्रकेन्द्रयवै पाठा कटुकातिविषाभया।
वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः॥२॥
पक्वाशयगते चापि देयं स्नेहविरेचनम्।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः॥३॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः।
श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहा क्रमः॥४॥
स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च।
त्वङ्मांसासृक्सिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम्॥५॥
स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वायावतन्द्रितः॥६॥
निरुद्धेऽस्थनि वा वायौ पाणिमन्थेन दारिते।
नाडीं दत्त्वास्थनि भिषक् चूषयेत्पवनं बली॥७॥
शुक्रप्राप्तेऽनिले कार्य्यं शुक्रदोषचिकित्सितम्।
अवगाहकुटीकर्षुप्रस्तराभ्यङ्गवस्तिभिः॥८॥
जयेत्सर्वाङ्गजं वातं सिरामोक्षैश्च बुद्धिमान्।
एकाङ्गगञ्च मतिमान् शृङ्गैश्चावस्थितं जयेत्॥९॥

बलासपित्तरक्तैस्तु संसृष्टमविरोधिभिः ।
सुशिवाते त्वसङ्कोच कुर्य्यात् तु बहुशो भिषक् ॥१०॥
दिह्याच्च लवणागारधूमैस्तैलसमन्वितैः ।
पञ्चमूलीश्रुत चीर फलाम्लो रस एव च ॥११॥
सुस्निग्धो धान्ययूषो वा हितो वातविकारिणाम् ।
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुत ॥१२॥
सानूपोदकमांसस्तु सर्वस्नेहसमन्वित ।
सुखोष्ण सष्टलवण शाल्वण' परिकीर्त्तित' ॥१३॥
तेनोपनाह कुर्वीत सर्वदा वातरोगिणाम् ।
कुञ्चमान रुजार्त्तं वा गात्र' स्तब्धमथापि वा ॥१४॥
गाढ़ पट्टैर्निबध्नीयात् चौमकार्पासकौशिकैः ।
विडालनकुलोष्ट्राणा चर्मगोधा मृगस्य वा ॥१५॥
प्रवेशयेद्वा सभ्यक्त शाल्वणेनोपनाहितम् ।
स्कन्धवक्षस्त्रिकप्राप्त वायु मन्यागत तथा ॥१६॥
वमन हन्ति नस्यञ्च कुशलेन प्रयोजितम् ।
शिरोगतं शिरोवस्तिर्हन्ति वासृग्विमोचणम् ॥१७॥
स्नेहमावासहस्रन्तु धारयेत् तत्र योगतः ।
सर्वाङ्गगतमेकाङ्गस्थित वापि समीरणम् ॥१८॥
रुणद्धि केवलो वस्तिर्वायुवेगमिवाचलः ।
स्नेहस्वेदस्तथाभ्यङ्गो वस्तिः स्नेहविरेचनम् ॥१९॥
शिरोवस्तिः शिरःस्नेहो धूम स्नैहिक एव च ।
सुखोष्ण स्नेहगण्डूषो नस्य स्नैहिकमेव च ॥२०॥
रसा चीराणि मांसानि स्नेहाः स्नेहान्वितञ्च यत् ।
भोजनानि फलाम्लानि स्निग्धानि लवणानि च ॥२१॥

सुखोष्णाश्च परीषेकास्तथा सवाहनानि च ।
कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च ॥२२॥
कौशेयौर्णिकरोमाणि कार्पासानि गुरूणि च ।
निवातातपयुक्तानि तथा गर्भगृहाणि च ॥२३॥
मृद्वी शय्याग्निसन्तापो ब्रह्मचर्य्यं तथैव च ।
समासेनैवमादीनि योज्यान्यनिलरोगिषु ॥२४॥

त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गाना-मक्षसमा कल्का विल्वमात्र कल्कस्तिल्वकमूलकम्पिल्लकयोस्त्रिफलारसदधि पात्रे द्वे द्वे घृतपात्रमेकं तदैकध्य संसृज्य विपचेत्तिल्वकसर्पिरेतत् स्नेहविरेचनमुपदिशन्ति वातरोगेषु । तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्य ॥२५॥

तिलपरिपीड़नोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वावक्षुद्य महति कटाहे पानीये आप्लाव्य क्वाथयेत्तत. स्नेहमम्बुपृष्ठाद् यदुदेति तत् सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापञ्च स्नेहपाककल्पेन विपचेदेतदणुतैलमुपदिशन्ति वातरोगिषु अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम् ॥२६॥

अथ महापञ्चमूलकाष्ठैर्बहुभिरवदग्धावनिप्रदेशे प्रसितमुषितमेकरात्रमुपशान्तेऽग्नावपोह्य भस्म निहत्ता भूमि विदारिगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसाभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात्तामादायोष्णोदकेन महति कटाहेऽभ्यासिच्य तत्र यत्तैलमुत्तिष्ठेत्तत्पाणिभ्या पर्य्यादाय स्वनुगुप्त निदध्यात् । ततस्तैल वातहरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रशाक

विपचेद्यावता कालेन शक्नोति पक्तुं प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धा वातघ्नानि च तस्मिन् सिध्यति शङ्खानाध्मापयेद् दुन्दुभिं घातयेच्छत्रं धारयेद् बालव्यजनैश्च वीजयेद् ब्राह्मणसहस्रं भोजयेत् तत्साधु सिद्धमवतार्य्य सौवर्णे राजते मृण्मये वा पात्रे स्वनुगुप्तं निदध्यादेतत् सहस्रपाकमप्रतिवारवीर्य्यं राजार्हं तैलमेवं भागशतविपक्वं शतपाकम ॥२७॥

गन्धर्वहस्तककुष्मकनक्तमालाटरूषकपूतीकारग्वधचित्रकादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोमयाग्निर्दाहयेदेतत्पत्रलवणमुपदिशन्ति वातरोगेषु। पत्रलवणम ॥२८॥

एवं स्नुहीकाण्डवार्त्ताकुशिग्रुलवणानि सङ्क्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोमयाग्नि[illegible]येदेतत् स्नेहलवणमुपदिशन्ति वातरोगेषु। काण्डलवणम् ॥२९॥

गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयीकृष्णगन्धानीपनिर्दहन्यटरूषकनक्तमालक-पूतिकबृहतीकण्टकारिकाभल्लातकेङ्गुदीवैजयन्ती-कदलीवर्षाभूक्षीवेरक्षुरकेन्द्रवारुणीश्वेतमोक्षकाशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह संसृष्टं पूर्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेदेतत् प्रतिवापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्वा। इत्येतत्कल्याणकलवणं वातरोगेषु गुल्मप्लीहाग्निसङ्गाजीर्णार्शोऽरोचकार्त्तानां कासादिभिरुपद्रुतानां चोपदिशन्ति पानभोजनेष्विति ॥३०

भवति चात्र ।

स्निग्धत्वादुष्णभावात्तोयोगाच्च विपाचनात् ।
तस्मात्सपाचनश्चेह वातरोगेषु शस्यते ॥ २१ ॥

---

## पञ्चमोऽध्यायः ।

अथातो महावातव्याधिचिकित्सितं व्याख्यास्यामः ।

द्विविधं वातशोणितमुक्तं उत्तानमवगाढञ्चेत्येके भाषन्ते तत्तु न सम्यक् । कुतः उत्तानं भूत्वा कालान्तरेणावगाढीभवन्ति । तस्मात् द्विविधम् ॥१॥

तत्र बलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद्वातरक्तनिमित्तां वेदनां जनयतीति वातरक्तं तत्तु पूर्वं हस्तपादयोरवस्थानं कृत्वा पश्चाद्देहं व्याप्नोति । तस्य पूर्वरूपाणि तोददाहकण्डूशोफस्तम्भत्वक्पारुष्यसिरास्नायुधमनिस्पन्दनसक्थिदौर्बल्यानि श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात्पाणिपादतलाङ्गुलिगुल्फप्रभृतिषु । तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्तस्तस्य लक्षणमुक्तं तत्राप्रतिकारिणो वैकल्यं भवति ॥२॥

भवति चात्र ।

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि वातरक्तं प्रकुप्यति ॥३॥

तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरणसङ्कोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तं चोपक्रमेत् ॥४॥

तत्रादावेव बहुवातरुधिराज्ञानाज्ञाहते मार्गावरणाद् दुष्टशोणितमसक्कदल्पाल्पमवसिञ्चेद्वातकोपभयात्ततो वमनादिभिरुपक्रमैरुपपाद्य प्रतिसंसृष्टभक्तं वातप्रबले पुराणघृतं पाययेदजाक्षीरं चार्द्धतैलं मधुकाक्षयुक्तं शृगालविन्नासिद्धं वा शर्करामधुमधुरं शुण्ठीशृङ्गाटककशेरुकासिद्धं वा। श्यामारास्नावृषवीशृगालविन्नापीलुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा। द्विपञ्चमूलीक्वाथाष्टगुणसिद्धेन च पयसा मधुकमेषशृङ्गीश्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत शतावरीमयूरकमधुकक्षीरविदारीबलातिबलातृणपञ्चमूलीक्वाथसिद्धं वा काकोल्यादिप्रतिवापं बलातैलं शतपाकञ्चेति। वातहरमूलसिद्धेन च पयसा परिषेचनमम्लेन वा कुर्वीत। यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेहः कार्य्यः ॥५॥

तत्र चूर्णितेषु यवगोधूमतिजमुद्गमाषेषु प्रत्येकशः काकोली-क्षीरकाकोली-जीवकर्षभकबलातिबलाविसमृणालशृगालविन्नामेषशृङ्गीपियालशर्कराकशेरुकसुरभिवचाकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः स्नैहिकफलसारोत्कारिका वा। चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु विचित्रमत्स्यपिशितवेशवारो वा। विल्वपेशिकातगरदेवदारुसरलारास्नाहरेणुकुष्ठशतपुष्पासुरादधिमस्तुयुक्त उपनाहः। मातुलुङ्गाम्लसैन्धवघृतमिश्रो मधुशिग्रुमूलमालेपे तिलकल्कश्चेति वातप्रबले ॥६॥

पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुकचन्दनकाश्मर्य्यकषायं शर्करामधुमधुरं पाययेत्। शतावरीमधुकपटोल-

त्रिफलाकटुरोहिणीकषायं गुडूचीकषायं वा पित्तज्वरहर-चन्दनादिकषायं शर्करामधुमधुरं तिक्तकषायसिद्धं वा सर्पिः ॥७॥

विसमृणालभद्रश्रियपद्मककषायेणार्द्रक्षीरेण परिषेकः। क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषायमिश्रैर्मस्तु-मधुधान्याम्लैर्जीवनीयसिद्धेन वा सर्पिषाभ्यङ्गः ॥८॥

शतधौतघृतेन वा काकोल्यादिकल्कविपक्वेन वा सर्पिषा शालिषष्टिकनलवञ्जुलतालीशशृङ्गाटकगन्धोद्भवगौ-रीगैरिकशैवलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः। वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्यः। रक्त-प्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत् शीततमाश्च प्रदेहाः कार्या इति ॥९॥

श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत्। त्रिफलाकषायं वा मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वा सक्षौद्रमूत्रं तोयेन गुडहरीतकीं वा भक्षयेत् ॥१०॥

तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथैः परिषेकः। आरग्वधादिकषायैर्वोष्णैः। मस्तुमूत्रसुराशुक्तमधुकसारिवा-पद्मकसिद्धं वा घृतमभ्यङ्गः। तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रुमिश्राणि क्षारमूत्रपिष्टः प्रदेहः ॥११॥

श्वेतसर्षपकल्कः तिलाश्वगन्धाकल्कः प्रियालसेलुक-पित्थत्वक्कल्कः मधुशिग्रुपुनर्नवाकल्कः ज्योतिष्मतीपृथक्-पर्णीबृहतीकल्कः इत्येते पञ्च प्रदेहाः सुखोष्णाः क्षारोदक-पिष्टाः ॥१२॥

शालपर्णी पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तर्पणमिश्रा.। संसर्गे सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्य्यात् ॥१३॥

सर्वेषु गुडहरीतकीं वा सेवेत पिप्पलीर्वा क्षीरपिष्टा वारिपिष्टा वा पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत् क्षीरौदनाहारो दशरात्र भूयश्चापकर्षयेदेव यावत्पञ्चदश चेति तदेतत्पिप्पलीवर्द्धमानकं वातशोणितविषमज्वरारोचकपाण्डुरोग प्लीहोदरार्शः-कासश्वासशोफशोषाग्निसादहृद्रोगोदराण्युपहन्ति ॥१४॥

जीवनीयप्रतीवापं सर्पिः पयसा पाचयित्वाऽभ्यञ्जेत् ॥१५॥

सहासहदेवाचन्दनमूर्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुकशतपुष्पाकुष्ठानि क्षीरपिष्ट. प्रदेहो घृतमण्डयुक्तः ॥१६॥

सैरेयकाटरूषकबलातिबलाजीवन्तीसुषवीकल्को वा छागक्षीरपिष्ट ॥१७॥

काश्मर्य्यमधुकतर्पणकल्को वा मधूच्छिष्टमञ्जिष्ठासर्जरससारिवाक्षीरसिद्ध पिण्डतैलमभ्यङ्ग. ॥१८॥

सर्वेषु च पुराणघृतमामलकरसविपक्वं वा पानार्थे। जीवनीयसिद्ध परिषेकार्थे काकोल्यादिक्वाथकल्कसिद्ध वा सुषवीक्वाथसिद्ध वा कारवेल्लकक्वाथमात्रसिद्ध वा। बलातैल वा परिषेकावगाहवस्तिभोजनेषु शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेण वानम्लेन ॥१९॥

शोणितमोक्षणञ्चाभीक्ष्णं कुर्वीत। उच्छ्रितदोषे च वमनविरेचनास्थापनानुवासनकर्म कर्त्तव्यम् ॥२०॥

भवन्ति चात्र।

एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखम्।
वातासृक् साध्यते वैद्यैर्याप्यते तु चिरोत्थितम् ॥२१॥
उपनाहपरीषेकप्रदेहाभ्यञ्जनानि च।
शरणान्यप्रवातानि मनोज्ञानि महान्ति च ॥२२॥
मृदुगण्डोपधानानि शयनानि सुखानि च।
वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥२३॥
व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम्।
दिवास्वप्नमभिष्यन्दि गुरु चान्नं विवर्जयेत् ॥२४॥

अपतानकिनमस्रस्ताक्षमवक्रभ्रु वमस्तब्धमेढ्रमस्वेदनमवेपनमप्रलापिनमखट्वापातिनमबहिरायामिनं चोपक्रमेत् ॥२५॥

तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीडनेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थम्। अनन्तरञ्च विदारिगन्धादिक्वाथमांसरसक्षीरदधिपक्वं सर्पिरच्छं पाययेत् तथा हि नातिमात्रं वायुः प्रसरति। ततो भद्रदार्व्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थमानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्र्य सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापं तदेतत्त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विदध्यात्। यथोक्तैश्च स्वेदविधानैः स्वेदयेत्। बलीयसि वाते सुखोष्णतुषबुसकरीषपूर्णे कूपे निदध्यादामुखात्।

तप्तायां वाङ्गारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्। कृशरावेशवारपायसैर्वा स्वेदयेत् ॥२६॥

मूलकोरुवूकस्कूर्जिकार्कसप्तलाशङ्खिनीस्वरससिद्धं तैलमपतानकिना परिषेकादिषूपयोज्यम्। अभुक्तवता पीतमम्लं दधिमरिचवचायुक्तमपतानकं हन्ति तैलसर्पिर्वसाक्षौद्राणि च। एतच्छुद्धवातापतानकविधानमुक्तं ससृष्टे ससृष्टं कर्त्तव्यम्। वेगान्तेषु चावपीडं दद्यात्। ताम्रचूडकर्कटकृष्णमत्स्यशिशुमारवराहवसाश्चासेवेत। क्षीराणि वा वातहरसिद्धानि यवकोलकुलत्थमूलकदधिघृततैलसिद्धां वा यवागूं स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्रादुद्धतवेगमुपक्रमेत्। वातव्याधिचिकित्सितं चावेक्षेत रक्षाकर्म च कुर्य्यादिति ॥२७॥

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तं चोपक्रमेत्। तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्। विशेषतश्चात्र मस्तिष्कशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थं शाल्वणमुपनाहार्थं बलातैलमनुवासनार्थं। एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत ॥२८॥

मन्यास्तम्भेऽप्येतदेव विधानं विशेषतो वातश्लेष्महरैर्नस्यैरूक्षस्वेदैश्चोपचरेत् ॥२९॥

अपतन्त्रकातुरं नापतर्पयेत्। वमनानुवासनास्थापनानि न निषेवेत। वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रधा-

शनैर्मोक्षयेत्। तुम्बुरुपुष्कराह्वहिङ्गुत्ववेतसपथ्यालवणत्रय यवक्वाथेन पातुं प्रयच्छेत्। पथ्याघृतार्द्धे सौवर्चलद्विपले चतुर्गुणे वयसि सर्पिः प्रस्थसिद्धं वातश्लेष्मापनुच्च कर्म कुर्यात् ॥३०॥

अर्दितातुरं बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपचरेद्विशेषिकैश्च मस्तिष्कशिरोवस्तिनस्यधूमोपनाहस्नेहनाडीस्वेदादिभिः। ततः सलवण महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्च समाहृत्य द्विगुणोदके क्षीरद्रोणे निःक्वाथ्य पादावशिष्टमवतार्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत्। ततस्तैलं क्षीरानुगतमवतार्य शीतीभूतमभिमथ्नीयात्। तत्र यः स्नेह उत्तिष्ठेत् तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेत्। तत् क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यम्। तैलहीनं वा क्षीरसर्पिरर्चितर्पणमिति ॥३१॥

गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टकपाददाहपादहर्षावबाहुकबाधिर्य्यधमनीगतवातरोगेषु यथोक्ताः यथोद्देशञ्च सिराव्यधं कुर्य्यादन्यत्रावबाहुकाद्वातव्याधिचिकित्सितं चावेक्षेत ॥३२॥

कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यादजामूत्रं मधुतैलानि वा मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं शुक्तसुरातक्रमूत्रलवणसिद्धं वा। नाडीस्वेदैश्च स्वेदयेत्। वातव्याधिचिकित्सां चावेक्षेत। भूयश्चोत्तरे वक्ष्यामः ॥३३॥

तूणीप्रतूण्यौ स्नेहलवणमुदकेन पाययेत्। पिप्पल्या-

दिचूर्णं वा हिङ्गुयवक्षारप्रगाढं वा सर्पिर्वस्तिभिश्चैनमुपक्रमेत् ॥३४॥

आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्त्तिक्रियापाचनीयवस्तिभिरुपाचरेत्। लङ्घनानन्तरं चान्नकाले धान्यकजीरकादिदीपनसिद्धान्यन्नानि। प्रत्याध्माने छर्दनापतर्पणदीपनानि कुर्य्यात् ॥३५॥

अष्ठीलाप्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत् क्रियाविभाग इति ॥३६॥

हिङ्गु त्रिकटुवचाजमोदाधन्याजगन्धादाडिमतिन्तिडीकपाठाचित्रकयवक्षारसैन्धवविडसौवर्चल-स्वर्जिकापिप्पलीमूलाम्लवेतसशठीपुष्करमूलहपुषाचव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रा गुटिकाः कारयेत्। ततः प्रातरेकैका वातविकारी भक्षयेत्। अथैष योगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरवस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूणीप्रतूणीरपहन्ति ॥३७॥

भवन्ति चात्र।

केवलो दोषयुक्तो वा धातुभिर्वा वृतोऽनिलः।
विज्ञेयो लक्षणोक्ताभ्यां चिकित्सा वाऽविरोधतः ॥३८॥
रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः।
करोति यस्य तं वैद्यः शोथवत् समुपाचरेत् ॥३९॥
कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते।
तदाङ्गमर्दस्तैमित्यरोमहर्षरुजाज्वरैः ॥४०॥
निद्रया चार्दितौ स्तब्धौ शीतलावप्रचेतनौ।
गुरुकावस्थिरावूरू न स्वाविव च मन्यते ॥४१॥

तमूरुस्तम्भमित्याहुराढ्यवातमथापरे।
स्नेहवर्जं पिबेत्तत्र चूर्णं षड्धरणं नरः ॥४२॥
हितमुष्णाम्बुना तद्वत्पिप्पल्यादिगणे कृतम्।
लिह्याद्वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितम् ॥४३॥
मूत्रैर्वा गुग्गुलुं श्रेष्ठं पिबेद्वापि शिलाजतु।
ततो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनम् ॥४४॥
हृद्रोगमरुचिं गुल्मं तथाभ्यन्तरविद्रधिम्।
सक्षारमूत्रस्वेदाश्च रूक्षाण्युत्सादनानि च ॥४५॥
कुर्य्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः।
भोज्याः पुराणश्यामाककोद्रवोद्दालशालयः ॥४६॥
शुष्कमूलकयूषेण पटोलस्य रसेन वा।
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥४७॥
यदा स्यातां परिक्षीणे भूयिष्ठं कफमेदसी।
तदा स्नेहादिकं कर्म पुनरत्रावचारयेत् ॥४८॥
सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसः।
कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः ॥४९॥
स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः।
तैक्ष्ण्यौष्ण्यात्कफवातघ्नः सरत्वान्मलपित्तनुत् ॥५०॥
सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः।
तस्मात्त्रिफलादार्वीपटोलकुशवारिभिः ॥५१॥
पिबेद्वाप्य वा मूत्रैः क्षारैरुष्णोदकेन वा।
जीर्णे यूषरसक्षीरैर्भुञ्जानो हन्ति मासतः ॥५२॥
गुल्मं मेहमुदावर्त्तमुदरं सभगन्दरम्।
क्रिमिकण्डूरुचिश्वित्राण्यर्बुदग्रन्थिमेव च ॥५३॥

नाड्याढ्यावातश्लेष्मकुष्ठदुष्टव्रणाय सः।
कोष्ठ सर्व्वाश्रिग वायु वृद्धमिद्धाग्नियथा ॥५४॥

---

षष्ठोऽध्यायः।

अथातोऽर्शसा चिकित्सितं व्याख्यास्यामः।

चतुर्विधोऽर्शसा साधनोपायः। तद्यथा। भेषजं क्षारोऽग्निः शस्त्रमिति। तत्राचिरकालजातान्यल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि मृदुप्रसृतावगाढान्युच्छ्रितानि क्षारेण। कर्कशस्थिरपृथुकठिनान्यग्निना। तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण। तत्र भेषजसाध्यानामर्शसामदृश्यानाञ्च भेषजं भवति। क्षाराग्निशस्त्रसाध्यानान्तु विधानमुच्यमानमुपधारय ॥१॥

तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य समृते शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्तग्रीवासक्थं परिकर्म्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मिन् घृताभ्यक्तं यन्त्रमृजुगुमुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय प्रविष्टे चार्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्रयोरन्यतरेण प्रमृज्य क्षारं पातयेत्। पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शतमात्रमुपेक्षेत। ततः प्रमृज्य क्षारबलं व्याधिबलञ्चावेक्ष्य पुनरालेपयेत्। अथार्शः पक्वजाम्बवप्रतीकाशमभि-

समीक्ष्यावसन्नमीषन्नतमुपावर्त्तयेत्। क्षारं प्रक्षालयेद्धान्याम्लेन दधिमस्तुशुक्तफलाम्लैर्वा। ततो यष्टीमधुकमिश्रेण सर्पिषा निर्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परिषिञ्चेच्छीताभिरित्येके। ततो निर्वातमागारं प्रवेश्याचारिकमादिशेत् सावशेषं पुनर्दहेत्। एवं सप्तरात्रात् सप्तरात्रादेकैकमुपक्रमेत तत्र बहुषु पूर्वं दक्षिणं साधयेद्दक्षिणाद्वामं वामात् पृष्ठजं ततोऽग्रजमिति ॥२॥

तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत् क्षारेणैव मृदुना पित्तरक्तनिमित्तानि। तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि। अतिदग्धे तु गुदावदरणं दाहो मूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति। श्वासाल्पव्रणता कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे ॥३॥

महान्ति च प्राणवतश्छित्त्वा दहेत्। निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्रादिना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणालेपक्षाराग्निशस्त्रैरुपाचरेत्। प्रवृत्तरक्तानि च रक्तपित्तविधानेन भिन्नपुरीषाणि चातीसारविधानेन बद्धवर्चांसि स्नेहपानविधानेनोदावर्त्तविधानेन वा एष सर्वस्थानगतानामर्शसां दहनकल्पः ॥४॥

आसाद्य च दर्वीकूर्चकशलाकानामन्यतमेन क्षारं पातयेत्। स्त्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म प्रयुञ्जीत सर्वेषु च शालिषष्टिकयवगोधूमान् सर्पिःस्निग्धमुद्गेन मयश्वा निम्बयूषेण पटोलयूषेण वा यथादोषमाद्भेर्भांसा

तण्डुलीयकजीवन्त्युपोदिकाश्वबलाबलमूलकपालङ्कसनचि-ल्लीचुच्चूकलायवल्लीभिरन्यैर्वा। यच्चान्यदपि स्निग्धमग्नि-दीपनमर्शोघ्नं सृष्टमूत्रपुरीषञ्च तदुपसेवेत ॥५॥

दग्धेषु चार्शःस्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोप-संरक्षणार्थञ्च स्नेहादीनां सामान्यतो विशेषतस्तु क्रियापथ-मुपसेवेत। सर्पींषि च दीपनीयवातहरसिद्धानि हिङ्ग्वा-दिभिश्चूर्णैः प्रतिसंसृज्य पिबेत्। पित्तार्शःसु पृथक्पर्ण्या-दीनां कषायेण दीपनीयप्रतीवाप भद्रदार्वादिपिप्पल्यादि-सर्पिः। शोणितार्शःसु मञ्जिष्ठामुरङ्ग्यादीनां कषाये श्लेष्मा-र्शःसु सुरसादीनां कषाये सर्पिः। उपद्रवांश्च यथास्वमुपा-चरेत् ॥६॥

परञ्च यत्नमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत् तद्विभ्रमाद्धि षाण्ढ्यशोफदाहमदमूर्च्छाटोपानाहातीसारप्र-वाहणानि भवन्ति मरणं वा ॥७॥

अत ऊर्द्ध्वं यन्त्रप्रमाणमुपदेक्ष्यामः।

तत्र यन्त्रं लौहं दान्तं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां षडङ्गुलपरिणाहं नारीणां तलायतं तद् द्विच्छिद्रं दर्शनार्थमेकं छिद्रमेकं छिद्रन्तु कर्मणि। एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति। छिद्रप्रमाणन्तु त्र्यङ्गुलायतमङ्गुष्ठोदरपरिणाहं यदङ्गुलमवशिष्टं तस्यार्द्धाङ्गुलमधस्तादर्द्धाङ्गुलोच्छ्रितोपरि वृत्तकर्णिकमेष यन्त्राकृतिसमासः ॥८॥

अत ऊर्द्ध्वमर्शसामालेपान् वक्ष्यामः। स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः। कुक्कुटपुरीषगुञ्जाहरिद्रापि-

प्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः। दन्तीचित्रक-सुवर्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः। पिप्प-लीसैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः। कासीसहरितालसैन्धवाश्ममारकविडङ्गपूतीक-कृतवेधनजम्बूर्कोत्तमारणीदन्तीचित्रकालर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः पातयति ॥९॥

अत ऊर्द्ध्वमदृश्येष्वर्शःसु योगान् पातनार्थं वक्ष्यामः। प्रातः प्रातर्गुडहरीतकीमासेवेत। ब्रह्मचारी गोमूत्रद्रोण-सिद्धं वा हरीतकीशतं प्रातः प्रातर्यथाबलमुपयुञ्जीत क्षौ-द्रेण अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः शतावरीमूलकल्कं वा क्षीरेण। चित्रकचूर्णयुक्तं वा सीधु-पराद्धम्। भल्लातचूर्णयुक्तं वा सक्तुमन्थमलवणं तक्रेण। कलशे वान्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत। एष एव भार्गीस्फोतायवान्या-मलकगुडूचीषु तक्रकल्पः ॥१०॥

पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्ववदेव निरन्नो वा तक्रमहरहर्मासमुपसेवेत। शृङ्ग-वेरपुनर्नवाचित्रककषायसिद्धं वा पयः। कुटजमूलत्वक्-फाणितं वा पिप्पल्यादिप्रतीवापं क्षौद्रेण। वातव्याध्युक्तं हिङ्ग्वादिचूर्णमुपसेवेत तक्राहारः क्षीराहारो वा। क्षार-लवणाश्चित्रकमूलक्षारोदकसिद्धान् वा कुल्माषान् भक्षयेत्। चित्रकमूलक्षारोदसिद्धं वा पयः। पलाशतरुक्षारसिद्धान् वा कुल्माषान्। पाटलापामार्गबृहतीपलाशक्षारं वा परिस्रुतमहरहर्घृतसंसृष्टम्। कुटजवन्दाकीमूलकल्कं वा

तक्रेण। चित्रकपूतीकनागरकल्कं वा पूतीकक्षारेण क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापम्। कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातः प्रातरनुसेवेत शीतोदकानुपानम्। एभिरभिवर्द्धतेऽग्निरर्शांसि चोपशाम्यन्ति ॥११॥

द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्य जलचतुर्द्रोणे विपाचयेत्। ततः पादावशिष्टं कषायमादाय सुशीतं गुडतुलया सह्योन्मिश्र घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्मात्रां पाययेत तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्त्तारोचका न भवन्ति दीप्तोऽग्निश्च भवति। पिप्पलीमरिचविडङ्गेलवालुकलोध्राणां द्वे द्वे पले इन्द्रवारुण्याः पञ्च पलानि कपित्थमध्यस्य दश पथ्याफलानामर्द्धप्रस्थं प्रस्थो धात्रीफलानामेतदैकध्यं जलचतुर्द्रोणे विपाच्य पादावशेषं परिस्राव्य सुशीतं गुडतुलाद्वयेनोन्मिश्र घृतभाजने निःक्षिप्य पक्षमुपेक्षेत यवपल्ले ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत। एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरकृमिहरो बलवर्णकरश्चेति ॥१२॥

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धम्। पित्तजेषु विरेचनम्। एवं रक्तजेषु संशमनम्। कफजेषु शृङ्गवेरकुलत्थोपयोगः। सर्वदोषहरं यथोक्तं सर्वजेषु यथास्वौषधसिद्धं वा पयः सर्वेष्विति ॥१३॥

अतऊर्द्धं भल्लातकविधानमुपदेक्ष्यामः। भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमनुष्णां

घृताभ्यक्तताल्वोष्ठजिह्वोष्ठ प्रातः प्रातरुपसेवेत। ततोऽपराह्णे चीरं सर्पिरोदन इत्याहार एवमेकैक वर्द्धयेत्तावद्यावत्पञ्चेति। तत पञ्च पञ्चाभिवर्द्धयेद्यावत्सप्ततिरिति। प्राप्य च सप्ततिमपकर्षयेद्भूय पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति। एव भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोग शतायुर्भवति ॥१४॥

द्विप्रस्थीयोक्तेन विधानेन भल्लातकानिश्रुतित स्नेहमादाय प्रात प्रात शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहार. फलप्रकर्षश्च। भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोष. प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृति प्रकुञ्च चोपयुञ्जीत। तस्मिन् जीर्णे चीर सर्पिरोदन इत्याहार.। एव मासमुपयुज्य मासत्रयमादिष्टाहारो रक्षेदात्मानम्। तत. सर्वोपतापानपहृत्य वर्णवान् बलवान् श्रवणग्रहणधारणशक्तिसम्पन्नो वर्षशतायुर्भवति। मासे मासे च प्रयोगे वर्षशत वर्षशतमायुषोऽभिवृद्धिर्भवति। एव दशमासानुपयुज्य वर्षसहस्रायुर्भवति ॥१५॥

भवन्ति चात्र।

यथा सर्वाणि कुष्ठानि हत. खदिरवीजकौ।
तथैवार्शांसि सर्वाणि वृचकारुष्करौ हतः ॥१६॥
असाध्या नातिवर्त्तन्ते प्रमेहा रजनीं यथा।
चाराग्निन्नातिवर्त्तन्ते तथा दृष्टा गुदोद्भवा ॥१७॥
घृतानि दीपनीयानि लेहायस्कृतय सुरा।
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम् ॥१८॥

वेगावरोधस्त्रीपृष्ठयानान्युत्कटुकासनम्।
यथास्वं दोषलं चान्नमशं सु परिवर्जयेत्॥१८॥

---

## सप्तमोऽध्यायः।

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः।
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः।
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति॥१॥
तस्य पूर्वेषु रूपेषु स्नेहादिकर्म इष्यते।
तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः॥२॥
पाषाणभेदो वसुको वशिराश्मन्तकौ तथा।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका॥३॥
कपोतवङ्कार्त्तगलं ककुभोशीरकुब्जकम्।
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम्॥४॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च।
ऊषकादिप्रतीवापमेषां क्वाथैर्घृतं कृतम्॥५॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च॥६॥
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने।
कुशः काशः सरो गुन्द्रा उत्कटो मोरटोऽश्मभित्॥७॥
वरी विदारी वाराही शालिमूलत्रिकण्टकम्।
भल्लूकः पाटला पाठा पत्तूरोऽथ कुरण्टिका॥८॥
पुनर्नवा शिरीषश्च क्वथितास्तेषु साधितम्।
घृतं शिलाजमधुकबीजैरिन्दीवरस्य च॥९॥
त्रपुसैर्वारुकादीनां बीजैश्चावापितं शुभम्।

भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु ॥१०॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥११॥
गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणव ।
कुष्ठभद्रादिमरिचचित्रकैः ससुराह्वयैः ॥१२॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥१३॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् कफनाशने ॥१४॥
पिचुकाङ्कोलकतकशाकेन्दीवरजैः फलैः ।
चूर्णितैः सगुडं तोयं शर्कराशमनं पिबेत् ॥१५॥
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमूलिका ।
अजमोदा कदम्बस्य मूलं नागरमेव च ॥१६॥
पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ।
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ॥१७॥
अविक्षीरेण सप्ताहमश्मरीभेदनं पिबेत् ।
दग्ध्वाऽऽशु तिलानां क्षारोऽविमूत्रगालितः ॥१८॥
ग्राम्यसत्त्वशकृत्क्षारे संयुक्तं साधितं शनैः ।
तत्तोषकादिरावाप कार्यस्त्रिकटुकान्वितः ।
एष क्षारोऽश्मरीं गुल्मं शर्कराञ्च भिनत्त्यपि ॥१९॥
तिलापामार्गकदलीपलाशयववल्कजः ।
क्षारः पेयोऽविमूत्रेण शर्करानाशनः परः ।
पाटलाकरवीराणां क्षारमेवं समाचरेत् ॥२०॥
श्वदंष्ट्रायष्टिकाब्राह्मीकल्कं वाक्षसमं पिबेत् ।

सहैडकाख्यौ पियौ वा श्वोभाञ्जनकमार्कवौ ॥२१॥
कपोतवङ्कामूलं वा पिबेदम्लसरादिभिः ।
तत्सिद्धं वा पिबेत् क्षीरं वेदनाभिरुपद्रुतः ॥२२॥
हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा ।
सर्वथैवोपयोज्यः स्याद्गणो वीरतरादिकः ॥२३॥
घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः ।
यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः ॥२४॥
कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा ।
उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः ॥२५॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ।
तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा ॥२६॥

अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्षितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं कृतवलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य ततो बलवन्तमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषञ्च तस्योत्सङ्गे निषस्पूर्वकायमुत्तानमुन्नतकटीकं वस्त्राधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनावपीडयेदधोनाभेर्यावदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्तरमानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीडयेदङ्गुलिभ्यां यथाग्रन्थिरिवोन्नतं शल्यं भवति ॥२७॥

स चेद्गृहीतशल्ये तु विवृताक्षो विचेतनः ।

कृतवक्रस्त्वशीर्षेव निर्विकारो मृतोपम ॥२८॥
न तस्य निर्हरेच्छल्य निर्हरेत्तु म्रियेत स' ।
विना त्वेतेषु रूपेषु निर्हर्त्तुं समुपाचरेत् ॥२९॥

सव्ये पार्श्वे सेवनी यवमात्रेण मुक्त्वावचारयेत्। अश्मप्रमाण दर्शिणतो वा क्रियासौकर्य्यहेतोरित्येके। यथा च न भिद्यते चूर्ण्यते वा तथा प्रयतेत चूर्णमल्पमप्यवस्थित हि पुन परिवृद्धिमेति। तस्मात् समस्तामग्रवक्रेणादद्दीत। स्त्रीणान्तु वस्तिपार्श्वगतो गर्भाशय' सन्निकृष्ट । तस्मान्नासामुत्सङ्गवच्छस्त्र पातयेदतोऽन्यथा खल्वासा मूत्रस्रावी व्रणो भवेत्। पुरुषस्य वा मूत्रप्रसेकच्चणनान्मूत्रचरणम्। अश्मरीव्रणादृते भिन्नो वस्तिरेकधा न भवति द्विधा भिन्नवस्तिराश्मरिको न सिध्यति। अश्मरीव्रणनिमित्तमेकधाभिन्नवस्तिर्जीवति क्रियाभ्यासात् शास्त्रविहितच्छेदान्नि.स्यन्दपरिवृद्धत्वाच्च शल्यस्येति। उद्धृतशल्य तूष्णोदकद्रोण्यामवताप्य स्वेदयेत् तथा हि वस्तिरसृजा न पूर्य्यते पूर्णे वा चीरवृक्षकषाय पुष्पनेत्रेण विदध्यात् ॥३०॥

भवति चात्र।

चीरवृक्षकषायन्तु पुष्पनेत्रेण योजितम्।
निर्हरेदश्मरी चूर्णं रक्त वस्तिगतञ्च यत् ॥३१॥

मूत्रमार्गविशोधनार्थं चास्मै गुडसौहित्य वितरेत्। उद्धृत्य चैना मधुघृताभ्यक्तव्रण मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृता यवागू पाययेदुभयकाल त्रिरात्र त्रिरात्रादूर्द्धं गुडप्रगाढ़ेन पयसा मृद्वोदनमल्प भोजयेद्दशरात्र मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थञ्च दशरात्रादूर्द्धं फलाम्लैर्जाङ्गलरसै-

कपाचरेत्। ततो दशरात्र चैनमप्रमत्त स्वेदयेत् स्नेहेन द्रव-स्वेदेन वा। क्षीरवृक्षकषायेण चास्य व्रणं प्रक्षालयेत्। रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिसारयेत्। एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्वं व्रणाभ्यञ्जनमिति। स्त्यानशोणितं चोत्तरवस्तिभिरुपाचरेत्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरेन्मधुरकषायैरिति। यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवं चाशक्ये विदार्य्य वा नाडीं शस्त्रेण वडिशेनोद्धरेत्। रूढव्रणश्चाग्नाङ्गनगनागरथद्रुमान्नारोहेत वर्षं नाप्सु प्लवेत भुञ्जीत वा गुरु ॥२२॥

मूत्रवह-शुक्रवहमुष्कस्रोतोमूत्र-प्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्ते. शुक्रवहच्छेदान्मरणं क्लैव्यं वा। मुष्कस्रोतउपघाताद्ध्वजभङ्ग। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम। सेवनीयोनिच्छेदाद्रुजः प्रादुर्भाव। वस्तिगुदविद्धलक्षणं प्रागुक्तमिति ॥२३॥

भवतश्चात्र।

मर्माण्यष्टावसम्बुध्य स्रोतांसि शरीरिणाम्।
व्यापादयेद्बहून् मर्त्यान् शस्त्रकारी दुर्भिषक् ॥२४॥
सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेक मूत्रवाहं मूत्रनाडी च वस्तिना ॥२५॥

## अष्टमोऽध्यायः ।

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः ।

पञ्च भगन्दरा व्याख्यातास्तेष्वसाध्यौ शम्बूकावर्त्तः शल्यनिमित्तश्चेति शेषाः कृच्छ्रसाध्याः ॥१॥

तत्र भगन्दरपिडकोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिडकम् । पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्य पराचीनमवाचीनं वा बहिर्मुखमन्तर्मुखं वा । ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण । अन्तर्मुखे चैव सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यैषणीं दत्त्वा शस्त्रं पातयेत् । आसाद्य वाग्निक्षारौ चेत्येतत्सामान्यं सर्वेषु । विशेषतस्तु ॥२॥

नाड्यन्तरे व्रणान् कुर्य्याद्भिषक् तु शतपोनके ।
ततस्तेषूपरूढेषु शेषा नाडीरुपाचरेत् ॥३॥
गतयोऽन्योऽन्यसम्बद्धा वाह्याश्छेद्यास्त्वनेकधा ।
नाडीरनभिसम्बद्धा यश्छिनत्त्येकधा भिषक् ॥४॥
स कुर्य्याद्विवृतं जन्तोर्व्रणेन गुदविदारणम् ।
तस्य तद्विवृतं मार्गं विण्मूत्रमनुगच्छति ॥५॥
आटोपं गुदशूलञ्च करोति पवनो भृशम् ।
तत्राधिगततन्त्रोऽपि भिषङ्मुह्येदसंशयम् ॥६॥
तस्मान्न विवृतः कार्य्यो व्रणस्तु शतपोनके ।
व्याधौ तत्र बहुच्छिद्रे भिषजा वै विजानता ॥७॥
अर्द्धलाङ्गलकश्छेदः कार्य्यो लाङ्गलकोऽपि वा ।
सर्वतोभद्रको वापि कार्य्यो गोतीर्थकोऽपि वा ॥८॥

द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः ।
ह्रस्वमेकतरं यच्च सोऽर्द्धलाङ्गलकः स्मृतः ॥९॥
सेवनीं वर्जयित्वा च चतुर्द्धा दारिते गुदे ।
सर्वतोभद्रकं छेदमाहुश्छेदविदो जनाः ॥१०॥
पार्श्वागतेन शस्त्रेण छेदो गोतीर्थको भवेत् ।
सर्वतः स्रावमार्गांस्तु दहेद्वैद्यस्तथाग्निना ॥११॥
सुकुमारस्य भीरोर्हि दुष्करं शतपोनकं ।
रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत् ॥१२॥
स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरापायसादिभिः ।
ग्राम्यानूपौदकैर्मांसैर्लावाद्यैर्वापि विष्किरैः ॥१३॥
द्रवन्तीमथैरण्डं बिल्वादिञ्च गणं तथा ।
कषायं सुकृतं कृत्वा स्नेहकुम्भे निषेचयेत् ।
नाडीस्वेदेन तेनास्य तं व्रणं स्वेदयेद्भिषक् ॥१४॥
तिलैरण्डातसीमाषयवगोधूमसर्षपान् ।
लवणान्यम्लवर्गञ्च स्थाल्यामेवोपसाधयेत् ॥१५॥
आतुरं स्वेदयेत्तेन तथा सिध्यति कुर्वतः ।
स्विन्नञ्च पाययेत्तेन कुष्ठञ्च लवणानि च ॥१६॥
वचाहिङ्गुजमोदञ्च समभागानि सर्पिषा ।
मार्द्वीकेनाथ वाम्लेन सुरासौवीरकेण वा ॥१७॥
ततो मधुकतैलेन तस्य सिञ्चेद्भिषग् व्रणम् ।
परिषिञ्चेद्गुदं चास्य तैलैर्वातरुजापहैः ॥१८॥
विधिनानेन विण्मूत्रं स्वमार्गमधिगच्छति ।
अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः ॥१९॥
शतपोनक आख्यात उष्ट्रग्रीवे क्रियां शृणु ।

अथोष्ट्रग्रीवमेषित्वा छित्त्वा क्षारं निपातयेत् ॥२०॥
पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः ।
अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत् ॥२१॥
बन्धं ततोऽनुकुर्वीत परिषेकन्तु सर्पिषा ।
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक् ॥२२॥
ततः शुद्धं विदित्वा च रोपयेत् तु यथाक्रमम् ।
उत्क्षिप्याऽस्रावमार्गन्तु परिस्राविणि बुद्धिमान् ॥२३॥
क्षारेण वा स्रावगतिं दहेद्धुतवहेन वा ।
सुखोष्णेनाणुतैलेन सेचयेद् गुदमण्डलम् ॥२४॥
उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः ।
वामनीयौषधैः कार्य्याः परिषेकाश्च मात्रया ॥२५॥
मृदुभूतं विदित्वैनमल्पस्रावकगन्वितम् ।
गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्जूरपत्रकम् ॥२६॥
चन्द्रार्द्धं चन्द्रचक्रञ्च सूचीमुखमवाङ्मुखम् ।
छित्त्वाग्निना दहेत् सम्यगेवं क्षारेण वा पुनः ।
ततः संशोधनैरेव मृदुपूर्व्वैर्विशोधयेत् ॥२७॥
बहिरन्तर्मुखस्यापि शिश्नोर्यस्य भगन्दरः ।
तस्याहितं विरेकाग्निशस्त्रक्षारावचारणम् ॥२८॥
यद्यन्मृदु च तीक्ष्णञ्च तत्तत् तस्यावचारयेत् ॥२९॥
आरग्वधनिशाकालाचूर्णं मधुघृताप्लुतम् ।
अग्रवर्त्तिं प्रणिहितं व्रणानां शोधनं हितम् ॥३०॥
योगोऽयं नाशयत्याशु गतिं मेवमिवानिलः ।
आगन्तुजे भिषङ्नाडीं शस्त्रेणोत्कृत्य यन्त्रतः ॥३१॥
जाम्बोष्ठेनाग्निवर्णेन तप्तया वा शलाकया ।

दृष्ट्यथोक्तं मतिमांस्तु व्रणं सुसमाहितः ।
छेदनञ्च विधिं कुर्य्याच्छल्यानयनमेव च ॥३१॥
प्रत्याख्यायैव चारेभ्यो वर्ज्ज्यश्चापि त्रिदोषजः ।
एतत् कर्म समाख्यातं सर्वेषामनुपूर्वशः ॥३२॥
एषान्तु शस्त्रपतनाद्वेदना यत्र जायते ।
तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते ॥३४॥
वातघ्नौषधसम्पूर्णां स्थालीं छिद्रशराविकाम् ।
स्नेहाभ्यक्तगुदस्तस्यामध्यासीत सवाष्पकाम् ॥३५॥
नाड्या वाष्पमाहरेत् स्वेदं शयानस्य रुजापहम् ।
उष्णोदकेऽवगाह्यो वा तथा शाम्यति वेदना ॥३६॥
कदलीमृगलोपाकप्रियकाजिनसम्भृतान् ।
कारयेदुपनाहांश्च शाल्वणादीन् विचक्षणः ॥३७॥
कटुत्रिकं वचाहिङ्गु लवणान्यथ दीप्यकम् ।
पाययेच्चाम्लकौलत्थसुरासौवीरकादिभिः ॥३८॥
ज्योतिष्मतीलाङ्गलकीश्यामादन्तीत्रिवृत्तिलाः ।
कुष्ठं शताह्वा गाल्वोमी तिल्वको गिरिकर्णिका ।
कासीसकाञ्चनक्षीर्य्यौ वर्गः शोधन इष्यते ॥३९॥
त्रिवृत्तिलानागदन्तीमञ्जिष्ठा पयसा सह ।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥४०॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः ।
त्रिवृत्तेजोवतीदन्तीकल्को नाडीव्रणापहः ॥४१॥
कुष्ठं त्रिवृत्तिला दन्ती मागध्यः सैन्धवं मधु ।
रजनी त्रिफला तुत्थं हितं स्याद् व्रणशोधनम् ॥४२॥
मागध्यो मधुकं रोध्रं कुष्ठमेलाहरेणव, ।

समङ्गा धातकी चैव सारिवा रजनीद्वयम् ॥४३॥
प्रियङ्गव सर्जरस पद्मक पद्मकेसरम्।
सुधा वचा लाङ्गलकी मधूच्छिष्ट ससैन्धवम्।
एतत् सम्भृत्य सम्भारान् तैल धीरो विपाचयेत् ॥ ४४॥
एतद्वै गण्डमालासु मण्डलेष्वथ मेहिषु।
रोपणार्थं हित तैल भगन्दरविनाशनम् ॥४५॥
न्यग्रोधादिगणश्चैव हित शोधनरोपणे।
तैल घृत वा तत्पक्व भगन्दरविनाशनम्।४६॥
त्रिवृद्दन्तीहरिद्रार्कमूल लोहाश्वमारकौ।
विडङ्गसारं त्रिफला स्नुह्यर्कपयसी मधु ॥४७॥
मधूच्छिष्टसमायुक्तैस्तैलमेतैर्विपाचयेत्।
भगन्दरविनाशार्थमेतद्ध योज्य विशेषत ॥४८॥
चित्रकार्कौ त्रिवृत्पाठे मलपू हयमारकम्।
सुधा वचा लाङ्गलकी सप्तपर्ण सुवर्चिकाम्।
ज्योतिष्मतीञ्च सम्भृत्य तैल धीरो विपाचयेत् ॥४९॥
एतद्धि स्यन्दन तैल भृश दद्याद्भगन्दरे ॥५०॥
शोधन रोपणं चैव सवर्णकरण तथा।
छिन्नणीयमवेक्षेत व्रणावस्थासु बुद्धिमान् ॥५१॥
छिद्रादूर्द्ध्व हरेदोष्ठमर्शोयन्त्रस्य यन्त्रवित्।
ततो भगन्दरे दद्यादेतदर्द्धेन्दुसन्निभम् ॥५२॥
व्यायाम मैथुन कोप पृष्ठयान गुरूणि च।
सवत्सर परिहरेदुपरूढव्रणो नर. ॥५३॥

---

## नवमोऽध्याय ।

अथात कुष्ठचिकित्सित व्याख्यास्याम । विरुद्धाध्यशनासात्म्यरोगविघाते स्नेहादीना चायथारम्भे पापक्रियया पुराकृतकर्मयोगाच्च त्वग्दोषो भवति ॥१॥

तत्र त्वग्दोषो मांसवसादुग्धदधितैलकुलत्थमाषनिष्पावेक्षुविकाराम्लविरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवास्वप्न व्यवायञ्च परिहरेत् ॥२॥

तत शालिषष्टिकयवगोधूमकोरदूषश्यामाकोद्दालकादीननवान् भुञ्जीत मुद्गाढक्योरन्यतरस्य यूषेण सूपेन वा निम्बपत्रारुष्करव्यामिश्रेण मण्डूकपर्ण्यवल्गुजाटरूषकरूपिका।पुष्पे सर्पि सिद्धै सर्षपतैलसिद्धैर्वा तिक्तवर्गेण वाभिहितेन। मासमात्म्याय वा जाङ्गलमासममेदस्क वितरेत्। तैल वज्रकमभ्यङ्गार्थं। आरग्वधादिकषायमुत्सादनार्थं पानपरिषेकावगाहादिषु च खदिरकषायमित्येष आहाराचारविभाग. ॥३॥

तत्र पूर्वरूपेषूभयत संशोधनमासेवेत। तत्र त्वक्सम्प्राप्ते शोधनालेपनानि। शोणितप्राप्ते सशोधनालेपन॰कषायपानशोणितावसेचनानि। मांसप्राप्ते शोधनालेपनकषायपानशोणितावसेचनारिष्टमन्थप्राशा:। चतुर्थं कर्मगुणप्राप्त याप्यमात्मवत सविधानवतश्च। तत्र सशोधनाच्छोणितावसेचनाच्चोर्ध्वं भल्लातशिलाजतुगुग्गुल्वगुरुतुवरकखदिरासनायस्कृतिविधानमासेवेत पञ्चमं नैव चोपक्रमेत् ॥४॥

तत्र प्रथममेव कुष्ठिन स्नेहपानविधानेनोपपादयेत्।

मेषशृङ्गीश्वदंष्ट्राशार्ङ्गेष्टागुडूचीद्विपञ्चमूलीसिद्धं तैलं घृतं वा वातकुष्ठिनां पानाभ्यङ्गयोर्विदध्यात् ॥५॥

धवाश्वकर्णककुभपलाशपिचुमर्दपर्पटक-मधुकरोध्रसमङ्गासिद्धं सर्पिः पित्तकुष्ठिनाम् ॥६॥

प्रियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठ-सिद्धं श्लेष्मकुष्ठिनाम् ॥७॥

भल्लातकाभयाविडङ्गसिद्धं वा सर्वेषाम्। तुवरकतैलं भल्लातकतैलं वेति। सप्तपर्णारग्वधातिविषापाठाकटुरोहिण्यमृतात्रिफलापटोलपिचुमर्दपर्पटकदुरालभात्रायमाणामुस्ताचन्दनपद्मकहरिद्रोपकुल्याविशालामूर्वाशतावरीसारिवेन्द्रयवाटरूषकषड्ग्रन्थामधुकभूनिम्बग्रष्टिका इति समभागाः कल्कः स्यात्। कल्काच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्द्विगुणो धात्रीफलरसश्चतुर्गुणा आपस्तदैकध्यं समालोड्य विपचेदेतन्महातिक्तकं नाम सर्पिः कुष्ठविषमज्वररक्तपित्तहृद्रोगोन्मादापस्मारगुल्मपिडकासृग्दरगलगण्डगण्डमालाश्लीपदपाण्डुरोगविसर्पषाण्ढ्यकण्डूपामादींश्च शमयेदिति। ॥८॥

त्रिफलापटोलपिचुमन्दाटरूषककटुरोहिणीदुरालभात्रायमाणापर्पटकाश्चैतेषां द्विपलिकान् भागान् जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्द्धपलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकिराततिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेदेतत्तिक्तकं नाम सर्पिः कुष्ठविषमज्वरगुल्मार्शोग्रहणीदोषशोफपाण्डुरोगविसर्पषाण्ढ्यशमनं चेति। अतोऽन्यतमेन

घृतेन स्निग्धस्विन्नस्यैका द्वे तिस्रश्चतस्रः पञ्च वा सिरा विध्येन्मण्डलानि चोत्सन्नान्यवलिखेदभीक्ष्णं प्रच्छयेद्वा। समुद्रफेनशाकगोजीकाकोडुम्बरिका-पत्रैर्गोवष्टप्राचैर्लेपयेद्वा। चासर्जरस-रसाञ्जनप्रपुन्नाडावल्गुजतेजोवत्यश्वमारककाकुट जारेवतमूलकल्कैर्मूत्रपिष्टैः पित्तपिष्टैर्वा स्वर्जिकातुत्थ कासीसविडङ्गागारधूमचित्रककटुकसुधाहरिद्रासैन्धवकल्कै-र्वा। एतान्येवावाप्य क्षारकल्पेन निस्रुते पालाशे क्षारे ततो विपाच्य फाणितमिव सञ्जातमवतार्य्य लेपयेत्। ज्योतिष्कफललाक्षामरिचपिप्पलीसुमन:पत्रैर्वा हरिताल-मनःशिलार्कक्षीरतिलशिग्रुमरिचकल्कैर्वा स्वर्जिकाकुष्ठतु-त्थकुटजचित्रकविडङ्गमरिचमनःशिलाकल्कैर्वा हरीतकीक-रञ्जिकाविडङ्ग-सिद्धार्थकलवणरोचनावल्गुजहरिद्राकल्कै-र्वा ॥९॥

सर्वे कुष्ठापहाः सिद्धा लेपाः सप्त प्रकीर्त्तिताः ।
वैशेषिकानतस्तूर्द्ध्वं दद्रूश्वित्रेषु मे शृणु ॥१०॥

लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं रात्र्यौ व्योषं चक्रमर्द्दस्य वीजम्
कल्कैकस्य तक्रपिष्टः प्रलेपो दद्रूघ्नो मूलकाद्वीजयुक्तः ॥११॥
सिन्धूद्भूतं चक्रमर्द्दस्य वीजमिक्ष्वद्भूतं केशरं तार्क्ष्यशैलम् ।
पिष्टो लेपोऽयं कपित्थाद्रसेन दद्रूस्तूर्णं नाशयत्येष योगः ॥१२॥

हेमक्षीरी व्याधिघातः शिरीषो
निम्बः सर्जो वत्सकः साजकर्णः ।
शीघ्रं तीव्रा नाशयन्तीह दद्रू
स्नानालेपोद्धर्षणेषु प्रयुक्ता ॥१३॥
भद्रासक्षोडुम्बरीमूलतुल्यं

तया व्रजेदाशु सवर्णभावम् ॥२१॥
कषायकल्केन सुभावितान्तु
दलत्वच चूतहरीतकीनाम् ।
तान्ताम्रदीपि प्रविधाय धीमान्
वर्त्तिं वटचीरसुभाविताम्तु ॥२२॥
आदीप्य तज्जातमसी गृहीत्वा
ता चापि पथ्याम्भसि भावयित्वा ।
सञ्चित तद् बहुश. किलाश्व
तैलेन सिक्त कटुना प्रयाति ॥२३॥
आवल्गुजवीजमथास्वदीज
काकाह्वानोडुम्बरी या च लाक्षा ।
लोह चूर्ण मागधीताश्च शैल
तुल्या कार्य्या कृष्णवर्णास्तिलाश्च ॥२४॥
वर्त्तिं कृत्वा ता गवा पित्तपिष्टा
लेप. कार्य्य श्वित्रिणा श्वित्रहारी ।
लेपात्पित्त शैखिन श्वित्रहारि
क्लीवेर वा दग्धमेतेन युक्तम् ॥२५॥
तुत्थालकटुकाव्योषसिहार्कहयमारका ।
कुष्ठावल्गुजभल्लातचीरिणीसर्षपा स्नुही ॥२६॥
तिल्वकारिष्टपीलूना पत्राण्यारग्वधस्य वा ।
वीज विडङ्गाश्वहन्त्रोहरिद्रे बृहतीद्वयम् ।
आभ्या श्वित्राणि योगाभ्या लेपान्नश्यन्त्यशेषत ॥२७॥
वायसी फल्गुतिक्तानां शत दत्त्वा पृथक् पृथक् ।
द्वे लोहरजस. प्रस्थे त्रिफला त्र्याढ़क तथा ।

त्रिद्रोणेऽपां पचेद् यावद्भागो द्वादशमादपि ॥२८॥
शिष्टञ्च विपचेद्भूय एतैः सूक्ष्मप्रपेषितैः ।
कल्कैरिन्द्रयवव्योषलाक्षादारुचतुरङ्गुलैः ॥२९॥
पारावतपदीदन्तीवाकुचीकैथराह्वयैः ।
कण्टकार्य्या च तत्पक्कं घृतं कुष्ठिषु योजयेत् ॥३०॥
दोषधात्वाश्रितं पानादभ्यङ्गात्त्वग्गतं तथा ।
अप्यसाध्यं नृणां कुष्ठं नाम्ना नीलं नियच्छति ॥३१॥
त्रिफलात्वक् त्रिकटुकं सुरसा मदयन्तिका ।
वायस्यारग्वधानाञ्च तुला कुर्य्यात् पृथक् पृथक् ॥३२॥
काकमाच्यकवरुणदन्तीकुटजचित्रकान् ।
दार्वींनिदिग्धिकाभ्यान्तु पृथग्दशपलं तथा ॥३३॥
त्रिद्रोणेऽपां पचेद्यावत् षट्प्रस्थं परिशेषितम् ।
शकृद्रसदधिक्षीरमूत्राणां पृथगाढकम् ॥३४॥
तद्वद् घृतस्य तत्साध्यं भूनिम्बव्योषचित्रकैः ।
करञ्जफलनीलिकाश्यामावल्गुजपीलुभिः ॥३५॥
नीलिनीनिम्बकुसुमैः सिद्धं कुष्ठापहं घृतम् ।
त्वक्स्थापादङ्गसावर्ण्यं श्वित्रिणां जनयेन्नृणाम् ।
भगन्दरं क्रिमीनर्शो महानीलं नियच्छति ॥३६॥
मूत्रं गव्यं चित्रकव्योषयुक्तं
सर्पिः कुम्भे क्षौद्रयुक्तं स्थितं हि ।
पश्चादूर्द्ध्वं श्वित्रिभिः पेयमेतत्
कुर्य्याच्चास्मिन् कुष्ठदिष्टं विधानम् ॥३७॥
पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ।

लेप श्वित्र हन्ति दद्रूश्च यांश्च
दुष्टान्त्रणांश्चेष नाडीव्रणाश्च ॥३८॥

अस्मादूर्द्ध्वं नि स्रुते दुष्टरक्ते जातप्राण सर्पिषा स्नेहयित्वा। तीक्ष्णैर्योगैश्छर्दयित्वा प्रगाढ़ पश्चाद्दोष निर्हरेच्चाप्रमत्त' ॥३९॥

दुर्वान्तो वा दुर्विरिक्तोऽथ वा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्तदेहः।
नि.सन्दिग्ध' यात्यसाध्यत्वमाशु
तस्मात् कृत्स्नान्निर्हरेत्तस्य दोषान् ॥४०॥
पक्षात्पक्षाच्छर्दनान्यभ्युपेयात्
मासान्मासात् स्रंसन चापि देयम्।
स्राव्य रक्त' वत्सरे हि द्विरल्पं
नस्य' दद्याच्च त्रिरात्रात्त्रिरात्रात् ॥४१॥
पथ्याव्योष सेक्षुजातं सतैल
लीढ्वा शीघ्र मुच्यते कुष्ठरोगात्।
धात्रीपथ्याचोपकुल्याविडङ्गान्
क्षौद्राज्याभ्यामेकतो वावलिह्यात् ॥४२॥
पीत्वा मासं वा पलांशा हरिद्रा
मूत्रेणान्त पापरोगस्य गच्छेत्।
एव पेयश्चित्रकः सूक्ष्मपिष्टः
पिप्पल्यो वा पूर्ववन्मूत्रयुक्ता. ॥४३॥

तद्वत्ताप्यं मासमात्रञ्च पेय तेनाभ्यक्त' देहमालेपयेच्च। आरिष्टत्वक् सप्तपर्णी च तुल्या लाक्षा मुस्त' पञ्चमूल्यौ हरिद्रे ॥४४॥

मञ्जिष्ठाद्यौ वासको देवदारु
पथ्यावल्ली व्योषधात्रीविडङ्गम्।
सामान्याय योजयित्वा विडङ्गै-
श्चूर्णं कृत्वा तत्फलोन्मानमश्नन् ॥४५॥
कुष्ठाज्जन्तुर्मुच्यते त्रैफलं वा
सर्पिर्द्रौणं व्योषयुक्तञ्च युञ्जन्।
गोमूत्राम्बुद्रोणसिद्धेऽश्वपीडे
सिद्धं सर्पिर्नाशयेच्चापि कुष्ठम् ॥४६॥
आरग्वधे ससप्तर्णे पटोले
सवृक्षके नक्तमाले सनिम्बे।
जीर्णं पक्कं तद्वरिद्राद्वयेन
हन्यात् कुष्ठं मुष्कके चापि सर्पिः ॥४७॥
शोणारिष्टं पद्मकं रक्तसारं
क्षमाद्राद्यौ वृचको वीजकश्च।
योज्या. स्नाने दह्यमानस्य जन्तोः
पेया वा स्यात् चौद्रयुक्ता त्रिभण्डी ॥४८॥
खादेत् कुष्ठी मांसपाते पुराणान्
मुद्गान् सिद्धान् निम्बतोये सतैलान्।
निम्बक्वाथं जातसत्वः पिबेद्वा
क्वाथं वार्काखकंसमच्छदानाम् ॥४९॥
अग्रेष्वङ्गेष्वश्वमारस्य मूलं
लेपो युक्त. स्याद्विडङ्गै समूत्रै।
मूत्रेस्तेन सेचयेद्भोजयेच्च
सर्वाहारान् सम्प्रयुक्तान् विडङ्गैः ॥५०॥

कारञ्ज वा सार्षप वा क्षरेपु
चेष्य तैल शिग्रुकोशाम्रयोर्वा।
पक्क सर्वैर्वा कटूष्णै सतिक्तै-
र्शेष च स्याद् दुष्टवत् सविधानम् ॥५१॥
सप्तपर्णकरञ्जार्कमालतीकरवीरजम्।
स्नुहीशिरीषयोर्मूल चित्रकास्फोतयोरपि ॥५२॥
विषलाङ्गलवज्राख्यकासीसालमन शिला।
करञ्जवीज त्रिकटु त्रिफला रजनीद्वयम ॥५३॥
सिद्धार्थकान् विडङ्गानि प्रपुन्नाडञ्च सहरेत्।
मूत्रपिष्टै पचेदेतैस्तैल कुष्ठविनाशनम ॥५४॥
एतद्वज्रकमभ्यङ्गान्नाडीदुष्टव्रणापहम्।
स्त्रिद्धार्द्धककरञ्जौ द्वौ द्वे हरिद्रे रसाञ्जनम् ॥५५॥
कुटजश्च प्रपुन्नाडसप्तपर्णौ सुमाद्नी।
लाक्षासर्जरसोऽर्कश्च सास्फोतारग्वधो स्नुही ॥५६॥
शिरीषस्तुवराख्यस्तु कुटजारुष्करौ वचा।
कुष्ठ कृमिघ्न मञ्जिष्ठा लाङ्गली चित्रक तथा ॥५७॥
मालती कटुतुम्बी च गन्धाह्वा मूलक तथा।
सैन्धव करवीरञ्च गृहधूम विष तथा ॥५८॥
काम्पिल्लक ससिन्दूर तेजोह्वातुत्थकाह्वये।
समभागानि सर्वाणि कल्कपेष्याणि कारयेत् ॥५९॥
गोमूत्र द्विगुण दद्यात् तिलतैलाच्चतुर्गुणम्।
कारञ्ज वा महावीर्य्य सार्षप वा महागुणम् ॥६०॥
अभ्यङ्गात् सर्वकुष्ठानि गण्डमालाभगन्दरान्।
नाडीदुष्टव्रणान् घोराञ्नाशयेन्नात्र सशय. ॥६१॥

महावज्रकमित्येतन्नाम्ना तैलं महागुणम् ।
पित्तावापैर्मूत्रपिष्टैस्तैलं लाक्षादिकं कृतम् ॥६२॥
सप्ताहं कटुकालाब्वां निदधीत चिकित्सकः ।
पीतवन्तं ततो मात्रां तेनाभ्यक्तञ्च मानवम् ॥६३॥
शोषयेदातपे तस्य दोषा गच्छन्ति सर्वशः ।
स्रुतदोषं समुत्थाप्य स्नातं खदिरवारिणा ॥६४॥
यवागूं पाययेदेनं साधितां खदिराम्बुना ।
एवं संशोधने वर्गे कुष्ठघ्नेष्वौषधेषु च ॥६५॥
कुर्य्यात् तैलानि सर्पींषि प्रदेहोद्घर्षणानि च ।
प्रातः प्रातश्च सेवेत योगान् वैरेचनान् शुभान् ॥६६॥
पञ्च षट् सप्त चाष्टौ वा येनत्थानं न गच्छति ।
कारभं वा पिबेन्मूत्रं जीर्णे तत्क्षीरभोजनम् ॥६७॥
जातसत्वानि कुष्ठानि मासैः षड्भिरपोहति ।
दिहन्नुरन्तं कुष्ठस्य खदिरं कुष्ठपीडितः ॥६८॥
सर्वथैव प्रयुञ्जीत स्नानपानाशनादिषु ।
यथा हन्ति प्रवृद्धत्वात् कुष्ठमातुरमोजसा ॥६९॥
तथा हन्त्युपयुक्तस्तु खदिरः कुष्ठमोजसा ।
नीचरोमनखोऽश्रान्तो हिताशौषधतत्परः ।
योषिन्मांससुरावर्जी कुष्ठी कुष्ठमपोहति ॥७०॥

---

## दशमोऽध्यायः ।

अथातो महाकुष्ठचिकित्सितं व्याख्यास्यामः ।
कुष्ठेषु मेहेषु कफामयेषु सर्वाङ्गशोफिषु च दारुणेषु ।

कृशत्वमिच्छतस्तु च मेदुरेषु योगानिमानप्रमतिर्विदध्यात्॥१

तुषान् यवान्नि'पूतान् रात्रौ गोमूत्रपर्य्युषितान्महति किलिञ्जे शोषयेदेवं सप्तरात्र भावयेत् शोषयेच्च। ततस्तान् कपालभृष्टान् शक्तून् कारयित्वा प्रात' प्रातरेव कुष्ठिन प्रमेहिण वा सालसारादिकषायेण कण्टकिवृत्तकषायेण वा पाययेत भल्लातकप्रपुन्नाडावल्गुजार्कचित्रकविडङ्गमुस्तचूर्ण-चतुर्भागयुक्तान्। एवमेव सालसारादिकषायपरिपीताना-मारग्वधादिकषायपरिपीतानां वा गोमूत्रभावितानां वा यवाना शक्तून् कारयित्वा भल्लातकादीनां चूर्णान्यावाप्य खदिराश्मनिम्बराजवृक्षरोहितकगुडूचीनामन्यतमस्य कषायेण शर्करामधुमधुरेण द्राक्षायुक्तेन दाडिमवेतसाम्लेन सैन्धवलवणान्वितेन पाययेदेष सर्वमन्थकल्प॥२॥

यावकांश्च भक्ष्यान्धानालुञ्चककुल्माषापूपपूर्णकोशोत्-कारिकाशष्कुलिकाकुणावीकोनालिप्रभृतीन् सेवेत। यव-विधानेन गोधूमवेणुयवानुपयुञ्जीत॥३॥

अरिष्टानतो वक्ष्याम.। पूतीकचव्यचित्रकसुरदारु-सारिवादन्तीत्रिकटुकाना प्रत्येक षट्पलिका भागा वदर-कुडवस्त्रिफलाकुडव इत्येतेषा चूर्णानि तत पिप्पलीमधुघृते-रन्त प्रलिप्ते घृतभाजने प्राकृतसंस्कारे सप्तोदककुडवा-नयोरजोऽर्द्धकुडवमर्द्धतुलाञ्च गुडस्याभिहितानि चूर्णान्या-वाप्य स्वनुगुप्त' कृत्वा यवपल्ले सप्तरात्र वासयेत्ततो यथा-बलमुपयुञ्जीतैषोऽरिष्ट' कुष्ठमेहमेद पाण्डुरोगश्वयथूनप-हन्ति। एव शालसारादौ न्यग्रोधादावारग्वधादौ वारि-ष्टान् कुर्वीत॥४॥

आसवानतो वक्ष्यामः । पलाशभस्मपरिस्रुतस्योष्णोद-कस्य शीतीभूतस्य त्रयो भागा द्वौ फाणितस्यैकध्यमरिष्ट-कल्पेन विदध्यात् । एव तिलादीनां क्षारेषु शालसारादौ न्यग्रोधाद्यावारग्वधादौ मूत्रेषु चासवान् विदध्यात् ॥५॥

अथ सुरा वक्ष्यामः । शिंशपाखदिरयो सारमादायोत्-पाद्य चोत्तमारणीब्राह्मीकोशातकीस्तत्सर्वमेकत. कषाय-कल्पेन विपाच्योदकमाददीत मण्डोदकार्थं किण्वपिष्टमभि-षुणुयाच्च यथोक्तमेवं सुरा । शालसारादौ न्यग्रोधादावार-ग्वधादौ च विदध्यात् ॥६॥

अतोऽवलेहान् वक्ष्याम. । खदिरासननिम्बराजवृक्षशा-लसारक्वाथे तत्सारपिण्डान् स्वल्पपिण्डान् प्रक्षिप्य विप-चेत् । ततो नातिद्रव नातिसान्द्रमवतार्य्य तस्य पाणितल-पूर्णमप्रातराशी मधुमिश्रं लिह्यादेव शालसारादौ न्यग्रो-धादावारग्वाधादौ च लेहान् कारयेत् ॥७॥

अतश्चूर्णक्रियां वक्ष्याम । शालसारादीनां सारचूर्ण-प्रस्थमाहृत्यारग्वधादिकषायपरिपीतमनेकशः शालसारा-दिकषायेणैव पाययेत् । एवं न्यग्रोधादीनां फलेषु पुष्पेष्वा-रग्वधादीना चूर्णं क्रियां कारयेत् ॥८॥

अत ऊर्द्ध्वमयस्कृतीर्वक्ष्याम । तीक्ष्णलोहपत्राणि तनू-नि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशा-लसारादिकषायेण निर्वापयेत् षोडशवारांस्ततः खदिरा-ङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्दृढताम्ल-वपरिस्रावितानि । ततो यथाबल मात्रां सर्पिर्मधुभ्यां संसृ-ज्योपयुञ्जीत । जीर्णे यथाव्याध्यनम्लमलवणमाहार कुर्वीत ।

एव तुलामुपयुज्य कुष्ठमेहमेदःश्वयथुपाण्डुरोगोन्मादापस्मारानपहत्य वर्षशत जीवति । तुलाया तुलायां वर्षशत ब-गुणोत्कर्षः ॥९॥

एतेन सर्वलौहेष्वयस्कृतयो व्याख्याता । तिव्रच्छ्यामाग्निमन्थ-सप्तच्छदेकेवुकशङ्खिनीतिल्वक-त्रिफला-पलाश-शिशपाना स्वरसमादाय पालाश्यां द्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमय पिण्ड त्रिःसप्तकृत्वो निर्वाप्य तमादाय पुनरासिच्य स्थाल्या गोमयाग्निना विपचेत् सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागौ द्वौ मधुनस्तावद् घृतस्येति दद्यात् । ततश्चतुर्थभागावशिष्टमवतार्य्य परिस्राव्य भूयोऽग्नितप्तान्यय पत्राणि प्रक्षिपेत् । तत प्रशान्तमायसे पात्रे स्वनुगुप्त निदध्यात् । ततो यथायोग शुक्तिं प्रकुञ्च चोपयुञ्जीत । जीर्णे यथाव्याध्याहारमुपसेवेत ॥१०॥

एषौषधायस्कृतिरसाध्यं कुष्ठ प्रमेहं वा साधयति स्थूलमपकर्षति शोफमुपहन्ति सन्नमग्निमुद्धरति विशेषेण चोपदिश्यते राजयक्ष्मिणा वर्षशतायुश्चानया पुरुषो भवति । शालसारादिक्वाथमासिच्य पालाश्या द्रोण्यामयोवन तप्तं निर्वाप्य कृतसंस्कारे कलशेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं चौद्र गुडमिति च दत्त्वा स्वनुगुप्त निदध्यादेता महौषधायस्कृति मासमर्द्धं मासं वा स्थितां यथाबलमुपयुञ्जीत । एव न्यग्रोधादावारेवतादिषु च विदध्यात् ॥११॥

अत' खदिरविधानमुपदेक्ष्याम. । प्रशस्तदेशजातमनुपहतमध्यमवयसं खदिर परित खानयित्वा मध्यममूलं छित्त्वायोमय कुम्भ तस्मिन्नन्तरे निदध्याद्यथा रसग्रहण-

समर्थो भवति। ततश्च गोमयमृद्‌वलितमवकीर्य स्वनै-गोमयमिश्रैरादीपयेत्। यथास्य दह्यमानस्य रसः स्रवत्य-धस्ताद्यदा जानीयात् पूर्णं भाजनमित्यथैवमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्ततो यथायोग मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत जीर्णे भल्लातकविधानवदाहारः परिहारश्च प्रत्युक्तो चोपयुक्ते शत वर्षाणामायुषोऽभिवृद्धिर्भवति। खदिरसारतुलामुदकद्रोणे विपाच्य षोडशभागावशिष्टमवतार्यानुगुप्तं निदध्यात् तमामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत। एष एव सर्ववृक्षसारेषु कल्पः। खदिरसारचूर्णतुलां खदिरसारक्वाथमात्रां वा प्रातः प्रातरुपसेवेत खदिरसारक्वाथसिद्धमाविकं वा सर्पिः। अमृतवल्लीस्वरसं क्वाथं वा प्रातः प्रातरुपसेवेत तत्सिद्धं वा सर्पिः। अपराह्णे ससर्पिष्कमोदनमामलकयूषेण भुञ्जीतैवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यत इति॥१२॥

कृष्णतिलभल्लातकतैलामलकरससर्पिषां द्रोणं शालसारादिकषायस्य च त्रिफलात्रिकटुकपरूषफलमज्जविडङ्गफलसारचित्रकार्कावल्गुजहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकातिविषारसाञ्जनप्रियङ्गूनां पालिकान् भागांस्तानेकध्यं स्नेहपाकविधानेन पचेत् तत्साधुसिद्धमवतार्य परिस्राव्यानुगुप्तं निदध्यात्। तत उपसंस्कृतशरीरः प्रातः प्रातरुत्थाय पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदकसिद्धं स्वौदनमश्नीयात्। खदिरोदकसेवीत्येवं द्रोणमुपयुज्य सर्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुररोगो भवति॥१३॥

भवति चात्र ।

सुरामन्थासवारिष्टाश्चैतांश्चूर्णान्यवस्कृतौ ।
सहस्रशोऽपि कुर्वीत वीजेनानेन बुद्धिमान् ॥१४॥

---

## एकादशोऽध्यायः ।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः ।

द्वौ प्रमेहौ सहजोऽपथ्यनिमित्तश्च भवतः । तत्र सहजो मातृपितृवीजदोषकृतः । अहिताहारजोऽपथ्यनिमित्तः । तयोः पूर्वेणोपद्रुतः कृशो रूक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति । उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति । तत्र कृशमन्नपानप्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत् । स्थूलमपतर्पणयुक्ताभिः ॥१॥

सर्व एव च परिहरेयुः सौवीरकतुषोदकशुक्तमैरेयसुरासवतोयपयस्तैलघृतेक्षुविकारदधिपिष्टान्नाम्लपानकानि ग्राम्यानूपौदकमांसानि चेति ॥२॥

ततः शालिषष्टिकयवगोधूमकोद्रवोद्दालकानन्नवान् भुञ्जीत । चणकाढकीकुलत्थमुद्गविकल्पेन तिक्तकषायाभ्यां शाकगणाभ्यां निकुम्भेङ्गुदीसर्षपातसीतैलसिद्धाभ्यां यव-मूलैर्वा जाङ्गलैर्मांसैरपहृतमेदोभिरनम्लै रघृतैश्चेति ॥३॥

तत्रादित एव प्रमेहिणं स्निग्धमन्यतमेन तैलेन प्रियङ्ग्वादिसिद्धेन वा घृतेन वामयेत् प्रगाढं विरेचयेच्च । विरेचनादनन्तरं सुरसादिकषायेणास्थापयेन्महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन दह्यमानञ्च न्यग्रोधादिकषायेण निःस्नेहेन । ततः शुद्धदेहमामलकरसेन हरिद्रां मधुसंयुक्तां

पाययेत् त्रिफलाविशालादेवदारुमुस्तकषायं वा शालकम्पिल्लकमुष्ककककल्कमक्षमात्रं वा मधुमधुरमामलकरसेन हरिद्रायुतम्। कुटजकपित्थरोहितविभीतकसप्तपर्णपुष्पकल्कं वा। निम्बारग्वधसप्तपर्णमूर्वाकुटजसोमवृक्षपलाशानां वा त्वक्पत्रमूलफलपुष्पकषायाणि। एते पञ्च प्रयोगाः सर्वमेहानामपहन्तारो व्याख्याताः ॥४॥

विशेषतस्त्वत ऊर्द्धम्। तत्रोदकमेहिनं पारिजातकषायं पाययेत्। इक्षुमेहिनं वैजयन्तीकषायम्। सुरामेहिनं निम्बकषायम्। सिकतामेहिनं चित्रककषायम्। शनैर्मेहिनं खदिरकषायम्। लवणमेहिनं पाठागुरुकषायम्। पिष्टमेहिनं हरिद्रादारुहरिद्राकषायम्। सान्द्रमेहिनं सप्तपर्णकषायम्। शुक्रमेहिनं दूर्वाशैवलप्लवहठकरञ्जकसेरुककषायं ककुभचन्दनकषायं वा। फेनमेहिनं त्रिफलारग्वधमृद्वीकाकषायं मधुरं कफजे तु मधु मधुरमिति। पैत्तिकेषु नीलमेहिनं शालसारादिकषायमश्वत्थकषायं वा पाययेत्। हरिद्रामेहिनं राजवृक्षकषायम्। अम्लमेहिनं न्यग्रोधादिकषायं मधुमिश्रम्। क्षारमेहिनं त्रिफलाकषायम्। मञ्जिष्ठामेहिनं मञ्जिष्ठाचन्दनकषायम्। शोणितमेहिनं गुडूचीतिन्दुकास्थिकाश्मर्य्यखर्जूरकषायं मधुमिश्रम् ॥५॥

अत ऊर्द्धमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः। तद्यथा। सर्पिर्मेहिनं कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्कं गुडूचीचित्रककषायेण पाययेत्। वसामेहिनमग्निमन्थकषायं शिंशपाकषायं वा। क्षौद्रमेहिनं खदिरक्रमुक-

कषाय हस्तिमेहिन तिन्दुककपित्थशिरीषपलाशपाठामूर्वा-दुःस्पर्शाकषाय मधुमिश्र हस्त्यश्वशूकरखरोष्ट्रास्थिक्षार चेति। दह्यमानमौदककन्दक्वाथसिद्धा यवागू क्षीरेक्षुरसमधुरा पाययेत् ॥६॥

तत प्रियङ्‌ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीवकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टानयस्कृतीर्लेहानासवान् कुर्वीत। शृङ्गाटकगिलोड्यबिसमृणालकसेरुकमधुकाम्रजम्ब्वसनतिनिशककुभकट्वङ्गरोध्रभल्लातकचर्मिवृक्षगिरिकर्णिकाशीतशिवनिचुलदाडिमाजकर्ण हरिद्रवराजादनगोनघोण्टाविकङ्कतेषु वा। यवान्नविकारांश्च सेवेत। यथोक्तकषायसिद्धां चास्मै यवागू प्रयच्छेत्। कषायाणि वा पातु महाधनमहिताहारमौषधद्वेषिणमीश्वर वा पाठाभयाचित्रकप्रगाढमनल्पमाक्षिकमन्यतममासव पाययेदङ्गारशूल्यावदग्ध वा माध्वीकमभीक्ष्णम्। मधुकपित्थमरिचानुसिद्धानि चास्मै पानान्युपहरेत्। उष्ट्राश्वतरखरपुरीषचूर्णानि चास्मै दद्यादशनेषु। हिङ्गुसैन्धवयुक्तैर्यूषैः सार्षपैश्च रागैर्भोजयेत्। अविरुद्धानि चास्मै पानभोजनान्युपहरेद्रसवन्ति। प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीडागजतुरगरथपदातिचर्यापरिक्रमणास्त्रोपास्त्रे वा सेवेरन् ॥७॥

अधनस्त्वबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशी ग्रामैकरात्रानुवासी मुनिरिव संयतात्मा योजनशतमधिक वा गच्छेत्। महाधनो वा श्यामाकनीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारो मृगैः सह वसेत् तन्मूत्र-

शक्तश्चेत् सततमनुव्रजेद्वा ब्राह्मणो वा शिलोञ्छवृत्तिर्भूत्वा अश्वरथमुपधावयेत्। पठेत् सततमितरः खनेद्वा कूपम्। क्षयन्तु सततं रक्षेत् ॥८॥

भवन्ति चात्र।

अधनो वैद्यसन्देशादेव कुर्वन्नतन्द्रितः।
संवत्सरादन्तराद्वा प्रमेहात् प्रतिमुच्यते ॥९॥

---

## द्वादशोऽध्यायः।

अथातः प्रमेहपिडकाचिकित्सितं व्याख्यास्यामः।

शरावकाद्या नव पिडकाः प्रागुक्तास्ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ता मृद्व्योऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः ॥१॥

ताभिरुपद्रुतं प्रमेहिणमुपचरेत्तत्र पूर्वरूपेष्वपतर्पणं कषायं बस्तमूत्रं चोपदिशेत्। एवमकुर्वतस्तस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरो भवति प्रमेहश्चाभिव्यक्तो भवति। ततोऽभयतः संशोधनमासेवेत। एवमकुर्वतस्तस्य दोषाः प्रवृद्धा मांसशोणितं प्रदूष्य शोफं जनयन्त्युपद्रवान् वा कांश्चित्तत्रोक्तः प्रतीकारः शिरामोक्षश्च। एवमकुर्वतस्तस्य शोफो वृद्धोऽतिमात्ररुजो विदाहमापद्यते तत्र शस्त्रप्रणिधानमुक्तं व्रणक्रियोपसेवा च। एवमकुर्वतस्तस्य पूयोऽभ्यन्तरमवदार्य्योत्सङ्गं महान्तमवकाशं कृत्वा प्रवृद्धो भवत्यसाध्यः। तस्मादादित एव प्रमेहिणमुपक्रमेत् ॥२॥

भल्लातकविल्वाम्बुपिप्पली-मूलोदकीर्य्यावर्षाभूपुनर्नवाचित्रकशठीस्नुहीवरुणकपुष्पाह्वदन्तीपथ्यादशपलोन्मितान् य-

वकोलकुलत्थांश्च प्रास्थिकान् सलिलद्रोणे नि:क्काथ्य चतुर्भागावशिष्टेऽवतार्य्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पलीविडङ्गशिरीषाणां भागैरर्द्धपलिकैर्घृतप्रस्थं विपाचयेत्तन्मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनं नाम्नाधान्वन्तरम्॥ ३॥

दुर्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीरत्वात्तस्मात्तीक्ष्णमेतेषां शोधनं कुर्वीत। पिडकापीडिताः सोपद्रवाः सर्व एव प्रमेहा मूत्रादिमाधुर्य्यं मधुगन्धसामान्यात्पारिभाषिकीं मधुमेहतां लभन्ते। न चैतान् कथञ्चिदपि स्वेदयेत् मेदोबहुलत्वादेतेषां विशीर्य्यते देहः स्वेदेन रसायनीनाञ्च दौर्बल्यान्नोर्द्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः। ततो मधुमेहिनामधः काये पिडकाः प्रादुर्भवन्ति। अपक्वानां पिडकानां शोफवत् प्रतीकारः पक्वानां व्रणवदिति। तैलन्तु व्रणरोपणार्थं कुर्वीत। आरग्वधादिकषायमुत्सादनार्थं शालसारादिकषायं परिषेचने पिप्पल्यादिकषायं पानभोजनेषु पाठाचित्रकशार्ङ्गेष्टाक्षुद्रबृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात्। शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य्य परिस्राव्य पुनरुपनीय साधयेत्। सिध्यति चामलकरोध्रप्रियङ्गुदन्तीक्षणाःजस्रात्रचूर्णान्यावपेदेतदनुपदग्धलेहीभूतमवतार्य्यानुगुप्तं निदध्यात्ततो यथायोगमुपयुञ्जीत। एष लेहः [illegible]मेहानां हन्ता॥ ४॥

त्रिफलादिचक्रलिकटुविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायसचूर्णस्य तत्सर्वमैकध्यं कृत्वा यथायोगं मात्रां

सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत। एतन्नवायससमितेन जाठर्य्यं न भवति सन्नोऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति ॥५॥

शालसारादिनिर्य्यूहे चतुर्भागावशेषिते ।
परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥६॥
फाणितीभावमापन्नं गुडं शोधितमेव च ।
श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥७॥
ऐकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ।
पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तः शुचौ दृढे ॥८॥
श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ।
खदिराङ्गारतप्तानि बहुशः सन्निपातयेत् ॥९॥
सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत् ।
मासांस्त्रींश्चतुरो वापि यावद्वालोहसङ्क्षयात् ॥१०॥
ततो जातरसं तन्तु प्रातः प्रातर्य्यथाबलम् ।
निषेवेत यथायोगमाहारं चास्य कल्पयेत् ॥११॥
कार्श्यकृद् बलिनामेष सन्नस्याग्नेः प्रसाधकः ।
शोफनुद् गुल्महृत् कुष्ठमेहपाण्ड्वामयापहः ॥१२॥
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ।
अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥१३॥
प्रमेहिणो यदा मूत्रमपिच्छिलमनाविलम् ।
विशदं तिक्तकटुकं तदारोग्यं प्रचक्ष्यते ॥१४॥

---

त्रयोदशोऽध्यायः ।

अथातो मधुमेहचिकित्सितं व्याख्यास्यामः ।
मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितम् ।
योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥१॥
मासे शुक्रे शुचौ चैव शैलाः सूर्य्यांशुतापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥२॥
शिलाजत्विति विख्यातं सर्व्वव्याधिविनाशनम् ।
त्रप्वादीनान्तु लोहानां षसामन्यतमान्वयम् ॥३॥
ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ ।
लोहाद्भवति तथस्मात्छिलाजतु जतुप्रभम् ॥४॥
तस्य लोहस्य तद्वीर्य्यं रसश्चापि बिभर्त्ति तत् ।
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥५॥
यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणा स्मृता ।
यत्सर्व्वं तिक्तकटुकं कषायानुरसं सरम् ॥६॥
कटुपाक्युष्णवीर्य्यञ्च शोषणं छेदनं तथा ।
तेषु यत् कृष्णमलघु स्निग्धं निःशर्करञ्च यत् ॥७॥
गोमूत्रगन्धि यच्चापि तत् प्रधानं प्रचक्षते ।
तद्भावितं सारगणैस्तद्दोषो दिनोदये ॥८॥
पिबेत् सारोदकेनैव स्नात्वा पिष्टं यथाबलम् ।
जाङ्गलेन रसेनान्नं तस्मिन् जीर्णे तु भोजयेत् ॥९॥
उपयुज्य तुलामेव गिरिजादमृतोपमात् ।
वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ॥१०॥
जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः ।
शतं शतं तुलायान्तु सहस्रं दश तौलिके ॥११॥

भल्लातकविधानेन परिहारविधि स्मृत ।
मेह कुष्ठमपस्मारमुन्माद श्लीपद गरम् ॥१२॥
शोष शोफार्शसी गुल्म पाण्डुता विषमज्वरम् ।
अपोहत्यचिरात्कालाच्छिलाजतु निषेवितम ॥१३॥
न सोऽस्ति रोगो यश्चापि निहन्यान्न शिलाजतु ।
शर्करा चिरसम्भूता भिनत्ति च तथाश्मरीम् ॥१४॥
भावनालोडने चास्य कर्त्तव्ये भेषजैर्हितै ।
एवञ्च माक्षिक धातु तापीजममृतोपमम् ॥१५॥
मधुर काञ्चनाभासमम्ल वा रजतप्रभम ।
पिबन् हन्ति जराकुष्ठमेहपाण्ड्वामयक्षयान् ॥१६॥
तद्भावित कपोताश्च कुलत्थाश्च विवर्जयेत् ।
पञ्चकर्मगुणातीत श्रद्धावन्त जिजीविषुम ॥१७॥
योगेनानेन मतिमान् साधयेत् कुष्ठिन नरम् ।
तुवरका ये स्यु पश्चिमार्णवभूमिषु ॥१८॥
वीचीतरङ्गविक्षेपमारुतोद्धूतपल्लवा ।
तेषा फलानि गृह्णीयात् सुपक्वान्यम्बुदागमे ॥१९॥
मज्जस्तेभ्योऽपि सहृत्य शोषयित्वा विचूर्ण्य च ।
तिलवत् पीडयेद् द्रोण्या स्रावयेद्वा कुसुम्भवत् ॥२०॥
तत्तैल सहृत भूय. पचेदातोयसक्षयात् ।
अवतार्य्य करीषे च पक्षमात्र निधापयेत् ॥२१॥
स्निग्ध स्विन्नो हृतमल पश्चादूर्द्ध्वं प्रयत्नवान् ।
चतुर्थभक्तान्तरित. शुक्लादौ दिवसे शुभे ॥२२॥
मन्त्रपूतस्य तैलस्य पिबेन्मात्रा यथाबलम् ।
तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्र्यते ॥२३॥

मज्जसार । महावीर्य । सर्वान् धातून् विशोधय ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युत ॥२४॥
तेनास्योर्द्ध मधश्चापि दोषा यान्त्यसकृत्तत ।
अस्नेहलवणा साय यवागूं शीतला पिबेत् ॥२५॥
पश्चाह प्रपिबेत् तैलमनेन विधिना नर ।
पञ्च परिहरेच्चापि मुद्गयूषौदनाशन ॥२६॥
पञ्चभिर्दिवसैरेव सर्वकुष्ठैर्विमुच्यते ।
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम ॥२७॥
निहन्ति पूर्ववत्पक्व पिबेन्मासमतन्द्रित ।
तेनाभ्यक्तशरीरश्च कुर्वीताहारमीरितम ॥२८॥
भिन्नस्वर रक्तनेत्र विशीर्ण क्रिमिभक्षितम् ।
अनेनाशु प्रयोगेण साधयेत् कुष्ठिन नरम ॥२९॥
सर्पिर्मधुयुत पीत तदेव खदिराम्बुना ।
पञ्चमासरसाहार करोति द्विशतायुषम् ॥३०॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ।
वपुष्मन्त श्रुतिधर करोति त्रिशतायुषम ॥३१॥
शोधयन्ति नर पीता मज्जानस्तस्य मात्रया ।
महावीर्यस्तुवरक कुष्ठमेहापह पर ॥३२॥

सान्तर्धूमस्तस्य मज्जा तु दग्ध
क्षिप्तस्तैले सैन्धव चाञ्जनञ्च ।
ऐम्यं हन्यादर्मनक्तान्ध्यकाचान्
नीलीरोग तैमिर चाञ्जनेन ॥३३॥

## चतुर्दशोऽध्यायः ।

अथात उदराणां चिकित्सितं व्याख्यास्यामः ।

अष्टावुदराणि पूर्वमुद्दिष्टानि । तेष्वसाध्यं बद्धगुदं परिस्रावि चावशिष्टानि कृच्छ्रसाध्यानि सर्वाण्येव प्रत्याख्यायोपक्रमेत । तेष्वाद्यं चतुर्वर्गं भेषजसाध्यं । कालप्रकर्षात् सर्वाण्येव शस्त्रसाध्यानि वर्जयितव्यानि वा ॥१॥

उदरी तु गुर्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान् परिहरेत् । शालिषष्टिकयवगोधूमनीवारान्नित्यमश्नीयात् ॥२॥

तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा तिल्वकविपक्वेनानुलोम्य चित्राफलतैलप्रगाढेन विदारिगन्धाकषायेणास्थापयेदनुवासयेच्च शाल्वणेन चोपनाहयेदुदरम् । भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन चाभीक्ष्णं स्वेदयेत् ॥३॥

पित्तोदरिणन्तु मधुरगणविपक्वेन सर्पिषा स्नेहयित्वा श्यामात्रिफलात्रिवृद्विपक्वेनानुलोम्य शर्करामधुघृतप्रगाढेन न्यग्रोधादिकषायेणास्थापयेदनुवासयेच्च पायसेनोपनाहयेदुदरं भोजयेच्चैनं विदारिगन्धादिसिद्धेन पयसा ॥४॥

श्लेष्मोदरिणं पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीरविपक्वेनानुलोम्य त्रिकटुकमूत्रक्षारतैलप्रगाढेन मुष्ककादिकषायेणास्थापयेदनुवासयेच्च शणातसीधातकीकिण्वसर्षपमूलकवीजकल्कैश्चोपनाहयेदुदरं भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलत्थयूषेण पायसेन वा स्वेदयेच्चाभीक्ष्णम् ॥५॥

दूष्योदरिणन्तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरससिद्धेन सर्पिषा विरेचयेन्मासमर्द्धं मासं वा महावृक्षक्षीरसुरागोमूत्रसिद्धेन वा शुद्धकोष्ठन्तु मद्येनाश्वमारकगुञ्जाकाकादनोमूलकल्कं पाययेत्। इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेत्। वल्लीफलानि वा मूलजं कन्दजं वा विषमासेवयेत्। तेनागदो भवत्यन्यं वा भावमापद्यते ॥६॥

भवति चात्र।

कुपितानिलमूलत्वात् सञ्चितत्वान्मलस्य च।
सर्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम् ॥७॥

अत ऊर्द्ध्वं सामान्ययोगान् वक्ष्यामः। तद्यथा। एरण्डतैलमहरहर्मासं द्वौ वा केवलं गोमूत्रयुक्तं क्षीरयुक्तं वा सेवेतोदकवर्जी माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रम्। उष्ट्रीक्षीराहारो वान्नवारिवर्जी पिप्पलीं वा मासं पूर्वोक्तेन विधानेनासेवेत। सैन्धवाजमोदायुक्तं वा निकुम्भतैलम् ॥८॥

आर्द्रकशृङ्गवेररसपात्रशृतसिद्धं वा वातशूलेऽवचार्य्यम्। शृङ्गवेररसविपक्वं क्षीरमासेवेत। चव्यशृङ्गवेरकल्कं वा पयसा सरलदेवदारुचित्रकमेव वा। मुरङ्गीशालपर्णीश्यामापुनर्नवाकल्कं वा। ज्योतिष्कफलतैलं वा क्षीरेण स्वर्जिकाहिङ्गुमिश्रं पिबेत्। गुडद्वितीयां वा हरीतकीं भक्षयेत्। स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन पथ्याक्षणाचूर्णं वा स्नुहीभावितामुल्कारिकां पक्वां दापयेत्। हरीतकीचूर्णप्रस्थमाढके घृतस्याङ्गारेष्वभिविलाप्य दर्व्वाभिमथ्यानुगुप्तं कृत्वार्द्धमासं यवपल्ले वासयेत्। ततश्चोद्धृत्य परि-

स्राव्य हरीतकीक्वाथाम्लदध्योन्याशाप्य विपचेत् तद्यथायोगं मासमर्द्धमास वा पाययेत् ॥९॥

गव्ये पयसि महावृक्षक्षीरमावाप्य विपचेद्विपक्वं चावतार्य्य शीतीभूतं मन्थानेनाभिमथ्य नवनीतमादाय भूयो महावृक्षक्षीरेणैव विपचेत् । तद्यथायोगं मासं मासार्द्धं वा पाययेत् । चव्यचित्रकदन्त्यतिविषाकुष्ठसारिवात्रिफलाजमोदहरिद्राशङ्खिनीत्रिवृत्त्रिकटुकानामर्द्धकार्षिका भागा राजवृक्षफलमज्जनामष्टौ कर्षा महावृक्षक्षीरपले द्वे गवा क्षीरमूत्रयोरष्टावष्टौ पलानि एतत् सर्वं घृतप्रस्थे समावाप्य विपचेत् । तद्यथायोगं मासमर्द्धं मासं वा पाययेत् । एतानि तिल्वकघृतचतुर्थानि सर्पीष्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचनार्थम् । मूत्रासवारिष्टसुराश्चाभीक्ष्णं महावृक्षक्षीरसंयुता सेवेत । विरेचनद्रव्यकषायं वा शृङ्गवेरदेवदारुप्रगाढम् ॥१०॥

वमनविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादिवचादिहरिद्रादिपरिपठितानाञ्च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानाञ्च लवणानां तत्सर्वं मूत्रगणे प्रक्षिप्य महावृक्षक्षीरप्रस्थञ्च मृदग्निना घट्टयन् विपचेदप्रदग्धकल्कं तत्साधुसिद्धमवतार्य्य शीतीभूतमक्षमात्रा गुटिका वर्त्तयेत् तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रींश्चतुरो वा सेवेत । एषानाहवर्त्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते कोष्ठजांश्च क्रिमीनपहन्ति कासश्वासक्रिमिकुष्ठप्रतिश्यायारोचकाविपाकोदावर्त्तांश्च नाशयति । मदनफलमज्जकुटजजीमूतकेक्ष्वाकुधामार्गवत्रिवृत्त्रिकटु सर्षप लवणानि

महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्टाङ्गुष्ठमात्रां वर्त्तिं कृत्वोदरिण आनाहे तैललवणाभ्यक्तगुदस्यैकां द्वे वा पायौ निदध्यादेषानाहवर्त्तिक्रिया वातमूत्रपुरीषोदावर्त्ताध्मानानाहेषु विधेया ॥११॥

प्लीहोदरिण स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ कुर्पराभ्यन्तरतः सिरां विध्येद् विमर्दयेत्पाणिना प्लीहानं रुधिरस्यन्दनार्थं ततः संशुद्धदेहं समुद्रशुक्तिकाक्षारं पयसा पाययेत् हिङ्गुसौवर्च्चिकाक्षारेण सुतेन पलाशक्षारेण वा यवक्षारम्। पारिजातकेक्षुरकापामार्गक्षारं वा तैलसंसृष्टम्। शोभाञ्जनकषायं वा पिप्पलीसैन्धवचित्रकयुक्तम्। पूतिकरञ्जक्षारं वाम्लस्रुतं विडलवणपिप्पलीप्रगाढम् ॥१२॥

पिप्पलीपिप्पलीमूलचित्रकशृङ्गवेर-यवक्षारसैन्धवानां पालिका भागा घृतप्रस्थं तत्तुल्यं क्षीरं तदैकध्यं विपाचयेदेतत् षट्पलकं नाम सर्पिः प्लीहाग्निसङ्गगुल्मोदरोदावर्त्तश्वयथुपाण्डुरोगकासश्वासप्रतिश्यायोर्द्ध्ववातविषमज्वरानपहन्ति। मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत। यकृद्दाल्येऽप्येष एव क्रियाविभागः। विशेषतस्तु दक्षिणबाहौ सिराव्यधः ॥१३॥

मणिबन्धं सकृन्नाम्य वामाङ्गुष्ठसमीरिताम्।
दहेत्सिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये ॥१४॥

बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणान्यन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं बालं वापोह्य मलजातं वा ततो

मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य तच्छिद्रमन्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत् । दष्टे च तासां कायानपहरेन्न शिरांसि ततः पूर्ववत् सीव्येत् सन्धानञ्च यथोक्तं कारयेत् यष्टीमधुकमिश्रया च कृष्णमृदावलिप्य बन्धेनोपचरेत् । ततो निवातमागारं प्रवेश्याचारिकमुपदिशेद्वासयेच्चैनं तैलद्रोण्यां सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ॥१५॥

उदकोदरिणस्तु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्य स्थितस्यासै. सुपरिगृहीतस्याकक्षात्परिवेष्टितस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत् । तत्र त्रपादीनामन्यतमस्य नाडीं द्विद्वारां पक्षनाडीं वा संयोज्या दोषोदकमवसिञ्चेत्ततो नाडीमपहृत्य तैललवणेनाभ्यज्य व्रणबन्धेनोपचरेन्नचैकस्मिन्नेव दिवसे सर्वं दोषोदकमपहरेत् सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दातीसारश्वासपाददाहा उत्पद्येरन्नापूर्य्येत वा भूयतरमुदरमसञ्जातप्राणस्य तस्मात् तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वादशषोडशरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमवसिञ्चेत् । निःस्रुते निःस्रुते च दोषे गाढतरमाविककौशेयचर्मणामन्यतमेन परिवेष्टयेदुदरं तथा नाध्मापयति वायुः षण्मासांश्च पयसा भोजयेज्जाङ्गलरसेन वा ततस्त्रीन्मासानर्द्धोदकेन पयसा फलाम्लेन जाङ्गलरसेन वावशिष्टं मासत्रयमन्नं लघु हितं वा सेवेतैवं संवत्सरेणागदो भवति ॥१६॥

भवति चात्र ।

आस्थापने चैव विरेचने च पाने तथाहारविधिक्रियासु ।
स्वादुरिष्य कुशलैः प्रयोज्यः क्षीरं घृतं जाङ्गलजो रसो वा
॥१७॥

---

## पञ्चदशोऽध्याय ।

अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः ।

नातः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणमत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्त्तव्यं स्पर्शेन । उत्कर्षणापकर्षणस्थानापवर्तनोत्कर्त्तनभेदनच्छेदनपीडनर्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं वा हिंसता तस्मादधिपतिमापृच्छ्य परं यत्नमास्थायोपक्रमेत ।१।

तत्र समासेनाष्टविधा मूढगर्भगतिरुद्दिष्टा स्वभावगता अपि तत्र सङ्गा भवन्ति शिरसो वैगुण्याद् मयोजघनस्य वा । जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत । निर्हरणशक्ये च्यवनान्मन्त्रानुपश्रृणुयात् तान् वक्ष्यामः ॥२॥

इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥३॥

इदममृतमपां समुद्धृतं वै
तव लघु गर्भमिमं प्रमुञ्चतु स्त्री ।
तदनलपवनार्कवासवास्ते
सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥४॥

मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्येण रश्मयः ।

मुक्त सर्वभयाद् गर्भं एतद्धि हि विरमावित ॥५॥

औषधानि च विदध्याद्यथोक्तानि। मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वनगवृत्तिकाशाल्मलीमृतसम्प्रुताभ्यां सर्चयित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत्। तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्। एकसक्थिप्रपन्नस्येतरसक्थि प्रसार्य्यापहरेत्। स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्द्धमुत्क्षिप्य सक्थिनी प्रसार्य्यापहरेत्। तिर्य्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चाद्र्द्धमूर्द्धमुत्क्षिप्य पूर्वार्द्धमपत्यपथं प्रत्यार्जवमानीयापहरेत्। पार्श्वापवृत्तशिरसमंसम्प्रपीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्। बाहुद्वयप्रतिपन्नस्योर्द्धमुत्पीड्यासौ शिरोऽनुलोममानीयापहरेत्। द्वावन्त्यावसाध्यौ मूढगर्भौ। एवमशक्ये शस्त्रमवचारयेत् ॥६॥

सचेतनञ्च शस्त्रेण न कथञ्चन दारयेत्।
दार्य्यमाणो हि जननीमात्मानं चैव घातयेत् ॥७॥

तत्र स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य्य शिरःकपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वापहरेद्भिन्ने शिरसि चाक्षिकूटे गण्डे वा अंससक्तस्यांसदेशे बाहुं छित्त्वा दृतिमिवाततं वातपूर्णोदरं वा विदार्य्य निरस्यान्त्राणि शिथिलीभूतमाहरेज्जघनसक्तस्य वा जघनकपालानीति ॥८॥

यद्यदङ्गं हि गर्भस्य तस्य सजति तत्तद्विदद्
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीञ्च यत्नतः
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः।

तत्रानल्पमतिर्वैद्यो वर्त्तेत विधिपूर्वकम् ॥१०॥
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः ।
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥११॥
मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता ।
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात् कदाचन ॥१२॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक् ।
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा ॥१३॥
धुनुयाच्च मुहुर्नारीं पीडयेद्वासपिण्डिकाम् ।
तैलाक्तयोर्नरैव तां पातयेन्मतिमान् भिषक् ॥१४॥
एवं निहृतशल्यान्तु सिञ्चेदुष्णेन वारिणा ।
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ।
एवं मृद्वीभवेद्योनिस्तच्छूलं चोपशाम्यति ॥१५॥
कृष्णातन्मूलशुण्ठीला हिङ्गुभार्गीसदीप्यकाः ।
वचामतिविषा रास्ना चव्यं सञ्चूर्ण्यं पाययेत् ॥१६॥
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च ।
क्वाथं चैषां तथा कल्कं चूर्णं वा स्नेहवर्जितम् ॥१७॥
शाकत्वग्हिङ्गुतिविषापाठाकटुकरोहिणी ।
तथा तेजोवती चापि पाययेत्पूर्ववद्भिषक् ॥१८॥
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत् ।
पाययेदासवं नक्तमरिष्टं वा सुसंस्कृतम् ॥१९॥
[illegible] पञ्चकुम्भाभ्यां तोयमाचमने हितम् ।
[illegible] ये चान्ये [illegible]स्तान् यथास्वमुपाचरेत् ॥२०॥
[illegible] स्निग्धपथ्याल्पभोजना ।
[illegible] भवेत् क्रोधविवर्जिता ॥२१॥

पयो वातहरै सिद्धं दशाहं भोजने हितम्।
रसं दशाहं शेषे तु यथायोगमुपाचरेत्॥२२॥
व्युपद्रवां विशुद्धाञ्च ज्ञात्वा च बलवर्णिनीम्।
ऊर्द्धं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः॥२३॥
योनिसन्तर्पणेऽभ्यङ्गे पाने वस्तिषु भोजने।
बलातैलमिदं वास्यै दद्यादनिलवारणम्॥२४॥
बलामूलकषायस्य दशमूलीकृतस्य च।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा॥२५॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम्॥२६॥
तथागुरुं सर्ज्जरसं सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम्॥२७॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम्॥२८॥
तत्साधु सिद्धं सौवर्णे राजते मृण्मयेऽपि वा।
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत्॥२९॥
बलातैलमिदं ख्यातं सर्ववातविकारनुत्॥३०॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत्।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्॥३१॥
वातक्षीणे मर्म्महते मथितेऽभिहते तथा।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते॥३२॥
एतदाक्षेपकादीन् वै वातव्याधीनपोहति।
हिक्कां कासमधीमन्थं गुल्मं श्वासञ्च दुस्तरम्॥३३॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति।

प्रत्यग्रधातु पुरुषो भवेच्च स्थिरयौवन ॥३४॥
राज्ञामेतद्धि कर्त्तव्य राजमात्राश्च ये नरा ।
सुखिन सुकुमाराश्च धनिनश्चापि ये नरा. ॥३५॥
बलाकषायपीतो यस्तिलेभ्यो वाप्यनेकश ।
तैलमुत्पाद्य तत्क्वाथशतपाककृतं शुभम् ॥३६॥
निवाते निभृतागारे प्रयुञ्जीत यथाबलम ।
जीर्णेऽस्मिन् पयसा स्निग्धमश्नीयात् षष्टिकौदनम् ।३७॥
अनेन विधिना द्रोणमुपयुज्यान्नमीरितम ।
भुञ्जीत द्विगुण काल बलवर्णान्वितस्तत ॥३८॥
सर्वपापैर्विनिर्मुक्त शतायु पुरुषो भवेत् ।
शत शत तथोत्कर्षो द्रोणे द्रोणे प्रकीर्त्तित. ॥३९॥
बलाकल्केनातिबलागुडूच्यादित्यपर्णिषु ।
सैरेयके वीरतरौ शतावर्य्यां त्रिकण्टकै ॥४०॥
तैलानि मधुके कुर्य्यात् प्रसारण्याञ्च बुद्धिमान् ।
नीलोत्पल वरीमूल गव्ये चोरे विपाचयेत् ॥४१॥
शतपाकं ततस्तेन तिलतैल पचेद्भिषक् ।
बलातैलस्य कल्कास्तु सुपिष्टास्तत्र दापयेत् ॥४२॥
सर्वेषामेव जानीयादुपयोग चिकित्सक: ।
बलातैलवदेतेषा गुणाश्चैव विशेषत ॥४३॥

---

षोडशोऽध्याय ।

अथातो विद्रधीना चिकित्सित व्याख्यास्याम ।
उक्ता विद्रधय षड़् तत्वसाध्यस्तु सर्वज ।
पञ्चस्वामेषु कर्त्तव्या त्वरित शोफवत् क्रिया ॥१॥

मुरङ्गीमूलकल्कैस्तु घृततैलवसायुतैः।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥२॥
सानूपौदकमांसैस्तु काकोल्यादिः सतर्पणः।
स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने ॥३॥
वेशवारैः सकृशरैः पयोभिः पायसैस्तथा।
स्वेदयेत् सततं चापि निर्हरेच्चापि शोणितम् ॥४॥
स चेदेवमुपक्रान्तः पाकायाभिमुखो यदि।
तं पाचयित्वा शस्त्रेण भिन्द्याद्भिन्नञ्च शोधयेत् ॥५॥
पञ्चमूलकषायेण प्रक्षाल्य लवणोत्तरैः।
तैलैर्भद्रादिमधुकसंयुक्तैः प्रतिपूरयेत् ॥६॥
वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च।
पृथक्पर्ण्यादिसिद्धेन त्रैवृतेन च रोपयेत् ॥७॥
पैत्तिकं शर्करालाजामधुकैः सारिवायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥८॥
पाययेच्छीतकषायैर्वा क्षीरैरिक्षुरसैस्तथा।
जीवनीयघृतैर्वापि सेचयेच्छर्करायुतैः ॥९॥
त्रिवृद्धरीतकीनाञ्च चूर्णं लिह्यान्मधुद्रवम्।
जलौकोभिर्हरेच्चासृक् पक्वं चापाद्य बुद्धिमान् ॥१०॥
क्षीरवृक्षकषायेण प्रक्षाल्यौदकजेन वा।
तिलैः सयष्टिमधुकैः सक्षौद्रैः सर्पिषा युतैः।
उपदिह्य प्रतनुना वाससा वेष्टयेद् व्रणम् ॥११॥
प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः।
सहरिद्रैः कृतं सर्पिः सक्षीरं व्रणरोपणम् ॥१२॥
क्षीरशुक्लापृथक्पर्णीसमङ्गारोध्रचन्दनैः

न्यग्रोधादिप्रवालेषु तटेतेष्वथवा क्वतन ॥१३॥
नक्तमालस्य पत्राणि तरुणानि फलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥१४॥
द्वे हरिद्रे मधूच्छिष्ट मधुक तिक्तरोहिणी ।
प्रियङ्गु कुशमूलञ्च निचुलस्य त्वगेव च ॥१५॥
मञ्जिष्ठाचन्दनोशीरमुत्पल सारिवा त्रिवृत् ।
एतेषा कार्षिकैर्भागैर्घृतप्रस्थ विपाचयेत् ॥१६॥
दुष्टव्रणप्रशमनं नाडीव्रणविशोधनम् ।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिद शुभम् ॥१७॥
दुष्टव्रणाश्च ये केचिद् ये चोत्सृष्टक्रिया व्रणा ।
नाड्यो गम्भीरिका याश्च सद्यश्छिन्नास्तथैव च ॥१८॥
अग्निक्षारकृताश्चैव ये व्रणा दारुणा अपि ।
करञ्जाद्येन हविषा प्रशाम्यन्ति न संशय ॥१९॥
इष्टकासिकतालोहगोशकृत्तुषपांशुभि ।
मूत्रैरुष्णैश्च सतत स्वेदयेत् श्लेष्मविद्रधिम् ॥२०॥
कषायपानैर्वमनैरालेपैरुपनाहनैः ।
हरेद् दोषानभीक्ष्ण चाप्यलाब्वास्तथैव च ॥२१॥
आरग्वधकषायेण पक्व चापाद्य धावयेत् ॥२२॥
हरिद्रात्रिवृताशक्तु तिलैर्मधुसमायुतै ।
पूरयित्वा व्रण सम्यग् बध्नीयात् कीर्त्तित तथा ॥२३॥
तत कुलत्थिकादन्तीत्रिवृच्छ्यामार्कतिल्वकै ।
कुर्य्यात् तैल सगोमूत्र हित तत्र ससैन्धवम् ॥२४॥
पित्तवि द्रधिवत्सर्वा क्रिया निरवशेषत ।
विद्रधौ कुशल कुर्य्याद्रक्तागन्तुनिमित्तयो ॥२५॥

वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेद्विद्रधिशान्तये ॥२६॥
अनयोर्वर्गयोः सिद्धं सर्पिर्वैरेचनेन च ।
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितम् ॥२७॥
एभिरेव गणैश्चापि ससिद्धं स्नेहसंयुतम् ।
कार्य्यमास्थापनं क्षिप्रं तथैवाप्यनुवासनम् ॥२८॥
पानालेपनभोज्येषु मधुशिग्रुद्रुमोऽपि वा ।
दत्तावापो यथादोषमपक्वं हन्ति विद्रधिम् ॥२९॥
तोयधान्याम्लमूत्रैस्तु पेयो वापि सुरादिभिः ।
यथादोषगणक्वाथैः पिबेद्वापि शिलाजतु ॥३०॥
प्रधानं गुग्गुलुञ्चापि शुण्ठीञ्च सुरदारु च ।
स्नेहोपनाहौ कुर्य्याच्च सदा चाप्यनुलोमनम् ॥३१॥
यथोद्दिष्टां सिरां विध्येत् कफजे विद्रधौ भिषक् ।
रक्तपित्तानिलोत्थेषु केचिद्दाहौ वदन्ति तु ॥३२॥
पक्वं वा बहिरुन्नद्धं भित्त्वा व्रण[illegible]चरेत् ।
स्रुतेषूर्द्ध्वमधो वापि मैरेयाम्लसुरा[illegible] ॥३३॥
पेयो वरुणकादिस्तु मधुशिग्रुद्रु[illegible] वा ।
शिग्रुमूलजले सिद्धं ससिद्धार्थक[illegible]म् ॥३४॥
यवकोलकुलत्थानां यूषैर्भुञ्जीत स[illegible] ।
प्रातः प्रातश्च सेवेत मात्रया तत्[illegible]म् ॥३५॥
त्रिवृतादिगणक्वाथसिद्धं वाप्युप[illegible] ।
नोपगच्छेद्यथापाकं प्रयतेत तथा[illegible] ॥३६॥
पर्य्यागते [illegible]द्रधौ तु सिद्धिर्नैका[illegible]ता ।
प्रत्याख्याय तु कुर्वीत मज्जजा[illegible]म् ॥३७॥

स्नेहस्वेदोपपन्नानां कुर्य्याद्रक्तावसेचनम् ।
विद्रध्युक्तां क्रियां कुर्य्यात् पक्वे वास्थि तु भेदयेत् ॥३८॥
निःशल्यमथ विज्ञाय कर्त्तव्यं व्रणशोधनम् ।
धावेत्तिक्तकषायेण तिक्तं सर्पिस्तथा हितम् ॥३९॥
यदि मज्जपरिस्रावो न निवर्त्तेत देहिनः ।
कुर्य्यात् संशोधनीयानि कषायादीनि बुद्धिमान् ॥४०॥
प्रियङ्गुधातकीरोध्रकट्फलं तिनिसैन्धवम् ।
एतैस्तैलं विपक्तव्यं विद्रधिव्रणरोपणम् ॥४१॥

---

## सप्तदशोऽध्यायः ।

अथातो विसर्पनाडीस्तनरोगचिकित्सितं व्याख्यास्यामः ।

साध्या विसर्पास्त्रय आदितो ये
न सन्निपातक्षतजौ हि साध्यौ ।
साध्येषु तत्पथ्यगणैर्विदध्याद्
घृतानि सेकांश्च तथा प्रदेहान् ॥१॥

मुस्ताशताह्वासुरदारुकुष्ठ वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातात्मके चोष्णगणाः प्रयोज्याः सेकेषु लेपेषु तथा घृतेषु ॥२॥
यत् पञ्चमूलं खलु कण्टकाख्यमल्पं महच्चाप्यथ वल्लिजञ्च ।
तच्चोपयोज्यं भिषजा प्रदेहे सेके घृते चापि तथैव तैले ॥३॥

कसेरुशृङ्गाटकपद्मगुन्द्राः
सशैवलाः सोत्पलकर्द्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे
लेपा विधेयाः सघृताः सुशीताः ॥४॥

ह्रीवेरलामज्जकचन्दनानि
शीतोजमुक्तामणिगैरिकाश्च।
क्षीरेण पिष्टा सघृता सुशीता
लेपा प्रयोज्यास्तनव सुखाय ॥५॥
प्रपौण्डरीक मधुक पयस्या
मञ्जिष्ठिका पद्मकचन्दने च।
सुगन्धिका चेति सुखाय लेपा.
पैत्ते विसर्पे भिषजा प्रयोज्या. ॥६॥
न्यग्रोधवर्गैः परिषेचनञ्च घृतञ्च कुर्य्यात् स्वरसेन तस्य।
शीते पयोभिश्च मधूदकैश्च सशर्करैरिक्षुरसैश्च सेकान् ॥७॥
घृतस्य गौरीमधुकारविन्दरोध्राम्बुराजादनगैरिकेषु।
तथार्षभे पद्मकसारिवासु काकोलिमेदाकुमुदोत्पलेषु ॥८॥
सचन्दनाया मधुशर्कराया द्राक्षास्थिरापृश्निशताह्वयासु।
कल्कीकृतासूदकमत्र दत्त्वा न्यग्रोधवर्गस्य तथा शिरादे. ॥९॥
गणस्य बिल्वादिकपञ्चमूल्याश्चतुर्गुण क्षीरमथापि तद्वत्।
अस्य विपक्व परिषेचनेन पैत्तीर्निहन्यात् तु विसर्पनाडी. ॥१०
विस्फोटदुष्टव्रणशीर्षरोगान्
पाक तथास्यस्य निहन्ति पानात्।
ग्रहार्दिते शोषिणि चापि बाले
घृत हि गौर्य्यादिकमेतदिष्टम् ॥११॥
अजाश्वगन्धा सरला सकाला
सैकैषिका चाप्यथवाजशृङ्गी।
गोमूत्रपिष्टो विहित. प्रदेहो
हन्याद्विसर्प कफज स शीघ्रम् ॥१२॥

कालानुसार्य्यागुरुचोचगुञ्जा-
रास्नावचाशीतशिवेन्द्रपर्ण्य ।
पालिन्दिमुञ्जातमहीकदम्बा
हिता विसर्पेषु कफात्मकेषु ॥१३॥

गणस्तु योज्यो वरुणप्रवृत्त क्रियासु सर्वासु विचक्षणेन ।
संशोधन शोणितमोक्षणञ्च श्रेष्ठं विसर्पेषु चिकित्सितं हि ॥१४

सर्वांश्च पक्वान् परिशोध्य धीमान्
व्रणक्रमेणोपचरेद्यथोक्तम ।
नाडी त्रिदोषप्रभवा न सिध्ये-
च्छेषास्तस्र प्रतियत्नसाध्या ॥१५॥

तत्रानिलोत्थामुपनाह्य पूर्वमशेषत पूयगति विदार्य्य ।
तिलैरपामार्गफलैश्च पिष्टा ससैन्धवैर्बन्धनमत्र कुर्य्यात् ॥१६॥

प्रक्षालने चापि सदा व्रणस्य
योज्य महद्यत् खलु पञ्चमूलम् ।
हिस्रा हरिद्रा कटुका बलाञ्च
गोजिह्विकाञ्चापि सविल्वमूलाम ॥१७॥

सहृत्त तैलं विपचेद्व्रणस्य
संशोधन पूरणरोपणञ्च ।
पित्तात्मिका प्रागुपनाह्य धीमा-
नुत्कारिकाभि सपयोघृताभि ॥१८॥

निपात्य शस्त्र तिलनागदन्ती-
यष्ट्याह्वकल्कै परिपूरयेत्ताम ।
प्रक्षालने चापि ससोमनिम्बा
निशा प्रयोज्या कुशलेन नित्यम् ॥१९॥

श्यामात्रिभण्डीत्रिफलासु सिद्ध
हरिद्रयोरीध्रकवृच्चयोश्च।
घृत सदुग्ध व्रणतर्पणेन
हन्याद्गतिं कोष्ठगतापि या स्यात् ॥२०॥
नाडीं कफोत्थामुपनाह्य सम्यक्-
कुलत्थसिद्धार्थकशक्तुकिण्वै।
मृदूकृतामेष्य गतिं विदित्वा
निपातयेच्छस्त्रमशेषकारी ॥२१॥
दद्याद् व्रणे निम्बतिलान् सुपिष्टान्
सुराष्ट्रजासैन्धवसम्प्रयुक्तान्।
प्रक्षालने चापि करञ्जनिम्ब-
जात्यक्षपीलुस्वरसाः प्रयोज्याः ॥२२॥
सुवर्चिकासैन्धवचित्रकेषु निकुम्भतालीनकरूपिकासु।
फलेष्वपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलम् ॥२३
नाडीन्तु शल्यप्रभवां विदार्य्य
निर्हृत्य शल्यं प्रविशोध्य मार्गम्।
संशोधयेत् क्षौद्रघृतप्रगाढै-
स्तिलैस्ततो रोपणमस्य कुर्य्यात् ॥२४॥
कुम्भीकखर्जूरकपित्थबिल्व-
वनस्पतीनाञ्च शलाटुवर्गे।
कृत्वा कषायं विपचेत्तु तैल-
मावाप्य मुस्तासरलाप्रियङ्गू ॥२५॥
सुगन्धिकामोचरसाहिपुष्प-
लोध्राणि विद्ध्यादपि धातकीञ्च।

एतेन शल्यप्रभवा च नाडी
रोहेद् व्रणो वा सुखमाशु चैव ॥२६॥

कृशदुर्बलभीरूणां नाडी मर्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्न तु शस्त्रेण बुद्धिमान् ॥२७॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।
सूचीं निदध्याद्गत्यन्ते तथोन्नम्याशु निर्हरेत् ॥२८॥
सूत्रस्यान्तं समानीय गाढं बन्धं समाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥२९॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्यो वैद्येन जानता ॥३०॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ।
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद् व्रणम् ॥३१॥

या द्विव्रणीयेऽभिहितास्तु वर्त्ति-
स्ताः सर्वनाडीषु भिषग्विदध्यात् ।
घोण्टाफलत्वग्लवणानि लाक्षा
पूगीफलं वा लवणञ्च पत्रम् ॥३२
स्नुह्यर्कदुग्धेन तु कल्क एष
वर्त्तीकृतो हन्त्यचिरेण नाडीः ।
विभीतकाम्रास्थिवटप्रवाला
हरेणुकार्श्चाहिनवीजमज्ज्य ॥३..॥
वाराहकन्दश्च तथा प्रदेयो
नाडीषु तैलेन च मिश्रयित्वा ॥३४॥
कुस्तुम्बुरुं मदनकोद्रवजश्च वाल

कोषातकी शुकनसा मृगभोजनी च ।
अङ्कोठबीजकुसुमं गतिषु प्रयोज्यं
लाक्षोदकाहृतमलासु विकल्प्य चूर्णम् ॥२५॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव
तैलप्रयुक्तमचिरेण गतिं निहन्ति ।
एष्वेव सूत्रसहितेषु विधाय तैलं
तत्साधितं गतिमपोहति सप्तरात्रात् ॥२६॥
पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सौवहेषु ।
तैलं कृतं गतिमपोहति शीघ्रमेतत्
कन्देषु चामरवरायुधसाह्वयेषु ॥२७॥
भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥२८॥
स्तन्ये गते विकृतिमाशु भिषक्तु धात्रीं
पीता घृतं परिणतेऽहनि वामयेत्तु ।
निम्बोदकेन मधुमागधिकायुतेन
वान्तागतेऽह्नि च मुद्गरसाशना स्यात् ॥२९॥
एवं त्र्यहं चतुरहं षडहं वमेद्वा
सर्पिः पिबेत् त्रिफलया सह संयुतं वा ।
भार्गीं वचामतिविषां सुरदारु पाठां
मुस्तादिकं मधुरसां कटुरोहिणीञ्च ॥४०॥
धात्री पिबेत् तु पयसः परिशोधनार्थं-

मारग्वधादिषु वरं मधुना कषायम् ।
सामान्यमेतदुपदिष्टमतो विशेषाद्
दोषान् पयोनिपतितान् शमयेद्यथास्वम् ॥४१॥
रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितं बहुशो विधानम् ।
सम्पच्यमानमपि तन्तु विनोपनाहैः
सम्भोजनेन खलु पाचयितुं यतेत ॥४२॥
शीघ्रं स्तनो हि मृदुमांसतयोपनद्ध
सर्वं प्रकोथमुपयात्यवदीर्य्यते च ।
पक्के च दुग्धहरिणीः परिहृत्य नाडीः
कृष्णञ्च चूचुकयुगं विदधीत शस्त्रम् ॥४३॥
आमे विदाहिनि तथैव गते च पाकं
धात्र्याः स्तनौ सततमेव च निर्दुहीत ॥४४॥

---

## अष्टादशोऽध्यायः ।

अथातो ग्रन्थ्यपच्यर्वुदगलगण्डचिकित्सितं व्याख्यास्यामः ।

ग्रन्थिष्वथामेषु भिषग्विदध्या-
च्छोफक्रियाया विहितं विधिञ्च ।
रक्षेद्बलं चापि नरस्य नित्यं
तद्रक्षितं व्याधिबलं निहन्ति ॥१॥
तैलं पिबेत् सर्पिरथो हयं वा
दत्त्वा वसां वा विहितं विदध्यात् ।
अपेहिवातादशमूलसिद्धं
वेदयतु स्नेहमथो हयं वा ॥२॥

हिंस्राथ रोहिण्यमृताथ भार्गी
श्योनाकबिल्वागुरुकृष्णगन्धा ।
गोजी च पिष्टा सह तालपत्र्या
ग्रन्थौ विधेयोऽनिलजे प्रलेप ॥३॥
स्वेदोपनाहान् विविधांश्च कुर्य्यात्
तथा प्रसिद्धानपरांश्च लेपान् ।
विदार्य्य वा पक्वमपोह्य पूय
प्रक्षाल्य बिल्वार्कनरेन्द्रतोयैः ॥४॥

तिलैः सपञ्चाङ्गुलपत्रमिश्रैः सशोधयेत् सैन्धवसम्प्रयुक्तैः।
शुद्धं व्रणं वाप्यु परोपयुस्तैलेन रास्नासरलान्वितेन ॥५॥

विडङ्गयष्टीमधुकामृताभिः
सिद्धेन वा क्षीरसमन्वितेन।
जलौकसः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनं च ॥६॥
काकोलिवर्गस्य च शीतलानि
पिबेत् कषायाणि सशर्कराणि ।
द्राक्षारसेनेक्षुरसेन वापि
चूर्णं पिबेच्चापि हरीतकीनाम् ॥७॥
मधूकजम्ब्वर्जुनवेतसानां
त्वग्भिः प्रदेहानवचारयेत।
सशर्करैर्वा तृणशून्यकन्दै-
र्दिह्यादभीक्ष्णं मुचुकुन्दजैर्वा ॥८॥
विदार्य्य वा पक्वमपोह्य पूयं
धावेत् कषायेण वनस्पतीनाम्।

तिलैः सयष्टीमधुकैर्विशोध्य
सर्पिः प्रयोज्य मधुरैर्विपक्वम् ॥९॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ।
स्विन्नस्य विम्लापनमेव कुर्यादङ्गुष्ठलोहोपलवेणुदण्डैः ॥१०॥
विकङ्कतारग्वधकाकनन्तीकाकादनीतापसवृक्षमूलैः ।
आलेपयेत्पिण्डफलार्कभार्गीकरञ्जकालामदनैश्च विद्वान् ॥११॥
अमर्मजातं शममप्रयात-
मपक्वमेवापहरेद्विदार्य ।
दहेत् स्थिते वासृजि सिद्धकर्मा
सद्यः क्षतोक्तञ्च विधिं विदध्यात् ॥१२॥
या मांसकन्द्यः कठिना वृहत्य-
स्तास्वेष योज्यश्च विधिर्विधिज्ञैः ।
शस्त्रेण वापाद्य सुपक्वमाशु
प्रक्षालयेत् पथ्यतमैः कषायैः ॥१३॥
संशोधनैस्तञ्च विशोधयेयुः क्षारोत्तरैः क्षौद्रष्टतप्रगाढैः ।
शुद्धे च तैलं त्ववचारणीयं विडङ्गपाठारजनीविपक्वम् ॥१४॥
मेदःसमुत्थे तिलकल्कदिग्धं
दत्त्वोपरिष्टाद्द्विगुणं पटान्तम् ।
हुताशतप्तेन मुहुः प्रमृज्या-
ल्लोहेन धीमान् दहनं हिताय ॥१५॥
प्रलिप्य दार्वीमथ लाक्षया वा
प्रतप्तया स्वेदनमस्य कार्य्यम् ।
निपात्य वा शस्त्रमपोह्य मेदो
दहेत् सुपक्वन्त्वथ वा विदार्य्यम् ॥१६॥

प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः
सुवर्चिकाद्यैर्हरितालमिश्रैः।
ससैन्धवैः क्षौद्रघृतप्रगाढै
क्षारोत्तरैरेनमभिप्रलिम्प्य ॥१७॥

तैलं विदध्याद्‌ द्विकरञ्जगुञ्जावचावलेखेङ्गुदमूत्रसिद्धम्।
जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु चैव ॥१८॥

सर्पिः कृतं ह्यन्यपचीप्रवृद्धा
हिंसाप्रवृत्तं तदुदारवीर्य्यम्।
निर्गुण्डिजातीवरिहिंस्त्रयुक्तं
जीमूतकं माक्षिकसैन्धवाद्यम् ॥१९॥

अभिप्रतप्तं वमनं प्रगाढं दुष्टापचीषूत्तममादिशन्ति।
केटर्य्यविम्बीकरवीरसिद्धं तैलं हितं मूर्द्धविरेचनञ्च ॥२०॥
शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु।
मधूकसारश्च हितोऽवपीडे फलानि शिग्रोः खरमञ्जरेर्वा ॥२१॥

ग्रन्थीनमर्मप्रभवानपक्का-
नुद्धृत्य चाग्निं विदधीत पश्चात्।
क्षारेण वापि प्रतिसारयेत्तु
संलिख्य शस्त्रेण यथोपदेशम् ॥२२॥
पार्ष्णिं प्रति द्वादश चाङ्गुलानि
भित्त्वेन्द्रवस्तिं परिवर्ज्य धीमान्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो
निकृष्य जालान्यनलं विदध्यात् ॥२३॥
आगुल्फकर्णात् सुमितस्य जन्तो-
स्तस्याष्टभागं खुडकाद्विभज्य।

घोणर्जुवेध सुरराजवस्ते-
र्हित्वाक्षिमात्र त्वपरे वदन्ति ॥२४॥
मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रय भिषक्।
अङ्गुल्यन्तरित सम्यगपचीना निवृत्तये ॥२५॥
चूर्णस्य काले प्रचलाककाक-
गोधाहिकूर्मप्रभवा मसीन्तु।
दद्याच्च तैलेन सहेङ्गुदीना
यद्वक्ष्यते क्षीपदिनाञ्च तैलम् ॥२६॥
विरेचन धूममुपाददीत भवेच्च नित्य यवमुद्गभोजी।
कर्कारुकैर्वारुकनारिकेरपियालपञ्चाङ्गुलवीजचूर्णैः ॥२७॥
वातार्बुद क्षीरघृताम्बुसिद्धै-
रुष्णा सतैलैरुपनाहयेत्तु।
कुर्य्याच्च मुख्यान्युपनाहनानि
सिद्धैश्च मासैरथ वेसवारै ॥२८॥
स्वेद विदध्यात् कुशलस्तु नाड्या
शृङ्गेन रक्त बहुशो हरेच्च।
वातघ्ननिर्यूहपयोऽम्लभागै
सिद्ध घृतार्ध्य त्रिवृत पिबेद्वा ॥२९॥
स्वेदोपनाहा मृदवस्तु पथ्या.
पित्तार्बुदे कार्यविरेचनञ्च।
विघृष्य चोडुम्बरशाकगोजी-
पत्रैर्भृशं क्षौद्रयुतै प्रलिम्पेत् ॥३०॥
श्लक्ष्णीकृतै. सर्जरसप्रियङ्गु-
पत्तङ्गरोध्राञ्जनयष्टिकाह्वैः।

विस्राव्य चारग्वधगोजिसोमा
श्यामा च योज्या कुशलेन लेपे ॥२१॥
श्यामागिरिह्वाञ्जनकोरसेषु
द्राचारसे समलिकारसे च।
घृतं पिबेत् क्लीतकसम्प्रसिद्ध
पित्तार्बुदी तज्जठरी च जन्तुः ॥२२॥
शुद्धस्य जन्तोः कफजेऽर्बुदे तु
रक्तेऽवसिक्ते तु ततोऽर्बुदं तत्।
द्रव्याणि यान्यूर्द्धमधश्च दोषान्
हरन्ति तैः कल्ककृतैः प्रदिह्यात् ॥२३॥
कपोतपारावतविड्विमिश्रैः
सकास्यनीलैः शुकलाङ्गलाख्यैः।
मूत्रैस्तु काकादनिमूलमिश्रैः
चारप्रदिग्धैरथवा प्रदिह्यात् ॥२४॥
निष्पावपिण्याककुलत्थकल्कैः-
र्मांसप्रगाढैर्दधिमस्तुयुक्तैः।
लेपं विदध्यात् क्रमयो यथात्र
मूर्च्छन्ति मुञ्चन्त्यथ मक्षिकाश्च ॥२५॥
अल्पावशिष्टे क्रिमिभिः क्षते च
लिखेत्ततोऽग्निं विदधीत पश्चात्।
यदल्पमूलं त्रपुताम्रसीस-
पट्टैः समावेष्ट्य तदायसैर्वा ॥२६॥
चाराग्निशस्त्राण्यसकृद्विदध्यात्
प्राणानहिंसन् भिषगप्रमत्तः।

आस्फोतजातीकरवीरपत्रै
कषायमिष्टं व्रणशोधनार्थम् ॥३७॥
शुद्धे च तैलं विदधीत भार्गीविडङ्गपाठात्रिफलाविपक्वम् ।
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञ ॥३८॥
मेदोऽर्बुदं स्विन्नमथो विदार्य्य विशोध्य सीव्येद्गतरक्तमाशु ।
ततो हरिद्रागृहधूमरोध्रपत्तङ्गचूर्णैः समनःशिलालैः ॥३९॥
व्रणं प्रतिग्राह्य मधुप्रगाढैः
करञ्जतैलं विदधीत शुद्धे ।
सशेषदोषाणि हि योऽर्बुदानि
करोति तान्याशु पुनर्भवन्ति ॥४०॥
तस्मादशेषाणि समुद्धरेत् तु
हन्यु सशेषाणि यथाहि वह्निः ।
संस्वेद्य गण्डं पवनोत्थमादौ
नाड्यानिलघ्नौषधपत्रभङ्गैः ॥४१॥
अम्लैः समूत्रैर्विविधैः पयोभिः
कृष्णैः सतैलैः पिशितैश्च विद्वान् ।
विस्रावयेत् स्विन्नमतन्द्रितश्च
शुद्धं व्रणं चाप्युपनाहयेत् तु ॥४२॥
शणातसीमूलकशिग्रुकिण्वप्रियालमज्जानुयुतैस्तिलैस्तु ।
कालामृताशिग्रुपुनर्नवार्कगजादिनामाकरहाटकुष्ठैः ॥४३॥
एकैषिकावृचकतिल्वकैश्च सुराम्लपिष्टैरसकृद्विदिह्यात् ॥४४॥
तैलं पिबेच्चामृतवल्लिनिम्ब-
हंसाह्वयावृचकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु

हिताय नित्यं गलगण्डरोगे ॥४५॥
स्वेदोपनाहैः कफसम्भवन्तु
सम्स्वेद्य विस्रावणमेव कुर्य्यात्।
ततोऽजगन्धातिविषाविशल्या-
विषाणिकाकुष्ठशुकाह्वयाभिः ॥४६॥
पलाशभस्मोदकपेषिताभि-
र्दिह्यात् सगुञ्जाभिरशीतलाभिः।
दृशार्द्धसङ्घैर्लवणैश्च युक्तं
तैलं पिबेन्मागधिकादिसिद्धम् ॥४७॥
प्रच्छर्दनं मूर्द्धविरेचनञ्च
धूमश्च वैरेचनिको हितस्तु।
पाकक्रमो वापि सदा विधेयो
वैद्येन पाकं गतयोः कथञ्चित् ॥४८॥
कटुत्रिकक्षौद्रयुता समूत्रा
भक्ष्या यवान्नानि रसाश्च मौद्गाः।
सशृङ्गवेराः सपटोलनिम्बा
हिताय देया गलगण्डरोगे ॥४९॥
मेदःसमुत्थे तु यथोपदिष्टां
विध्येत् सिरां स्निग्धतनोर्नरस्य।
श्यामासुधालोहपुरीषदन्ती-
रसाञ्जनैश्चापि हितं प्रदेहः ॥५०॥
मूत्रेण वालोड्य हिताय सारं
प्रातः पिबेच्छालमहीरुहाणाम्।
शस्त्रेण वापाट्य विदार्य्य चैनं

मेद' समुद्धृत्य हिताय सीव्येत् ॥५१॥
मज्जाज्यमेदोमधुभिर्दहेद्वा
दग्धे च सर्पिर्मधु चावचार्य्यम।
कासीसतुल्ये च ततोऽत्र देये
चूर्णीकृते रोचनया समेते ॥५२॥
तैलेन चाभ्यञ्ज्य हिताय दद्यात्
सारोद्भवं गोमयजञ्च भस्म।
हितश्च नित्य त्रिफलाकषायो
गाढ़श्च बन्धो यवभोजनञ्च ॥५३॥

---

## एकोनविंशोऽध्याय।

अथातो वृद्ध्युपदंशश्लीपदाना चिकित्सितं व्याख्यास्याम।
अन्त्रवृद्धा विना षड्‌वा वृद्धयस्तासु वर्जयेत्।
अश्वादियान व्यायामं मैथुन वेगनिग्रहम् ॥१॥
अत्यासन चङ्क्रमणमुपवासं गुरूणि च।
तत्रादितो वातवृद्धौ त्रैवृतस्निग्धमातुरम् ॥२॥
स्विन्न' चैन यथान्याय पाययेत विरेचनम्।
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरम् ॥३॥
सक्षीर वा पिबेन्मास तैलमेरण्डसम्भवम्।
तत कालेऽनिलघ्नाना क्वाथै कल्कैश्च बुद्धिमान् ॥४॥
निरूहयेन्निरूढञ्च भुक्तवन्त रसौदनम्।
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ॥५॥
स्वेदोपनाहौ कुर्य्याच्च प्रदेहाश्चानिलापहान्।
विदग्धा पाचयित्वा वा सेवनीं परिवर्जयेत् ॥६॥

भिन्द्यात्तत प्रभिन्नाया यथोक्त क्रममाचरेत्।
पित्तजायामपक्वाया पित्तग्रन्थिक्रमो हित ॥७॥
पक्वा वा भेदयेद्भिन्ना शोधयेत् चौद्रसर्पिषा।
शुद्धायाञ्च भिषग्दद्यात् तैल कल्कञ्च रोपणम् ॥८॥
रक्तजाया जलौकाभि शोणित निर्हरेद्भिषक्।
पिबेद्विरेचन वापि शर्कराचौद्रसयुतम् ॥९॥
पित्तग्रन्थिक्रम कुर्य्यादामे पक्वे च सर्वदा।
शुद्धि कफात्मिकामुष्णैर्मूत्रपिष्टै. प्रलेपयेत् ॥१०॥
पातदारुकषायञ्च पिबेन्मूत्रेण सयुतम्।
विम्लापनादृते वापि श्लेष्मग्रन्थिक्रमो हित ॥११॥
पक्वायाञ्च विभिन्नाया तैल शोधनमिष्यते।
सुमनारुष्कराङ्कोठसप्तपर्णेषु साधितम् ॥१२॥
मेद समुत्था सस्वेद्य लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसयुतै ।
स्विन्ना चावेष्ट्य पट्टेन समाश्वास्य तु मानवम् ॥१३॥
रचेत् फले सेवनीञ्च वृद्धिपत्रेण दारयेत्।
मेदस्तत. समुद्धृत्य दद्यात् कासीससैन्धवे ॥१४॥
बध्नीयाच्च यथोद्दिष्ट शुद्धे तैलञ्च दापयेत्।
मन.शिलालवणै. सिद्धमारुष्करेषु च ॥१५॥
मूत्रजा स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत्।
सेवन्या. पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन तु ॥१६॥
अथात द्विमुखा नाडी दत्त्वा विस्रावयेद्भिषक्।
मूत्र नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥१७॥
शुद्धाया रोपण दद्याद्वर्जयेदन्त्रहेतुकीम्।

अप्राप्तफलकोशाया वातवृद्धिक्रमो हित. ॥१८॥
तत्र या वङ्क्षणस्था ता दहेदर्द्धेन्दुवक्रया ।
सम्यग्मार्गावरोधार्थं कोशप्राप्ता तु वर्जयेत् ॥१९॥
त्वच भित्त्वाङ्गुष्ठमध्ये दहेत्त्वाङ्गविपर्य्ययात् ।
अनेनैव विधानेन वृद्धौ वातकफात्मिके ॥२०॥
प्रदहेत् प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयो. ।
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम् ॥२१॥
व्यत्यासाद्वा सिरा विध्येदन्त्रवृद्धिनिवृत्तये ।
उपद्रवेषु साध्येषु स्निग्धस्विन्नस्य देहिन ॥२२॥
सिरा विध्येन्मेढ्रमध्ये पातयेद्वा जलौकस ।
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान् ॥२३॥
सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः ।
यदि वा दुर्बलो जन्तुर्न वा प्राप्त विरेचनम् ।
निरूहेण हरेत्तस्य दोषानत्यर्थमुच्छ्रितान् ॥२४॥
प्रपौण्डरीकयष्ट्याह्ववर्षाभूकुष्ठदारुभि ।
सरलागुरुरास्नाभिर्वातजं संप्रलेपयेत् ॥२५॥
निचुलैरण्डबीजानि यवगोधूमसक्तव ।
एतैश्च वातज स्निग्धै सुखोष्णै. सम्प्रलेपयेत् ॥२६॥
प्रपौण्डरीकपूर्वैश्च द्रव्यै सेक' प्रशस्यते ॥२७॥
गैरिकाञ्जनयष्ट्याह्वसारिवोसीरपद्मकै ।
सचन्दनोत्पलै स्निग्धै पैत्तिक संप्रलेपयेत् ॥२८॥
पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसै. ।
सर्पि.स्निग्धै समधुकै पैत्तिक संप्रलेपयेत् ॥२९॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकै. ।

अथ वापि सुशीतेन कषायेण वटादिना ॥३०॥
आलाम्बकर्णाजकर्णधवत्वग्भि कपोत्थितम् ।
सुरापिष्टाभिरुष्णाभि' सततामि. प्रलेपयेत् ॥३१॥
रजन्यतिविषामुस्तासरलासुरदारुभि. ।
सपत्रपाठापत्तूरैरथवा सम्प्रलेपयेत् ॥३२॥
सुरसारग्वधाद्यास्व क्वाथाभ्या परिषेचयेत् ।
एव संशोधनालेपै क्रमाणितमौत्त्वणै ॥३३॥
प्रतिकुर्य्यात् क्रियायोगै प्राकस्थानोक्तैर्हितैरपि ।
नायाति च यथा पाक प्रयतेत तथा भिषक् ॥३४॥
विदग्धैस्तु सिरास्नायुत्वङ्मासै क्षीयते ध्वज' ।
अस्मैवोपचरेच्चापि पाकमागतमाशु वै ॥३५॥
तदापोह्य तिलै सर्पि. क्षौद्रयुक्तै. प्रलेपयेत् ।
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा ।
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि ॥३६॥
सौराष्ट्रीगैरिक तुत्थ पुष्पकासीससैन्धवम् ।
रोध्र रसाञ्जन दार्वी हरिताल मन शिलाम् ॥३७॥
हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत् ॥३८॥
तच्चूर्णं क्षौद्रसयुक्तमुपदंशेषु पूजितम ।
जम्ब्वाम्रसुमनानिम्बश्वेताकाम्बोजिपल्लवा ॥३९॥
शल्लकीवदरीविल्वपलाशतिनिशत्वच ।
क्षीरिणाञ्च त्वचो योज्या क्वाथ त्रिफलया सह ॥४०॥
तेन क्वाथेन नियत व्रण प्रक्षालयेद्भिषक् ।
अस्मिन्नेव कषाये तु तैल [illegible] प्रसाधयेत् ॥४१॥
गोजीविडङ्गयष्टीभि [illegible] युतम् ।

एतत् सर्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥४२॥
सर्जिकातुत्थकासीसं शैलेयञ्च रसाञ्जनम्।
मनःशिलासमैश्वर्यं व्रणवीसर्पनाशनम् ॥४३॥
गुन्द्रान् दग्ध्वा कृतं भस्म हरितालं मनःशिला।
उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥४४॥
मार्कवस्त्रिफलादन्ती ताम्रचूर्णमयोरजः।
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा ॥४५॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम्।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥४६॥
उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे।
दुष्टव्रणविधिं कुर्य्यात् कुथितं मेहनं त्यजेत् ॥४७॥
जाम्बौष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक्।
सम्यग्दग्धञ्च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥४८॥
शुद्धे च रोपणं दद्यात् कल्कं तैलं हितञ्च यत्।
स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक् ॥४९॥
ज्ञात्वा गुल्फोपरि सिरां विध्येत्तु चतुरङ्गुले।
समाप्यायितदेहञ्च वस्तिभिः समुपाचरेत् ॥५०॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतम्।
पयसौदनमश्नीयान्नागरक्वथितेन च ॥५१॥
त्रैवृतं चोपयुञ्जीत शस्तो दाहस्तथाग्निना।
गुल्फस्याधः सिरां विध्येच्छ्लीपदे पित्तसम्भवे ॥५२॥
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत्।
सिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक् ॥५३॥
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः।

पिबेद्दाप्यभयाकल्कं मूत्रेणान्यतमेन च ॥५३॥
कटुकामश्मना शुण्ठीं विडङ्गं दारु चित्रकम् ।
हितं वा लेपने नित्यं भद्रदारु सचित्रकम् ॥५४॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथवा ।
भद्रदार्वेलुकाख्ये च सर्वेषु लवणेषु च ॥५५॥
तैलं पक्वं पिबेद्वापि यवान्नञ्च हितं सदा ।
पिबेत् सर्षपतैलं वा श्लीपदानां निवृत्तये ॥५६॥
पूतीकरञ्जपत्राणां रसं वापि यथाबलम् ।
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ॥५७॥
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित् ।
केबुकाकन्दनिर्यासं लवणं त्वथ पाकिमम् ॥५८॥
रसं दत्त्वाथ पूर्वोक्तं पेयमेतद्भिषग् जितम् ।
काकादनीं काकजङ्घां बृहतीं कण्टकारिकाम् ॥५९॥
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा ।
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत् क्षारकल्पवित् ॥६०॥
तत्र दद्यात् प्रतीवापं काकोडुम्बरिकारसम् ।
मदनाच्च फलात् क्वाथं शुकाख्यास्वरसं तथा ॥६१॥
एष क्षारस्तु पानीय. श्लीपदं हन्ति सेवितम् ।
अपचीं गलगण्डञ्च ग्रहणीदोषमेव च ॥६२॥
भक्तस्याऽनशनं चैव हन्यात्सर्वविषाणि च ।
एष्वेव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम् ॥६३॥
एतानेवामयान् हन्ति ये च दुष्टव्रणा नृणाम् ।
द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च ॥६४॥
सप्तलां शङ्खिनीं चैव दग्ध्वा मूत्रेण गालयेत् ।

दद्याच्च त्रिफलाक्काथमेष क्षारस्तु साधित: ।
अधो गच्छति पीतस्तु पूर्वैश्चाप्याशिष समा. ।६५।

—·—·—

## विंशतितमोऽध्याय: ।

अथात: क्षुद्ररोगचिकित्सितं व्याख्यास्याम: ।

अजाजगल्लिकामामां जलौकोभिरुपाचरेत् ।
शुक्तिशुण्ठीयवक्षारकल्कैश्चालेपयेद्भिषक् ॥१॥
श्यामालाङ्गलकीपाठाकल्कैर्वापि विचक्षण: ।
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥२॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ।
पाषाणगर्द्दभं चैव पूर्वं स्वेदेन योजयेत् ॥३॥
मनःशिलातालकुष्ठदारुकल्कै: प्रलेपयेत् ।
परिपाकगतान् भित्त्वा व्रणवत्समुपाचरेत् ॥४॥
विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा ॥५॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक् ।
रोपयेत् सर्पिषा पक्वान् सिद्धेन मधुरौषधै: ॥६॥
चिप्यमुष्णाम्बुना सिक्तमुत्कृत्य स्रावयेद्भिषक् ।
चक्रतैलेन चाभ्यज्य सर्जचूर्णेन चूर्णयेत ।७॥
बन्धेनोपचरेच्चैनमशक्यं चाग्निना दहेत् ।
मधुरौषधसिद्धेन ततस्तैलेन रोपयेत् ।८॥
कुनखे विधिरप्येष कार्य्यो हि भिषजा भवेत् ।
विदारिकां समभ्यज्य स्विन्नां विम्लाप्य लेपयेत् ॥९॥
नगर्क्षत्तकवर्षाभूविल्वमूलै: सुपेषितै: ।

व्रणभावगतायां वा कृत्वा संशोधनक्रियाम् ॥१०॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ।
प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्वा विदारिका ॥११॥
अजकर्णैः सपालाशैर्मूलकल्कैः प्रलेपयेत् ।
पक्वां विदार्य शस्त्रेण पटोलपिचुमन्दयोः ॥१२॥
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ।
बद्ध्वा च क्षीरवृक्षस्य कषायैः खदिरस्य च ॥१३॥
व्रणं प्रक्षालयेच्छुद्धांस्ततस्तां रोपयेत् पुनः ।
मेदोऽर्बुदविधानेन साधयेच्छर्कराबुर्दम् ॥१४॥
कच्छुं विचर्चिकां पामां कुष्ठवत् समुपाचरेत् ।
लेपश्च शस्यते सिक्थशताह्वगौरसर्षपैः ॥१५॥
वचादार्वीसर्षपैर्वा तैलं वा नक्तमालजम् ।
सारतैलमथाभ्यङ्गे कुर्वीत कटुकैः शृतम ॥१६॥
पाददार्य्यां सिरां विद्ध्वा स्वेदाभ्यङ्गौ प्रयोजयेत् ।
मधूच्छिष्टवसामज्जसर्जचूर्णघृतैः कृतः ॥१७॥
यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते ।
पादौ सिक्तारनालेन लेपनं ह्यलसे हितम् ॥१८॥
कल्कीकृतैर्निम्बतिलकासीसालैः ससैन्धवैः ।
लाक्षारसोऽभया वापि कार्य्यं स्याद्रक्तमोक्षणम् ॥१९॥
सिद्धं रसे कण्टकार्य्यास्तैलं वा सार्षपं हितम् ।
कासीसरोचनशिलाचूर्णैर्वा प्रतिसारणम् ॥२०॥
उद्धृत्य दग्ध्वा स्नेहेन जयेत्कदरसञ्ज्ञकम ।
इन्द्रलुप्ते सिरां मूर्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ॥२१॥
कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुल्यकैः ।

कुटन्नटादारुकल्कैर्लेपनं वा प्रशस्यते ॥२२॥
प्रच्छयित्वावगाढं वा गुञ्जाकल्कैर्मुहुर्मुहुः ।
लेपयेदुपशान्त्यर्थं कुर्य्याद्वापि रसायनम् ॥२३॥
मालतीकरवीराग्निनक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥२४॥
अरुंषिका हृते रक्ते सेचयेन्निम्बवारिणा ।
दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु ॥२५॥
हरितालनिशानिम्बकल्कैर्वा सपटोलजैः ।
यष्टीनीलोत्पलैरण्डमार्कवैर्वा प्रलेपयेत् ॥२६॥
सिरा दारुणके विद्धा स्निग्धस्विन्नस्य मूर्द्धनि ।
अवपीडं शिरोवस्तिमभ्यङ्गञ्च प्रयोजयेत् ।२७॥
क्षालने कोद्रवतृणक्षारतोयं प्रशस्यते ॥२८॥
उपरिष्टात् प्रवक्ष्यामि विधिं पलितनाशनम् ।
मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता ॥२९॥
पित्तश्लेष्मविसर्पोक्ता क्रिया वा सम्प्रशस्यते ।
जतुमणिं समुत्कृत्य मशकं तिलकालकम् ॥३०॥
क्षारेण प्रदहेद् युक्त्या वह्निना वा शनैः शनैः ।
न्यच्छे व्यङ्गे सिरामोक्षो नीलिकायाञ्च शस्यते ॥३१॥
यथान्यायं यथाभ्यासं ललाटादिसिराव्यधः ।
घृष्ट्वा दिह्यात्त्वचं पिष्ट्वा क्षीरिणा क्षीरसंयुताम् ॥३२॥
बलातिबलयष्ट्याह्वरजनीर्वा प्रलेपनम् ।
पयस्यागुरुकालीयल्लेपनं वा सगैरिकम् ॥३३॥
क्षौद्राज्ययुक्तया लिम्पेद्दंष्ट्रया शूकरस्य च ।
कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥३४॥

यौवने पिडकास्वेष विशेषाच्छर्दनं हितम्।
लेपनञ्च वचारोध्रसैन्धवै सर्षपान्वितै. ॥३५॥
कुस्तुम्बुरुवचालोध्रकुष्ठैर्वा लेपन हितम्।
पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा ॥३६॥
तेनैव सिद्ध सक्षौद्र सर्पि.पान प्रदापयेत्।
निम्बारग्वधयो क्वाथो हित उत्सादने भवेत् ॥३७॥
परिवृत्ति घृताभ्यक्ता सुस्विन्नामुपनाहयेत्।
त्रिरात्र पञ्चरात्र वा वातघ्नै. शाल्वणादिभि' ॥३८॥
ततोऽभ्यज्य शनैश्चर्म चानयेत् पीडयेन्मणिम।
प्रविष्टे च मणौ चर्म स्वेदयेदुपनाहनै ॥३९॥
दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत्।
अपाटिका जयेदेव' यथादोष चिकित्सक. ॥४०॥
निरुद्धप्रकशे नाडी लौहीमुभयतोमुखीम्।
दारवी वा जतुकृता घृताभ्यक्ता प्रवेशयेत् ॥४१॥
परिषेकं वसामज्ज शिशुमारवराहयो।
चक्रतैल तथा योज्य वातघ्नद्रव्यसयुतम् ॥४२॥
त्र्यहात् त्र्यहात् स्थूलतरा सम्यग् नाडी प्रवेशयेत्।
स्रोतो विवर्द्धयेदेव स्निग्धमन्नञ्च भोजयेत् ॥४३॥
भित्त्वा वा सेवनी मुक्त्वा सद्य क्षतवदाचरेत्।
सन्निरुद्धगुद रोग वल्मीक वह्निरोहिणीम ॥४४॥
प्रत्याख्याय यथायोग चिकित्सितमथाचरेत्।
विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम् ॥४५॥
सन्निरुद्धगुदे योज्या निरुद्धप्रकशक्रिया।
शस्त्रेणोत्कृत्य वल्मीक क्षाराग्निभ्या प्रसाधयेत्।

विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥४६॥
वल्मीकन्तु भवेद्यस्य नातिवृद्धममर्मजम।
तत्र सशोधन कृत्वा शोणित मोचयेद्भिषक् ॥४७॥
कुलत्थिकाया मूलैश्च गुडूच्या लवणेन च।
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥४८॥
श्यामामूलै. सपललै. शक्तुमिश्रै: प्रलेपयेत्।
सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ४९॥
पक्वं वा तद्विजानीयाद्गती सर्वा यथाक्रमम्।
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान् भिषक् ॥५०॥
सशोध्य दुष्टमासानि क्षारेण प्रतिसारयेत्।
व्रण विशुद्ध विज्ञाय रोपयेन्मतिमान् भिषक् ॥५१॥
सुमना ग्रन्थयश्चैव भल्लातकमन शिले।
कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ॥५२॥
एतै. सिद्ध निम्बतैल वल्मीके रोपण हितम् ॥५३॥
पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिराहतम्।
वल्मीक यत् सशोफ स्यादन्यँ तत्तु विजानता ॥५४॥
धात्र्या स्तन्य शोधयित्वा बाले साध्याहिपूतना।
पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥५५॥
पीत घृत नाशयति कृच्छ्रामप्यहिपूतनाम्।
त्रिफलाकोलखदिरकषाय व्रणरोपणम् ॥५६॥
कासीसरोचनातुत्थहरितालरसाञ्जनै।
लेपोऽम्लपिष्टो वदरीत्वग्वा शैन्धवसयुता ॥५७॥
कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत्।
चिकित्सन्मुष्ककच्छूञ्चाप्यहिपूतनपानवत् ॥५८॥

गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ।
कारयेद्गोफणाबन्धं मध्यच्छिद्रेण चर्मणा ॥५९॥
विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः ।
क्षीरं महापञ्चमूलं मूषिकां चान्त्रवर्जिताम् ॥६०॥
ततस्तस्मिन् पचेत्तैलं वातघ्नौषधसंयुतम् ।
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत् ॥६१॥

---

## एकविंशतितमोऽध्यायः ।

अथातः शूकरोगचिकित्सितं व्याख्यास्यामः ।
संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत् ।
कषायैश्चैव तैलञ्च कुर्वीत व्रणरोपणम् ॥१॥
अष्ठीलिकाञ्जलौकोभिर्ग्राहयेत् कुशलो भिषक् ।
तथाचानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत् ॥२॥
स्वेदयेद् ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥३॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धां तु रोपयेत् ।
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु ॥४॥
ग्राहयित्वा जलौकोभिरलजीं सेचयेत्ततः ।
कषायैस्तेषु सिद्धञ्च तैलं रोपणमिष्यते ॥५॥
बलातैलेन कोष्णेन मृदितं परिषेचयेत् ।
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ॥६॥
सम्मूढपिडकां क्षिप्रं जलौकोभिरुपाचरेत् ।
भित्त्वा पर्य्यागतां चापि लेपयेत् क्षौद्रसर्पिषा ॥७॥
अवमन्थे गते पाकं भिन्ने तैलं विधीयते ।

ध्वांक्षकर्णपत्तङ्गसल्लकीतिन्दुकीकृतम् ॥८॥
क्रियां पुष्करिकायान्तु शीता सर्वां प्रयोजयेत्।
जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेचयेत् ॥९॥
स्पर्शहान्यां हरेद्रक्त प्रदिह्यान्मधुरैरपि।
क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥१०॥
पिडकामुत्तमाख्याच्च वडिशेनोद्धरेद्भिषक्।
पिडकामुत्तमाख्याच्च वडिशेनोद्धरेद्भिषक्।
उद्धृत्य मधुसयुक्तैः कषायैरवचूर्णयेत् ॥११
रसक्रिया विधातव्या लिखिते शतपोनकैं।
पृथक्पर्ण्यादिसिद्धञ्च देय तैलमनन्तरम् ॥१२॥
क्रियां कुर्य्याद्भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत्।
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे ॥१३॥
कषायकल्कसर्पींषि तैल चूर्णं रसक्रिया।
शोधन रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥१४॥
यथास्व सर्पिष पान पथ्यञ्चापि विरेचनम्।
हित शोणितमोक्षश्च यच्चापि लघु भोजनम् ॥१५॥
अर्बुद मासपाकञ्च विद्रधि तिलकालकम्।
प्रत्याख्याय प्रकुर्वीत भिषक् सम्यक् प्रतिक्रियाम् ॥१६॥

---

## द्वाविंशतितमोऽध्यायः।

अथातो मुखरोगाणा चिकित्सित व्याख्यास्याम.।
चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च।
वातजेऽभ्यञ्जनं कुर्य्यान्नाडीस्वेदञ्च बुद्धिमान् ॥१॥
मतिमानोष्ठकोपे तु शाल्वण चोपनाहने।

मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ॥२॥
श्रीवेष्टक सर्जरस सुरदारु सगुग्गुलु ।
यष्टीमधुकचूर्णन्तु विदध्यात् प्रतिसारणम् ॥३॥
पित्तरक्ताभिघातोत्थे जलौकाभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रिया कुर्य्यादशेषत. ॥४॥
शिरोविरेचन धूम स्वेद कवल एव च ।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥५॥
त्रूषण स्वर्जिकाक्षारो यवक्षारो विड' तथा ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥६॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियङ्गुत्रिफलालोध्र सक्षौद्र प्रतिसारणम् ॥७॥
एतदोष्ठप्रकोपाना साध्यानां कर्म कीर्त्तितम् ।
दन्तमूलगतानान्तु रोगाणा कर्म वक्ष्यते ॥८॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान् ।
नि क्वाथ्य त्रिफलामुस्त गण्डूष. सरसाञ्जनः ॥९॥
प्रियङ्गवश्च मुस्तञ्च त्रिफला च प्रलेपनम् ।
नस्यञ्च त्रिफलासिद्ध मधुकोत्पलपद्मकै' ॥१०॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ।
सपञ्चलवणः क्षार सक्षौद्र' प्रतिसारणम् ॥११॥
हितः शिरोविरेकश्च नस्यं स्निग्धञ्च भोजनम् ।
विस्राविते दन्तवेष्टे व्रणास्तु प्रतिसारयेत् ॥१२॥
रोध्रपत्तङ्गयष्ट्याह्वलाक्षाचूर्णैर्मधूत्तरै' ।
गण्डूषे क्षीरिणो योज्या सक्षौद्रघृतशर्करा' ॥१३॥
काकोल्यादौ दशक्षीरसिद्ध सर्पिश्च नस्यतः ।

शोषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः ॥१४॥
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः।
सारिवोत्पलयष्ट्याह्वसावराागुरुचन्दनैः ॥१५॥
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम्।
क्रिया परिदरे कुर्य्याच्छीतादोक्ता विचक्षणः ॥१६॥
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा।
काकोडुम्बरिकागोजीपत्रैर्विस्रावयेदसृक् ॥१७॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्।
पिप्पलीसर्षपाश्चैव नागरं नैचुलं फलम् ॥१८॥
सुखोदकेन संसृष्टं कवलं चापि धारयेत्।
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः ॥१९॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥२०॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।
कृमिदन्तकवच्चापि विधिः कार्यो विजानता ॥२१॥
छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत्।
वचातेजोवतीपाठासर्जिकायावशूकजैः ॥२२॥
क्षौद्रद्वितीया पिप्पल्यः कवलश्चात्र कीर्त्तितः।
पटोलत्रिफलानिम्बकषायश्चात्र धावने ॥२३॥
हितं शिरोविरेकश्च धूमो वैरेचनश्च यः।
सामान्यं कर्म नाडीनां विशेषं चात्र मे शृणु ॥२४॥
यं दन्तमधिजायेत नाडी तं दन्तमुद्धरेत्।
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥२५॥
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा।

भिनत्त्युपेक्षिते दन्तं हनुकास्थिगतिर्ध्रुवम् ॥२६॥
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च।
उद्धृते तूत्तरे दन्ते समूले स्थिरबन्धने।
रक्तातियोगात् पूर्वोक्ता रोगा घोरा भवन्ति हि ॥२७॥
काणः सञ्जायते जन्तुरर्दितं चास्य जायते।
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥२८॥
धावने जातिमदनस्वादुकण्टकखादिरम्।
कषायं जातिमदनकटुकस्वादुकण्टकैः ॥२९॥
यष्ट्याह्वरोध्रमञ्जिष्ठाखदिरैश्चापि यत् कृतम्।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥३०॥
कीर्त्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते ॥३१॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्द्दनाः ॥३२॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धञ्च भोजनम्।
रसो रसयवागव्यश्च क्षीरं सन्तानिका घृतम्।
शिरोवस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥३३॥
अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत् ॥३४॥
दन्तहर्षक्रिया वापि कुर्य्यान्निरवशेषतः।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥३५॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम्।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥३६॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः।
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च ॥३७॥

ततो विदारीयष्ट्याह्वशृङ्गाटककसेरुकैः।
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥३८॥
हनुमोक्षे समुद्दिष्टां कुर्य्याच्चार्दितवत् क्रियाम्।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥३९॥
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत्।
साध्यानां दन्तरोगाणां चिकित्सितमुदीरितम् ॥४०॥
जिह्वागतानां साध्यानां कर्म वक्ष्यामि सिद्धये ॥४१॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा भवेत् ॥४२॥
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते।
प्रतिसारणगण्डूषनस्यञ्च मधुरं हितम् ॥४३॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे ॥४४॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकुक्षारयूषैश्च भोजयेत् ॥४५॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेकगण्डूषधूमैश्चैनमुपाचरेत् ॥४६॥
जिह्वागतानां कर्मोक्तं तालव्यानां प्रवक्ष्यते ॥४७॥
अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकाम्।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥४८॥
नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद्भिषक्।
अतिच्छेदनात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च ॥४९॥
हीनच्छेदाच्छ्वयथुः शोफो लालानिद्रा भ्रमस्तमः।
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ॥५०॥

गलशुण्डीन्तु सञ्छिद्य कुर्यात् प्राप्तमिमं क्रमम्।
मरिचातिविषापाठावचाकुष्ठकुटन्नटैः।
चौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥५१॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।
निःक्वाथ्य पिचुमन्दञ्च कवलं तत्र योजयेत् ॥५२॥
इङ्गुदीकिणिहीदन्तीसरलासुरदारुभिः।
यञ्चाङ्गोद्घारयेत् पिष्टैर्वर्त्तिं गन्धोत्तरां शुभाम् ॥५३॥
ततो धूमं पिबेज्जन्तुर्द्दिरह्नः कफनाशनम् ॥५४॥
चारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः।
तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्मणि ॥५५॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम्।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥५६॥
कीर्त्तितं तालुजानान्तु कण्ठगानां कर्म वक्ष्यते ॥५७॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम्।
छर्द्दनं धूमपानञ्च गण्डूषो नस्यकर्म च ॥५८॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत्।
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णशः ॥५९॥
पत्तङ्गशर्कराचौद्रैः पैत्तिकीं प्रतिसारयेत्।
द्राक्षापरूषकक्वाथौ हितौ च कवलग्रहे ॥६०॥
आगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ॥६१॥
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम्।
नस्यकर्मणि योक्तव्यं तथा कवलधारणे ॥६२॥
पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्।

विस्राव्य कण्टशालूक साधयेत्तुण्डिकेरिवत् ॥६३॥
एककाल यवान्नञ्च भुञ्जीत स्निग्धमल्पश ।
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥६४॥
एकवृन्दन्तु विस्राव्य विधि शोधनमाचरेत् ।
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ।
अममंस्थ सुपक्वञ्च भेदयेद्गलविद्रधिम् ॥६५॥
वातात् सर्वसर चूर्णैर्लवणै प्रतिसारयेत् ।
तैल वातहरै सिद्ध हित कवलनस्ययो. ।
ततोऽम्भै स्नैहिक धूममिम दद्याद्विचक्षण: ॥६६॥
शालराजादनैरण्डसारेङ्गुदिमधूकजा ।
मज्जानो गुग्गुलुध्यामममासीकालानुसारिवा ।
श्रीसर्जरसशैलेयमधूच्छिष्टानि वाहरेत् ॥६७॥
तत्सर्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तित: ।
दुष्ट्कवृन्तं सक्षौद्र मतिमास्तेन लेपयेत् ॥६८॥
एष सर्वसरे धूम प्रशस्त स्नैहिको मत ।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशन ॥६९॥
पित्तात्मके सर्वसरे शुद्धकायस्य देहिन: ।
सर्व: पित्तहर कार्य्यो विधिर्मधुरशीतल ॥७०॥
प्रतिसारणगण्डूषधूमसंशोधनानि च ।
कफात्मके सर्वसरे विधि कुर्य्यात् कफापहम ॥७१॥
पिबेदतिविषा पाठा मुस्तञ्च सुरदारु च ।
रोहिणीं कटुकाख्याञ्च कुटजस्य फलानि च ॥७२॥
गवा मूत्रेण मनुजो भागैर्धरणसम्मितै: ।
एष सर्वान् कफकृतान् रोगान् योगोऽपकर्षति ॥७३॥

क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकैः।
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥७४॥
क्रियाणां मुखजातानां साध्यानां कर्म कीर्त्तितम्।
असाध्या अपि वक्ष्यन्ते रोगा ये यत्र कीर्त्तिताः ॥७५॥
ओष्ठप्रकोपा वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः।
दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ ॥७६॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः।
जिह्वागतेष्वलासस्तु तालव्येष्वर्बुदं तथा ॥७७॥
स्वरघ्नो वलयो वृन्दो बलासश्च विदारिका।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥७८॥
असाध्याः कीर्त्तिता ह्येते रोगा नव दशैव च।
तेषां चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥७९॥

---

त्रयोविंशतितमोऽध्यायः।

अथातः शोफानां चिकित्सितं व्याख्यास्यामः।

षड्विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतश्च। सर्वसरस्तु पञ्चविधः। तद्यथा। वातपित्तश्लेष्मसन्निपातविषनिमित्तः। तत्रापि तर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा। पिष्टान्नहरितकशाकलवणानि क्षीणस्य वातिमात्रमम्लमुपसेवमानस्य मृत्पङ्कलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्मसेवनाद्विरुद्धाहारसेवनाद्धस्त्यश्वोष्ट्ररथपदातिसङ्क्षोभणाद्दोषा धातून् प्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे ॥१॥

तत्र वातश्वयथुररुण कृष्णो वा मृदुरनवस्थितस्तोदाद-यश्चात्र वेदनाविशेषा ॥२॥

पित्तश्वयथु पीतो रक्तो वा शीघ्रानुसार्य्योषचोषादय-श्चात्र वेदनाविशेषा ॥३॥

श्लेष्मश्वयथु पाण्डु शुक्लो वा स्निग्ध कठिन. शीतो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा ॥४॥

सन्निपातश्वयथु सर्ववर्णवेदन ॥५॥

विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात् प्रकोथो-दकावगाहनात् सविषमत्वदिग्धचूर्णावचूर्णनाद्वा सविष-मूत्रपुरीषशुक्रस्पृष्टानां वस्त्रकाष्ठादीनां संस्पर्शनात् स तु मृदु क्षिप्रोत्थानोऽवलम्बी चलो वा दाहपाकप्रायश्च भवति ॥६॥

भवन्ति चात्र ।

दोषा श्वयथुमूर्द्ध्वं हि कुर्वन्त्यामाशयस्थिता ।
पक्वाशयस्था मध्ये च वर्च्चःस्थानगतास्त्वध ॥७॥
कृत्स्नं देहमनुप्राप्ता कुर्य्यु सर्वसरं तथा ।
श्वयथुर्मध्यदेशे य स कष्ट सर्वगश्च य ॥८॥
अर्द्धाङ्गेऽरिष्टभूतश्च यश्चोर्द्ध्वं परिसर्पति ।
श्वास पिपासा दौर्बल्यं ज्वरश्छर्दिररोचक ॥९॥
हिक्कातीसारकासश्च शूनं सङ्क्षपयन्ति हि ।
सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजम् ॥१०॥

शोफिन सर्व एव परिहरेयुरम्ललवणदधिगुडवसापय-स्तैलघृतपिष्टमयगुरूणि ॥११॥

तत्र वातश्वयथौ त्रैवृतमैरण्डतैलं वा मासमर्द्धं मासं वा पाययेत्। न्यग्रोधादिककषायसिद्धं सर्पि. पित्तश्वयथौ।

आरग्वधादिसिद्धं श्लेष्मश्वयथौ। सन्निपातश्वयथौ स्नुही क्षीरपाने दार्व्यादिनरण्डपत्र प्र तत्रस्टं दन्त्यादिवाय सर्पिः पाचयित्वा पाययेत्। विषनिमित्ते कल्पेषु प्रतीकार ॥१२॥

अथात नाराभ्युदिनिन्हिन व्याख्यास्याम ।

तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु तु ततोऽन्यत-मसुपयुज्यमान श्वयथुमपहन्ति। मूत्रवर्त्तिक्रिया वा सेव-येत्। नवायस वाहरहर्मधुना। विडङ्गातिविषाकुटज-फलभद्रदारुनागरमरिचचूर्णं वा धरमसुखाम्बुना। त्रिक-टुक्षारायश्चूर्णानि वा त्रिफलाकषायेण मूत्र वा तुल्यक्षीरं हरीतकीं वा तुल्यगुडामुपयुञ्जीत। देवदारुशुण्ठी वा गुग्गुलु वा मूत्रेण वर्षाभूकषायानुपान वा तुल्यगुड शृङ्ग-वेर वा वषाभूनमाय मूलकल्कं वा सशृङ्गवेर पयोऽनुपान-महरहर्मासम। व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा मुद्गोलुम्बान् भक्षयेत्। पिप्पलीपिप्पलीमूल चव्यचित्रकशृ-ङ्गवेरवर्षाभूसिद्ध वा क्षीर पिबेत्। महौषधसुरङ्गीमूलसिद्ध वा। त्रिकटुकैरण्डमूलश्यामामूलसिद्ध वा। वर्षाभूशृङ्ग-वेरसहादेवदारुसिद्धं वा। तथालाबूबिभीतकफलकल्क वा तण्डुलाम्बुना ॥१३॥

क्षारपिप्पलीमरिचशृङ्गवेरानुसिद्धेन च मुद्गयूषेणाल-वणेनाल्पस्नेहेन भोजयेद् यवान्न गोधूमान्न वा वृक्षकार्क-नक्तमालनिम्बवर्षाभूक्वाथैश्च परिषेक सर्षपसौवर्चलसैन्धव-शार्ङ्गष्टाभिश्च प्रदेहः कार्यः। यथादोषञ्च विरेचनास्थाप-नानि तीक्ष्णान्यञ्जनमुपसेवेत स्नेहस्वेदोपनाहांश्च सिराभि-

शीघ्रं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ॥१४॥

भवति चात्र।

पिष्टान्नमम्लं लवणानि मद्य
म्रुदं दिवास्वप्नमजाङ्गलञ्च।
स्त्रियो घृत तैलपयोगुरूणि
शोफ जिघांसु परिवर्जयेत् तु ॥१५॥

---

## चतुर्विंशतितमोऽध्याय ।

अथातोऽनागताबाधप्रतिषेधनीय चिकित्सित व्याख्यास्याम ।

उत्थायोत्थाय सतत स्वस्थेनारोग्यमिच्छता ।
धीमता यदनुष्ठेय तत्सर्वं सम्प्रवक्ष्यते ॥१॥
तत्रादौ दन्तपवन द्वादशाङ्गुलमायतम् ।
कनिष्ठिकापरीणाहमृज्वग्रन्थितमव्रणम् ॥२॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्र शस्तभूमिजम ।
अवेक्ष्यर्त्तुञ्च दोषञ्च रस वीर्य्यञ्च योजयेत् ॥३॥
कषायं मधुर तिक्त कटुक प्रातरुत्थित ।
निम्बश्च तिक्तके श्रेष्ठ: कषाये खदिरस्तथा ॥४॥
मधूको मधुरे श्रेष्ठ करञ्ज कटुके तथा ।
क्षौद्रव्योषत्रिवर्गाक्त सतैल सैन्धवेन च ॥५॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् ।
एकैवं घर्षयेद्दन्त मृदुना कूर्चकेन च ॥६॥
दन्तशोधनचूर्णेन दन्तमासान्यबाधयन् ।
तद्दौर्गन्ध्योपदेहौ तु श्लेष्माण चापकर्षति ॥७॥

वैशद्यमन्नाभिरुचि सौमनस्य करोति च ॥८॥
न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे ।
अथास्यपाके श्वासे च कासहिक्कावमीषु च ॥९॥
दुर्बलो जीर्णभक्तश्च मूर्च्छार्त्तो मदपीडित ।
शिरोरुगार्त्तस्तृषित श्रान्त पानक्लमान्वित ॥१०॥
अर्दिती कर्णशूली च दन्तरोगी च मानव ।
जिह्वानिर्लेखन रौप्य सौवर्ण वार्क्षमेव च ॥११॥
तन्मलापहर शस्त मृदु श्लक्ष्ण दशाङ्गुलम ।
मुखवैरस्यदौगन्ध्यशोफजाड्यहर सुखम ॥१२॥
दन्तकार्द्यकृच्च स्नेहगण्डूषधारणम् ।
क्षीरवृक्षकषायैर्वा क्षीरेण च विनिश्रितै ॥१३॥
निम्बोदककषायेण तथैवामलकस्य वा ।
प्रक्षालयेन्मुख नित्यं स्वस्थ शीतोदकेन वा ॥१४॥
नीलिका मुखशोषञ्च पिडका व्यङ्गमेव च ।
रक्तपित्तकृतान् रोगान सद्य एव विनाशयेत् ॥१५॥
सुख लघु निरीक्षेत दृढ पश्यति चक्षुषा ।
मत शीतोऽञ्जन श्रेष्ठ विशुद्ध सिन्धुसम्भवम् ॥१६॥
दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहम् ।
अक्ष्णोरूपावहच्चैव सहते मारुतातपौ ।
न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत् ॥१७॥
भुक्तवान् शिरसा स्नात श्रान्तश्छर्दनवाहने ।
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ॥१८॥
कर्पूरजातिकक्कोललवङ्गकटुकाह्वयै ।
सचूर्णपूगै सहित पत्र ताम्बूलज शुभम् ॥१९॥

मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ।
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम् ॥२०॥
प्रसेकशमनं हृद्यं गलामयविनाशनम् ।
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥२१॥
रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम् ।
रूक्षदुर्बलमर्त्यानां न हितं चास्य शोषिणाम् ॥२२॥
शिरोगतास्तथा रोगान् शिरोऽभ्यङ्गोऽपकर्षति ।
केशानां मार्दवं दैर्घ्यं बहुत्वं स्निग्धकृष्णताम् ॥२३॥
करोति शिरसस्तृप्तिं सुत्वक्कमपि चाननम् ।
सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणम् ॥२४॥
मधुकं क्षीरशुक्ला च सरलं देवदारु च ।
क्षुद्रकः पञ्चनामानं समभागानि संहरेत् ॥२५॥
तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ।
सदैव शीतलं जन्तोर्मूर्ध्नि तैलं प्रदापयेत् ॥२६॥
केशप्रसाधनी केश्या रजोजन्तुमलापहा ।
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥२७॥
अभ्यङ्गो मार्दवकरः कफवातनिरोधनः ।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥२८॥
सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः ।
क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः ॥२९॥
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः ।
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ॥३०॥
सिरामुखैरोमकूपैर्धमनीभिश्च तर्पयन् ।
शरीरबलमाधत्ते युक्तस्नेहोऽवगाहने ॥३१॥

तत्र प्रकृतिसात्म्यर्त्तुदेशदोषविकारवित् ।
तैलं घृतं वा मतिमान् युञ्ज्यादभ्यङ्गसेकयोः ॥३२॥
केवलं सामदोषेषु न कथञ्चन योजयेत् ॥३३॥
तरुणज्वर्य्यजीर्णी च नाभ्यक्तव्यौ कथञ्चन ।
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥३४॥
पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ।
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः ॥३५॥
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् ।
शरीरायासजननं कर्म व्यायामसञ्ज्ञितम् ॥३६॥
तत् कृत्वा तु सुखं देहं विमृद्नीयात् समन्ततः ।
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ॥३७॥
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ।
श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥३८॥
आरोग्यं चापि परमं व्यायामादुपजायते ।
न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ॥३९॥
न च व्यायामिनं मर्त्यमर्दयन्त्यरयो भयात् ।
न चैनं सहसाक्रम्य जरा समधिरोहति ॥४०॥
स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च ।
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ॥४१॥
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ।
वयोरूपगुणैर्हीनमपि कुर्य्यात् सुदर्शनम् ॥४२॥
व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् ।
विदग्धमविदग्धं वा निर्दोषं परिपच्यते ॥४३॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् ।

स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥४४॥
सर्वेष्वतुष्वहरहः पुम्भिरात्महितैषिभिः ।
बलस्यार्द्धेन कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥४५॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते ।
व्यायामं कुर्वतो जन्तोस्तद् बलार्द्धस्य लक्षणम् ॥४६॥
वयोबलशरीराणि देशकालाशनानि च ।
समीक्ष्य कुर्य्याद् व्यायाममन्यथा रोगमाप्नुयात् ॥४७॥
क्षयतृष्णारुचिच्छर्द्दिरक्तपित्तभ्रमक्लमाः ।
कासशोषज्वरश्वासा अतिव्यायामसम्भवाः ॥४८॥
रक्तपित्ती कृशः शोषी श्वासकासक्षयातुरः ।
भुक्तवान् स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्जयेत् ॥४९॥
उद्वर्त्तनं वातहरं कफमेदोविलापनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥५०॥
सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ।
उद्घर्षणोत्सादनाभ्यां जायेयातामसंशयम् ॥५१॥
उत्सादनाद्भवेत् स्त्रीणां विशेषात् कान्तिमद्वपुः ।
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ।५२॥
उद्घर्षणन्तु विज्ञेयं कण्डूकोठानिलापहम् ।
जर्वीः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे ॥५३॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ।
तेजनं त्वग्गतस्याग्नेः सिरामुखविरेचनम् ॥५४॥
उद्घर्षणन्त्विष्टिकया कण्डूकोठविनाशनम् ।
निद्रादाहश्रमहरं स्वेदकण्डूतृषापहम् ॥ ५॥
हृद्यं मलहरं श्रेष्ठं सर्वेन्द्रियविशोधनम् ।

तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनम् ॥ ५६ ॥
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ।
उष्णेन शिरसः स्नानमहितञ्चक्षुषः सदा ॥ ५७ ॥
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्द्दिशेत् ।
श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ॥ ५८ ॥
काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् ।
अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ॥ ५९ ॥
अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनम् ।
तच्चातिसारज्वरितकर्णशूलानिलार्त्तिषु ॥ ६० ॥
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ।
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनम् ॥ ६१ ॥
स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम् ।
स्नानं येषां निषिद्धन्तु तेषामप्यनुलेपनम् ॥ ६२ ॥
रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम् ।
सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनम् ॥ ६३ ॥
मुखालेपाद्दृढं चक्षुःपीनगण्डं तथाननम् ।
अव्यङ्गपिडकं कान्तं भवत्यम्बुजसन्निभम् ॥ ६४ ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम् ।
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥ ६५ ॥
यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनम् ।
देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनम् ॥ ६६ ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारकः ।
आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः ॥ ६७ ॥
पादप्रक्षालनं पादमलरोगश्रमापहम् ।

चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ॥ ६८ ॥
निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत् ।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥ ६९ ॥
पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ।
सुखप्रचारमोजस्यं सदा पादत्रधारणम् ॥ ७० ॥
अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् ।
पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् ॥७१॥
पापोपशमनं केशनखरोमापमार्जनम् ।
हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनम ॥ ७२ ॥
बाणवारं मृजावर्णतेजोबलविवर्द्धनम् ।
पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम् ॥ ७३ ॥
वर्षानिलरजोघर्महिमादीनां निवारणम् ।
वर्ण्यं चक्षुष्यमोजस्यं शङ्करं छत्रधारणम् ॥ ७४ ॥
शुनः सरीसृपव्यालविषाणिभ्यो भयापहम् ।
श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥ ७५ ॥
सत्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनम्
अवष्टम्भकरश्चापि भयघ्नं दण्डधारणम् ॥ ७६ ॥
आस्या वर्णकफस्थौल्यसौकुमार्य्यकरी सुखा ।
अध्वा वर्णकफस्थौल्यसौकुमार्य्यविनाशनः ।
अत्यध्वा विपरीतोऽस्माज्जरादौर्बल्यकृच्च सः ॥ ७७ ॥
यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् ।
तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ ७८ ॥
श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम् ।
सुखं शय्यासनं दुःखं विपरीतगुणं मतम् ॥ ७९ ॥

बालव्यजनमौजस्यं मक्षिकादीनपोहति।
श्रोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः॥ ८०॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम्।
संवाहनं मांसरक्तत्वक्प्रसादकरं सुखम्॥ ८१॥
प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपक्तिनुत्।
स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा॥८२॥
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः।
निवातं त्वायुषे सेव्यमारोग्याय च सर्वदा॥८३॥
आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत्।
दाहवैवर्ण्यकारी च छाया चैतानपोहति॥८४॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः॥८५॥
पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रिताम्।
करोति धातुसाम्यञ्च निद्राकाले निषेविता॥८६॥

तत्रादित एव नीचनखरोमणा शुचिना शुक्लवाससा लघूष्णीषच्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्वाभिभाषिणा बन्धुभूतेन भूतानान्तु गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खलूपचरितव्यं तदपि न रात्रौ न केशास्थिकण्टकाश्मतुषभस्मोत्करकपालाङ्गारामेध्यस्थानबलिभूमिषु न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात्॥८७॥

न राजद्विष्टपरुषपैशुन्यानृतानि वदेत्। न देवब्राह्मणपितृपरिवादांश्च न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचाचारानुपासीत॥८८॥

वृक्षपर्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोह-

स्थानि परिहरेत् पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि। भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसम्भ्रमव्यालभुजङ्गकीटसेवाग्रामाघातकलहप्रश्नसन्निपाताग्निसम्भ्रमव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥८९॥

नाग्निगोगुरुब्राह्मणप्रेक्षाद्म्पत्यन्तरेणाभियायात्। न शवमनुयायात्। देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणाञ्च छाया नाक्रमेत। नास्त गच्छन्तमुद्यन्तं वादित्यं वीक्षेत। गान्धयन्तीं परस्य वा चरन्तीं परस्मै न कस्मैचिदाचक्षीत न चोल्कापातेन्द्रधनूंषि। नाग्निं मुखेनोपधमेत्। नापो भूमिं वा पाणिपादेनाभिहन्यात् ॥९०॥

न वेगान् धारयेत्। न वहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेन्न प्रकाश न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखम् ॥९१॥

न भूमिं विलिखेत्। नासंवृतमुख. सदसि जृम्भोद्गारश्वासक्षवथूनुत्सृजेत्। न पर्य्यस्तिकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्य्यात् ॥९२॥

न बालकर्णनासाश्रोतोदशनविवराण्यभिकुष्णीयात्। न वीजयेत् केशमुखनखवस्त्रगात्राणि। न गात्रनखवक्त्रवादित्रं कुर्य्यात्। न काष्ठलोष्टतृणादीनभिहन्याद्भिन्द्याद्वा ॥९३॥

न प्रतिवातातप सेवेत। न भुक्तमात्रोऽग्निमुपासीत। नोत्कटुकस्तिष्ठेत्। नाल्पकाष्ठासनमध्यासीत। न ग्रीवा विषम धारयेत्। न विषमकाय क्रियां भजेद्भुञ्जीत वा। न प्रततमीक्षेत विशेषाज्ज्योतिर्भास्वरसूक्ष्मचलश्रा-

न्तानि। न भारं शिरसा वहेत्। न स्वप्नजागरणशयनासन-स्थानचङ्क्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरण-हास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत ॥९४॥

उचितादप्यहितात् क्रमशो विरमेत् हितमनुचितमप्यासेवेत क्रमशो न चैकान्ततः पादहीनात् ॥९५॥

नावाक्शिराः शयीत। न भिन्नपात्रे नाञ्जलिपुटे नापः पिबेत्। काले हितमितस्निग्धमधुरप्रायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्। ग्रामगणगणिकापणिकशलुशठपतितभोजनानि परिहरेत्। शेषाण्यपि चानिष्टरूपरसगन्धस्पर्शशब्दमानसान्यन्यान्येवङ्गुणान्यपि वा सम्भूय दत्तानि तान्यपि मक्षिकाबालोपहतानि। नाप्रक्षालितपाणिपादो भुञ्जीत। मूत्रोच्चारपीडितो न सन्ध्ययोर्नापाश्रितो नातीतकालं हीनमतिमात्रञ्चेति न भुञ्जीतोद्धृतस्नेहम ॥९६॥

नोदके पश्येदात्मानं न नग्नः प्रविशेज्जलम्।
न नक्तं दधि भुञ्जीत न वाप्यघृतशर्करम्।
नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥९७॥

अन्यथा कुष्ठवीसर्पादि जनयेत्। द्यूतमद्यातिसेवाप्रतिभूसाक्षित्वसमाह्वानगोष्ठीवादित्राणि न सेवेत। स्रजच्छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत्। ब्राह्मणमग्निं गाञ्च नोच्छिष्टः स्पृशेत् ॥९८॥

भवन्ति चात्र।

सुखमात्रं समासेन सद्वृत्तस्यैतदीरितम्।
आरोग्यमायुरर्थी वा नासङ्गं प्राप्यते नृभिः ॥९९॥
यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्।

तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥१००॥
वर्षासु न पिबेत्तोयं पिबेच्छरदि मात्रया।
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥१०१॥
उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम्।
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः ॥१०२॥
शृतशीतं पिबेद् ग्रीष्मे प्रावृट्काले रसं पिबेत्।
यूषं वर्षति तस्यान्ते प्रपिबेच्छीतलं जलम् ॥१०३॥
स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः।
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम् ॥१०४॥
पिबेदग्निविवृद्ध्यर्थं न च वेगान् विधारयेत्।
अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥१०५॥
प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत्।
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे ॥१०६॥
शस्यते त्रिष्वपि सदा व्यायामो दोषनाशनः।
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रकुप्यति ॥१०७॥
उत्सर्गमैथुनाहारशोधने स्यात् तु तन्मनाः।
नेच्छेद्रोगभयात् प्राज्ञः पीडां वा कायमानसीम् ॥१०८॥
अतिस्त्रीसम्प्रयोगाच्च रक्षेदात्मानमात्मवान्।
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः ॥१०९॥
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः।
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः ॥११०॥
स्थिरो[illegible] मासाश्च भवन्ति स्त्रीषु संयताः।
त्रिभि[illegible] [illegible]ह्नोभिर्हि समीयात् प्रमदां नरः ॥१११॥
सर्वेष्वृ[illegible] षु पञ्चात् पञ्चाद् व्रजेद् बुधः।

रजस्वलामकामाञ्च मलिनामप्रिया तथा ॥११२॥
वर्णवृद्धा वयोवृद्धा तथा व्याधिप्रपीडिताम् ।
हीनाङ्गी गर्भिणीं द्वेष्या योनिदोषसमन्विताम् ॥११३॥
सगोत्रा गुरुपत्नीञ्च तथा प्रव्रजितामपि ।
सन्ध्यापर्व्वस्वगम्याश्च नोपेयात् प्रमदा नरः ॥११४॥
गोसर्गे चार्द्धरात्रे च तथा मध्यन्दिनेषु च ।
लज्जासमावहे देशे विवृतेऽशुद्ध एव च ॥११५॥
क्षुधितो व्याधितश्चैव क्षुब्धचित्तश्च मानवः ।
वातविण्मूत्रवेगी च पिपासुरतिदुर्बलः ॥११६॥
तिर्य्यग्योनावयोनौ च प्राप्तशुक्रविधारणम् ।
दुष्टयोनौ विसर्गन्तु बलवानपि वर्ज्जयेत् ॥११७॥
रेतसश्चातिमात्रन्तु मूर्द्धावरणमेव च ।
स्थितावुत्तानशयने विशेषेणैव गर्हितम् ।
क्रीडायामपि मेधावी हितार्थी परिवर्ज्जयेत् ॥११८॥
रजस्वला प्राप्तवतो नरस्यानियतात्मनः ।
दृष्ट्यायुस्तेजसा हानिरधर्म्मश्च ततो भवेत् ॥११९॥
लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्व्वसु ।
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवितक्षयः ॥१२०॥
गर्भिण्या गर्भपीडा स्याद् व्याधितायां बलक्षयः ॥१२१॥
हीनाङ्गी मलिना द्वेष्या कामं वन्ध्यामसद्वृते ।
देशेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत् ॥१२२॥
क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः ।
स्थितस्य हानिं शुक्रस्य वायोः कोपञ्च विन्दति ॥१२३॥
अतिप्रसङ्गाद्भवति शोषः शुक्रक्षयावहः ।

व्याधितस्य रुजा प्लीहा मृत्युर्मूर्च्छा च जायते ॥१२४॥
प्रत्यूषस्यर्द्धरात्रे च वातपित्ते प्रकुप्यतः ।
तिर्य्यग्योनावयोनौ च दुष्टयोनौ तथैव च ॥१२५॥
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः ।
उच्चारिते मूत्रिते च रेतसश्च विधारणे ॥१२६॥
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्यास्तु सम्भवः ।
सर्वं परिहरेत्तस्मादेतल्लोकद्वये हितम् ॥१२७॥
शुक्रं चोपस्थितं मोहान्न सन्धार्य्यं कथञ्चन ।
वयोरूपगुणोपेतां तुल्यशीलां गुणान्विताम् ॥१२८॥
अभिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ।
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥१२९॥
भक्ष्याः सशर्करं क्षीरं ससितं रस एव च ।
स्नानं सव्यजनं स्वप्नो व्यवायान्ते हितानि तु ॥१३०॥

---

## पञ्चविंशतितमोऽध्यायः ।

अथातो मिश्रकचिकित्सितं व्याख्यास्यामः ।
पाल्यामयास्तु विंशाख्या इत्युक्तं प्राग् निबोध तान् ॥१॥
परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः ।
पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः ॥ २ ॥
सौकुमार्य्याच्चिरोत्सृष्टे सहसाभिप्रवर्द्धिते ।
कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवान् ॥ ३ ॥
कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ।
गुर्व्वाभरणसंयोगात्ताडनाद् घर्षणादपि ॥ ४ ॥

शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वित.।
रक्तो वा रक्तपित्ताभ्यामुत्पात सगदो मत: ॥ ५ ॥
बलाद्दर्धयत. कर्णं पाल्या वायु प्रकुप्यति।
गृहीत्वा सकफं कुर्य्याच्छोफं तद्दर्णवेदनम् ॥ ६ ॥
उन्मन्थक' सकण्डूको विकार: कफवातज ॥ ७ ॥
वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वित:।
शोफो भवति पाकश्च त्वक्स्थोऽसौ दु खवर्द्धन: ॥ ८ ॥
कफासृक्कृमय कुर्य्यु: सर्षपाभा विकारिणी.।
स्राविणी. पिडका. पाल्या कण्डूदाहरुगन्विता ॥९॥
कफासृक्कृमिसम्भूत स विसर्पान्वितस्तत.।
लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृत.।
पाल्यामया ह्यमी घोरा नरस्याप्रतिकारिण. १०॥
मिथ्याहारविहारस्य पालि हिंस्युरुपेक्षिता ।
तस्मादाशु भिषक् तेषु स्नेहादिक्रममाचरेत् ॥ ११ ॥
तथाभ्यङ्गपरीषेकप्रदेहासृग्विमोक्षणम्।
सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जन प्रति ॥ १२ ॥
खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभि ।
सुपिष्टैः साश्वगन्धैश्च मूलकावल्गुजै. फलैः ॥ १३ ॥
सर्पिस्तैलवसामज्जमधूच्छिष्टानि पाचयेत्।
सक्षीराण्यथ तै. पालिं प्रदिह्यात् परिपोटके ॥ १४ ॥
मञ्जिष्ठातिलयष्ट्याह्वसारिवोत्पलपद्मकै ।
सरोध्रै सकदम्बैश्च बलाजम्ब्वाम्रपल्लवै. ॥ १५ ॥
सिद्ध' धान्याम्लसंयुक्त' तैलमुत्पातनाशनम् ॥ १६ ॥
तालपत्राश्वगन्धार्कवाकुचीफलसैन्धवै ।

तैलं कुलीरगोधाभ्या वसया सह पाचितम्॥ १७॥
सरलालाङ्गलीभ्याञ्च हितमुन्मन्थनाशनम्।
तथाश्मन्तकजम्ब्वाम्रपत्रक्वाथेन सेचनम्॥ १८॥
प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयै।
चूर्णैरुद्वर्त्तने पालीं तैलाक्तामवचूर्णयेत्॥ १९॥
लाक्षाविडङ्गकल्केन तैलं पक्वावचारयेत्।
स्विन्ना गोमयपिण्डेन प्रदिह्यात् परिलेहिके॥ २०॥
पिष्टैर्विडङ्गैरथवा त्रिवृच्छ्यामार्कसयुतैः।
करञ्जेङ्गुदिवीजैर्वा कुटजारग्वधायुतै॥ २१॥
सर्वैर्वा सार्षप तैलं सिद्धं मरिचसयुतम।
सनिम्बपत्रैरभ्यङ्गे मधूच्छिष्टान्वितं हितम॥ २२॥
पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च।
पुष्ट्यर्थं मार्दवार्थञ्च कुर्य्यादभ्यञ्जन हितम्॥ २३॥
लोपाकानूपमज्जान वसा तैल नवं घृतम्।
पचेद्द्विगुणं क्षीरमावाप्य मधुर गणम्॥ २४॥
अपामार्गाश्वगन्धे च तथा लाक्षारस शुभम्।
तत्सिद्ध परिपूतञ्च स्वनुगुप्त निधापयेत्॥ २५॥
तेनाभ्यञ्जनात् सदा पालीं सुस्विन्नामतिमर्दिताम्।
एतेन पाल्यो वर्द्धन्ते निरुजो निरुपद्रवा॰।
दृढा॰ पुष्टाः समा स्निग्धा जायन्ते भूषणक्षमाः॥२६॥
नीलीदलं भृङ्गरजोऽर्जुनत्वक्पिण्डीतक कृष्णमयोरजश्च।
वीजोद्भव साहचरञ्च पुष्प पथ्याक्षधात्रीसहितं विचूर्ण्य॥२७
एकीकृतं सर्वमिद प्रमाव
पङ्केन तुल्य नलिनीभवेन।

सयोज्य पत्र कलशे निधाय
लोहे घटे सद्मनि सापिधाने ॥२८॥
अनेन तैलं विपचेद् विमिश्र रसेन भृङ्गत्रिफाभवेन।
आसन्नपाके च परीक्षणार्थं पत्र बलाकाभवमाक्षिपेच्च ॥२९॥
भवेद् यदा तद् भ्रमराङ्गनील
तदा विपक्क विनिधाय पात्रम्।
कृष्णायसे मासमवस्थित तद्
अभ्यङ्गयोगात् पलितानि हन्यात् ॥३०॥
सैरीयजम्ब्वर्जुनकाश्मरीजं पुष्पं तिलाम्राकवचूतबीजे।
पुनर्नवाकर्दमकण्टकार्य्यौ कासीसपिण्डीतकबीजसारम् ॥३१॥
फलत्रय लोहरजोऽञ्जनञ्च
यष्ट्याह्वय नीरजसारिवे च।
पिष्ट्वाथ सर्वं सह मोदयन्त्या
साराम्भसा बीजकसम्भवेन ॥३२॥
साराम्भस. सप्तभिरेव पश्चात्
प्रस्थे समालोड्य दद्याद्गुणम्।
लोहे सुपात्रे विनिधाय तैल-
मक्षोद्भव तच्च पचेत् प्रयत्नात् ॥३३॥
पक्वञ्च लोहेऽभिनवे निधाय
नस्य विदध्यात् परिशुद्धकाय।
अभ्यङ्गयोगैश्च नियुज्यमानं
भुञ्जीत माषान् कृशरामथो वा ॥३४॥
मासोपरिष्टाद्घनकुञ्चिताग्राः केशा भवन्ति भ्रमराञ्जनाभाः।
केशास्तथान्ये खलतौ भवेयुर्जरा न चैन सहसाभ्युपैति ॥३५॥

बल पर सम्भवतीन्द्रियाणां
भवेच्च वक्त्रं बलिभिर्विमुक्तम्।
नाकामिनेऽनर्थिनि नाकृताय
नैवारये तैलमिदं प्रदेयम् ॥३६॥
लाक्षारोध्रे द्वे हरिद्रे शिलाले
कुष्ठं नागं गैरिकावर्णकाश्च।
मञ्जिष्ठाग्रा स्यात् सुराष्ट्रोद्भवा च
पत्तङ्गो वै रोचना चाञ्जनञ्च ॥३७॥
हैमाङ्गत्वक् पाण्डुपत्रं वटस्य
कालीयं स्यात् पद्मकं पद्ममध्यम्।
रक्तं श्वेतं चन्दनं पारदञ्च
काकोल्यादिः क्षीरपिष्टश्च वर्गः ॥३८॥
मेदो मज्जा सिक्थकञ्चोष्ट्रतञ्च
दुग्धं क्वाथः क्षीरिणाञ्च द्रुमाणाम्।
एतत् सर्वं पक्वमेकध्यतस्तु
वक्त्राभ्यङ्गे सर्पिरुक्तं प्रधानम् ॥३९॥
हन्याद् व्यङ्गं नीलिकाश्चातिवृद्धा
वक्त्रे जाताः स्फोटिकाश्चापि काश्चित्।
पद्माकारं निर्व्वलीकञ्च वक्त्रं
कुर्य्यादेतत् पीनगण्डं मनोज्ञम् ॥४०॥
राज्ञामेतद् योषितां चापि नित्यं
कुर्य्याद् वैद्यस्तत्समानां नृणाञ्च।
कुष्ठघ्नं वै सर्पिरेतत् प्रधानं
येषां पादे सन्ति वैपादिकाश्च ॥४१॥

हरीतकीचूर्णमरिष्टपत्रं चूतत्वचं दाडिमपुष्पवृन्तम् ।
पत्रञ्च दद्यान्मदयन्तिकाया लेपाङ्गरागो नरदेवयोग्यः ॥४२॥

---

षड्विंशतितमोऽध्यायः ।

अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः ।

कल्यस्योदग्रवयसो वाजीकरणसेविनः ।
सर्वेष्वृतुष्वहरहर्व्यवायो न निवारितः ॥१॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् ।
योषित्प्रसङ्गात् क्षीणानां क्लीवानामल्परेतसाम् ॥२॥
विलासिनामर्थवतां रूपयौवनशालिनाम् ।
नृणाञ्च बहुभार्य्याणां योगा वाजीकरा हिताः ॥३॥
सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान् ।
नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥४॥
भोजनानि विचित्राणि पानानि विविधानि च ।
वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा ॥५॥
यामिनी सेन्दुतिलका कामिनी नवयौवना ।
गीतं श्रोत्रमनोहारि ताम्बूलं मदिरा स्रजः ।
मनसश्चाप्रतिघातो वाजीकुर्वन्ति मानवम् ॥६॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ॥७॥
कट्वम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयो दृष्टः क्लैव्यं तदपरं स्मृतम् ॥८॥
अतिव्यवायशीलो यो न च वाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥९॥

महता मेढ्ररोगेण मर्मच्छेदेन वा पुनः ।
क्लैव्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम् ॥१०॥
जन्मप्रभृति यः क्लीव क्लैव्यं तत् सहजं स्मृतम् ॥११॥
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्य्यतः ।
षष्ठं क्लैव्यं मतं तत्तु स्थिरशुक्रनिमित्तजम् ॥१२॥
असाध्यं सहजं क्लैव्यं मर्मच्छेदाच्च यद्भवेत् ।
साध्यानामितरेषान्तु कार्य्यो हेतुविपर्य्ययः ॥१३॥
विधिर्वाजीकरो यस्तु तं प्रवक्ष्याम्यतः परम् ।
तिलमाषविदारीणां शालीनां चूर्णमेव वा ।
पौण्ड्रकेक्षुरसेनार्द्रं मर्द्दितं सैन्धवान्वितम् ॥१४॥
वराहमेदसा युक्तां घृतेनोत्कारिकां पिबेत् ।
तां भक्षयित्वा पुरुषो गच्छेत्तु प्रमदाशतम् ॥१५॥
बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
शिशुमारवसाभ्यक्ताः शष्कुल्यस्तैस्तिलैः कृताः ।
यः खादेत् स पुमान् गच्छेत् स्त्रीणां शतमपूर्ववत् ॥१६॥
पिप्पलीलवणोपेतं बस्ताण्डं क्षीरसर्पिषा ।
साधितं भक्षयेद् यस्तु स गच्छेत् प्रमदाशतम् ॥१७॥
पिप्पलीमाषशालीनां यवगोधूमयोस्तथा ।
चूर्णभागैः समैस्तैस्तु घृते पूपलिकां पचेत् ॥१८॥
तां भक्षयित्वा पीत्वा तु शर्करामधुरं पयः ।
नरश्चटकवद्गच्छेद्दश वारान्निरन्तरम् ॥१९॥
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम् ।
सर्पिर्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छति ॥२०॥
एवमामलकं चूर्णं स्वरसेनैव भावितम् ।

शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत् ॥२१॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ।
पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते ॥२२॥
शिशुमारस्य वा खादेत्ते तु वाजीकरे भृशम् ।
कुलीरकूर्मनक्राणामण्डान्येव तु भक्षयेत् ॥२३॥
महिषर्षभवस्तानां पिबेच्छुक्राणि वा नरः ।
अश्वत्थफलमूलत्वक्छुङ्गासिद्धं पयो नरः ।
पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति ॥२४॥
विदारिमूलकल्कन्तु घृतेन पयसा नरः ।
उडुम्बरसमं पीत्वा वृद्धोऽपि तरुणायते ॥२५॥
माषाणां पलमेकन्तु संयुक्तं क्षौद्रसर्पिषा ।
अवलिह्य पयः पीत्वा तेन वाजीभवेन्नरः ॥२६॥
क्षीरपक्वांस्तु गोधूमानात्मगुप्ताफलैः सह ।
शीतान् घृतयुतान् खादेत्ततः पश्चात्पयः पिबेत् ॥२७॥
शङ्खमूषिकमण्डूकघटकाण्डजातं घृतम् ।
पादाभ्यङ्गेन कुरुते बलं भूमिन्तु न स्पृशेत् ॥२८॥
यावत् स्पृशति नो भूमिं तावद्रक्षेन्निरन्तरम् ॥२९॥
स्वयंगुप्तेक्षुरकयोः फलचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥३०॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ।
शतावर्य्युच्चटामूलं पेयमेव बलार्थिना ॥३१॥
स्वयंगुप्ताफलैर्युक्तं माषसूपं पिबेन्नरः ॥३२॥
　　गुप्ताफलं गोक्षुरकाच्च बीजं
　　तथोच्चटा गोपयसा विपाच्य ।

खजाहृत शर्करया च युक्त
पीत्वा नरो हृष्यति सर्वरात्रम् ॥ २३॥
माषान् विदारीमपि सोच्चटाश्च
क्षीरे गवा क्षौद्रघृतोपपन्नाम् ।
पीत्वा नर शर्करया सुयुक्ता
कुलिङ्गवद्धृष्यति सर्वरात्रम् ॥२४॥
गृष्टीना वृद्धवत्साना माषपर्णभृता गवाम् ।
यत् क्षीर तत् प्रशसन्ति बलकामेषु जन्तुषु ॥२५॥
क्षीरमासगण. सर्व: काकोल्यादिश्च पूजित ।
वाजीकरणहेतोर्हि तस्मात्तत्तु प्रयोजयेत् ॥ २६॥
एते वाजीकरा योगा प्रीत्यपत्यबलप्रदा ।
सेव्या विशुद्धोपचितदेहै कालाद्यपेक्षया ॥२७॥



## सप्तविंशतितमोऽध्याय ।

अथात: सर्वोपघातशमनीयं रसायनं व्याख्यास्याम: ।
पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम् ।
प्रयुञ्जीत भिषक् प्राज्ञ. स्निग्धशुद्धतनो: सदा ॥१॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधि: ।
न भाति वाससि क्लिष्टे रङ्गयोग इवाहित: ॥२॥
शरीरस्योपघाता ये दोषजा मानसास्तथा ।
उपदिष्टा. प्रदेशेषु तेषा वक्ष्यामि वारणम् ॥३॥
शीतोदक पय. क्षौद्र सर्पिरित्येकशो द्विश' ।
त्रिश. समस्तमथवा प्राक्पीतं स्थापयेद्वय: ॥४॥
तत्र विडङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुयुक्त यथाबल

शीततोयेनोपयुञ्जीत शीततोयं चानुपिबेदेवमहरहर्मासं तद्देव मधुयुक्तं भल्लातकक्वाथेन वा मधुद्राक्षाक्वाथयुक्तं वा मध्वामलकरसाभ्यां वा गुडूचीक्वाथेन वा। एवमेते पञ्च प्रयोगा भवन्ति। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्। एते खल्वंशांसि क्षपयन्ति क्रिमीनुपघ्नन्ति ग्रहणधारणशक्तिं जनयन्ति। मासे मासे प्रयोगे वर्षशतमायुषोऽभिवृद्धिर्भवति ॥ ५॥

विडङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं स्विन्नमवनाय्य दृषदि पिष्टमायसे दृढे कुम्भे मधूदकोत्तरं प्रावृषि भस्मराशावन्तर्गृहे चतुरो मासान्निदध्यात्। वर्षाभिगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसम्पाताभिहुतं कृत्वा प्रातः प्रातर्यथाबलमुपयुञ्जीत। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्। पांशुशय्यायां शयीत। तस्य मासादूर्द्ध्वं सर्वाङ्गेभ्यः क्रमयो निष्क्रामन्ति तानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत्। द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत् चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते। अमानुषं चादित्यप्रकाशं वपुरधिगच्छति। दूराच्छ्रवणानि दर्शनानि चास्य भवन्ति। रजस्तमसी चापोह्य सत्वमधितिष्ठति। श्रुतिनिगाद्यपूर्वोत्पादी गजबलोऽश्वजव पुनर्युवाष्टौ वर्षशतान्यायुरवाप्नोति। तस्याणुतैलमभ्यङ्गार्थे अजकर्णकषायमुत्सादनार्थे सोशीर कूपोदकं स्नानार्थे चन्दनमुपलेपनार्थे भल्लातकविधानवदाहारः परिहारश्च। कृशय्यायां निष्कुलीकृतानामेष एव कल्पः पांशुशय्या-

भोजनवर्जम्। अत्र हि पयसा शृतेन भोक्तव्यम्। आशिषश्च पूर्वेण समाना शोणितपित्तनिमित्तेषु विकारेष्वेतेषामुपयोग. ॥६॥

यथोक्तमागारं प्रविश्य बलामूलार्द्धपलं पल वा पयसालोड्य पिबेत्। जीर्णे पय सर्पिरोदन इत्याहार। एव द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति। एव दिवसशतमुपयुज्य वर्षशत वयस्तिष्ठति। एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः। विशेषतस्त्वतिबलामुदकेन नागबलाचर्णं मधुना विदारीचूर्णं वा क्षीरेण शतावरीमप्येव पूर्वेणान्यत्समानमाशिषश्च समा। एता स्त्वौषधयो बलकामाना शोणित छर्दयता विरिच्यमानाना चोपदिश्यन्ते ॥७॥

वाराहीमूलतुलाचूर्णं कृत्वा ततो मात्रा मधुयुक्ता पयसालोड्य पिबेत्। जीर्णे पय सर्पिरोदन इत्याहार। प्रतिषेधोऽत्र पूर्ववत् क्रियाप्रयोगमुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम्। एतेनैव चूर्णेन पयोऽवचूर्ण्य शृतशीतमभिमथ्याज्यमुत्पाद्य मधुयुतमुपयुञ्जीत सायम्प्रातरेककालं वा। जीर्णे पय सर्पिरो॰न इत्याहार। एवं मासमुपयुज्य वर्षशतायुर्भवति। जीर्णे पय सर्पिरोदन इत्याहार॰ ॥८॥

चक्षु काम प्राणकामो वा वीजकसाराग्निमन्थमूलनि क्वाथ्य माषप्रस्थ साधयेत्। तस्मिन् सिध्यति चित्रकमूलानामक्षमात्र कल्क दद्यादामलकरसचतुर्थभाग तत. स्विन्नमवतार्य्य सहस्रसम्पाताभिहुत कृत्वा शीतीभूतं मधु-

सर्पिर्भ्यां सहान्योपयुञ्जीत यथाबलं लवणं परिहरन् भक्ष-येत्। जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नी-यात् पयसा वा मासत्रयमेवमाभ्यां प्रयोगाभ्यां चक्षुः सौप-र्णं वद्भवत्यनल्पबलो बलवांस्त्रीषु चाक्षयो वर्षशतायुर्भव-तीति ॥९॥

भवति चात्र।

पयसा सह सिद्धानि नर सनफलानि यः।
भक्षयेत् पयसा सार्द्धं वयस्तस्य न शीर्य्यते॥ १० ॥

---

## अष्टाविंशतितमोऽध्यायः।

अथातो मेधायुष्कामीयं रसायनं चिकित्सितं व्याख्यास्यामः।

मेधायुःकामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सह समालोड्य स्नेहकुम्भे सप्त-रात्रं धान्यराशौ निदध्यात्। सप्तरात्रादुद्धृत्य हृतदोषस्य यथाबलं पिण्डं प्रयच्छेदनुदिते सूर्य्ये उष्णोदकं चानु-पिबेत्। भल्लातकविधानवच्चागारप्रवेशो जीर्णौषधश्चाप-राह्णे हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरेणौदनमश्नीयादेवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतिनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति। कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोर्मूत्रेणालोड्यार्द्धपलिकं पिण्डं विगतलौहित्ये सवितरि पाययेत्। पराह्णे चालवणेनामलकयूषेण सर्पि-ष्मन्तमोदनमश्नीयात्। एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति। एष एवोपयोगश्चित्रमूलानां रजन्या-

श्चित्रकमूले विशेषो द्विपलिकः पिण्डः परं प्रमाणं शेषं पूर्ववत्॥ १॥

हृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसालोड्य पिबेत् पयोऽनुपानं वा। तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत तिलैर्वा सह भक्षयित्वा त्रीन् मासान् पयोऽनुपानं जीर्णे पयःसर्पिरोदनं इत्याहारः। एवमुपयुञ्जानो ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशतमायुरवाप्नोति। त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्षयेत्। त्रिरात्रादूर्द्धं पयःसर्पिरिति चोपयुञ्जीत। बिल्वमात्रं पिण्डं वा पयसालोड्य पिबेदेवं दशरात्रमुपयुज्य मेधावी वर्षशतायुर्भवति॥ २॥

हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत। जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत् क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति। द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति। नष्टञ्चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति। एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति। मूर्त्तिमती चैनं वाग्देव्यनुप्रविशति। सर्वाश्चैनं श्रुतय उपतिष्ठन्ति। श्रुतधरः पञ्चवर्षशतायुर्भवति॥ ३॥

ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुडवं द्वे द्वे पले वचात्रिवृतयोर्दश हरीतक्यामलकविभीतकानि

अश्मपिष्टान्यावाप्यैकध्य साधयित्वा स्वनुगुप्तं निदध्यात् । तत पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत जीर्णे पयः-सर्पिरोदन इत्याहार. । एतेनोर्द्ध्वमधस्तिर्य्यक् क्रमयो नि:-क्रामन्ति । अलक्ष्मीरपक्रामति । पुष्करकर्ण स्थिरवया" श्रुतनिगादी त्रिवर्षशतायुर्भवत्येतदेव कुष्ठविषमज्वराप-स्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु च संशो-धनमादिशन्ति ॥ ४ ॥

हृतदोष एवागार प्रविश्य हैमवत्या वचाया पिण्ड-मामलकमात्रमभिहुत पयसालोड्य पिबेत् जीर्णे पयःसर्पि-रोदन इत्याहारः । एवं द्वादशरात्रमुपयुञ्जीत ततोऽस्य श्रोत्र विव्रियते द्विरभ्यासात् स्मृतिमान् भवति त्रिरभ्यासाच्छ्रुत-मादत्ते चतुर्द्दादशरात्रमुपयुज्य सर्वं तरति किल्विषं तार्क्ष्य-दर्शनमुत्पद्यते शतायुश्च भवति । द्वे द्वे पले इतरस्या वचाया नि क्वाथ्य पिबेत् पयसा समान भोजन समाः पूर्वेणाशिषश्च ॥५॥

वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति गलगण्डापचीश्लीपदस्वरभेदाश्चापहन्तीति ॥६॥

अथायु:कामीय वक्ष्याम. ।

मन्त्रौषधसमायुक्तं सवत्सरफलप्रदम् ।
विल्वस्य चूर्णं पुष्ये तु हुतं वारान् सहस्रशः ॥७॥
श्रीसूक्तेन नरः काश्यं ससुवर्णं दिने दिने ।
सर्पिर्मधुयुत लिह्यादलक्ष्मीनाशन परम् ॥८॥
त्वच विल्वस्य मूलस्य मूलक्वाथं दिने दिने ।
प्राश्नीयात् पयसा सार्द्धं स्नात्वा हुत्वा समाहितः

दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत् ॥९॥
हुत्वा विसानां क्वाथन्तु मधुलाजैश्च संयुतम्।
धमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतम् ॥१०॥
सुवर्णपद्मबीजानि मधुलाजाः प्रियङ्गवः।
गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत् ॥११॥
नीलोत्पलदलक्वाथो गव्येन पयसा शृतः।
ससुवर्णतिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः ॥१२॥
गव्यं पयः सुवर्णञ्च मधूच्छिष्टञ्च माक्षिकम्।
पीतं शतसहस्राभिहुतं युक्तरथं स्मृतम् ॥१३॥
वचाघृतसुवर्णञ्च बिल्वचूर्णमिति त्रयम्।
मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्द्धनम् ॥१४॥
वासामूलतुलाक्वाथे तैलमावाप्य साधितम्।
हुत्वा सहस्रमश्नीयान्मेध्यमायुष्यमुच्यते ॥१५॥
यावकांस्तावकान् भवेदभिभूय यवांस्तथा।
पिप्पलीमधुसंयुक्तान् भिक्षाचरणवद्भवेत् ॥१६॥
मध्वामलकचूर्णानि सुवर्णमिति च त्रयम्।
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात् ॥१७॥
शतावरीघृतं सम्यगुपयुक्तं दिने दिने।
सक्षौद्रं ससुवर्णञ्च नरेन्द्रं स्नापयेद्वशे ॥१८॥
गोचन्दनामोहनिकामधुकं माक्षिकं मधु।
सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता ॥१९॥
पद्मनीलोत्पलक्वाथे यष्टीमधुकसंयुते।
सर्पिरासादितं गव्यं ससुवर्णं सदा पिबेत् ॥२०॥
पयसानुपिबेत् सिद्धं तेषामेव समुद्भवे।

अलक्ष्मीघ्नं सदायुष्यं राज्याय सुभगाय च ॥२१॥
अत्र नोदीरितो मन्त्रो योगेष्वेतेषु साधने
अभ्युक्ता तत्र सर्वत्र गायत्री त्रिपदी भवेत् ॥२२॥
पाप्मानं नाशयन्त्येता दद्युश्चौषधयः श्रियम् ।
कुर्य्युर्नागबलं चापि मनुष्यममरोपमम् ॥२३॥
सतताध्ययनं वादः परतन्त्रावलोकनम् ।
तद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः ॥२४॥
आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणम् ।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनम् ॥२५॥

---

एकोनत्रिंशत्तमोऽध्यायः ।

अथातः स्वभावव्याधिप्रतिषेधनीयं रसायनं व्याख्यास्यामः ।

ब्रह्माद्योऽसृजन् पूर्वममृतं सोमसञ्ज्ञितम् ।
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥१॥

एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्य्यविशेषैश्चतुर्विंशतिधा भिद्यते ॥२॥

तद्यथा—

अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥३॥
प्रतानवांस्तालवृन्तः करवीरोऽंशवानपि ।
स्वयम्प्रभो महासोमो यश्चापि गरुडाहृतः ॥४॥
गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति सञ्ज्ञितः ॥५॥
गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते

एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥६॥

सर्वेषामेव चैतेषामेको विधिरुपासने ।
सर्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते ॥७॥

अतोऽन्यतमं सोममुपयुयुक्षुः सर्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरागारे कृतमङ्गलः सोमकन्दं सुवर्णसूच्या विदार्य पयो गृह्णीयात्, सौवर्णे पात्रेऽञ्जलिमात्रं ततः सकृदेवोपयुञ्जीत नास्वादयंस्तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत् ॥८॥

रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः ।
आसीत तिष्ठेत् क्रामेच्च न कथञ्चन संविशेत् ॥९॥

सायं वा भुक्तवान् श्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत तृषितो वा शीतोदकमात्रां पिबेत् । ततः प्रातरुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तत्रैवासीत । तस्य जीर्णे सोमे छर्दिरुपपद्यते । ततः शोणिताक्तं कृमिव्यामिश्रं छर्दितवतः सायं शृतशीतं क्षीरं वितरेत् । ततस्तृतीयेऽहनि कृमिव्यामिश्रमतिसार्यते स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति, ततः सायं स्नातस्य पूर्ववदेव क्षीरं वितरेत् । क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत । ततश्चतुर्थेऽहनि तस्य श्वयथुरुत्पद्यते । ततः सर्वाङ्गेभ्यः कृमयो निष्क्रामन्ति । तदहश्च शय्यायां पांशुभिरवकीर्य्यमाणः शयीत ॥१०॥

ततः सायं पूर्ववदेव चीरं वितरेत्। एवं पञ्चमषष्ठयोर्दिवसयोर्वर्त्तेत । केवलमुभयकालमस्मै चीरं वितरेत् । ततः सप्तमेऽहनि निर्मांसत्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति । तदहश्च चीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयः पाययेत् । ततोऽष्टमेऽहनि प्रातरेव चीरपरिषिक्तं चन्दनप्रदिग्धगात्रं पयः पाययित्वा पांशुशय्यां समुत्सृज्य चौमास्तृतायां शाययेत् ततो मांसमाप्याय्यते त्वक् चावदलति । दन्तनखरोमाणि चास्य पतन्ति तस्य नवमदिवसात् प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषायपरिषेकः । ततो दशमेऽहन्येतदेव वितरेत् । ततोऽस्य त्वक् स्थिरतामुपैति । एवमेकादशद्वादशयोर्वर्त्तेत । तत त्रयोदशात् प्रभृति सोमवल्ककषायपरिषेकः । एवमाषोडशाद्वर्त्तेत । तत सप्तदशाष्टादशयोर्दिवसयोर्दशना जायन्ते । शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः । तदा प्रभृति चानवैः शालितण्डुलैः चीरयवागूमुपसेवेत यावत् पञ्चविंशतिरिति । ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा । ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः स्थिराः स्निग्धा लक्षणसम्पन्ना केशाश्च जायन्ते त्वक् च नीलोत्पलातसीपुष्पवैदूर्य्यप्रकाशा । ऊर्द्ध्वञ्च मासात् केशान् वापयेद् वापयित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा स्नापयेत् ॥ ११ ॥

ततोऽस्यानन्तरं सप्तरात्रात् केशा जायन्ते भ्रमराञ्जननिभाः कुञ्चिताः स्निग्धास्ततस्त्रिरात्रात् प्रथमपरिसरा-

निष्क्रम्य मुहूर्त्तं स्थित्वा पुनरेवान्त प्रविशेत्। ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य्यम। यवपिष्टमुद्वर्त्तनार्थे। सुखोष्णञ्च पय परिषेकार्थे। अजकर्णकषायमुत्सादनार्थे। सौवीर कूपोदक स्नानार्थे। चन्दनमनुलेपार्थे। आमलकरसविमिश्रास्चास्य यूषसूपविकल्पा। क्षीरमधुकसिद्धञ्च कृष्णतिलमवचारणार्थे। एव दशरात्र ततोऽन्यद् दशरात्र द्वितीये परिसरे वर्त्तेत। ततस्तृतीये परिसरे स्थिरीकुर्व-न्नात्मानमन्यद्दशरात्रमासीत। किञ्चिद्वातपपवनान् वा सेवेत पुनश्चान्त प्रविशेत। न चात्मानमादर्शेषु वा निरीक्षेत रूपशालित्वात्। ततोऽन्यद्दशरात्र क्रोधादीन् परिहरेदेव सर्वेषामुपयोग.। विशेषतस्तु वल्लीप्रतानक्षुपादय. सोमा भक्षयितव्या। तेषान्तु प्रमाणमर्द्धचतुर्थमुष्टय ॥१२॥

अशवन्त सौवर्णे पात्रेऽभिषुणुयात् चन्द्रमस राजते चोपयुज्याष्टगुणमैश्वर्य्यमवाप्येशान देवमनुप्रविशति। शेषास्तु ताम्रमये मृण्मये वा रोहिते वा चर्म्मणि वितते शूद्रवर्ज त्रिभिर्वर्णैः सोमा उपयोक्तव्या। ततश्चतुर्थे मासे पौर्णमास्या शुचौ देशे ब्राह्मणानर्चयित्वा कृतमङ्गलो निष्क्रम्य यथोक्त व्रजेदिति ॥ १३ ॥

ओषधीना पति सोममुपयुज्य विचक्षण ।
दशवर्षसहस्राणि नवा धारयते तनुम् ॥ १४ ॥
नाग्निर्न तोय न विष न शस्त्र नास्त्रमेव च ।
तस्यालमायु क्षपणे समर्थास्च भवन्ति हि ॥ १५ ॥
भद्राणा षष्टिवर्षाणा प्रसुतानामनेकधा ।
कुञ्जराणा सहस्रस्य बल समधिगच्छति ॥ १६ ॥

क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः॥ १७॥
कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः।
प्रह्लादयति भूतानां मनांसि स महाद्युतिः॥ १८॥
साङ्गोपाङ्गांश्च निखिलान् वेदान् विन्दति तत्त्वतः।
चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत्॥ १९॥
सर्वेषामेव सोमानां पत्राणि दश पञ्च च।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च॥२०॥
एकैकं जायते पत्रं सोमस्याहरहस्तदा।
शुक्लस्य पौर्णमास्यान्तु भवेत् पञ्चदशच्छदः॥ २१॥
शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः।
कृष्णपक्षक्षये चापि लता भवति केवला॥ २१॥
अंशुमानाज्यगन्धस्तु कन्दवान् रजतप्रभः।
कदल्याकारकन्दस्तु मुञ्जवाल्लशुनच्छदः।
चन्द्रमाः कनकाभासो जले चरति सर्वदा॥ २२॥
गरुडाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ।
सर्पनिर्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ॥ २४॥
तथान्यैर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते॥ २५॥
सर्व एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः।
क्षीरकन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः॥ २६॥
हिमवत्यर्बुदे सह्ये महेन्द्रमलये तथा।
श्रीपर्वते देवगिरौ गिरौ देवसहे तथा॥ २७॥
पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा।
उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः।

पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ॥ २८ ॥
हठवत् प्लवते तत्र चन्द्रमा सोमसत्तम.।
तस्योद्देशेषु वाप्यस्ति मुञ्जवानशुमानपि ॥ २९ ॥
काश्मीरेषु सरो दिव्य नाम्ना चुद्रकमानसम् ॥ ३० ॥
गायत्रस्त्रैष्टुभ पाङ्क्तो जागत शाङ्करस्तथा।
अत्र सन्त्यपरे चापि सोमा. सोमसमप्रभाः ॥ ३१ ॥
न तान् पश्यन्त्यधर्मिष्ठाः कृतघ्नाश्चापि मानवाः।
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥ ३२ ॥



त्रिंशोत्तमऽध्याय.॥

अथातो निवृत्तसन्तापीय रसायन व्याख्यास्यामः।
यथा निवृत्तसन्तापा मोदन्ते दिवि देवता'।
तथौषधीरिमा' प्राप्य मोदन्ते भुवि मानवा' ॥ १ ॥

अथ सप्त पुरुषा रसायन नोपयुञ्जीरन्। तद् यथा। अनात्मवानलसो दरिद्र. प्रमादी व्यसनी पापकृद् भेषजापमानी चेति। सप्तभिरेव कारणैर्न सम्पद्यते अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधालाभाच्चेति ॥ २ ॥

अथौषधीर्व्याख्यास्याम.। श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रातिच्छत्रा करेणुरजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी चाजलोमी महावेगवती चेत्यष्टादश सोमसमवीर्य्या महौषधयो व्याख्याताः। तासां सोमवत्क्रियाशीःस्तुतयः

भाज्ञेऽभिहितास्तासामागारेऽभिहुतानां यः क्षीरवल्य-
स्तासां क्षीरकुडव सकृदेवोपयुञ्जीत ॥३॥

यास्त्वक्षीरा मूलवल्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि
काण्डानि प्रमाणमुपयोगे। श्वेतकापोती समूलपत्रा भक्ष-
यितव्या गोनसजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः
कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृ-
देवोपयुञ्जीत चक्रकाया पय सकृदेव। ब्रह्मसुवर्चला
सप्तरात्रमुपयोक्तव्या ॥४॥

भक्ष्यकल्पेन शेषाणां पञ्च पलानि क्षीराढकक्वथितानि
ऋखेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोम-
वदाहारविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थे
शेष सोमवदानिर्गमादिति ॥५॥

भवन्ति चात्र।

युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनम्।
कुर्य्युरेता कर्मेणैव दिसाहस्रायुष नरम् ॥६॥
अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बर।
चरत्यमोघसङ्कल्पो नभस्यम्बुदटुर्गमे ॥७॥
व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदा।
गति सौषधिसिद्धस्य सोमसिद्धगति परा ॥८॥
अथ वक्ष्यामि विज्ञानमोषधीनां पृथक् पृथक्।
मण्डलै कपिलैश्चित्रै सर्पाभा पञ्चपर्णिनी।
पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधै ॥९॥
निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता।
सर्पाकारा लोहिताक्षा श्वेतकापोतिरुच्यते ॥१०॥

द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम् ।
द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिम् ॥११॥
सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम् ।
एवंरूपरसाच्चापि कृष्णकापोतिमादिशेत् ॥१२॥
कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा ।
एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥१३॥
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे ।
जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते ॥१४॥
कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः ।
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ॥१५॥
करेणुः सुबहुक्षीरा कन्देन गजरूपिणी ।
हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥१६॥
अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी ।
अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥१७॥
श्वेता विचित्रकुसुमा काकादन्या समा क्षुपाम् ।
चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीम् ॥१८॥
मूलिनी पञ्चभिः पत्रैः सुरक्ताग्रककोमलैः ।
आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी ॥१९॥
कनकाभा जलान्तेषु सर्वतः परिसर्पति ।
सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥२०॥
अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः ।
पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः ॥२१॥
श्रावणी महती ज्ञेया कनकाभा पयस्विनी ।
श्रावणी पाण्डराभासा महाश्रावणिलक्षणा ॥२२॥

गोलोमी चाजलोमी च रोमशे कन्दसम्भवे।
हंसपादीव विच्छिन्नै: पत्रैर्मूलसरुङ्गवै।
अथवा शङ्खपुष्पी च समाना सर्वरूपतः ॥२३॥
वेगेन महताविष्टा सर्पनिर्मोकसन्निभा।
एषा वेगवती नाम जायते ह्यम्बुदक्षये ॥२४॥
सप्तादौ सर्वरूपिण्यो या ह्यौषध्य: प्रकीर्त्तिताः।
तासामुद्धरणं कार्य्यं मन्त्रेणानेन सर्वदा ॥२५॥
महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि।
तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै ॥२६॥
मन्त्रेणानेन मतिमान् सर्वानप्यभिमन्त्रयेत् ॥२७॥
अश्रद्दधानैरलसैः कृतघ्नैः पापकर्मभिः।
नैवासादयितुं शक्याः सोमाः सोमसमास्तथा ॥२८॥
पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः।
निहितं सोमवीर्य्यासु सोमे चाप्यौषधीपतौ ॥२९॥
देवसुन्दे क्षुद्रवरे तथा सिन्धौ महानदे।
दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला ॥३०॥
आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये।
दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥३१॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्।
करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा ॥३२॥
गोलोमी चाजलोमी च महती श्रावणी तथा।
वसन्ति कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥३३॥
कौशिकीं सरितं तीर्त्त्वा सञ्जयन्त्यास्तु पूर्वतः।
क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम् ॥३४॥

विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु।
मलये नलसेतौ च वेगवत्यौषधी ध्रुवा॥३५॥
कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषित।
सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम्॥३६॥
सर्वा विचेयास्त्वौषध्य सोमं चाप्यर्वुदे गिरौ।
सम्भृङ्गैर्दैवचरितैरम्बुदानीकभेदिभि॥३७॥
व्यासतीर्थैश्च विख्यातैः सिद्धर्षिसुरसेवितैः।
गुहाभिर्भीमरूपाभि सिंहोन्नादितकुक्षिभिः॥३८॥
गजालोडिततोयाभिरापगाभिः समन्तत।
विविधैर्धातुभिश्चित्रैः सर्वतैवोपशोभित.॥३९॥

नदीषु शैलेषु सर सु चापि
पुण्येष्वरण्येषु तथाश्रमेषु।
सर्वत्र सर्वा परिमार्गितव्या
सर्वत्र भूमिर्हि वसूनि धत्ते॥४०॥

## एकत्रिंशत्तमोऽध्याय।

अथात. स्नेहोपयौगिकं चिकित्सितं व्याख्यास्याम।

स्नेहसारोऽयं पुरुष प्राणाश्च स्नेहभूयिष्ठा स्नेहसाध्याश्च भवन्ति। स्नेहो हि पानानुवासनमस्तिष्कशिरोवस्त्युत्तरवस्तिनस्यकर्णपूरणगात्राभ्यङ्गभोजनेषूपयोज्य॥१॥

तत्र द्वियोनिश्चतुर्विकल्पोऽभिहित. स्नेह. स्नेहगुणाश्च। तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानम्। स्थावरेभ्यस्तिलतैलं प्रधानमिति॥२॥

अत ऊर्द्ध्वं यथाप्रयोजनं यथाविधानं च स्थावरस्नेहानुपदेक्ष्याम॥३॥

तत्र तिल्वकैरण्डकोशाम्रदन्तीद्रवन्तीसप्तलाशङ्खिनी-पलाश-विषाणिकागवाक्षी-कम्पिल्लकशम्याकनीलिनी-स्नेहा विरेचयन्ति । जीमूतककुटजकृतवेधनेक्ष्वाकुधामार्गवम-दनस्नेहा वामयन्ति । विडङ्गखरमञ्जरीमधुशिग्रुसूर्य्य-वल्लीपीलुसिद्धार्थकज्योतिष्मतीस्नेहाः शिरो विरेचयन्ति ॥४॥

करञ्जपूतिककृतमालमातुलुङ्गेङ्गुदीकिराततिक्तकस्नेहा दुष्टव्रणेषूपयुज्यन्ते । तुवरककपित्थकम्पिल्लकभल्लातकपटोल-स्नेहा महाव्याधिषु । त्रपुसैर्वारुककर्कारुकतुम्बीकुष्माण्ड-स्नेहा मूत्रसङ्गेषु । कपोतवङ्कावल्गुजहरीतकीस्नेहाः शर्कराश्मरीषु । कुसुम्भसर्षपातसीपिचुमर्दातिमुक्तकभाण्डी-कटुतुम्बीकटभीस्नेहा प्रमेहेषु । तालनालिकेरपनसमोच-पियालविल्वमधूकश्लेष्मातकाम्रातकफलस्नेहा पित्तसंसृष्टे वायौ । विभीतकभल्लातकपिण्डीतकस्नेहाः कृष्णीकरणे । श्रवणकङ्कुकटुरुटुकस्नेहाः पाण्डूकरणे । शिंशपागुरुसार-स्नेहा दद्रुकुष्ठकिटिभेषु ॥५॥

सर्व्व एव स्नेहा वातमुपघ्नन्ति । तैलगुणाश्च समासेन व्याख्याताः ॥६॥

अत ऊर्द्ध्वं कषायस्नेहपाकक्रममुपदेक्ष्यामः ।

तत्र केचिदाहुस्त्वक्पत्रमूलादीनां भागस्तच्चतुर्गुणजल-मावाप्य चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येष कषायपाक-कल्पः । स्नेहप्रसृतेषु षट्सु चतुर्गुणं द्रवमावाप्य चतुरश्चा-क्षसमान् भेषजपिण्डानित्येष स्नेहपाककल्पः । एतत्तु न सम्यक्कस्मादागमासिद्धत्वात् ॥७॥

पलकुडवादीनामतो मानन्तु व्याख्यास्याम'।

तत्र द्वादश धान्यमाषा मध्यमा सुवर्णमाषका। ते षोडश सुवर्णम। अथ मध्यमनिष्पावा वा एकोनविंशति-र्धरणम। तान्यर्द्धतृतीयानि कर्ष.। ततश्चोर्द्धं चतुर्गुण-मभिवर्द्धयन्त पलकुडवप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते। तुला पलशत तानि विंशतिर्भार। शुष्काणामिदं मानमार्द्र द्रवाणाञ्च द्विगुणमिति ॥८॥

तत्रान्यतमपरिमाणसम्मितानां यथायोग त्वक्पत्र-मूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छि-न्दयित्वा भेद्यान्यणुशो भेदयित्वावकुट्याष्टगुणेन षोडशगुणेन वाम्भसाभिषिच्य स्थाल्यां चतुर्भागावशिष्ट क्वाथयित्वा-पहरेदित्येष कषायपाककल्प। स्नेहाच्चतुर्गुणो द्रव स्नेहचतुर्थांशो भेषजकल्कस्तदैकध्य ससृज्य विपचेदित्येष स्नेहपाककल्प ॥९॥

अथवा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्ट निःक्वाथ्यापहरेदित्येष कषायपाककल्प। स्नेहकुडवे भेषजपल पिष्ट कल्क चतुर्गुणं द्रवमावाप्य विपचेदित्येष स्नेहपाककल्प. ॥१०॥

भवतश्चात्र।

स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम्।
तत्राय विधिराख्येयो निर्दिष्टे तत्तदेव तु ॥११॥
अनुक्तद्रवकार्य्ये तु सर्व्वत्र सलिलं मतम्।
कल्कक्वाथावनिर्देशे गणात्तस्मात् प्रयोजयेत् ॥१२॥

अत ऊर्द्धं स्नेहपाकक्रममुपदेक्ष्याम.।

स तु त्रिविधस्तद्यथा मृदुर्मध्यम खर इति। तत्र स्नेहौषधिविवेकमात्र यत्र भेषज स मृदुरिति। मधूच्छिष्टमिव विशदमविलेपि भेषज यत्र स मध्यम। कृष्णमवसन्नमीषद्विशद चिक्कण च यत्र भेषज स खर इति। अत ऊर्द्धं दग्धस्नेहो भवति। त पुन साधु साधयेत्। तत्र पानाभ्यवहारयोर्मृदु। नस्याभ्यङ्गयोर्मध्यमः। वस्तिकर्णपूरणयोस्तु खर इति ॥१३॥

भवतश्चात्र।

शब्दस्योपशमे प्राप्ते फेनस्योपरमे तथा।
गन्धवर्णरसादीना सम्पत्तौ सिद्धिमादिशेत् ॥१४॥
घृतस्यैव विपक्कस्य जानीयात् कुशलो भिषक्।
फेणोऽतिमात्र तैलस्य शेष घृतवदादिशेत् ॥१५॥

अत ऊर्द्ध स्नेहपानक्रममुपदेक्ष्याम.। अथ लघुकोष्ठाशातुराय कृतमङ्गलस्वस्तिवाचनायोदयगिरिशिखरसस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि यथाबल तैलस्य घृतस्य वा मात्रा पातु प्रयच्छेत्। पीतमात्रे चोष्णोदकेनोपस्पृश्य सोपानात्को यथासुख विहरेत् ॥१६॥

रुक्षक्षतविषार्त्ताना वातपित्तविकारिणाम्।
हीनमेधास्मृतीनाञ्च सर्पि पानं प्रशस्यते ॥१७॥
कृमिकोष्ठानिलाविष्टा प्रवृद्धकफमेदस।
पिबेयुस्तैलसात्म्याश्च तैल दार्ढ्यार्थिनश्चये ॥१८॥
व्यायामकर्षिता शुष्करेतोरक्ता महारुज।
म[illegible]ग्निमारुतप्राणा वसायोग्या नरा. स्मृताः ॥१९॥

क्रूराशया. क्लेशसहा वातार्त्ता दीप्तवह्नयः।
मज्जानमाप्नुयु सर्वे सर्पिर्वा स्वौषधान्वितम् ॥२०॥
केवल पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देय बहुकफे चापि व्योषक्षारसमायुतम् ॥२१॥
दोषाणामल्पभूयस्त्व संसर्ग समवेक्ष्य च।
युञ्ज्यात्त्रिषष्टिधा भिन्नै. समासव्यासतो रसैः ॥२२॥
स्नेहसात्म्य. क्लेशसह. काले नात्युष्णशीतले।
अच्छमेव पिबेत् स्नेहमच्छपान हि पूजितम् ॥२३॥
शीतकाले दिवास्नेहमुष्णकाले पिबेन्निशि।
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ॥२४॥
वातपित्ताधिकस्योष्णे तृष्णामूर्च्छोन्मादकारक.।
शीते वातकफार्त्तस्य गौरवारुचिशूलकृत् ॥२५॥
स्नेहपीतस्य चेत् तृष्णा पिबेदुष्णोदकं नरः।
एव चानुपशाम्यन्त्या स्नेहमुष्णाम्बुना वमेत् ॥२६॥
दिह्याच्छीतैः शिर शीत तोय चाप्यवगाहयेत् ॥२७॥
या मात्रा परिजीर्य्येत चतुर्भागगतेऽहनि।
सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता ॥२८॥
या मात्रा परिजीर्य्येत तथार्द्धदिवसे गते।
सा बृष्या बृहणी चैव मध्यदोषे च पूजिता ॥२९॥
या मात्रा परिजीर्य्येत चतुर्भागावशेषिते।
स्नेहनीया च सा मात्रा बहुदोषे च पूजिता ॥३०॥
या मात्रा परिजीर्य्येत्तु तथा परिणतेऽहनि।
ग्लानिमूर्च्छामदान् हित्वा सा मात्रा पूजिता भवेत्॥३१
अहोरात्रादसन्दुष्टा या मात्रा परिजीर्य्यति।

सा तु कुष्ठविषोन्मादग्रहापस्मारनाशिनी ॥ २२ ॥
यथाग्नि प्रथमा मात्रा पाययेत विचक्षणः ।
पीतो ह्यतिबहुस्नेहो जनयेत् प्राणसंशयम ॥ २३ ॥
मिथ्याचाराद् बहुत्वाद्वा यस्य स्नेहो न जीर्यति ।
विष्टभ्य वापि जीर्य्येत्त वारिणोष्णेन वामयेत् ॥ २४ ॥
जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत् ।
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा ।
स्नेहे पच्यमाने तृड्दाहभ्रमसादारतिक्लमाः ॥ २५ ॥
परिशिष्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् ।
यवागूं पाययेच्चोष्णां कामं क्लिन्नाल्पतण्डुलाम् ॥ २६ ॥
देयौ यूषरसौ वापि सुगन्धौ स्नेहवर्जितौ ।
कृतौ वाप्यल्पसर्पिष्कौ यवागूर्वा विधीयते ॥ २७ ॥
पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहं तथा ।
सप्तरात्रात् परं स्नेहः सात्मीभवति सेवितः ॥ २८ ॥
सुकुमारं कृशं वृद्धं शिशुं स्नेहद्विषं तथा ।
तृष्णार्तमुष्णकाले च सह भक्तेन पाययेत् ॥ २९ ॥
पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तुकः ।
पीतमेकध्यमेतद्धि सद्यः स्नेहनमुच्यते ॥ ४० ॥
भृष्टमांसरसे स्निग्धा यवागूः सूपकल्पिता ।
सक्षौद्रा पीयमाना तु सद्यः स्नेहनमुच्यते ॥ ४१ ॥
सर्पिष्मती पयःसिद्धा यवागूः स्वल्पतण्डुला ।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते ॥ ४२ ॥
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम् ।
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यःस्नेहनमुच्यते ॥ ४३ ॥

यवकोलकुलत्थाना काथो भागत्रयान्वित ।
पयोदधिसुराक्षीरघृतभागै समन्वित ॥ ४४ ॥
सिद्धमेतैर्घृतं पीत सद्य.स्नेहनमुत्तमम् ॥ ४५ ॥
राज्ञे राजसमेभ्यो वा देयमेतद् घृतोत्तमम ।
बलहीनेषु वृद्धेषु मृदग्निस्त्रीमहालसु ॥ ४६ ॥
अल्पदोषेषु योज्या स्युर्ये योगा सम्यगीरिता ।
विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी ॥ ४७ ॥
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्तो मदपीडित ।
छर्द्दित: पिपासार्त्त श्रान्त पानक्लमान्वित ॥४८॥
दत्तवस्तिर्विरिक्तश्च वान्तो यश्चापि मानव ।
अकाले दुर्दिने चैव न च स्नेह पिबेन्नर ॥ ४९ ॥
अकाले च प्रसूता स्त्री स्नेहपान विवर्जयेत् ।
स्नेहपानाद्भवन्त्येषा नृणा नानाविधा गदा ॥ ५० ॥
गदा वा कृच्छ्रता यान्ति न सिध्यन्त्यथवा पुन ।
गर्भाशये सशेषा स्युरक्तक्लेदमलास्तत ॥ ५१ ॥
स्नेह जह्यान्निषेवेत पाचन रूक्षमेव च ।
दशरात्रात् तत स्नेह यथावदवचारयेत् ॥ ५२ ॥
पुरीष ग्रथितं रूक्ष कृच्छ्रादन्न विपच्यते ।
उरो विदहते वायु कोष्ठादुपरि धावति ॥ ५३ ॥
दुर्वर्णो दुर्बलश्चैव रूक्षो भवति मानव. ।
ग्लानि सदनमङ्गानामवस्तात् स्नेहदर्शनम् ॥ ५४ ॥
सम्यक् स्निग्धस्य लिङ्गानि स्नेहद्वेषस्तथैव च ।
भक्तद्वेषो मुखस्रावो गुददाह. प्रवाहिका ॥ ५५ ॥
पुरीषातिप्रवृत्तिश्च भृशं स्निग्धस्य लक्षणम् ।

रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्।

श्यामाककोरदूषान्नतक्रपिण्याकशक्तुभिः ॥ ५६ ॥

दीप्तान्तरग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः।

दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपयोगी पुरुषो भवेत्तु ॥ ५७

स्नेहो हितो दुर्बलवह्निदेहसंशुद्धये व्याधिनिपीडितस्य।

बलान्वितौ भोजनदोषजातौ प्रमर्दितुं तौ सहसा न साध्यौ

॥ ५८ ॥

---

द्वात्रिंशत्तमोऽध्यायः।

अथातः स्वेदावचारणीयं चिकित्सितं व्याख्यास्यामः।

चतुर्विधः स्वेदस्तद्यथा। तापस्वेद उष्मस्वेद उपनाहस्वेदो द्रवस्वेद इति। अत्र सर्वस्वेदविकल्पावरोधः ॥ १ ॥

तत्र तापस्वेदः पाणिकांस्यकन्दुकपालवालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैरिति।

उष्मस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिच्याम्लद्रव्यैर्वा तैराद्रालक्तकपरिवेष्टितमङ्गप्रदेशं स्वेदयेत्। मांसरसपयोदधिधान्याम्लवातहरपत्रभङ्गक्वाथपूर्णां वा कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात्। पार्श्वच्छिद्रेण वा कुम्भेनाधोमुखेन तस्य मुखमभिधाय तस्मिन् छिद्रे हस्तिशुण्डाकारां नाडीं प्रणिधाय तं स्वेदयेत् ॥ २ ॥

सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्।

हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम्।

सुखा सर्वाङ्गगा ह्येषा न च क्लिश्नाति मानवम् ॥ ३ ॥

व्याममात्रा त्रिवक्रा हस्तिहस्तसमाकृतिः।

स्वेदनार्थे हिता नाडी कैलिञ्जी हस्तिशुण्डिका ॥ ४ ॥
पुरुषायाममात्राञ्च भूमिमुत्कीर्य्य खादिरैः ।
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः ॥५॥
पत्रभङ्गैरवच्छाद्य शयानं स्वेदयेत्ततः ।
पूर्ववत् स्वेदयेद्दग्ध्वा भस्मापोह्यापि वा शिलाम् ॥ ६ ॥

पूर्ववत् कुटीं वा चतुर्द्वारां कृत्वा तस्यामुपविष्टस्यान्तश्चतुर्द्वारेऽङ्गारानुपसन्धाय तं स्वेदयेत्। धान्यानि वा सम्यगुपस्वेद्यास्तीर्य्य किलिञ्जेऽन्यस्मिन् वा तत्प्रतिरूपके शयानं प्रावृत्य स्वेदयेदेव पांशुगोशकृत्तुषबुसपलालोष्मभिः स्वेदयेत् ॥ ७ ॥

उपनाहस्वेदस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढैः सुस्निग्धैः सुखोष्णैः प्रदिह्य स्वेदयेत्। एवं काकोल्यादिभिः सुरसादिभिस्तिलातसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः शाल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत् ॥ ८ ॥

द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्णकटाहे द्रोण्यां वा विगाह्य स्वेदयेत्। एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत। सुखोष्णैः कषायैः परिषिञ्चेदिति ॥ ९ ॥

तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ। उपनाहस्वेदो वातघ्नः। अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति कफमेदोऽन्विते वायौ निवातातपगुरुप्रावरणनियुद्धाध्वव्यायामभारहरणामर्षैः स्वेदमुत्पादयेदिति ॥ १० ॥

भवन्ति चात्र ।

चतुर्विधो योऽभिहितो द्विधा स्वेदः प्रयुज्यते ।

सर्वस्मिन्नेव देहे तु देहस्यावयवे तथा ॥ ११ ॥
येषां नस्यं विधातव्यं वस्तिश्चैव हि देहिनाम् ।
शोधनीयाश्च ये केचित् पूर्वं स्वेद्यास्तु ते मता. ॥ १२ ॥
पश्चात् स्वेद्या हृते शल्ये मूढगर्भानुपद्रवा ।
सम्यक् प्रजाता काले या पश्चात् स्वेद्या विजानता ॥१३॥
स्वेद्य पूर्वञ्च पश्चाच्च भगन्दर्य्यर्शसस्तथा ।
अश्मर्य्या चातुरो जन्तुः शेषान् व्याले प्रचक्ष्महे ॥ १४ ॥
नात्यश्नतो नापि चाल्पस्निग्धदेहे
स्वेदो योज्य स्वेदविद्भि कथञ्चित् ।
दृष्टं लोके काष्ठमस्निग्धनाशु
गच्छेद् भङ्गं स्वेदयोगैर्विहीनम् ॥ १५ ॥
अग्नेर्दीप्तिं मार्दवं त्वक्प्रसाद
भक्तश्रद्धां स्रोतसां निर्मलत्वम् ।
कुर्य्यात् स्वेदो हन्ति निद्रां सतन्द्रां
सन्धीन् स्तब्धाश्चेष्टयेदाशु युक्तः ॥ १५ ॥
स्नेहक्लिन्ना धातुसंस्थाश्च दोषा.
स्वस्थानस्था ये च मार्गेषु लीना ।
सम्यक्स्वेदैर्योजितैस्ते द्रवत्व
प्राप्ता कोष्ठं यान्ति देहादशेषात् ॥ १६ ॥
स्वेदास्रावो व्याधिहानिर्लघुत्व
शीतार्थित्वं मार्दवं चातुरस्य ।
सम्यक् स्विन्ने लक्षणं प्राहुरेतत्
मिथ्या स्विन्ने व्यत्ययेनैतदेव ॥ १७ ॥
स्विन्नेऽत्यर्थं सन्धिपीडा विदाहः

स्फोटोत्पत्तिः पित्तरक्तप्रकोपः।
मूर्च्छाभ्रान्तिर्दाहतृष्णा क्लमश्च
कुर्य्यात्तूर्णं तत्र शीतं विधानम्॥ १८॥
पाण्डुर्मेही पित्तरक्ती क्षयार्त्तः
क्षामोऽजीर्णी चोदरार्त्तो विषार्त्तः।
तृष्णार्त्तो गर्भिणी पीतमद्यो
नैते स्वेद्या यश्च मर्त्त्योऽतिसारी॥ १९॥
स्वेदादेषां यान्ति देहा विनाशं
चासाध्यत्वं यान्ति चैषां विकाराः॥२०॥

एतेषां स्वेदसाध्या ये व्याधयस्तेषु बुद्धिमान्।
मृदून् स्वेदान् प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु॥ २१॥
सर्वान् स्वेदान्निवाते च जीर्णान्नस्यावचारयेत्।
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी॥ २२॥
स्विद्यमानस्य च मुहुर्हृदयं शीतलैः स्पृशेत्।
सम्यक् स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः॥२३॥
स्वभ्यक्तं प्रावृताङ्गञ्च निवातशरणस्थितम्।
भोजयेदनभिष्यन्दि सर्वं चाचारमादिशेत्॥ २४॥

---

त्रयस्त्रिंशत्तमोऽध्यायः।

अथातो वमनविरेचनसाध्योपद्रवचिकित्सितं व्याख्यास्यामः।

दोषाः क्षीणा बृंहयितव्याः कुपिताः प्रशमयितव्याः वृद्धा निर्हर्त्तव्याः समाः परिपाल्या इति सिद्धान्तः। प्राधान्येन वमनविरेचने वर्त्तेते निर्हरणे दोषाणाम्। तस्मात् तयोर्विधानमुच्यमानमुपधारय॥१॥

तथातुरं स्निग्धं स्विन्नमभिष्यन्दिभिराहारैरनवबद्धदोष-मवलोक्य श्वोवमनं पाययितास्मीति सम्भोजयेत् तीक्ष्णाग्निं बलवन्तं बहुदोषं महाव्याधिपरीतं वमनसात्म्यञ्च ॥२॥

भवति चात्र ।

पेयलैर्विविधैरन्नैर्दोषानुत्क्लेश्य देहिनः ।

स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते ॥३॥

अथापरेद्युः पूर्वाह्णे साधारणे काले वमनद्रव्यकषाय-कल्कचूर्णस्नेहानामन्यतमस्य मात्रां पाययित्वा वामयेत् । यथायोगं कोष्ठदोषविशेषमवेक्ष्यासात्म्यबीभत्सदुर्गन्धदुर्दर्शनानि च वमनानि विदध्यात् । अतो विपरीतानि विरेचनानि ॥४॥

तत्र सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधितक्रयवागूनामन्यतममाकण्ठं पाययेत् । पीतौषधञ्च पाणिभिरग्नितप्तैः प्रताप्यमानं मुहूर्त्तमुपेक्षेत ॥५॥

तस्य च स्वेदप्रादुर्भावेण शिथिलतामापन्नं श्लेष्म-स्थानेभ्यः प्रचलितं कुक्षिमनुसृतं जानीयात्ततः प्रवृत्तहृल्लासं ज्ञात्वा जानुमात्रासनोपविष्टमाप्तैर्ललाटे पृष्ठे पार्श्वयोः कण्ठे च पाणिभिः सुपरिगृहीतमङ्गुलीगन्धर्वहस्तोत्पल-नालानामन्यतमेन कण्ठमभिस्पृशन्तं वामयेत्तावद्यावत्सम्य-ग्वान्तलिङ्गानीति ॥६॥

भावतश्चात्र ।

कफप्रसेकं हृदयाविशुद्धिं कण्डूञ्च दुश्छर्दितलिङ्गमाहुः ।

पित्तातियोगञ्च विसंज्ञताञ्च हृत्कण्ठपीडामपि चातिवान्ते ॥७॥

पित्ते कफस्यानु सुख प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंस्रवे च स्थिते सुवान्तं पुरुषं व्यवस्येत्॥८॥

सम्यग्वान्तं चैनमभिसमीक्ष्य स्नेहनविरेचनशमनानां धूमानामन्यतमं सामर्थ्यतः पाययित्वाचारिकमादिशेत्॥९॥

भवन्ति चात्र।

ततोऽपराह्ने शुचिशुद्धदेहमुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलत्थमुद्गाढकिजाङ्गलानां यूषैरसैर्वाप्युपभोजयेत् तु॥१०॥

कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।
कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित्॥११॥

छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजन्ति।
तथा हृते श्लेष्मणि शोधनेन तज्जाः विकारा प्रशमं प्रयान्ति॥१२॥

न वामयेत् तैमिरिकोर्द्ध्ववातगुल्मोदरप्लीहकृमिप्रमार्त्तान्।
स्थूलक्षतक्षीणकृशातिवृद्धमूत्रातुरान् केवलवातरोगान्॥१३॥

स्त्रीपवाताध्ययनप्रसक्तदुर्च्छर्दिदुष्कोष्ठतृडार्त्तबालान्।
ऊर्द्ध्वास्रपित्तिक्षुधितातिरूक्षगर्भिण्युदावर्त्तिनिरूहिताश्च॥१४॥

अवम्यवमनाद्रोगाः कृच्छ्रतां यान्ति देहिनाम्।
असाध्यतां वा गच्छन्ति नैते वाम्यास्ततः स्मृताः॥१५॥

एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः।
अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना॥१६॥

वाम्यास्तु विषशोषस्तन्यदोषविषममन्दाग्न्युन्मादापस्मारश्लीपदार्बुदविदारिकामेदोमेह-गरज्वरारुच्यपच्यामातीसारहृद्रोगचित्तविभ्रमविसर्पविद्रध्यजीर्णमुखप्रसेक-हृल्ला-

सश्वासकासपीनस-पूतीनासकण्ठौष्ठवक्तपाक-कर्णस्रावाधि-जिह्वोपजिह्विकागलशुण्डिकाध शोणितपित्तेन कफस्था-नजेषु विकारेष्वन्येषु कफव्याधिपरीतेष्विति ॥१७॥

विरेचनमपि स्निग्धस्विन्नाय वान्ताय च देयम्। अथा-तुर श्वोविरेचनं पाययितास्मीति लघु भोजयेत् फलाम्ल-मुष्णोदकं चैनमनुपाययेत्। अथापरेऽहनि विगतश्लेष्माण-मातुरोपक्रमणीयादवेच्यातुरमथास्मै औषधमात्रां पातुं प्रय-च्छेत् ॥१८॥

तत्र मृदुः क्रूरो मध्य इति त्रिविधः कोष्ठो भवति। तत्र बहुपित्तो मृदुः स दुग्धेनापि विरिच्यते। बहुवातश्लेष्मा क्रूरः स दुर्विरेच्यः। समदोषो मध्यमः स साधारण इति। तत्र मृदौ मात्रा मृद्वी तीक्ष्णा क्रूरे मध्ये मध्या कर्त्तव्येति। पीतौषधश्च तन्मना शय्याभ्यासे विरिच्यते ॥१९॥

विरेचनं पीतवांस्तु न वेगान् धारयेद् बुधः।
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत् ॥२०॥

यथा च वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति। एवं विरेचने मूत्रपुरीषपित्तौषधकफा इति ॥२१॥

भवन्ति चात्र।

स्याद् दुर्विरिक्ते कफपित्तकोपो
दाहोऽरुचिर्गौरवमग्निसादः।
हृत्कुच्यशुद्धिः परिदाहकण्डू-
विण्मूत्रसङ्गाश्च न सद्विरिक्ते ॥२२॥
मूर्च्छागुदभ्रंशकफातियोगाः
शूलोद्गमश्चातिविरिक्तलिङ्गम्।

गतेषु दोषेषु कफान्वितेषु
नाभ्या लघुत्वे मनसश्च तुष्टौ ॥२३॥
गतेऽनिले चाप्यनुलोमभाव
सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥२४॥
मन्दाग्निमक्षीणमसद्विरिक्तं
न पाययेताहनि तत्र पेयाम् ।
क्षीणं तृड़ार्त्तं सुविरेचितञ्च
तन्वीमगीतां लघु पाययेत ॥२५॥
बुद्धेः प्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं बलमग्निदीप्तिम् ।
चिराच्च पाकं वयसः करोति
विरेचनं सम्यगुपास्यमानम् ।२६॥
यथोदकानामुदकेऽपनीते
चरस्थिराणां भवति प्रणाशः ।
पित्ते हृते त्वेवमुपद्रवाणां
पित्तात्मकानां भवति प्रणाशः ॥२७॥
मन्दाग्न्यतिस्नेहितबालवृद्ध-
स्थूलाः क्षतक्षीणभयोपतप्ताः ।
श्रान्तस्तृड़ार्त्तोऽपरिजीर्णभक्तो
गर्भिण्यधोगच्छति यस्य चासृक् ॥२८॥

नवप्रतिश्यायमदात्ययी च नवज्वरी या च नवप्रसूता ।
शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च॥२९
अत्यर्थपित्ताभिपरीतदेहान् विरेचयेत्तानपि मन्दवीर्यैः ।
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥३०॥

विरेच्यास्तु ज्वरगरारुच्यर्शोऽर्बुदोदरग्रन्थि-विद्रधि-पाण्डु-रोगापस्मारहृद्रोगवातरक्तभगन्दरच्छर्दियोनिरोगविसर्पगुल्मपक्वाशयरुग्विबन्धविसूचिकालसकमूत्राघातकुष्ठ-विस्फोटक-प्रमेहानाहप्लीहशोफवृद्धिशस्त्रक्षतक्षाराग्निदग्धदुष्टव्रणाक्षिपाककाचतिमिराभिष्यन्दशिरःकर्णाक्षिनासास्यगुद-मेढ्रदाहोर्द्ध्वरक्तपित्तक्रिमिकोष्ठिनः पित्तस्थानजेषु विकारेष्वन्येषु च पैत्तिकव्याधिपरीता इति ॥२१॥

सरत्वसौक्ष्म्यतैक्ष्ण्यौष्ण्यविकाशित्वैर्विरेचनम् ।
वमनन्तु हरेद्दोषं प्रकृत्यागतमन्यथा ॥ ३२ ॥
यात्यधो दोषमादाय पच्यमानं विरेचनम् ।
गुणोत्कर्षाद्व्रजत्यूर्द्ध्वमपक्वं वमनं पुनः ॥ ३३ ॥
मृदुकोष्ठस्य दीप्ताग्नेरतितीक्ष्णं विरेचनम् ।
न सम्यग्निर्हरेद्दोषानतिवेगप्रधावितान् ॥ ३४ ॥
पीतं यदौषधं प्रातर्भुक्तपाकसमे क्षणे ।
पक्तिं गच्छति दोषांश्च निर्हरेत् तत् प्रशस्यते ॥ ३५ ॥
दुर्बलस्य चलान् दोषानल्पानल्पान् पुनः पुनः ।
हरेत् प्रभूतानल्पांस्तु शमयेत् प्रच्युतानपि ॥ ३६ ॥
हरेद्दोषांश्चलान् पक्वान् बलिनो दुर्बलस्य च ।
चला ह्युपेक्षिता दोषाः क्लिशयेयुश्चिरं नरम् ॥ ३७ ॥
मन्दाग्निं क्रूरकोष्ठञ्च सक्षारलवणैर्घृतैः ।
सन्धुक्षिताग्निं स्निग्धञ्च स्विन्नञ्चैव विरेचयेत् ॥ ३८ ॥
स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात् ।
विलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम् ॥ ३९ ॥
न चातिस्नेहपीतस्तु पिबेत् स्नेहविरेचनम् ।

दोषाः प्रचलिताः स्थानाद् भूयः श्लिष्यन्ति वर्त्मसु ॥४०॥
विषाभिघातपिडकाशोफपाण्डुविसर्पिणः।
नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठप्रमेहिणः ॥४१॥
विरूक्ष्य स्नेहसात्म्यन्तु भूयः संस्नेह्य शोधयेत्।
तेन दोषा हृतास्तस्य भवन्ति बलवर्द्धनाः ॥ ४२ ॥
प्रागपीतं नरं शोध्यं पाययेतौषधं मृदु।
ततो विज्ञातकोष्ठस्य कार्यं संशोधनं पुनः॥ ४३ ॥
सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम्।
व्यापत्स्वल्पात्ययं चापि पिबेन्नृपतिरौषधम् ॥ ४४ ॥
स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिबेत्।
दारुशुष्कमिवानामि देहस्तस्य विशीर्य्यते ॥ ४५ ॥
स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः।
दोषाः कोष्ठगता जन्तोः सुखा हर्त्तुं विशोधनैः ॥४६॥

चतुस्त्रिंशत्तमोऽध्यायः।

अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः।

वैद्यातुरनिमित्तं वमनं विरेचनं च पञ्चदशधा व्याप-द्यते। तत्र वमनस्याधो गतिरूर्द्ध्वं विरेचनस्येति पृथक्। सामान्यमुभयोः सावशेषौषधत्वं जीर्णौषधत्वं हीनाधिक-दोषापहृतत्वं वातशूलमयोगोऽतियोगो जीवादानमाध्मानं परिकर्त्तिका परिस्रावः प्रवाहिका हृदयोपसरणं विबन्ध इति ॥१॥

तत्र बुभुक्षापीड़ितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चाव-तिष्ठमानं दुर्बलस्य वा गुणसामान्यभावाद् वमनमधो गच्छति। तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च। तमाशु स्नेहयित्वा

भूयस्तीक्ष्णतरैर्वामयेत्। अपरिशुद्धामाशयस्योत्क्लिष्टश्लेष्मण सशेषान्नस्य वाऽहृद्यमतिप्रभूतविरेचन पीतमूर्द्ध्वं गच्छति। तत्राशुद्धामाशयमुल्वणश्लेष्माणमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत्। आमाशये त्वामवत् सविधानम्। अहृद्येऽतिप्रभूते च हृद्य प्रमाण युक्तञ्च। अत ऊर्द्ध्वमुत्तिष्ठत्यौषधेन तृतीय पाययेत्। ततस्त्वन मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् ॥ २ ॥

दोष-विग्रथितमल्पमौषधमवस्थितमूर्द्ध्वभागिकमधोभागिक वा न स्रसयति दोषान्। तत्र तृष्णा पार्श्वशूलं छर्दिर्मूर्च्छा पर्वभेदो हृल्लासारत्युद्गाराविशुद्धिश्च भवति। तमुष्णाभिरद्भिराशु वामयेत्। सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तमप्येवं वामयेत्। क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुण वा भक्तवत् पाकमुपैति। तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा व्याधिबलविभ्रमञ्चापादयन्ति। तमनल्पममन्दमौषधञ्च पाययेत्। अस्निग्धस्विन्नेनाल्पगुण वा भेषजमुपयुक्तमल्पान् दोषान् हन्ति ॥ ३ ॥

तत्र वमने दोषशेष. गौरवमुत्क्लेश हृदयाविशुद्ध व्याधिवृद्धि करोति। तत्र यथायोग पाययित्वा वामयेद्द्दढतरम्। विरेचने गुदपरिकर्त्तनमाध्मानं शिरोगौरवमनिःसरण वा वायोर्व्याधिवृद्धि करोति। तमुपपाद्य भूय' स्नेहस्वेदाभ्या विरेचयेद्द्दढतरम्। दृढ बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुण चेति ॥ ४ ॥

अस्निग्धस्विन्नेन रूक्षमौषधमुपयुक्तमब्रह्मचारिणा वा

वायुं कोपयति। तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणि-मन्यामर्मशूलमूर्च्छाभ्रमसञ्ज्ञानाशञ्च करोति। तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत् ॥ ५ ॥

स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्ध्वमधो वा नाभ्येति दोषाश्चोत्क्लिश्य ते सह बलक्षयमापादयन्ति। ततोऽऽध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति। तमयोगमित्याचक्षते। तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च। दुर्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिडकाज्वराङ्गमर्दनिस्तोदनानि कुर्वन्ति। ततस्तानवशेषान्महौषधेनापहरेत् ॥ ६ ॥

अस्निग्धस्विन्नस्य मृदुविरिक्तस्याधोनाभेः स्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो भवति। तमास्थाप्य पुनः संस्नेह्य विरेचयेत्तीक्ष्णेन। नातिप्रवर्त्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत्। पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्। ततः प्रवर्त्तन्ते दोषाः। अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलञ्चावेक्ष्य भूयो मात्रां विदध्यात्। अप्रवृत्तदोषं दशरात्रादूर्द्धमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत्। दुर्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत् ॥ ७ ॥

क्रीभयलोभैर्वेगाघातशीला प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति। तस्मादेते दुर्विरेच्या बहुवातत्वादत एव तानतिस्निग्धान् स्वेदोपपन्नान् शोध-

येत्। स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वा तीक्ष्णाधिकवृत्तमौषधमतियोगं कुर्य्यात् ॥ ८ ॥

तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविभ्रंशो वातकोपश्च बलवान् भवति। तं घृतेनाभ्यज्यावगाह्य शीतास्वप्सु शर्करामधुमिश्रैर्लेहैरुपचरेद् यथास्वम्। विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालञ्च सरक्तस्य तत्रापि बलविभ्रंशो वातकोपश्च बलवान् भवति। तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत्। पिच्छावस्तिं चास्मै दद्यात्। क्षीरसर्पिषा चैनमनुवासयेत्। प्रियङ्ग्वादिं चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत्। क्षीररसयोरन्यतरेण भोजयेत् ॥ ९ ॥

तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा। तत्र जिह्वानिःसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञमित्युपद्रवा भवन्ति। तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत्। फलरसैर्वा सघृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्चोग्राहिभिर्वा पयसा जाङ्गलरसेन वा भोजयेत्। अतिस्रुतशोणितविधानेनोपचरेत् ॥ १० ॥

जिह्वामतिसर्पितान्त्रिकटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वा पीडयेत्। प्रविष्टायामम्लमन्ये तस्य पुरस्तात् खादयेयुः। व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीड़येत्। हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात्। तृष्णादिषु च यथास्वं प्रतिकुर्वीत। विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत् ॥ ११ ॥

विरेचनातियोगे च सचन्द्रक सलिलमधः स्रवति। ततो मांसधावनप्रकाशमुत्तरकाल जीवशोणितञ्च ततो गुदनिःसरण वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति। तमपि नि स्रुतशोणितविधानेनोपचरेत्। नि सर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्त पीडयेत् क्षुद्ररोगचिकित्सित वा वीक्षेत। वेपथौ वातव्याधिविधान कुर्वीत। जिह्वानिःसरणादिषूक्त प्रतीकार। अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलवदरीदूर्वोशीरै शृतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्। न्यग्रोधादिकषायक्षीरेक्षुरसघृतशोणितसंसृष्टैश्चैन वस्तिभिरुपाचरेत्। शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्। न्यग्रोधादिञ्चास्य विदध्यात पानभोजनेषु॥ १२॥

जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुप्लोत वाक्षिपेत्। यद्युष्णोदकप्रक्षालितमपि वस्त्र रञ्जयति तज्जीवशोणितमवगन्तव्य सभक्त च शुने दद्यात् शक्तुसमिश्रं वा स यद्युपभुञ्जीत तज्जीवशोणितमवगन्तव्यम॥ १३॥

सश्लेष्मान्नेन बहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णम स्निग्धं वा पीतमौषधमाध्मापयति। तत्रानिलमूत्रपुरीषसङ्गसमुन्नद्धोदरतापार्श्वभङ्गो गुदवस्तिनिस्तोदन भक्तारुचिश्च भवति। तच्चाध्मानमित्याचक्षते। तमुपस्वेद्यानाहवर्त्तिदीपनवस्तिक्रियाभिरुपचरेत्॥ १४॥

क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वातितीक्ष्णोष्णातिलवणमतिरूक्ष वा पीतमौषध पित्तानिलौ प्रदूष्य परिकर्त्तिकामापादयति। तत्र गुदनाभिमेढ्रवस्तिशिर सु

परिकर्त्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति। तत्र पिच्छावस्तिर्यष्टीमधुककृष्णातिलकल्कमधुघृतयुक्तः। शीताम्बुपरिषिक्तश्चैन पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वानुवासयेत् ॥१५॥

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान्न निःशेषानपहरति। ततस्ते दोषाः परिस्रावमापादयन्ति। तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति। सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतस्तं परिस्रावमित्याचक्षते तमजकर्णधवतिनिशपलाशकषायैर्मधुरसंयुक्तैरास्थापयेत्। उपशान्तदोषं स्निग्धञ्च भूयः संशोधयेत्। अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं वा वातवर्चं उदीरयेत्। वेगाघातेन वा प्रवाहिका भवति। तत्र सवातं सदाहं सशूलं सश्वेतं सपिच्छिलं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति। तं परिस्रावविधानेनोपाचरेत् ॥१६॥

यस्तूर्द्ध्वमधो वा भेषजवेगं प्रवृत्तमज्ञत्वाद्विनिहन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः। तत्र प्रधानमर्मसन्तापाद्वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किटकिटायते उद्भ्रताक्षो जिह्वां खादति प्रताम्यत्यचेताश्च भवति। तं परिवर्जयन्ति मूर्खाः। तमभ्यज्य धान्यस्वेदेन स्वेदयेद्यष्टिमधुकसिद्धेन च तैलेनानुवासयेत्। शिरोविरेचनं चास्मै तीक्ष्णं विदध्यात्। ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना छर्दयेद् यथादोषोच्छ्रायेण चैनं वस्तिभिरुपाचरेत् ॥१७॥

यस्तूर्द्ध्वमधो वा प्रवृत्तदोषः शीतागारमुदकमनिल-

मन्यदा सेवेत तस्य दोषा. शीत स्ववलीयमाना घनीभावमापन्ना वातमूत्रशकृद्‌ग्रहमापाद्य विबध्नन्ति । तस्माटोपो दाहो ज्वरो वेदनाश्च तीव्रा भवन्ति । तमाशु वामयित्वा प्राप्तकाला क्रिया कुर्वीत । अधोभागे त्वधोभागहरद्रव्यसम्भवास्त्रमूत्रसस्पृष्ट विरेचन पाययेत् । आस्थापनमनुवासनञ्च यथादोष विदध्यात् । यथादोषमाहारक्रमञ्चोभयतोभागे तूपद्रवविशेषान् यथास्व प्रतिकुर्वीत ॥१८॥

या तु विरेचने गुदपरिकर्त्तिका तद्वमने कण्ठक्षणन यदध परिस्रवण स ऊर्द्ध्वभागे श्लेष्मप्रसेको यात्वध प्रवाहिका सा तूर्द्ध्व शुष्कोद्गारा इति ॥१९॥

भवति चात्र ।

यास्त्वेता व्यापद प्रोक्ता दश पञ्च च तत्त्वत ।
एता विरेकातियोगदुर्योगायोगजा स्मृता. ॥२०॥

---

पञ्चत्रिंशत्तमोऽध्याय ।

अथातो नेत्रवस्तिप्रमाणप्रविभागचिकित्सित व्याख्यास्याम ।

तत्र स्नेहादीना कर्मणा वस्तिकर्म प्रधानतममाहुराचार्य्या । कस्मादनेककर्मकरत्वादस्तेरिह वस्तिर्नानाविधद्रव्यसयोगाद् दोषाणा संशोधनसशमनसग्रहणानि करोति । क्षीणशुक्र वाजीकरोति कृश बृहयति स्थूल कर्षयति चक्षु प्रीणयति वलीपलितमुपहन्ति वय स्थापयति । शरीरोपचय वर्णबलमारोग्यमायुष परिवृद्धिञ्च करोति वस्ति सम्यगुपासितः । तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्दितापेक्षकपक्षघातैकाङ्गसर्वाङ्गरोगाध्मा-

नोदरशर्कराशूलवृद्ध्युपदंशानाहमूत्रकृच्छ्रगुल्म वातशोणित-
वातमूत्रपुरीषोदावर्त्तशुक्रार्त्तवस्तन्यनाशहृद्ग्रहहनुमन्याग्रहार्शो-
ऽश्मरीमूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥ १ ॥

भवति चात्र ।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
संसर्गे सन्निपाते च वस्तिरेव हितः सदा ॥ २ ॥

तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टद्वादशाङ्गुलप्रमा-
णानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रेऽध्य-
र्द्धाङ्गुलद्व्यङ्गुलार्द्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येन
बर्हिपत्रनाडीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि
विदध्यान्नेत्राणि तेषु त्वास्थापनद्रव्यप्रमाणमातुरहस्तसम्मि-
तेन प्रसृतेन सम्मितौ प्रसृतौ द्वौ चत्वारोऽष्टौ विधेया ॥ ३ ॥

भवति चात्र ।

वर्षोत्तरेषु नेत्राणां वस्तिमानस्य चैव हि ।
वयोबलशरीराणि समीक्ष्य वर्द्धयेद्विधिम् ॥ ४ ॥

पञ्चविंशतेरूर्द्ध्वं द्वादशाङ्गुलं मूलेऽङ्गुष्ठोदरपरीणाह-
मग्रे कनिष्ठिकोदरपरीणाहमग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं
गृध्रपत्रनाडीतुल्यप्रवेशं कोलास्थिमात्रछिद्रं क्लिन्नकलाय-
मात्रं छिद्रमित्येके । सर्वाणि मूले वस्तिनिबन्धनार्थं
द्विकर्णिकानि । आस्थापनद्रव्यप्रमाणं तु विहिता द्वादश-
प्रसृताः । सप्ततेरूर्द्ध्वं नेत्रप्रमाणमेतदेव द्रव्यप्रमाणन्तु द्विर-
ष्टवर्षवत् ॥ ५ ॥

तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरु-
सारमयानि श्लक्ष्णानि दृढ़ानि गोपुच्छाकृतीन्यृजूनि गुटि-

कामुखानि। वस्तयश्चाप्युद्धाना मृदवो नातिबहला दृढा प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ॥६॥

नेत्रालाभे हिता नाडी नलवंशास्थिसम्भवा ।
वस्त्यलाभे हितं चर्म सूक्ष्मं वा तान्तवं घनम् ॥७॥
वस्तिं निरुपदिग्धन्तु शुद्धं सुपरिमार्जितम् ।
मृद्वनुद्धतहीनञ्च मुहुः स्नेहविमर्द्दितम् ॥८॥
नेत्रमूले प्रतिष्ठाप्य न्युब्जन्तु विवृताननम् ।
बद्धा लोहेन तप्तेन चर्मस्रोतसि निर्दहेत् ॥९॥
परिवर्त्त्य ततो वस्तिं बद्धा गुप्तं निधापयेत् ।
आस्थापनञ्च तैलञ्च यथावत्तेन दापयेत् ॥१०॥
मृदुर्वस्तिः प्रयोक्तव्यो विशेषाद् बालवृद्धयोः ।
तयोस्तीक्ष्णः प्रयुक्तस्तु वस्तिर्हिंस्याद् बलायुषी ॥११॥

तत्र द्विविधो वस्तिः नैरूहिकः स्नैहिकश्च। आस्थापन निरूह इत्यर्थान्तरम्। तस्य विकल्पो माधुतैलिकः। तस्य पर्य्यायशब्दो यापनो युक्तरथः सिद्धवस्तिरिति। स दोष-निर्हरणाच्छरीररोगहरणाद्वा निरूहः, वयःस्थापनादायुः-स्थापनाद्वास्थापनम्। माधुतैलिकविधानञ्च निरूहक्रम-चिकित्सिते वक्ष्यामः ॥१२॥

तत्र यथाप्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवा-सनः पादावकृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धार्द्धमात्रावकृ-ष्टोऽपरिहार्य्यो मात्रावस्तिरिति ॥१३॥

निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः ।
निरूहशोधितान्मार्गान् सम्यक् स्नेहोऽनुगच्छति ॥१४॥

अपेतसर्वदोषासु नाडीष्विव वहज्जलम्।
सर्वदोषहरश्चासौ शरीरस्य च जीवन ॥१५॥
तस्माद्विशुद्धदेहस्य स्नेहवस्तिर्विधीयते ॥१६॥

ततोन्मादभयशोकपिपासारोचकाजीर्णार्शः पाण्डुरोगभ्रममदमूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्ट क्षतक्षीण-चतुस्त्रिमासगर्भिणी दुर्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्या ॥१७॥

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानव।
अवश्य स्थापनीयाश्च नानुवास्या कथञ्चन ॥१८॥
असाध्यता विकाराणां स्यादेषामनुवासनात्।
असाध्यत्वेऽपि भूयिष्ठ गात्राणां सदन भवेत्।१९॥
पक्वाशये तथा श्रोण्या नाभ्यधस्ताच्च सर्वत।
सम्यक्प्रणिहितो वस्ति स्थानेष्वेतेषु तिष्ठति ॥२०॥
पक्वाशयाद्वस्तिवीर्य्यं स्वदेहमुपसर्पति।
वृक्षमूले निषिक्तानामपां वीर्य्यमिव द्रुमम् ॥२१॥
स चापि सहसा वस्ति केवल समलोऽपि वा।
प्रत्येति त्वनिलैर्वीर्य्यमपानाद्यैर्विनीयते ॥२२॥
वीर्य्येण वस्तिरादत्ते दोषानापादमस्तकात्।
पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥२३॥
सकटीपृष्ठकोष्ठस्थान् वीर्य्येणालोड्य सञ्चयान्।
उत्खातमूलान् हरति दोषाणां साधुयोजित ॥२४॥
दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वर।
तस्मात् तस्यातिवृद्धस्य शरीरमभिनिघ्नत. ॥२५॥

वायोर्विषहती वेगं नान्या वस्तेर्ऋते क्रिया ।
पवनाविद्वतोयस्य वेलावेगमिवोदधे ॥२६॥
शरीरोपचय वर्णं बलमारोग्यमायुष ।
कुरुते परिवृद्धिञ्च वस्ति सम्यगुपासित ॥२७॥

अत ऊर्द्ध्वं व्यापदो वच्याम ।

तत्र नेत्र चलितं विवर्त्तित पार्श्वावपीडितमत्युत्चिप्तमवसन्न तिर्य्यक्चिप्तमिति षट् प्रणिधानदोषाः । अतिस्थूल कर्कशमवनतमणु भिन्न सन्निकृष्टविप्रकृष्टकर्णिक सूच्मातिच्छिद्रमतिदीर्घमतिह्रस्वमित्येकादश नेत्रदोषा । बहलताल्पता सच्छिद्रता प्रस्तीर्णता दुर्बद्वतेति पञ्च वस्तिदोषा । अतिपीडितता शिथिलपीडितता भूयोभूयोऽवपीडनं कालातिक्रम इति चत्वार पीडनदोषा । आमता हीनतातिमात्रताऽति शीततात्युष्णतातितीक्ष्णतातिमृदुतातिस्निग्धतातिरूक्षतातिसान्द्रतातिद्रवतेत्येकादश द्रव्यदोषाः । अवाकशीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थितता दचिणपार्श्वशायिन प्रदानमिति सप्त शय्यादोषाः । एवमेताश्चतुश्चत्वारिंशद् व्यापदो वैद्यनिमित्ताः । आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वच्यन्ते ॥२८॥

स हस्त्वष्टाभि कारणै प्रतिहतो न प्रत्यागच्छति त्रिभिर्दोषैरशनाभिभूतो मलव्यामिश्रो दूरानुप्रविष्टोऽस्विन्नस्यानुष्णोऽल्पोऽभुक्तवतोऽल्याशनस्य चेति वैद्यातुरनिमित्ता भवन्ति । अयोगस्तूभयोराध्मान परिकर्त्तिका परिस्राव प्रवाहिका हृदयोपसरणमङ्गग्रहोऽतियोगो जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति ॥२९॥

भवति चात्र ।

षट्सप्तति समासेन व्यापद परिकीर्त्तिता ।
तासा वक्ष्यामि विज्ञान सिद्धिञ्च तदनन्तरम् ॥३०॥

---

षट्त्रिंशत्तमोऽध्याय ।

तथातो नेत्रवस्तिव्यापच्चिकित्सित व्याख्यास्याम ।

अथ नेत्रे विचलिते तथा चैव विवर्त्तिते ।
गुदे च , रुजा वा स्यात् तत्र सद्य क्षतक्रिया. ॥१॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पार्श्वे भवेद्रुजा ।
विधिस्तत्रापि पित्तघ्न कार्य्य स्नेहैश्च सेचनम् ॥२॥
तिर्य्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीडिते ।
मुखस्यावरणाद्वस्तिर्न सम्यक् प्रतिपद्यते ॥३॥
ऋजु नेत्र विधेय स्यात् तत्र सम्यग्विजानता ॥४॥
अतिस्थूले कर्कशे च नेत्रे चावनते तथा ।
गुदे भवेत् क्षत रुक् च साधन पूर्ववत् स्मृतम् ॥५॥
आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाप्यपार्थक ।
अवसेको भवेद्वस्तिस्तस्माद्दोषान् विवर्जयेत् ॥६॥
प्रकृष्टकर्णिके रक्त गुदमर्मप्रपीडनात् ।
क्षरत्यत्रापि पित्तघ्ना विधिर्वस्तिश्च पिच्छिल ॥७॥
ह्रस्वे त्वणुस्रोतसि च क्लेशो वस्तिश्च पूर्ववत् ।
प्रत्यागच्छस्तत कुर्य्याद्रोगान् वस्तिविघातजान् ॥८॥
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीडवत् ।
प्रस्तीर्णे बहले चापि वस्तौ दुर्बद्धदोषवत् ॥९॥
वस्तावल्पेऽल्पता वापि द्रव्यस्याल्पगुणा मता ।

दुर्बद्धे चाणुभिन्ने च विज्ञेय भिन्ननेत्रवत् ॥१०॥
अतिप्रपीडितो वस्ति प्रयात्यामाशय ततः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥११॥
तत्र तूर्णं गलापीड कुर्य्याच्चाप्यवधूननम।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥१२॥
शनैः प्रपीडितो वस्ति पक्वाधान न गच्छति।
न च सम्पादयत्यर्थांस्तस्माद्युक्तं प्रपीडयेत् ॥१३॥
भूयोभूयोऽवपीडेन वायुरन्तः प्रपीड्यते।
तेनाध्मान रुजश्चोग्रा यथास्व तत्र वस्तय ॥१४॥
कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्द्धते।
तत्र व्याधिबलघ्नन्तु भूयो वस्ति निधापयेत् ॥१५॥
गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि।
तत्र संशोधनो वस्तिर्हित चापि विरेचनम ॥१६॥
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ मतौ।
अतिमात्रौ तथानाहक्लमातीसारकारकौ ॥१७॥
मूर्च्छादाहमतीसार पित्त चात्युष्णतीक्ष्णकौ।
मृदुशीतावुभौ वातविबन्धाध्मानकारकौ ॥१८॥
तत्र हीनादिषु हित प्रत्यनीकः क्रियाविधिः।
तत्र सान्द्रे तनु वस्ति तनौ सान्द्रञ्च दापयेत् ॥१९॥
स्निग्धोऽतिजाड्यकृद्रूक्षः स्तम्भाध्मानकृदुच्यते।
वस्तिं रूक्षमतिस्निग्धे स्निग्ध रूक्षे च दापयेत् ॥२०॥
अतिपीडितवद्दोषान् विधिं चाप्यवशीर्षके।
उच्छीर्षके समुन्नाहं वस्तिं कुर्य्याच्च मेहनम् ॥२१॥
तत्रोत्तरो हितो वस्ति सुस्विन्नस्य सुखावहः।

न्युब्जस्य बस्तिर्नाप्नोति पक्वाधानं विमार्गगः ॥ २२ ॥
हृद्गदं बाधते चात्र वायुः कोष्ठमथापि च ।
उत्तानस्यावृते मार्गे बस्तिर्नान्तः प्रपद्यते ॥ २३ ॥
नेत्रसंवेजनभ्रान्तो वायुश्चान्तः प्रकुप्यति ।
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा ॥ २४ ॥
न सम्यगनिलाविष्टो बस्तिः प्रत्येति देहिनः ।
स्थितस्य बस्तिर्दत्तस्तु क्षिप्रमायात्यवाङ्मुखः ॥ २५ ॥
न चाशयं तर्पयति तस्मान्नार्थकरो हि सः ।
नाप्नोति बस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः ॥ २६ ॥
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो हितः ।
न्युब्जादीनां प्रदानञ्च बस्तेर्नैव प्रशस्यते ॥ २७ ॥
एवमादिनिमित्तो योऽत्र यथास्वं तत्र कारयेत् ।
व्यापदः स्नेहबस्तेस्तु वक्ष्यन्तेऽत्र चिकित्सिते ॥ २८ ॥
अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः ।
अनुष्णोऽल्पौषधो हीनो बस्तिर्नैति प्रयोजितः ॥ २९ ॥
विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते ।
तत्र तीक्ष्णो हितो बस्तिस्तीक्ष्णं चापि विरेचनम् ॥ ३० ॥
सशेषान्ने तथा भुक्ते बहुदोषे च योजितः ।
अत्याशितस्यातिबहुर्बस्तिर्मन्दोष्ण एव च ॥ ३१ ॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ।
तथा बहुपुरीषश्च क्षिप्रमाध्मापयेन्नरम् ॥ ३२ ॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ।
तत्र तीक्ष्णतरो बस्तिर्हितं चाप्यनुवासनम् ॥ ३३ ॥
अतितीक्ष्णोष्णलवणो रूक्षो बस्तिः प्रयोजितः ।

सपित्तं कोपयेद्वायुं कुर्य्याच्च परिकर्त्तिकाम् ॥३४॥
नाभिवस्तिगुदं तत्र छिनत्तीवाति देहिनः।
पिच्छावस्तिर्हितस्तस्य स्नेहश्च मधुरैः श्रृतः॥ ३५ ॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते।
दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः॥ ३६ ॥
परिस्रवेत् ततः पित्त दाहं सञ्जनयेद्गुदे।
पिच्छावस्तिर्हितस्तत्र वस्तिः क्षीरघृतस्य च॥ ३७ ॥
प्रवाहिका भवेत् तीक्ष्णान्निरूहात् सानुवासनात्।
सदाहशूलं कृच्छ्रेण वासृक् तत्रोपवेश्यते॥ ३८ ॥
पिच्छावस्तिर्हितस्तत्र पयसा चैव भोजनम्।
सर्पिर्मधुरकैः सिद्ध तैलं चाप्यनुवासनम्॥ ३९ ॥
अतितीक्ष्णो निरूहो वा भवति चानुवासनः।
हृदयस्योपसरणं कुरुते चाङ्गपीड़नम्॥ ४० ॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाङ्गगौरवम्।
सर्वदोषहरं वस्तिं शोधनं तत्र दापयेत्॥४१॥
रूक्षस्य बहुवातस्य तथा दुःशयितस्य च।
वस्तिरङ्गग्रहं कुर्य्याद्रूक्षो मृद्वल्पभेषजः॥४२॥
तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः।
पर्वभेदश्च तत्रेष्टाः स्वेदोऽभ्यञ्जनवस्तयः॥४३॥
अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्वेदितस्य च।
अल्पदोषस्य वा वस्तिरतियोगाय कल्पते॥४४॥
विरेचनातियोगेन समानं तच्चिकित्सितम्।
पिच्छावस्तिप्रयोगश्च तत्र शीतः सुखावहः॥४५॥
अतियोगात्परं यत्र जीवादानं विरिक्तवत्।

देयस्तत्र हितश्चापि पिच्छावस्तिः सशोणितः ॥४६॥
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृता. ।
स्नेहवस्तिष्वपि हिता विज्ञेया कुशलैरिह ॥४७॥
इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ।
भिषजा च तथा कार्य्यं यथैता न भवन्ति हि ॥४८॥
पश्चाद्विरेको वान्तस्य ततश्चापि निरूहणम् ।
सद्यो निरूढोऽनुवास्यः सप्तरात्राद्विरेचितः ॥४९॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

अथातोऽनुवासनोत्तरवस्तिचिकित्सितं व्याख्यास्यामः ।

विरेचनात् सप्तरात्रे गते जातबलाय च ।
कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥१॥
यथावयो निरूहाणां या मात्राः परिकीर्त्तिताः ।
पादावकृष्टास्ताः कार्य्याः स्नेहवस्तिषु देहिनाम् ॥२॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं विधापयेत् ।
एतैर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥३॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ।
स्नेहवीर्य्यं तथा दत्तं देहं चानुविसर्पति ॥४॥
अत ऊर्द्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ।
पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥५॥
शठीपुष्करकृष्णाह्वामदनामरदारुभिः ।
शताह्वाकुष्ठयष्ट्याह्ववचाविल्वहुताशनैः ॥६॥
सुपिष्टैर्द्विगुणं क्षीरं तैलं तोयचतुर्गुणम् ।
पक्वा वस्तौ विधातव्य मूढवातानुलोमनम् ॥७॥

अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम्।
कव्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥८॥
वचापुष्करकुष्ठैलामदनामरसिन्धुजैः।
काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः ॥९॥
पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः।
सरलागुरुविल्वाम्बुवाजिगन्धाग्निवृद्धिभिः ॥१०॥
विडङ्गारग्वधश्यामात्रिवृन्मागधिकर्द्धिभिः।
पिष्टैस्तैलं पचेत् क्षीरं पञ्चमूलरसान्वितम् ॥११॥
गुल्मानाहाग्निसङ्गार्शोग्रहणीमूत्रसङ्गिना।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥१२॥
चित्रकातिविषापाठादन्तीविल्ववचामिषैः।
सरलाशुमतीरास्नानीलिनीचतुरङ्गुलैः ॥१३॥
चव्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः।
जीवकर्षभवर्षाभूवस्तगन्धाशताह्वयैः ॥१४॥
श्वदंष्ट्रागन्धामञ्जिष्ठाशटीपुष्करतस्करैः।
सक्षीरं विपचेत् तैलं मारुतामयनाशनम् ॥१५॥
श्वभ्रसीखञ्जकुब्जाद्यमूत्रोदावर्त्तरोगिणाम्।
शस्यतेऽल्पबलाग्नीनां वस्तावाशु नियोजितम् ॥१६॥
भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः।
दशमूलसहाभार्गीषड्ग्रन्थामरदारुभिः ॥१७॥
बलानागबलामूर्वावाजिगन्धामृताह्वयैः।
सहाचरवरीविश्वाकाकनासाविदारिभिः ॥१८॥
यवमाषातसीकोलकुलत्थैः क्वथितैः शृतम्।
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम् ॥१९॥

अश्रोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान्।
हन्याद्वातविकारांस्तु वस्तियोगैर्निषेवितम् ॥२०॥
जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः।
ऋषभातिविषाकृष्णाकाकनासावचामरैः ॥२१॥
रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः।
स्वयगुप्ताशटीशृङ्गीकलशीसारिवाह्वयैः ॥२२॥
पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु।
तच्चानुवासने देयं शुक्राग्निबलवर्द्धनम् ॥२३॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम्।
नस्ये पाने च संयुक्तमूर्द्ध्वजत्रुगदापहम् ॥२४॥
मधुकोशीरकाश्मर्य्यकटुकोत्पलचन्दनैः।
श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः ॥२५॥
तैलपादं पचेत् सर्पिः पयसाष्टगुणेन च।
न्यग्रोधादिगणक्काथयुक्तं वस्तिषु योजितम् ॥२६॥
दाहासृग्दरवीसर्पवातशोणितविद्रधीन्।
पित्तरक्तज्वराद्यांश्च हन्यात् पित्तकृतान् गदान् ॥२७॥
मृणालोत्पलशालूकसारिवाद्वयकेशरैः।
चन्दनद्वयभूनिम्बपद्मबीजकसेरुकैः ॥२८॥
पटोलकटुकारक्तागुन्द्रापर्पटवासकैः।
पिष्टैस्तैलमिदं पक्वं तृणमूलरसेन च ॥२९॥
क्षीरद्विगुणसंयुक्तं वस्तिकर्म्मणि योजितम्।
नस्येऽभ्यञ्जनपाने वा हन्यात् पित्तगदान् बहून् ॥३०॥
त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥३१॥

गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः।
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥३२॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम्।
स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ॥३३॥
पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः।
सरलागुरुकालीयभार्गीचव्यामरद्रुमैः॥३४॥
मरिचैलाभयाकट्वीशटीग्रन्थिककट्फलैः।
तैलमेरण्डतैलं वा पक्वमेभिः समायुतम् ॥३५॥
वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च।
हन्यादन्वासनैर्दत्तं सर्वान् कफकृतान् गदान् ॥३६॥
विडङ्गोदीच्यसिन्धूत्थशटीपुष्करचित्रकैः।
कट्फलातिविषाभार्गीवचाकुष्ठसुराह्वयैः॥३७॥
मेदामदनयष्ट्याह्वश्यामानिचुलनागरैः।
शताह्वानीलिनीरास्नाकदलीद्वयरेणुभिः॥३८॥
विल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः।
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ॥३९॥
प्लीहोदावर्त्तवातासृग्गुल्मानाहकफामयान्।
प्रमेहशर्कराशांसि हन्यादाश्वनुवासनात् ॥४०॥
अशुद्धमपि वा तेन केवलेनातिपीडितम्।
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥४१॥
रूक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनम्।
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥४२॥
अस्निग्धमपि वा तेन केवलेनातिपीड़ितम्।
स्नेहप्रगाढैर्मतिमान्निरूहैः समुपाचरेत् ॥४३॥

अथ सम्यग्निरूढं तु वातादिष्वनुवासयेत्।
विल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रमम॥ ४४॥
रात्रौ वस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिज।
स्नेहो वीर्य्ययुत कुर्य्यादाध्मानं गौरव ज्वरम्॥ ४५॥
अह्नि स्थानस्थिते दोषे वह्नौ वान्नरसान्विते।
स्फुरत्स्रोतोमुखे देहे स्नेहौज परिसर्पति॥ ४६॥
पित्तेऽधिके कफे चीणे रुचे वातरुगर्द्दिते।
नरे रात्रौ च दातव्यं काले चोष्णेऽनुवासनम्॥ ४७॥
उष्णे पित्ताधिके वापि दिवा दाहादयो गदा।
सम्भवन्ति यतस्तस्मात् प्रदोषे योजयेद्भिषक्॥ ४८॥
शीते वसन्ते च दिवा ग्रीष्मे प्राविड्घनात्यये।
स्नेहो दिनान्ते पानोक्तान् दोषान् परिजिहीर्षता॥४८॥
अहोरात्रेषु कालेषु सर्वेष्वेवानिलाधिकम्।
तीव्राया रुजि जीर्णान्न भोजयित्वानुवासयेत्॥ ५०॥
नवाभुक्तवत स्नेहः प्रणिधेय कथञ्चन।
भुक्तवाच्छून्यकोष्ठस्य स्नेह ऊर्द्ध मथोत्पतेत्॥ ५१॥
सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम्।
ज्वर विदग्धभुक्तस्य कुर्य्यात् स्नेह प्रयोजित॥ ५२॥
न चातिस्निग्धमशनं भोजयित्वानुवासयेत्।
मदं मूर्च्छां च जनयेद् द्विधा स्नेह प्रयोजित॥ ५३॥
रुच भुक्तवतो ह्यन्न बलं वर्णं च हापयेत्।
युक्तस्नेहमतो जन्तु भोजयित्वानुवासयेत्॥ ५४॥
यूषक्षीररसैस्तस्माद् यथाव्याधिमवेक्ष्य वा।
यथोचितात् पादहीन भोजयित्वानुवासयेत्॥ ५५॥

अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः।
भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः॥५६॥
विसृज्य च शकृन्मूत्रे योजयेत् स्नेहवस्तिना।
प्रणिधानविधानन्तु निरूहे च प्रवक्ष्यते॥५७॥
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत्।
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं विसर्पति॥५८॥
ताडयेत् तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः।
स्फिचोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत् ततः॥५९॥
एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक्।
स्वास्तीर्णे शयने काममासीताचारिके रतः॥६०॥
स तु सैन्धवचूर्णेन शताह्वेन च योजितः।
देयः सुखोष्णश्च तथा निरेति सहसा सुखम्॥६१॥
यस्यानुवासनो दत्तः सकृदन्वक्षमाव्रजेत्।
अत्यौष्ण्यादतितैक्ष्ण्याद्वा वायुना वा प्रपीडितः॥६२॥
सवातोऽधिकमात्रो वा गुरुत्वाद्वा सभेषजः।
तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति॥६३॥
विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः।
दाहक्लमप्रवाहार्त्तिकरस्त्वल्पानुवासनः॥६४॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु।
ओषचोषौ विना शीघ्रं स सम्यगनुवासितः॥६५॥
जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः।
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि॥६६॥
प्रातरुष्णोदकं देयं धान्यनागरसाधितम्।
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते॥६७॥

स्नेहबस्तिक्रमेष्वेव विधिमाहुर्मनीषिणः ।
अनेन विधिना षड् वा सप्त वाष्टौ नवैव वा ।
विधेया बस्तयस्तेषामन्तरा तु निरूहणम् ॥६८॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ
सम्यग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ॥६९॥
जनयेद् बलवर्णौ च तृतीयस्तु प्रयोजितः ॥७०॥
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेत् तथा ।
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ॥७१॥
अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ।
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ॥७२॥
अष्टादशाष्टादशकान् वस्तीनां यो निसेवते ।
यथोक्तेन विधानेन परिहारक्रमेण तु ॥७३॥
स कुञ्जरबलोऽश्वस्य जवेस्तुल्योऽमरप्रभः ।
वीतपाप्मा श्रुतिधरः सहस्रायुर्नरो भवेत् ॥७४॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
स्नेहादग्निवधोत्क्लेशौ निरूहात् पवनाद्भयम् ॥७५॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥७६॥
रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने ।
दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहात् ॥७७॥
स्नेहोऽल्पमात्रो रूक्षाणां सर्वकालमनत्ययः ।
तथा निरूहः स्निग्धानां स्वल्पमात्रः प्रशस्यते ॥७८॥
अत ऊर्द्ध्वं प्रवक्ष्यामि व्यापदः स्नेहवस्तिजाः ।
बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥७९॥

अल्पवीर्य्यं तदा स्नेहमभिभूय पृथग्विधान् ।
कुर्व्वन्त्युपद्रवान् स्नेहः स चापि न निवर्त्तते ॥८०॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता ।
तृष्णा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥८१॥
पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ।
दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥८२॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ।
गौरवं छर्दिरुच्छ्वासः कृच्छ्रः शीतज्वरोऽरुचिः ॥८३॥
तत्र दोषाभिभूते तु स्नेहे वस्तिं निधापयेत् ।
यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥८४॥
अत्याशितेऽन्नाभिभावात् स्नेहो नैति यदा तदा ।
गुरुरामाशय शूल वायोश्चाप्रतिसञ्चरः ॥८५॥
हृत्पीडा मुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः ।
तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥८६॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ।
तदाङ्गसदनाध्मानौ श्वासः शूलश्च जायते ॥८७॥
पक्वाशयगुरुत्वं च तत्र दद्याद्विरूक्षणम् ।
अतितीक्ष्णौषधैरेवं सिद्धं चाप्यनुवासनम् ॥८८॥
शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम् ।
गात्रेषु सर्व्वेन्द्रियाणामुपलेपोऽवसादनम् ॥८९॥
स्नेहगन्धि मुखं तत्र कासश्वासावरोचकः ।
अतिपीडितवत् तत्र विधिरास्थापनं तथा ॥९०॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः सम्प्रयोजितः ।
शीतो मृदुश्च नाभ्येति ततो मन्दं प्रवाहयेत् ॥९१॥

विबन्धगौरवाध्मानशूला पक्वाशय प्रति।
तत्रास्थापनमेवाशु प्रयोज्य सानुवासनम् ॥९२॥
अल्प भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा।
दत्तो नैति क्लमोत्क्लेशौ भृश वा रतिमावहेत् ॥९३॥
तत्रैवास्थापन कार्य्यं शोधनीयेन वस्तिना।
अन्वासनञ्च स्नेहेन शोधनीयेन शस्यते ॥९४॥
अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दूष्यति।
कुर्य्याद्वस्तिगुणाश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥९५॥
यस्य नोपद्रव कुर्य्यात् स्नेहवस्तिरनि सृत ।
सर्व्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्य. स विजानता।
अनायान्त त्वहोरात्रात् स्नेह सशोधनैर्जयेत् ॥९६॥
स्नेहवस्तावनायाते नान्य स्नेहो विधीयते।
इत्युक्ता व्यापद सर्व्वा सलक्षणचिकित्सिता: ॥९७॥
वस्तेरुत्तरसञ्ज्ञस्य विधि वक्ष्याम्यत परम्।
चतुर्दशाङ्गुल नेत्रमातुराङ्गुलसम्मितम् ॥९८॥
मालतीपुष्पवृन्ताग्र छिद्र सर्षपनिर्गमम्।
मेढ्रायामसम केचिदिच्छन्ति खलु तद्विद. ॥९९॥
स्नेहप्रमाण परम कुञ्चश्चात्र प्रकीर्त्तित ।
पञ्चविंशाद्यशोमात्रा विदध्याद् बुद्धिकल्पिताम् ॥१००॥
निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले।
मूत्रस्रोत परीणाह मुद्गवाहि दशाङ्गुलम्।
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ॥१०१॥
द्व्यङ्गुल मूत्रमार्गे तु कन्यानान्त्वेकमङ्गुलम्।
विधेय चाङ्गुलं तासा विधिवद्वक्ष्यते यथा ॥१०२॥

स्नेहस्य प्रसृतस्त्वात्र स्वाङ्गुलीमूलसम्मितम् ।
देय प्रमाण परममर्वाग्बुद्धिविकल्पितम् ॥१०३॥
औरभ्र. शौकरो वापि वस्तिराजश्च पूजित ।
तदलाभे प्रयुञ्जीत गलचर्म तु पक्षिणाम् ॥१०४॥
अस्यालाभे दृते. पादो मृदुचर्म्म ततोऽपि वा ।
अथातुरमुपस्निग्ध सुस्विन्न प्रथिताशयम् ॥१०५॥
यवागू सघृतक्षीरा पीतवन्त यथाबलम् ।
निषण्णमाजानुसमे पीठे स्नानाश्रये समे ॥१०६॥
स्वभ्यक्तवस्तिमूर्द्धान तैलेनोष्णेन मानवम् ।
तत. समं स्थापयित्वा नालमस्य प्रहर्षितम् ॥१०७॥
पूर्व्वं शलाकयान्विष्य ततो नेत्रमनन्तरम् ।
शनै. शनैर्घृताभ्यक्त विदध्याद्‌ङ्गुलानि षट् ॥१०८॥
ततोऽवपीडयेद्वस्ति शनैर्नेत्र च निर्हरेत् ।
तत. प्रत्यागतस्नेहमपराह्णे विचक्षणः ॥१०९॥
भोजयेत् पयसा मात्रा यूषेणाथ रसेन वा ।
अनेन विधिना दद्याद्वस्तीस्त्रींश्चतुरोऽपि वा ॥११०॥
ऊर्द्ध्वजान् वै स्त्रियै दद्यादुत्तानायै विचक्षण. ।
कल्पेतरस्यै कन्यायै दद्यात् सुमृदु पीडितः ॥१११॥
त्रिकर्णिकेन नेत्रेण दद्याद् योनिमुख प्रति ।
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ।
अप्रत्यागच्छति भिषक् वस्तावुत्तरसञ्ज्ञिते ॥११२॥
भूयो वस्ति निदध्यात्तु सयुक्तं शोधनैर्गणै. ।
गुदे वर्त्तिं निदध्याद्वा शोधनद्रव्यसम्भृताम् ॥११३॥
प्रवेशयेद्वा मतिमान् वस्तिद्वारमथैषणीम् ।

पीडयेद्वाप्यधोनाभेर्बलेनोत्तरमुष्टिना ॥११४॥
आरग्वधस्य पत्रेषु निर्गुण्ड्या. स्वरसेषु च ।
कुर्य्याद्गोमूत्रपिष्टेषु वर्त्तीर्वापि ससैन्धवा ॥११५॥
मुद्गैलासर्षपसमा प्रविभज्य वयांसि तु ।
वस्तेरागमनार्थाय ता निदध्याच्छलाकया ॥११६॥
आगारधूमबृहतीपिप्पलीफलसैन्धवै ।
कृता वा शुक्तगोमूत्रसुरापिष्टै. सनागरै ॥११७॥
अनुवासनसिद्धिञ्च वीक्ष्य कर्म प्रयोजयेत् ।
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना ॥११८॥
दह्यमाने तदा वस्तौ दद्याद्वस्तिं विचक्षण ।
क्षीरवृक्षकषायेण पयसा शीतलेन च ॥११९॥

शुक्रं दुष्टं शोणितं चाङ्गनाना
पुष्पोद्रेकं तस्य नाशञ्च कष्टम् ।
मूत्राघातान्मूत्रदोषान् प्रवृद्धान्
योनिव्यापिं संस्थितिं चापराया. ॥१२०॥
शुक्रोत्सेकं शर्करामश्मरीञ्च
शूलं वस्तौ वङ्क्षणे मेहने च ।
घोरानन्यान् वस्तिजांश्चापि रोगान्
हित्वा मेहानुत्तरो हन्ति वस्ति ॥१२१॥

सम्यग्दत्तस्य लिङ्गानि व्यापद क्रम एव च ।
वस्तेरुत्तरसञ्ज्ञस्य समानं स्नेहवस्तिना ॥१२२॥

---

## अष्टात्रिंशत्तमोऽध्याय ।

अथातो निरूढ़ोपक्रमचिकित्सित व्याख्यास्याम.।

अथानुवासितमास्थापयेत् स्वभ्यक्तस्विन्नशरीरमुत्सृष्टवहिर्वेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामध.सुपरिग्रहायां श्रोणिप्रदेशव्यूढ़ायामनुपधानाया वामपार्श्वं शायिनमाकुञ्चितदक्षिणसक्थिमितर-प्रसारितसक्थिं सुमनस जीर्णान्न वाग्यत सुनिषण्णदेह विदित्वा ततो वामपादस्योपरि नेत्र क्वत्वेतरपादाङ्गुष्ठाङ्गुलिभ्या कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिकानामिकाभ्या वस्तेर्मुखार्द्धं सङ्कोच्य मध्यमप्रदेशिन्यङ्गुष्ठैर्बन्तु विव्रतास्य क्वत्वा वस्तावौषध प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्या चानुसिक्तमनायतमबुद्बुदमसङ्कुचितमवातमौषधासन्नमुपसङ्गृह्य पुनरितरेण गृहीत्वा दक्षिणेनावसिञ्चेत् तत सूत्रेणवौषधान्ते द्वित्रिर्वावेष्ट्य बध्नीयात् ॥१॥

अथ दक्षिणेनोत्तानेन पाणिना वस्ति गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्या नेत्रमुपसङ्गृह्याङ्गुष्ठेन नेत्रद्वारं विधाय घृताभ्यक्ताग्रनेत्र घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंश समसुन्मुखमाकर्णिकं नेत्र प्रणिधत्स्वेति ब्रूयात् ॥ २ ॥

वस्तिं सव्ये करे क्वत्वा दक्षिणेनावपीडयेत् ।

एकेनैवावपीडेन न द्रुत न विलम्बितम् ॥३॥

ततो नेत्रमपनीय त्रिंशन्मात्रा पीडनकालादुपेक्ष्योत्तिष्ठत्यातुरं ब्रूयात् । आतुरमुपवेशयेदुत्कटुक वस्त्यागमनार्थम् । निरूहप्रत्यागमनकालस्तु मुहूर्त्तो भवति ॥४॥

अनेन विधिना वस्ति दद्याद्वस्तिविशारदः ।

द्वितीय वा तृतीय वा चतुर्थं वा यथार्थत ॥५॥
सम्यग्निरूढलिङ्गे तु प्राप्ते वस्तिं निवारयेत् ।
अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम् ।
विशेषात् सुकुमाराणा हीन एव क्रमो हित ॥६॥
यस्य स्याद्वस्तिरत्यल्पवेगो हीनमलानिल ।
दुर्निरूढ स विज्ञेयो मूत्रार्त्यरुचिजाड्यवान् ॥७॥
यान्येव प्राक्प्रयुक्तानि लिङ्गान्यतिविरेचिते ।
तान्येवातिनिरूढेऽपि विज्ञेयानि विपश्चिता ॥८॥
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायव ।
लाघव चोपजायेत सुनिरूढ तमादिशेत् ९॥
सुनिरूढ ततो जन्तु स्नानवन्त तु भोजयेत् ॥१०॥
पित्तश्लेष्मानिलाविष्ट क्षीरयूषरसै क्रमात् ।
सर्वं वा जाङ्गलरसैर्भोजयेदविकारिभि ॥११॥
त्रिभागहीनमर्द्ध वा हीनमात्रमथापि वा ।
यथाग्निदोष मात्रेय भोजनस्य विधीयते ॥१२॥
अनन्तर ततो युञ्ज्याद् यथास्व स्नेहवस्तिना ।
विविक्तता मनस्तुष्टि स्निग्धता व्याधिनिग्रह. ॥१३॥
आस्थापनस्नेहवस्त्यो सम्यग्दाने तु लक्षणम् ।
तदहस्तस्य पवनाद्भयं बलवदिष्यते ॥१४॥
रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ।
पश्चादग्निबल मत्वा पवनस्य च चेष्टितम् ॥१५॥
अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते ।
अनायान्त मुहूर्त्तात् तु निरूह शोधनैर्हरेत् ॥१६॥
तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसयुतैः ।

विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् ॥१७॥
शूलारतिज्वरानाहं मरणं वा प्रवर्त्तयेत् ।
न तु भुक्तवते देयमास्थापनमिति स्थितिः ॥१८॥
विसूचिकां वा जनयेच्छर्दिं वापि सुदारुणाम् ।
कोपयेत् सर्वदोषान् वा तस्माद् दद्यादभोजिने ॥१९॥
जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः ।
निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः ॥२०॥
न चास्थापनविक्षिप्तमन्नमग्निः प्रधावति ।
तस्मादास्थापनं देयं निराहाराय जानता ॥२१॥
आवस्थिकं क्रमञ्चापि मत्वा कार्य्यं निरूहणम् ।
मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥२२॥
क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ।
लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा ॥२३॥
एला त्रिकटुकं रास्ना सरलं देवदारु च ।
रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च ॥२४॥
कटुका शर्करा मुस्तमुशीरं चन्दनं शठी ।
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥२५॥
बिल्वमध्यं यमानी च फलिनी शक्रजा यवाः ।
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥२६॥
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ।
निरूहेषु यथालाभमेष वर्गो विधीयते ॥२७॥
स्वस्थे क्वाथस्य चत्वारो भागाः स्नेहस्य पञ्चमः ।
क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः ।
सर्वेषु चाष्टमो भागः कल्कानां लवणं पुनः ॥२८॥

क्षौद्रं मूत्र फलं क्षीरमम्लं मांसरसं तथा।
युक्त्या प्रकल्पयेद्धीमान् निरूहे कल्पना त्वियम् ॥२९॥
कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः।
वस्तिस्तु कल्पित. सम्यक् वस्त्यादानं यथार्थकृत् ॥३०॥
दत्त्वादौ सैन्धवस्याक्षं मधुन प्रसृतद्वयम्।
पात्रे तलेन मथ्नीयादनुस्नेहं शनैः शनैः ॥३१॥
सम्यक् सुमथिते दद्यात् फलकल्कमत परम् ॥३२॥
ततो यथोचितान् कल्कान् भागे स्वै. सुक्ष्मपेषितान्।
गम्भीरे भाजनेऽन्यस्मिन्मथ्नीयात्त खजेन च ॥३३॥
यथा च साधु मन्येत न सान्द्रो न तनु समम्।
कषायप्रसृतान् पञ्च सुपूतांस्तत्र दापयेत्।
रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु ॥३४॥
अत ऊर्द्धं द्वादशप्रसृतान् वक्ष्यामि।
दत्त्वादौ सैन्धवस्याक्षं मधुन. प्रसृतिद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥३५॥
एकीभूते तत. स्नेहे कल्कस्य प्रसृतिं क्षिपेत्।
समूर्च्छिते कषायन्तु चतु प्रसृतिसम्मितम् ॥३६॥
वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्।
एव प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ॥३७॥
ज्येष्ठाया खलु मात्राया प्रमाणमिदमीरितम्।
अपक्वांसे भिषक्कुर्य्यात् तद्वत् प्रसृतिह्रापनम् ॥३८॥
यथावयो निरूहाणां कल्पनेयमुदाहृता।
सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥३९॥
अत ऊर्द्धं प्रवक्ष्यन्ते वस्तयोऽत्र विभागश.।

यथादोष प्रयुक्ता ये हन्यु र्नानाविधान् गदान् ॥४०॥
अम्भाकोरुवुवर्षाभूवाजिगन्धानिशाच्छदैः।
पञ्चमूलीबलारास्नागुडूचीसुरदारुभिः ॥४१॥
क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः।
कल्कैर्मागधिकाभीदहवुषामिसिसैन्धवैः ॥४२॥
वत्साह्वयप्रियङ्गूग्रायष्ठ्याह्वयरसाञ्जनैः।
दद्यादास्थापनं कोष्ण क्षौद्राद्यैरभिसंस्कृतम् ॥४३॥
पृष्ठोरुत्रिकमूलाश्मविबन्धानिलसङ्गिनाम्।
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥४४॥
गुडूचीत्रिफलारास्नादशमूलबलापलैः।
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्ग्वञ्जनसैन्धवैः ॥४५॥
शतपुष्पावचाकृष्णायवानीकुष्ठविल्वजैः।
सगुडैरक्षमात्रैस्तु मदनाद्यपलान्वितैः ॥४६॥
क्षौद्रतैलघृतक्षीरशुक्तकाञ्जिकमस्तुभिः।
समालोड्य च मूत्रैस्तु दद्यादास्थापनं परम् ॥४७॥
तेजोवर्णबलोत्साहवीर्य्याग्निप्राणवर्द्धनम्।
सर्वमारुतरोगघ्नं वय.स्थापनमुत्तमम् ॥४८॥
कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः।
सारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥४९॥
पालिकैः क्वथितैः सम्यग् द्रव्यैरेभिश्च पेषितैः।
शृङ्गाट... ...केसरागुरुचन्दनैः ॥५०॥
विदा... ...मञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः।
फलपञ्च...न्वितैः क्षौद्रक्षीरघृताप्लुतैः ॥५१॥
दत्तमास्थापनं शीतमम्लहीनैस्तथा द्रवैः।

दाहासृग्दरपित्तास्रकपित्तगुल्मज्वराञ्जयेत् ॥५२॥
रोध्रचन्दनमञ्जिष्ठारास्नानन्तावलार्द्धिभिः।
सारिवावृषकाश्मर्य्यमेदामधुकपद्मकैः ॥५३॥
स्थिरादिस्तृणमूलैश्च क्वाथैः कर्षत्रयोन्मितैः।
पिष्टैर्जीवककाकोलीयुगर्द्धिमधुकोत्पलैः ॥५४॥
प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः।
अभीरुसिंसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥५५॥
कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः।
द्रवैस्तीक्ष्णाम्लवर्ज्यैश्च दत्तो वस्तिः सुशीतलः ॥५६॥
गुल्मासृग्दरहृत्पाण्डुरोगान् सविषमज्वरान्।
असृक्पित्तातिसारौ च हन्यात् पित्तकृतान् गदान् ॥५७॥
भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः।
सारिवाबृहतीपाठामूर्वारग्वधवत्सकैः ॥५८॥
क्वाथः कल्कस्तु कर्त्तव्यो वलामदनसर्षपैः।
सैन्धवामरकुष्ठैलापिप्पलीपिप्पलीनागरैः ॥५९॥
कटुतैलमधुक्षारमूत्रतैलाम्बुसंयुतैः।
कार्य्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥६०॥
मेदस्विनामनग्नीनां कफरोगाग्रनद्धिणाम्।
गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥६१॥
दशमूलीनिशाविल्वपटोलत्रिफलामरैः।
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥६२॥
पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः।
कुर्य्यादास्थापनं सम्यग्मूत्राम्लफलयाजितम् ॥६३॥
कफपाण्डुमदालस्यमूत्रमारुतसंक्लिनाम्।

आमाटोपापचीस्ले षगुल्मक्रिमिविकारिणाम् ॥६४॥
दृषाश्मभेदवर्षाभूधान्यगन्धर्वहस्तकैः ।
दशमूलबलामूर्वायवकोलनिशाच्छदैः ॥६५॥
कुलत्थाविल्वमूनिम्बैः क्वथितैः पलसम्मितैः ।
कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥६६॥
पिप्पलीमूलसिन्धूत्थयमानीमिसिवत्सकैः ।
क्षौद्रेक्षुक्षीरगोमूत्रसर्पिस्तैलरसप्लुतैः ॥६७॥
तूर्णमास्थापनं कार्य्यं संसृष्टबहुरोगिणाम् ।
गृध्रसीशर्कराष्ठीलातूणीगुल्मगदापहम् ॥६८॥
रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ।
त्रायमाणामृतारक्तापञ्चमूलविभीतकैः ॥६९॥
सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ।
यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥७०॥
रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ।
युक्तो वस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम् ॥७१॥
आयुषोऽग्नेश्च सञ्जर्त्ता हन्ति चाशु गदानिमान् ।
गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥७२॥
विषमज्वरमर्शांसि ग्रहणीं वातकुण्डलीम् ।
जानुजङ्घाशिरोवस्तिग्रहोदावर्त्तमारुतान् ॥७३॥
वातासृक्शर्कराष्ठीलाकुक्षिशूलोदरारुचीः ।
रक्तपित्तकफोन्मादप्रमेहाध्मानहृद्ग्रहान् ॥७४॥
वातघ्नौषधनिःक्वाथा सैन्धवत्रिवृतायुता ।
साम्ला सुखोष्णा योज्या स्युर्वस्तय कुपितेऽनिले ॥७५॥
न्यग्रोधादिगणक्वाथाः काकोल्यादिसमायुताः ।

विधेया वस्तय पित्ते समपिष्का सशर्करा ॥७६॥
आरग्वधादिनि क्वाथा पिप्पल्यादिसमायुता ।
सक्षौद्रमूत्रा देया स्युर्वस्तय कुपिते कफे ॥७७॥
शर्करेक्षुरसक्षीरघृतयुक्ता सुशीतला ।
क्षीरवृक्षकषायाढ्या वस्तय शोणिते हिता ॥७८॥
शोधनद्रव्यनि क्वाथास्तत्कल्कस्नेहसैन्धवै ।
युक्ता खजेन मथिता वस्तय शोधना स्मृता ॥७९॥
त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुता ।
ऊषकादिप्रतिवापा वस्तयो लेखना स्मृता ॥८०॥
बृंहणद्रव्यनि क्वाथा कल्कैर्मधुरकैर्युता ।
सर्पिर्मासरसोपेता वस्तयो बृंहणा स्मृता ॥८१॥
चटकाण्डोक्षटाक्वाथा सक्षीरघृतशर्करा ।
आत्मगुप्ताफलावापा स्मृता वाजीकरा नृणाम् ॥८२॥
विदार्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुरा ।
क्षीरसिद्धा क्षौद्रयुना सास्रा पिच्छिलसञ्ज्ञिता ८३॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम ।
सद्यस्कमसृगग्रह्य वा देय पिच्छिलवस्तिषु ॥८४॥
प्रियङ्ग्वादिगणक्वाथा अम्बष्ठाद्येन सयुता ।
सक्षौद्रा. सघृताश्चैव ग्राहिणो वस्तय स्मृता ॥८५॥
एतेष्वेव च योगेषु स्नेहा सिद्धाः पृथक् पृथक् ।
समस्तेष्वथवा सम्यग्विधेया स्नेहवस्तय. ॥८६॥
वन्ध्याना शतपाकेन शोधिताना यथाक्रमम् ।
बलातैलेन देया स्युर्वस्तयस्त्रैवृतेन च ॥८७॥
नरस्योत्तमसत्त्वस्य तीक्ष्ण वस्ति निधापयेत् ।

मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम् ॥८८॥
एवं कालं बलं दोषं विकारञ्च विकारवित् ।
वस्तिद्रव्यबलं चैव वीक्ष्य वस्तीन् प्रयोजयेत् ॥८९॥
दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं पुनः ।
पश्चात् संशमनीयञ्च दद्याद्वस्तिं विचक्षणः ॥९०॥
एरण्डबीजं मधुकं पिप्पलीसैन्धवं वचा ।
हपुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥९१॥
शताह्वा मधुकं बीजं कौटजं फलमेव च ।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥९२॥
प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम् ।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः परः ॥९३॥
नृपाणां तत्समानानां तथा सुमहतामपि ।
नारीणां सुकुमाराणां शिशुस्थविरयोरपि ॥९४॥
दोषनिर्हरणार्थाय बलवर्णोदयाय च ।
समासेनोपदेक्ष्यामि विधानं माधुतैलिकम् ॥९५॥
यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते ।
फलञ्च विपुलं दृष्टं व्यापदाञ्चाप्यसम्भवः ॥९६॥
योज्यस्त्वतः सुखेनैव निरूहक्रममिच्छता ।
यदेच्छति तदैवैष प्रयोक्तव्यो विपश्चिता ॥९७॥
मधुतैले समे स्यातां क्वाथश्चैरण्डमूलजः ।
पलार्द्धं शतपुष्पायास्ततोऽर्द्धं सैन्धवस्य च ॥९८॥
फलेनैकेन संयुक्तः खजेन च विलोडितः ।
देयः सुखोष्णो भिषजा माधुतैलिकसञ्ज्ञितः ॥९९॥
वचामधुकतैलञ्च क्वाथः सरससैन्धवः ।

पिप्पलीफलसयुक्तो वस्तिर्युक्तरथ स्मृतः ॥१००॥
सुरदारु वरा रास्ना शतपुष्पा वचा मधु ।
हिङ्गु सैन्धवसयुक्तो वस्तिर्दोषहर स्मृत. ॥१०१॥
पञ्चमूलीकषायश्च तैल मागधिका मधु ।
वस्तिरेष विधातव्य सशताह्व ससैन्धव. ॥१०२॥
यवकोलकुलत्थानां क्वाथो मागधिका मधु ।
ससैन्धव समधुक सिद्धवस्तिरिति स्मृत ॥१०३॥
मुस्तापाठामृतातिक्ताबलारास्नापुनर्नवा ।
मञ्जिष्ठारग्वधोशीरत्रायमाणाख्यगोक्षुरान् ॥१०४॥
पालिकान् पञ्चमूलाल्पसहितान्मदनाष्टकम् ।
जलाढ़के पचेत् क्वाथ पादशेष पुन. पचेत् ॥१०५॥
क्षीरप्रस्थेन सयुक्त क्षीरशेषं परिस्रुतम् ।
पादेन जाङ्गलरसस्तथा मधुघृतं समम् ॥१०६॥
शताह्वाफलिनीयष्टीवत्सकै. सरसाञ्जनै ।
कार्षिकै सैन्धवयुतै. कल्कैर्वस्ति प्रयोजितः ॥१०७॥
वातासृग्मोहशोफार्शोगुल्ममूत्रविबन्धनुत् ।
विसर्पज्वरविड्भङ्गरक्तपित्तविनाशन ॥१०८॥
बल्य सञ्जीवनो वृष्यश्चक्षुष्य शूलनाशन. ।
स्थापनानामय राजा वस्तिर्मुस्तादिको मत: ॥१०९॥
अवेक्ष्य भेषजं बुद्धा विकारञ्च विकारवित् ।
वीजेनानेन मतिमान् कुर्य्याद्वस्तिशतान्यपि ॥११०॥
अजीर्णे न प्रयुञ्जीत दिवास्वप्न च वर्जयेत् ।
आहाराचारिक शेषमन्यद् युक्त समाचरेत् ॥१११॥
यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते ।

माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥११२॥
रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कल्पिते।
यस्मान्न प्रतिसिद्धोऽयमतो युक्तरथः स्मृत ॥११३॥
बलोपचयवर्णानां यस्माद् व्याधिग्रतस्य च।
भवत्यं तेन सिद्धिस्तु सिद्धवस्तिरतो मत ॥११४॥
सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नरा।
मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिका ॥११५॥
मृदुत्वात् पादहीनत्वादक्लतस्त्वविधिसेवनात्।
एकवस्तिप्रदानाच्च सिद्धवस्तिष्वयन्त्रणा ॥११६॥

---

एकोनचत्वारिंशत्तमोऽध्याय।

अथात आतुरोपद्रवचिकित्सित व्याख्यास्यामः।

स्नेहपीतस्य वान्तस्य विरिक्तस्य सुतासृजः।
निरूढस्य च कायाग्निर्मन्दो भवति देहिन. ॥१॥
सोऽग्नेरत्यर्थगुरुभिरुपयुक्तै. प्रशाम्यति ॥२॥
अल्पो महद्भिर्बहुभिश्छादितोऽग्निरिवेन्धनै.।
स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्द्धते ॥३॥
काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानल।
कृतदोषप्रमाणेन सदाहारविधि स्मृत. ॥४॥
त्रीणि चात्र प्रमाणानि प्रस्थोऽर्द्धाढकमाढकम्।
तत्रावर प्रस्थमात्र द्वे शेषे मध्यमोत्तमे ॥५॥
प्रस्थे परिस्रुते देया यवागू स्वल्पतण्डुला।
द्वे चैवार्द्धाढके देये तिस्रश्चाप्याढके गते ॥६॥
विलेपीमुचिताङ्गत्वाच्चतुर्थाग्रकृता तत.।

दद्याद् युक्तेन विधिना क्लिन्नसिक्थामपिच्छिलाम् ।
अस्निग्धलवणां स्वच्छां मुद्गयूषयुतां ततः ॥७॥
अथ द्वयं प्रमाणेन दद्यात् सुस्निग्धमोदनम् ।
ततः सघृतमच्छेन हृद्येनेन्द्रियबोधिना ॥८॥
त्रीनन्नान् विलेप्यांस्तुमातुरायौदनं मृदुम् ।
ततो यथोचितं भक्तं भोक्तुमस्मै विचक्षणः ॥९॥
लावणैर्हरिणादीनां रसैर्दद्यात् सुसंस्कृतैः ।
हीनमध्योत्तमेष्वेव विरिक्तेषु विधिः स्मृतः ॥१०॥
एकद्वित्रिगुणः सम्यगाहारस्य क्रमो हितः ।
कफपित्ताधिकान्मद्यनित्यान् हीनविशोधितान् ॥११॥
पेयाभ्यन्दयेत्तेषां तर्पणादिक्रमो हितः ।
वेदनालाभनियमशोकवैचित्यहेतुभिः ॥१२॥
जगानुपोषिताश्चापि विरिक्तवदुपाचरेत् ।
आढकार्द्धाढकप्रस्थसंख्या ह्येषा विरेचने ॥१३॥
एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन ।
बलं यत् त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ॥१४॥
तत्रानुक्रममेकन्तु बलस्थः सकृदाचरेत् ।
द्विराचरेन्मध्यबलस्त्रीन् वारान् दुर्बलस्तथा ॥१५॥
केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु ।
क्रमेण विवृद्धेऽग्नौ दोषकोपभयाद्व्रजेत् ॥१६॥
प्राक् स्वादुतिक्तौ स्निग्धाम्ललवणान् कटुकं ततः ।
स्वाद्वम्ललवणान् भूयः स्वादुतिक्तावतः परम् ।
स्निग्धरूक्षान् रसांश्चैव व्यत्यासात् स्वस्थवत् ततः ॥१७॥
केवलं स्नेहपीतो वा वान्तो दद्यात् केवलम् ।

स समरात मनुजो भुञ्जीत लघु भोजनम ॥१८॥
क्षत सिराव्यधो यस्य क्षत यस्य च शोधनम् ।
स ना परिहरेन्मास यावद्वा बलवान् भवेत् ॥१९॥
एकैकस्मिन् परिहरेद्ध वस्तौ वस्तौ त्र्यह त्र्यहम् ।
तृतीये तु परीहारे यथायोग समाचरेत् ॥२०॥
तैलपूर्णामसृङ्गाण्डसधर्माणो व्रणातुरा ।
स्निग्धशुद्धार्च्चिरोगार्त्ता ज्वरातीसारिणश्च ये ॥२१॥
क्रुध्यत कुपित पित्त कुर्य्यात् तास्तानुपद्रवान् ।
आयास्यत. शोचतो वा चित्त विभ्रममृच्छति ॥२२॥
मैथुनोपगमाद्‌ घोरान् व्याधीनाप्नोति दुर्मति ॥२३॥
आक्षेपक पक्षघातमङ्गप्रग्रहमेव च ।
गुह्यप्रदेशे श्वयथु कासश्वासौ च दारुणौ ॥२४॥
शुक्रवच्चापि रुधिर सरजस्क प्रवर्त्तते ।
लभते च दिवास्वप्नात्तास्तान् व्याधीन् कफात्मकान्।२५॥
प्लीहोदर प्रतिश्याय पाण्डुता श्वयथु ज्वरम् ।
मोह सदनमङ्गानामविपाक तथारुचिम् ॥२६॥
तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति ।
उच्चै सम्भाषणाद्वायु. शिरस्यापादयेद्रुजम् ॥२७॥
आन्ध्य जाड्यमजिघ्रत्व बाधिर्य्य मूकता तथा ।
हनुमोचमधीमन्यमर्दितञ्च सुदारुणम् ।
नेत्रस्तम्भ निमेष वा तृष्णा कास प्रजागरम् ॥२८॥
लभते दन्तचाल च तास्ताश्चान्यानुपद्रवान् ।
यानयानात्तु लभते छर्दिमूर्च्छाभ्रमक्लमान् ॥२९॥
तथैवाङ्गग्रह घोरमिन्द्रियाणाञ्च विभ्रमम् ।

चिरासनात्तथा स्थानाच्छ्रोण्यां भवति वेदना ॥२०॥
अतिचङ्क्रमणाद्वायुर्जङ्घयोः कुरुते रुजः।
सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा ॥२१॥
शीतसम्भोगतोयानां सेवा मारुतवृद्धये।
ततोऽङ्गमर्दविष्टम्भशूलाध्मानप्रवेपकाः ॥२२॥
वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात्।
विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति ॥२३॥
असात्म्यभोजनं हन्याद् बलवर्णमसंशयम् ॥२४॥
अनात्मवन्तः पशुवद् भुञ्जते ये प्रमाणतः।
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥२५॥
व्यापदां कारणं वीक्ष्य व्यायतस्तेतासु बुद्धिमान्।
अर्थतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥२६॥
विरिञ्चिवान्तैर्हरिणैणलावकाः
शशश्च सेव्यः समयूरतित्तिरिः।
सषष्टिकाश्चैव पुराणशालय-
स्तथैव मुद्गा लघु यच्च कीर्त्तितम् ॥२७॥

---

चत्वारिंशत्तमोऽध्यायः।

अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः।
धूमः पञ्चविधो भवति। तद्यथा। प्रायोगिकः स्नेहनो वैरेचनः कासघ्नो वामनीयश्चेति ॥१॥

तत्रैलादिना कुष्ठतगरवर्ज्येण श्लक्ष्णपिष्टेन द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेदेषा वर्त्तिः प्रायोगिके। स्नेहफलसारमधूच्छिष्टसर्जरसगुग्गुलु-

प्रभृतिभि स्नेहमिश्रै स्नेहने। शिरोविरेचनद्रव्यैर्वैरेचने। वृहतीकण्टकारिका-त्रिकटुककासमर्द-हिङ्गिङ्गुदीत्वग्मन शिग्रु-नाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभि कासहरैश्च कासघ्ने। स्नायुचर्मखुर-शृङ्गकर्कटकास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभि-र्वामनीयैश्च वामनीये ॥२॥

तत्र वस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति। धूमनेत्रन्तु कनिष्ठिकापरिणाहमग्रे कलायमात्र स्रोतो-मूलेऽङ्गुष्ठपरिणाह धूमवर्त्तिप्रवेशस्रोतोऽङ्गुलान्यष्टचत्वा-रिंशत् प्रायोगिके। द्वात्रिंशत् स्नेहने। चतुर्विंशतिर्वैरे-चने। षोडशाङ्गुल कासघ्ने वामनीये च। एतेऽपि कोला-स्थिमात्र च्छिद्रे भवत। व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलाय परिमण्डल कुलत्थवाहिस्रोत इति ॥३॥

अथ सुखोपविष्ट सुमना ऋज्वधोदृष्टिरतन्द्रित स्नेहाक्ता प्रदीप्ताग्रा वर्त्तिं नेत्रस्रोतसि प्रणिधाय धूम पिबेत ॥४॥

मुखेन त पिबेत् पूर्वं नासिकाभ्या तत पिबेत्।
मुखपीत मुखेनैव वमेत् पीतञ्च नासया ॥५॥
मुखेन धूममादाय नासिकाभ्या न निर्हरेत्।
तेन हि प्रतिलोमेन दृष्टिस्तत्र विहन्यते ॥६॥

विशेषतस्तु प्रायोगिक घ्राणेनाददीत स्नेहन मुख-नासाभ्या नासिकया वैरेचन मुखेनैवेतरौ। तत्र प्रायोगिके वर्त्ति व्यपगतशरकाण्डा निवातातपशुष्कामङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात। एव स्नेहन वैरेचनिकञ्च कुर्य्यादिति। इतरयोर्व्यपेतधूमाङ्गारे स्थिरे

समाहिते शरावे प्रक्षिप्य वर्त्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेरेष धूमपानोपायविधिः ॥७॥

तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासा-पाण्डुरोग-तालुशोषच्छर्दिशिरोऽभिघातोद्गारापतर्पिततिमिरप्रमेहोदराध्मानोर्द्ध्ववातार्त्ता बालवृद्धदुर्बलविरिक्तास्थापित-जागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन् ॥८॥

अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः ।
घ्राणश्रोत्राक्षिजिह्वानामुपघातञ्च दारुणम् ॥९॥

आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः । तद्यथा। क्षुतदन्तप्रक्षालननस्यस्नानभोजनदिवास्वप्न-मैथुनच्छर्दिमूत्रोच्चारहसितशस्त्रकर्मान्तेष्विति। तत्र मूत्रोच्चारक्षवथुहसितमैथुनान्तेषु स्नैहिकः, स्नानच्छर्दनदिवास्वप्नान्तेषु वैरेचनः ॥१०॥

दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्मान्तेषु प्रायोगिक इति। तत्र स्नैहनो वातं शमयति स्नेहादुपलेपाच्च वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति रौक्ष्यात्तैक्ष्ण्याद्दौष्ण्याद्वैशद्याच्च। प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात् पूर्व्वाभ्यामिति ॥११॥

भवति चात्र।

नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः ।
दृढ़केशद्विजश्मश्रुः सुगन्धिविशदाननः ॥१२॥

कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावववमथुतन्द्रानिद्राहनुमन्यास्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति ॥१३॥

तस्य योगातियोगौ विज्ञातव्यौ। तत्र योगो रोगप्रशमनोऽतियोगो रोगाप्रशमनस्तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णाक्षिदृष्टिनासारोगदौर्बल्यान्यतियोगो जनयति ॥१४॥

प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत। मुखनासिकाभ्याञ्च पर्य्यायास्त्रींश्चतुरो वेति। स्नैहिकं यावदश्रुप्रवृत्ति। वैरेचनिकमादोषदर्शनात्। तिलतण्डुलयवागूपीतेन पातव्यो वामनीय। ग्रासान्तरेषु कासघ्न इति। व्रणधूमं शरावसम्पुटोपनीतेन नेत्रेण व्रणमानयेत्। धूमनाद्वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवति ॥१५॥

विधिरेष समासेन धूमस्याभिहितो मया।
नस्यस्यात प्रवक्ष्यामि विधिं निरवशेषत ॥१६॥

औषधमौषधसिद्धो वा स्नेहो वा नासिकाभ्यां दीयत इति नस्यम्। तद् द्विविधं शिरोविरेचनं स्नेहनञ्च। तद् द्विधमपि पञ्चधा। तद्यथा। नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीड प्रधमनञ्च। तेषु नस्यं प्रधानं शिरोविरेचनञ्च नस्यविकल्प प्रतिमर्श, शिरोविरेचनविकल्पोऽवपीड प्रधमनञ्च। ततो नस्यशब्द पञ्चधा निपातित। तत्र य, स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टिप्रसादजननार्थ वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्द। तत् तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुण-

कर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषापबा-
हुकाकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्ति-
केषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति
॥१७॥

शिरोविरेचनं श्लेष्मणाभिव्याप्ततालुकण्ठशिरसामरोचक-
शिरोगौरवशूल-पीनसार्द्धावभेदक-क्रिमिप्रतिश्यायापस्मारग-
न्धाज्ञानेष्वन्येषु चोर्द्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरो-
विरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति॥१८॥

तत्रैतद् द्विविधमभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरो-
गिणां मध्याह्ने पित्तरोगिणामपराह्णे वातरोगिणाम्॥१९॥

अथ पुरुषाय शिरोविरेचनीयाय दन्तकाष्ठधूमपानाभ्यां
विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोललला-
टप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारित-
करचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितने-
त्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि
दक्षिणहस्तेन स्नेहमुष्णाम्बुतप्तं रजतसुवर्णताम्रमृत्पात्र-
शुक्तीनामन्यतमस्थं शुक्त्या पिचुना वा सुखोष्णं स्नेहमद्रुत-
मासिञ्चेदविच्छिन्नधारं यथा नेत्रे न प्राप्नोति॥२०॥

स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत्।
न कुप्येन्न प्रभाषेच्च न क्षुयान्न हसेत्तथा॥२१॥
एतैर्हि विहितः स्नेहो न सम्यक् प्रतिपद्यते।
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः॥२२॥

तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृताः
प्रथममात्रा द्वितीया शुक्तिस्तृतीया पाणिशुक्तिरित्येता-

स्तिस्रो मात्रा यथाबलं प्रयोज्याः। स्नेहनस्य न चोपगिलेत् कथञ्चिदपि ॥२३॥

शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा।
कफोत्क्लेशभयाच्चैव निष्ठीवेदविधारयन् ॥२४॥

दत्ते च पुनरपि संस्वेद्य गलकपोलादीन् धूममासेवेत भोजयेच्चैनमभिष्यन्दि ततोऽस्याचारिकमादिशेत्। रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत् ॥२५॥

तस्य योगातियोगानां विज्ञानं भवति ॥२६॥

लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम्।
विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥२७॥

कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः।
लक्षणं मूर्द्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत् ॥२८॥

अयोगे चैव वैगुण्यमिन्द्रियाणाञ्च रूक्षता।
रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत् ॥२९॥

चत्वारो बिन्दवः षड् वा तथाष्टौ वा यथाबलम्।
शिरोविरेकस्नेहस्य प्रमाणमभिनिर्दिशेत् ॥३०॥

नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः।
शुद्धहीनातिसञ्ज्ञानि विशेषाच्छास्त्रचिन्तकैः ॥३१॥

लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥३२॥

कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः।
मूर्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्त्तितम् ॥३३॥

मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः।

शून्यता शिरसश्चापि मूर्ध्नि गाढविरेचिते ॥३४॥
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्।
सम्यग्विशुद्धे शिरसि सर्पिर्नस्य निषेचयेत् ॥३५॥
एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनः पुनः।
एकविंशतिरात्रं वा यावद् वा साधु मन्यते ॥३६॥
मारुतेनाभिभूतस्य वात्यन्तं यस्य देहिनः।
द्विकालञ्चापि दातव्यं नस्यं तस्य विजानता ॥३७॥

अवपीडस्तु शिरोविरेचनवदभिष्यन्दसर्पदष्टविसञ्ज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतमस्यावपीडम्। वपिथ चेतोविकारक्रिमिविषाभिपन्नानां चूर्णं प्रधमेत्। शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात् ॥३८॥

कृशदुर्बलभीरूणां सुकुमारस्य योषिताम्।
शृताः स्नेहाः शिरःशुद्ध्यै कल्कस्तेभ्यो यथाहितः ॥३९॥

नस्येन परिहर्त्तव्यो भुक्तवानपतर्पितोऽत्यर्थंतरुणप्रतिश्यायी गर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्त्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः शिरःस्नातुकामश्चेति। अनार्त्तवे चाभ्रे नस्यधूमौ परिहरेत्। तत्र हीनातिमात्रातिशीतोष्णासहसाप्रदानातिप्रविलम्बितशिरस उच्छिङ्घतो विचलतोऽभ्यवहरतो वा प्रतिषिद्धप्रदानाच्च व्यापदो भवन्ति तृष्णोद्गारादयो दोषनिमित्ताः क्षयजाश्च ॥४०॥

भवतश्चात्र।

नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः।

दोषोत्क्लेशात् क्षयाच्चैव विज्ञेयास्ता यथाक्रमम् ॥४१॥
दोषोत्क्लेशनिमित्तास्तु जयेच्छमनशोधनैः ।
अथ क्षयनिमित्तास्तु यथास्वं बृंहणं हितम् ॥४२॥

प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः। तद्यथा। तल्पोत्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायञ्चेति ॥४३॥

तत्र तल्पोत्थितेनासेवितः प्रतिमर्शो रात्रावुपचितनासास्रोतोगतं मलमुपहन्ति मनःप्रसादञ्च करोति। प्रक्षालितदन्तेनासेवितो दन्तानां दृढतां वदनसौगन्ध्यं चापादयति। गृहान्निर्गच्छतासेवितो नासास्रोतसः क्लिन्नतया रजोधूमो वा नाबाधते। व्यायाममैथुनाध्वपरिश्रान्तेनासेवितः श्रममुपहन्ति। मूत्रोच्चारान्ते वा सेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति। अभुक्तवतासेवितः स्रोतसां विशुद्धिं लघुतां चापादयति। वान्तेनासेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्तकाङ्क्षामापादयति। दिवास्वप्नोत्थितेनासेवितो निद्राशेषं गुरुत्वं मलं चापोह्य चित्तैकाग्र्यं जनयति। सायं चासेवितः सुखनिद्राप्रबोधं चेति ॥४४॥

ईषदुच्छिङ्घतः स्नेहो यावद्वक्त्रं प्रपद्यते ।
नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः ॥४५॥
नस्येन रोगाः शाम्यन्ति नराणामूर्द्ध्वजत्रुजाः ।
इन्द्रियाणाञ्च वैमल्यं कुर्य्यादास्यं सुगन्धि च ॥४६॥
हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम् ।

बलीपलितखालित्यव्यङ्गाना चाप्यसम्भव ॥४७॥
तैल कफे सवाते स्यात् केवल पवने वसाम।
दद्यात्सर्पि सदा पित्ते मज्जान च समारुते ॥४८॥
चतुर्विधस्य स्नेहस्य विधिरेव प्रकीर्त्तित।
श्लेष्मस्थानाविरोधित्वात् तेषु तैल विधीयते ॥४९॥
अत पर प्रवक्ष्यामि कवलग्रहणे विधिम।
चतुर्द्धा कवल स्नेही प्रसादी शोधिरोपणौ ॥५०॥
स्निग्धोष्णै स्नेहिको वाते स्वादुशीते प्रसादन।
पित्ते कट्वम्ललवणैरूक्षोष्णै शोधन कफे ॥५१॥
कषायतिक्तमधुरै कटूष्णै रोपणो व्रणे।
चतुर्विधस्य चैवास्य विशेषोऽय प्रकीर्त्तित ॥५२॥
तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैल-शुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुप-स्विन्नमृदितगलकपोलललाटप्रदेशो धारयेत् ॥५३॥
सुख सञ्चार्य्यते या तु मात्रा सा कवले स्मृता।
असञ्चार्य्या तु या मात्रा गण्डूष स प्रकीर्त्तित ॥५४॥
तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरि-पूर्णकपोलत्व नासास्रोतोनयनपरिस्रावश्च भवति तदा विमोक्तव्य पुनश्चान्यो ग्रहीतव्य इति ॥५५॥
एव स्नेहपय क्षौद्ररसमूत्राम्लसभृता।
कषायोष्णोदकाभ्याञ्च कवला दोषतो हिता ॥५६॥
व्याधेरपचयस्तुष्टिर्वैशद्य वक्त्रलाघवम्।
इन्द्रियाणा प्रसादश्च कवले शुद्धिलक्षणम् ॥५७॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च।

अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥५८॥
शोधनीयविशेषेण भवन्त्येव न संशयः ।
तिलाः नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥५९॥
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ।
कवलस्य विधिह्येष समासेन प्रकीर्त्तितः ॥६०॥
विभज्य भेषजं बुद्ध्या कुर्व्वीत प्रतिसारणम् ।
कल्को रसक्रिया क्षौद्रं चूर्णं चेति चतुर्व्विधम् ॥६१॥
अङ्गुल्यग्रप्रणीतन्तु यथास्वं मुखरोगिणाम् ।
तस्मिन् योगमयोगञ्च कवलोक्तं विभावयेत् ॥६२॥
तानेव शमयेद्‌ व्याधीन् कवलो यानपोहति ।
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥६३॥

इति सौश्रुते आयुर्व्वेदशास्त्रे चतुर्थं
चिकित्सितस्थानं समाप्तम् ।

---

# कल्पस्थानम् ।



## प्रथमोऽध्यायः ।

अथातोऽन्नपानरक्षाकल्पं व्याख्यास्यामः ।
धन्वन्तरिः काशिपतिस्तपोधर्मभृतां वरः ।
सुश्रुतप्रभृतीन् शिष्यान् शशासाहतशासनः ॥१॥
रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः ।
सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥२॥
विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः ।
स्त्रियो वा विविधान् योगान् कदाचित् सुभगेच्छया ॥३॥
विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः ।
तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥४॥
यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम् ।
न विश्वस्यात् ततो राजा कदाचिदपि कस्यचित् ॥५॥
कुलीनं धार्मिकं स्निग्धं सुभृतं सततोत्थितम् ।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥६॥
क्रोधपारुष्यमात्सर्यमदालस्यविवर्जितम् ।
जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥७॥
मेधाविनमसंश्रान्तमनुरक्तं हितैषिणम् ।
पटुं प्रगल्भं निपुणं दक्षं मायाविवर्जितम् ॥८॥
पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् ।
महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥९॥

प्रशस्तदिग्देशकृत शुचिभाण्ड महच्छुचि।
सजालक गवाक्षाढ्यमाप्तवर्गनिषेवितम् ॥१०॥
विकक्षसृष्टसंसृष्ट सवितानं कृतार्चनम्।
परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम्।
तत्राध्यक्षं नियुञ्जीत प्रायोवैद्यगुणान्वितम् ॥११॥
शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः।
संविभक्ता सुमनसो नीचकेशनखा स्थिराः ॥१२॥
स्नाता दृढ़ संयमिनः कृतोष्णीषा. सुसंयता'।
तस्य चाज्ञाविधेया स्युर्विविधाः परिकर्मिणः ॥१३॥
आहारस्थितयश्चापि भवन्ति प्राणिनो यतः।
तस्मान्महानसे वैद्य प्रमादरहितो भवेत् ॥१४॥
माहानसिकवोढार' सौपौदनिकपौपिका'।
भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन ॥१५॥
इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतै.।
विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥१६॥
न ददात्युत्तर पृष्टो विवक्षन् मोहमेति च।
अपार्थं बहु सङ्कीर्णं भाषते चापि मूढ़वत् ॥१७॥
स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत्।
वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते ॥१८॥
क्षामो विवर्णवक्त्रश्च नखै. किञ्चिच्छिनत्त्यपि।
आलभेतासकृद्दीन करेण च शिरोरुहान् ॥१९॥
निर्यियासुरपद्वारैर्वीक्षते च पुनः पुन.।
वर्त्तते विपरीतस्तु विषदाता विचेतनः ॥२०॥
केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया।

असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः ॥२१॥
तस्मात् परीक्षणं कार्य्यं भृत्यानामादितो नृपैः ॥२२॥
अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने।
उत्सादने कषाये च परिषेकेऽनुलेपने ॥२३॥
स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च।
पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम् ॥२४॥
विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु।
लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम् ॥२५॥
नृपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये।
तत्रैव ते विनश्यन्ति मक्षिकावायसादयः ॥२६॥
हुतभुक्तेन चान्नेन भृशं चटचटायते।
मयूरकण्ठप्रतिमो जायते चापि दुःसहः ॥२७॥
भिन्नार्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति।
चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु ॥२८॥
दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः।
कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति ॥२९॥
हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके।
हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति।
पृषतो विसृजत्यश्रु विष्ठां मुञ्चति मर्कटः ॥३०॥
सन्निकृष्टांस्ततः कुर्य्याद्राजस्तान् मृगपक्षिणः।
वेश्मनोऽथ विभूषार्थं रक्षार्थञ्चात्मनः सदा ॥३१॥
उपक्षिप्तस्य चान्नस्य वाष्पेणोर्द्धं प्रसर्पता।
हृत्पीडा भ्रान्तनेत्रत्वं शिरोदुःखञ्च जायते ॥३२॥
तत्र नस्याञ्जने कुष्ठं रामठं नलदं मधु।

कुर्य्याच्छिरीषरजनीचन्दनैश्च प्रलेपनम् ॥३३॥
हृदि चन्दनलेपस्तु तथासुखमवाप्नुयात् ।
पाणिप्राप्तं पाणिदाहं नखशातं करोति च ॥३४॥
अत्र प्रलेपः श्यामेन्द्रगोपासोमोत्पलानि च ॥३५॥
स चेत् प्रमादान्मोहाद्वा तदन्नमुपसेवते ।
अष्ठीलावत्ततो जिह्वा भवत्यरसवेदनी ॥३६॥
तुद्यते दह्यते चापि श्लेष्मा चास्यात् प्रसिच्यते ।
तत्र वाष्पेरितं कर्म यच्च स्याद्दान्तकाष्ठिकम् ॥३७॥
मूर्च्छां छर्दिमतीसारमाध्मानं दाहवेपथू ।
इन्द्रियाणाञ्च वैकृत्यं कुर्य्यादामाशयं गतम् ॥३८॥
तत्राशु मदनालाबुबिम्बीकोशातकीफलैः ।
छर्दनं दध्युदश्वित्तमथवा तण्डुलाम्बुना ॥३९॥
दाहं मूर्च्छामतीसारं तृष्णामिन्द्रियवैकृतम् ।
आटोपपाण्डुता कार्श्यं कुर्य्यात् पक्वाशयं गतम् ॥४०॥
विरेचनं ससर्पिष्कं तत्रोक्तं नीलिनीफलम् ।
दध्ना दूषीविषारिश्च पेयो वा मधुसंयुतः ॥४१॥
द्रवद्रव्येषु सर्वेषु क्षीरमद्योदकादिषु ।
भवन्ति विविधा राज्यः फेनबुद्बुदजन्म च ॥४२॥
छायाश्चात्र न दृश्यन्ते दृश्यन्ते यदि वा पुनः ।
भवन्ति यमलाश्छिद्रास्तन्व्यो वा विकृतास्तथा ॥४३॥
शाकसूपान्नमांसानि क्लिन्नानि विरसानि च ।
सद्यः पर्य्युषितानीव विगन्धानि भवन्ति च ॥४४॥
गन्धवर्णरसैर्हीनाः सर्वे भक्ष्याः फलानि च ।
पक्वान्याशु विशीर्य्यन्ते पाकमामानि यान्ति च ॥४५॥

विशीर्य्येते कूर्चकस्तु दन्तकाष्ठगते विषे ।
जिह्वादन्तौष्ठमांसानां श्वयथुश्चोपजायते ॥४६॥
अथास्य धातकीपुष्पपथ्याजम्बूफलास्थिभिः ।
सक्षौद्रैः प्रच्छिते शोफे कर्त्तव्यं प्रतिसारणम् ॥४७॥
अथवाङ्कोठमूलानि त्वचः सप्तच्छदस्य वा ।
शिरीषमाषका वापि सक्षौद्राः प्रतिसारणम् ॥४८॥
जिह्वानिर्लेखकवलौ दन्तकाष्ठवदादिशेत् ।
पिच्छिलो बहुलोऽभ्यङ्गो विवर्णो वा विषान्वितः ॥४९॥
स्फोटजन्मरुजास्रावत्वक्पाकः स्वेदनं ज्वरः ।
दरणं चापि मांसानामभ्यङ्गे विषसंयुते ॥५०॥
तत्र शीताम्बुसिक्तस्य कर्त्तव्यमनुलेपनम् ।
चन्दनं तगरं कुष्ठमुशीरं वेणुपत्रिका ॥५१॥
सोमवल्ल्यमृता श्वेता पद्मं कालीयकं त्वचम् ।
कपित्थरसमूत्राभ्यां पानमेतच्च युज्यते ॥५२॥
उत्सादने परीषेके कषाये चानुलेपने ।
शय्यावस्त्रतनुत्रेषु ज्ञेयमभ्यङ्गलक्षणैः ॥५३॥
केशशातः शिरोदुःखं खेभ्यश्च रुधिरागमः ।
ग्रन्थिजन्मोत्तमाङ्गेषु विषजुष्टे तु लेपने ॥५४॥
प्रलेपो बहुशस्तत्र भाविता कृष्णमृत्तिका ।
कृष्णपित्तघृतश्यामापालिन्दीतण्डुलीयकैः ॥५५॥
गोमयस्वरसो वापि हितो वा मालतीरसः ।
रसो मूषिकपर्ण्या वा धूमो वागारसम्भवः ॥५६॥
शिरोऽभ्यङ्गः शिरस्त्राणं स्नानमुष्णीषमेव च ।
स्रजश्च विषसंदुष्टाः साधयेदनुलेपवत् ॥५७॥

मुखलेपे मुखं श्यावं युक्तमभ्यङ्गलक्षणैः ।
पद्मिनीकण्टकप्रख्यैः कण्टकैश्चोपचीयते ॥५८॥
तत्र क्षौद्रघृतं पानं प्रलेपश्चन्दनं घृतम् ।
पयस्या मधुकं फल्गी बन्धुजीवपुनर्नवा ॥५९॥
अस्वास्थ्यं कुञ्जरादीनां लालास्रावोऽक्षिरक्तता ।
स्फिक्पायुमेढ्रमुष्केषु युक्तेषु स्फोटसम्भवः ॥६०॥
तत्राभ्यङ्गवदेवेष्टा यानवाहनयोः क्रिया ।
शोणितागमनं खेभ्यः शिरोरुक्कफसंस्रवः ॥६१॥
नस्यधूमगते लिङ्गमिन्द्रियाणान्तु वैकृतम् ।
तत्र दुग्धैर्गवादीनां सर्पिः स्यातिविषैः शृतम् ॥६२॥
पाने नस्ये च सश्वेतं हितं समदयन्तिकम् ।
गन्धहानिर्विवर्णत्वं पुष्पाणां म्लानता भवेत् ॥६३॥
जिघ्रतश्च शिरोदुःखं वारिपूर्णे च लोचने ।
तत्र वाष्पेरितं कर्म मुखालेपे च यत् स्मृतम् ॥६४॥
कर्णतैलगते श्रोत्रवैगुण्यं शोफवेदने ।
कर्णस्रावश्च तत्राशु कर्त्तव्यं प्रतिपूरणम् ॥६५॥
स्वरसो बहुपुत्रायाः सघृतः क्षौद्रसंयुतः ।
सोमवल्करसश्चापि सुशीतो हित इष्यते ॥६६॥
अश्रूपदेहो दाहश्च वेदना दृष्टिविभ्रमः ।
अञ्जने विषसंसृष्टे भवेदान्ध्यमथापि वा ॥६७॥
तत्र सद्योघृतं पेयं तर्पणञ्च समागधम् ।
अञ्जनं मेषशृङ्गस्य निर्य्यासो वरुणस्य च ॥६८॥
मुष्ककस्याजकर्णस्य फेणो गोः पित्तसंयुतः ।
कपित्थमेषशृङ्ग्योश्च पुष्पं भल्लातकस्य वा ॥६९॥

एकैक कारयेत् पुष्प बन्धूकाङ्कोठयोरपि ।
शोफ स्रावस्तथास्वापः पादयो स्फोटजन्म च ॥७०॥
भवन्ति विषजुष्टाभ्या पादुकाभ्यामसशयम् ।
उपानत्पादपीठानि पादुकावत् प्रसाधयेत् ॥७१॥
भूषणानि हतार्चींषि न विभान्ति यथा पुरा ।
स्वानि स्थानानि हन्युश्च दाहपाकावदारणै ॥७२॥
पादुकाभूषणे युक्तमभ्यङ्गविधिमाचरेत् ।
विषोपसर्गो वाप्यादिर्भूषणान्तो य ईरित ॥७३॥
समीक्ष्योपद्रवास्तस्य विदधीत चिकित्सितम् ।
महासुगन्धिमगद य प्रवक्ष्यामि त भिषक् ॥७४॥
पानालेपननस्येषु विदधीताञ्जनेषु च ।
विरेचनानि तीक्ष्णानि कुर्य्यात् प्रच्छर्दनानि च ॥७५॥
सिराश्च व्यधयेत् क्षिप्र प्राप्त विस्रावण यदि ।
मूषिकाजरुहा वापि हस्ते बद्धा तु भूपते ॥७६॥
करोति निर्विष सर्वमन्न विषसमायुतम ।
हृदयावरण नित्य कुर्य्याच्च मित्रमध्यग ॥७७॥
पिबेद् घृतमजेयाख्यममृताख्यञ्च बुद्धिमान् ।
सर्पिर्दधि पय. क्षौद्र पिबेद्वा शीतल जलम् ॥७८॥
मयूरान्नकुलान् गोधा पृषतान् हरिणानपि ।
सतत भक्षयेच्चापि रसास्तेषां पिबेदपि ॥७९॥
गोधानकुलमासेषु हरिणस्य च बुद्धिमान् ।
दद्यात् सुपिष्टा पालिन्दी मधुक शर्करान्तथा ॥८०॥
शर्करातिविषे देये मायूरे समहौषधे ।
पार्षते चापि देया स्यु. पिप्पल्य. समहौषधा. ॥८१॥

सक्षौद्रं सघृतश्चैव शिम्बीयूषो हित सदा।
विषघ्नानि च सेवेत भक्ष्यभोज्यानि बुद्धिमान् ॥८२
पिप्पलीमधुकक्षौद्रशर्करेक्षुरसाम्बुभि।
छर्दयेद् गुप्तहृदयो भक्षित यदि वा विषम्।८३॥

---

## द्वितीयोऽध्याय।

अथात स्थावरविषविज्ञानीयमध्याय व्याख्यास्याम।

स्थावरञ्जङ्गमञ्चैव द्विविध विषमुच्यते।
दशाधिष्ठानमाद्यन्तु द्वितीय षोडशाश्रयम ॥१॥

मूलं पत्र फल पुष्प त्वक् क्षीरं सार एव च।
निर्य्यासो धातवश्चैव कन्दश्च दशम स्मृत ॥२॥

तत्र क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघाटविद्युच्छिखाविजयानीत्यष्टौ मूलविषाणि ॥३॥

विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भाणि पञ्च पत्रविषाणि ॥४॥

कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि ॥५॥

वेत्रकादम्बवल्लिजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि ६॥

अन्त्रपाचककर्त्तरीयसौरीयककरघाटकरम्भनन्दनवराटकानि सप्त त्वक्सारनिर्य्यासविषाणि ॥७॥

कुमुदघ्नीस्नुहीजालक्षीर्य्याणि त्रीणि क्षीरविषाणि ॥८॥

फेणाश्मभस्म हरितालञ्च द्वे धातुविषे।९॥

कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि। इत्येवं पञ्चपञ्चाशत् स्थावरविषाणि भवन्ति ॥१०॥

चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्त्तिते।
षट् चैव सर्षपाण्याहुः शेषाण्येकैकमेव तु ॥११॥
उद्वेष्टनं मूलविषैः प्रलापो मोह एव च।
जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेयाः पत्रविषेण तु ॥१२॥
मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च।
भवेत् पुष्पविषैश्छर्दिराध्मानं मोह एव च ॥१३॥
त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि।
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥१४॥
फेणागमः क्षीरविषैर्विड्भेदो जिह्वजिह्वता।
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥१५॥
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्।
कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम् ॥१६॥
स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च।
ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥१७॥
सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च।
ग्रीवादौर्बल्यवाक्सङ्गौ पालकेऽनुमताविह ॥१८॥
प्रसेकः कर्दमाख्ये तु विड्भेदो नेत्रपीतता।
वैराटके नाङ्गदुःखं शिरोरोगश्च जायते ॥१९॥
गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु।
शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः ॥२०॥

पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे।
वैवर्ण्यं मूलकेश्छर्द्दिर्हिक्काशोफप्रमूढ़ता. ॥२१॥
चिरेणोच्छ्वसिति श्यावो नरो हालाहलेन वै।
महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥२२॥
कर्कटेनोत्पतत्यूर्द्ध्वं हसन्दन्तान्दशत्यपि।
कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश ॥२३॥
सर्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः।
रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशुव्यवायि च ॥२४॥
विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृतम।
तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्त सशोणितम् ॥२५॥
मानस मोहयेत् तैक्ष्ण्यादङ्गबन्धान् छिनत्त्यपि।
शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च ॥२६॥
आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृति भजेत्।
क्षपयेच्च विकाशित्वाद्दोषान्धातून्मलानपि ॥२७॥
वैशद्यादतिरिच्येत दुश्चिकित्स्यञ्च लाघवात्।
दुर्जरञ्चाविपाकित्वात् तस्मात् क्लेशयते चिरम् ॥२८॥
स्थावर जङ्गमं यच्च कृत्रिम चापि यद्विषम।
सद्यो व्यापादयेत् तत् तु ज्ञेय दशगुणान्वितम् ॥२९॥
यत स्थावर जङ्गमकृत्रिम वा देहादशेष यदनिर्गतं तत्।
जीर्णं विषघ्नौषधिभिर्हत वा दावाग्निवातातपशोषित वा ॥३०॥
स्वभावतो वा गुणविप्रहीन विष हि दूषीविषतामुपैति।
वीर्य्याल्पभावान्न निपातयेत् तत् कफावृतं वर्षगणानुबन्धि ॥३१॥

तेनार्द्दितो भिन्नपुरीषवर्णो विगन्धवैरस्यमुख पिपासी ।
मूर्च्छन् वमन् गद्गदवाग्विषण्णो भवेच्च दूष्योदरलिङ्गजुष्टः ॥३२
आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्ग ॥३३॥

स्थितं रसादिष्वथवा यथोक्तान्
करोति धातुप्रभवान् विकारान् ।
कोपञ्च शीतानिलदुर्द्दिनेषु
यात्याशु पूर्वं शृणु तत्र रूपम् ॥३४॥

निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्द्दम् ।
तत' करोत्यन्नमदाविपाकावरोचक मण्डलकोठमोहान् ॥३५
धातुक्षय पादकरास्यशोफ दकोदर छर्द्दिमथातिसारम् ।
वैवर्ण्य मूर्च्छाविषमज्वरान् वा कुर्य्यात् प्रवृद्धा प्रबला तृषां वा
॥३६॥

उन्मादमन्यज्जनयेत् तथान्यदानाहमन्यत् क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं तास्तान् विकाराश्च बहुप्रकारान्
॥३७॥

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णश ।
यस्माद् दूषयते धातून् तस्माद् दूषीविष स्मृतम् ॥३८॥
स्थावरस्योपयुक्तस्य वेगे तु प्रथमे नृणाम् ।
श्यावा जिह्वा भवेत् स्तब्धा मूर्च्छा श्वासश्च जायते ॥३९॥
द्वितीये वेपथु स्वेदो दाह कण्डूरुजस्तथा ।
विषमामाशयप्राप्त कुरुते हृदि वेदनाम् ॥४०॥
तालुशोषं तृतीये तु शूल चामाशये भृशम् ।
दुर्वर्णे हरिते शूने जायेते चास्य लोचने ॥४१॥

पक्वाशयगते तोदो हिक्का कासोऽन्त्रकूजनम्।
चतुर्थे जायते वेगः शिरसश्चातिगौरवम् ॥४२॥
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे।
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥४३॥
षष्ठे प्रज्ञाप्रणाशश्च भृशं वाप्यतिसार्यते।
स्कन्धपृष्ठकटीभङ्गः सन्निरोधश्च सप्तमे ॥४४॥
प्रथमे विषवेगे तु वान्तं शीताम्बुसेवितम्।
अगदं मधुसर्पिर्भ्यां पाययेत समायुतम् ॥४५॥
द्वितीये पूर्ववद्वान्तं पाययेत् तु विरेचनम्।
तृतीयेऽगदपानन्तु हितं नस्यं तथाञ्जनम् ॥४६॥
चतुर्थे स्नेहसमिश्रं पाययेतागदं भिषक्।
पञ्चमे चौद्रमधुकक्काथ युक्तं प्रदापयेत् ॥४७॥
षष्ठेऽतीसारवत् सिद्धिरवपीड़श्च सप्तमे।
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं चिपेत् ॥४८॥
वेगान्तरे त्वन्यतमे कृते कर्मणि शीतलाम्।
यवागूं सघृतचौद्रामिमां दद्याद्विचक्षणः ॥४९॥
कोषातक्योऽग्निकः पाठासूर्य्यवल्ल्यमृताभयाः।
शिरीषः किणिह्नी शेलुर्गिर्य्याह्वा रजनीद्वयम् ॥५०॥
पुनर्नवे हरेणुश्च त्रिकटु सारिवे बला।
एषां यवागूर्निःक्काथे कृता हन्ति विषद्वयम् ॥५१॥
मधुकं तगरं कुष्ठं भद्रदारु हरेणवः।
पुन्नागैलैलवालूनि नागपुष्पोत्पलं सिता ॥५२॥
विडङ्गं चन्दनं पत्रं प्रियङ्गुर्ध्यामकं तथा।
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरा सहा ॥५३॥

कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् ॥५४॥
दूषीविषार्त्तं सुस्विन्नमूर्ध्वञ्चाधश्च शोधितम् ।
पाययेतागदं नित्यमिमं दूषीविषापहम् ॥५५॥
पिप्पल्यो ध्यामकं मांसी शावरं परिपेलवम् ।
सुवर्चिका ससूक्ष्मैला तोयं कनकगैरिकम् ॥५६॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति ।
एष नाम्ना विषारिस्तु न चान्यत्रापि वार्य्यते ॥५७॥
ज्वरे दाहे च हिक्कायामानाहे शुक्रसंक्षये ।
शोफेऽतिसारे मूर्च्छायां हृद्रोगे जठरेऽपि वा ॥५८॥
उन्मादे वेपथौ चैव ये चान्ये स्युरुपद्रवाः ।
यथास्वं तेषु कुर्वीत विषघ्नैरौषधैः क्रियाम् ॥५९॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यन्तु क्षीणस्याहितसेविनः ॥६०॥

---

## तृतीयोऽध्यायः ।

अथातो जङ्गमविषविज्ञानीयमध्यायं व्याख्यास्यामः ।
जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश ।
समासेन मया यानि विस्तरस्तेषु वक्ष्यते ॥१॥

तत्र दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानीति ॥२॥

तत्र दृष्टिनिःश्वासविषास्तु दिव्याः सर्पाः । भौमास्तु दंष्ट्राविषाः । मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधा

अम्बूकप्रचलाकगटहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रा-नखविषा. ॥३॥

चिपिटपिच्चटककषायवासिकसर्षपवासिकतोटकवर्च-कीटकौण्डिल्यका अक्तन्मूत्रविषा ॥४॥

मूषिका. शुक्रविषा.। लूताश्च लालामूत्रपुरीषमुखस-न्दंशनखशुक्रार्त्तवविषा ॥५॥

वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गा. समुद्रवृश्चि-काश्वालविषाः ॥६॥

चित्रशिर सरावकुर्दितशतदारुकारिमेदकशारिकामु-खा मुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः। मक्षिकाकणभज-लायुका मुखसन्दंशविषा. ॥७॥

विषहतास्थि सर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि। शकुली मत्स्यरक्तराजीवरकीमत्स्याश्च पित्तविषा. ॥८॥

सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गीभ्र-मरा. शूकतुण्डविषा. ॥९॥

कीटसर्पदेहा गतासव शवविषा। शेषास्त्वनुक्ता मुख-सन्दंशविषेष्वेव गणयितव्या ॥१०॥

भवन्ति चात्र।

राज्ञोऽरिदेशे रिपवस्तृणाम्बुमार्गान्नधूमश्वसनान् विषेण।
सन्दूषयन्त्येभिरतिप्रदुष्टान् विज्ञाय लिङ्गैरभिशोधयेच्च ॥११॥

दुष्टं जलं पिच्छिलमुग्रगन्धि
फेनान्वितं राजिभिरावृतञ्च।
मण्डूकमत्स्य म्रियते विहङ्गा
मत्ताश्च सानूपचरा भ्रमन्ति ॥१२॥

मज्जन्ति ये चात्र नराश्वनागा-
स्ते छर्दिमोहज्वरदाहशोफान् ।
गच्छन्ति तेषामपहृत्य दोषान्
दुष्टं जलं शोधयितुं यतेत ॥१३॥

धवाश्वकर्णासनपारिभद्राः सपाटला सिद्धकमच्चकौ च ।
दग्ध्वा सराजद्रुमसोमवल्कांस्तद्भस्म शीतं वितरेत् सरःसु ॥१४॥
भस्माञ्जलिञ्चापि घटे निधाय विशोधयेदीप्सितमेवमम्भः ।
क्षितिप्रदेशं विषदूषितन्तु शिलास्थलीं तीर्थमथेरिणं वा ॥१५॥

स्पृशन्ति गात्रेण तु येन येन
गोवाजिनागोष्ट्रखरा नरा वा ।
तच्छूनतां यात्यथ दह्यते च
विशीर्यते रोमनखास्तथैव ॥१६॥
तत्राप्यनन्ता सह सर्वगन्धैः
पिष्ट्वा सुराभिर्विनियोज्य मार्गम् ।
सिञ्चेत् पयोभिस्तु मृदन्वितैस्तं
विडङ्गपाठाकटभीजलैर्वा ॥१७॥
तृणेषु भक्तेषु च दूषितेषु
सीदन्ति मूर्च्छन्ति वमन्ति चान्ये ।
विड्भेदमृच्छन्त्यथवा म्रियन्ते
तेषां चिकित्सां प्रणयेद् यथोक्ताम् ॥१८॥
विषापहैर्वाप्यगदैर्विलिप्य
वाद्यानि चित्राण्यपि वादयेत ।
तारः सुतारः ससुरेन्द्रगोपः
सर्वैश्च तुल्यः कुरुविन्दभागः ॥१९॥

पित्तेन युक्तै कपिलान्वयैत
वाद्यप्रलेपो विहित प्रशस्तः।
वाद्यस्य शब्देन हि यान्ति नाश
विषाणि घोराण्यपि यानि सन्ति ।२०॥
धूमेऽनिले वा विषसम्प्रयुक्ते
खगा श्रमार्त्ता. प्रपतन्ति भूमौ।
कासप्रतिश्यायशिरोरुजश्च
भवन्ति तीव्रा नयनामयाश्च ॥२१॥
लाक्षाहरिद्रातिविषाभयाब्द-
हरेणुकैलादलवल्ककुष्ठम ।
प्रियङ्गुकाश्चाप्यनले निधाय
धूमानिलौ चापि विशोधयेत ॥२२॥

प्रजामिमामात्मयोनेर्ब्रह्मण सृजत. किल ।
अकरोद्सुरो विघ्न कैटभो नाम दर्पित' ॥२३॥
तत. क्रुद्धस्य वै वक्त्राद् ब्रह्मणस्तेजसो निधे ।
क्रोधो विग्रहवान भूत्वा निपपाताथ दारुण ॥२४॥
स त ददाह गर्जन्तमन्तकाभं महाबलम् ।
ततोऽसुरं घातयित्वा तत्तेजोऽवर्द्धताद्भुतम् ॥२५॥
ततो विषादो देवानामभवत्त निरीक्ष्य वै ।
विषादजननत्वाच्च विषमित्यभिधीयते ।२६।
तत सृष्टा प्रजा शेष तदा त क्रोधमीश्वरः ।
विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च ॥२७॥
यथा व्यक्तरस तोयमन्तरीक्षान्महीगतम् ।
तेषु तेषु प्रदेशेषु रस त त नियच्छति ।२८॥

एवमेव विषं यद्यद् द्रव्यं व्याप्यावतिष्ठते।
स्वभावादेव त तस्य रस समनुवर्त्तते। २९॥
विषे यस्माद् गुणा सर्वे तीक्ष्णा प्रायेण सन्ति हि।
विष सर्वमतो ज्ञेय सर्वदोषप्रकोपणम ॥३०॥
ते तु वृत्ति प्रकुपिता जहति स्वा विषार्दिता।
नोपयाति विष पाकमत प्राणान् रुणद्धि च ॥३१॥
श्लेष्मणावृतमार्गत्वादुच्छ्वासोऽस्य निरुध्यते।
विसञ्ज्ञ सति जीवेऽपि तस्मात् तिष्ठति मानव ॥३२॥
शुक्रवत् सर्वसर्पाणा विषं सर्वशरीरगम।
क्रुद्धानामेति चाङ्गेभ्यः शुक्रं निर्मन्थनादिव ॥३३॥
तेषा वडिशवद् दंष्ट्रास्तासु सज्जति चागतम्।
अनुद्वृत्ता विष तस्मान्न मुञ्चन्ति च भोगिन ॥३४॥
यस्मादत्यर्थमुष्णञ्च तीक्ष्णञ्च पठित विषम्।
अतः सर्वविषेषूक्त परिषेकस्तु शीतल ॥३५॥
मन्द कीटेषु नात्युष्ण बहुवातकफ विषम्।
अत कीटविषे चापि स्वेदो न प्रतिषिध्यते ॥३६॥
कीटैर्दंष्टानुग्रविषे सर्पवत् समुपाचरेत्।
स्वभावादेव तिष्ठेत् तु प्रहारादंशयोर्विषम ॥३७॥
व्याप्य सावयव देह दिग्धविद्धाहिदष्टयो।
लौल्याद्विषान्वित मासं य खादेन् मृतमात्रयो ॥३८॥
यथाविष स रोगेण क्लिश्यते म्रियतेऽपि व।
अतस्तयोर्मासमभक्ष्य मृतमात्रयो ॥३९॥
मुहूर्त्तात्तदुपादेयं प्रहारादंशवर्जितम।
सवात गृहधूमाभ पुरोष योऽति सार्यते ॥४०॥

आध्मातोऽत्यर्थमुष्णास्रो विवर्णः साद्पीडितः।
उद्गमत्यथ फेनञ्च विषपीत तमादिशेत् ॥४१॥
न चास्य हृदय वह्निर्विषदुष्ट दहत्यपि।
तद्धि स्थान चेतनाया स्वभावाद्व्याप्य तिष्ठति ॥४२॥
अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु।
याम्ये सपित्रे परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः
॥४३॥
दर्वीकराणा विषमाशुघाति सर्वाणि चोष्णे द्विगुणीभवन्ति।
अजीर्णपित्तातपपीडितेषु बालप्रमेहेष्वथ गर्भिणीषु ॥४४॥
वृद्धातुरक्षीणबुभुक्षितेषु रूक्षेषु भीरुष्वथ दुर्दिनेषु।
शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति
॥४५॥
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम्।
जिह्वा सिता यस्य च केशशातो नासावभङ्गश्च सकण्ठभङ्गः
॥४६॥
कृष्णः सरक्तः श्वयथुश्च दंशे हन्वो स्थिरत्वञ्च स वर्जनीयः।
वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्ध्वमधश्च यस्य ॥४७॥
दंष्ट्रानिपाताः सकलाश्च यस्य तञ्चापि वैद्यः परिवर्जयेत् तु
॥४८॥
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथवा विवर्णम्।
सारिष्टमत्यर्थमवेगिनञ्च जह्याच्च त कर्म न तत्र कुर्य्यात् ॥४९

## चतुर्थोऽध्यायः।

अथातः सर्पदष्टविषविज्ञानीयमध्यायं व्याख्यास्यामः।

धन्वन्तरिं महाप्राज्ञं सर्वशास्त्रविशारदम्।
पादयोरुपसङ्गृह्य सुश्रुतः परिपृच्छति ॥१॥
सर्पसंख्यां विभागञ्च दष्टलक्षणमेव च।
ज्ञानञ्च विषवेगानां भगवन्! वक्तुमर्हसि ॥२॥
तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः।
असंख्या वासुकिमुखा विख्यातास्तक्षकादयः ॥३॥
महीधराश्च नागेन्द्रा हुताग्निसमतेजसः।
ये चाप्यजस्रं गर्जन्ति वर्षन्ति च तपन्ति च ॥४॥
ससागरा गिरिद्वीपा यैरियं धार्य्यते मही।
क्रुद्धा निःश्वासदृष्टिभ्यां ये हन्युरखिलं जगत् ॥५॥
नमस्तेभ्योऽस्तु नो तेषां कार्य्यं किञ्चिच्चिकित्सया।
ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान् ॥६॥
तेषां सङ्ख्यां प्रवक्ष्यामि यथावदनुपूर्वशः।
अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा ॥७॥
दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च।
निर्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः ॥८॥
दर्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः।
तेषु दर्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः ॥९॥
द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश।
निर्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा ॥१०॥
वैकरञ्जोद्भवाः सप्त चित्रा मण्डलिराजिलाः।
पदाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा ॥११॥

ते दशन्ति महाक्रोधास्तद्धि त्रिविधमुच्यते ।
सर्पित रदित वापि तृतीयमथ निर्विषम् ॥१२॥
सर्पाङ्गाभिहत केचिदिच्छन्ति खलु तद्विद ॥१३॥
पदानि यत्र दन्तानामेक द्वे वा बहूनि च ।
निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि ॥१४॥
चञ्चुमालकयुक्तानि वैकल्यकरणानि च ।
सङ्क्षिप्तानि सशोफानि विद्यात्तत् सर्पित भिषक् ॥१५॥
राज्य सलोहिता यत्र नीला पीता सितास्तथा ।
विज्ञेय रदित तच्च ज्ञेयमल्पविषञ्च तत् ॥१६॥
अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिन ।
पद पदानि वा विद्यादविष तच्चिकित्सक ॥१७॥
सर्पस्पृष्टस्य [illegible] भयेन कुपितोऽनिल ।
कस्यचित् [illegible] सर्पाङ्गाभिहतन्तु तत् ॥१८॥
व्याधिता [illegible]दष्टानि ज्ञेयान्यल्पविषाणि तु ।
तथातिवृद्ध[illegible]भिदष्टमल्पविष स्मृतम् ॥१९॥
सुपर्णदेव[illegible] यक्षसिद्धनिषेविते ।
विषघ्नौषधियुक्ते च देशे न क्रमते विषम् ॥२०॥
रथाङ्गलाङ्गल[illegible]स्वस्तिकाङ्कुशधारिण ।
ज्ञेया दर्वीकरा [illegible] फणिन शीघ्रगामिन ॥२१॥
मण्डलैर्विविधैश्चित्रा पृथवो मन्दगामिन ।
ज्ञेया मण्डलिन [illegible] ज्वलनार्कसमप्रभा ॥२२॥
स्निग्धा विविध[illegible]स्तिर्य्यगूर्द्ध्वन्तु राजिभि ।
चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृता ॥२३॥
मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगा ।

सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः ॥२४॥
क्षत्रिया स्निग्धवर्णास्तु पन्नगा भृशकोपनाः।
सूर्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम् ॥२५॥
कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा।
धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः ॥२६॥
महिषद्वीपिवर्णाभास्तथैव परुषत्वचः।
भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः ॥२७॥
कोपयन्त्यनिलं जन्तोः फणिनः सर्व एव तु।
पित्तं मण्डलिनश्चापि कफञ्चानेकराजयः ॥२८॥
अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम्।
ज्ञेयौ दोषैश्च दम्पत्योर्विशेषश्चात्र वक्ष्यते ॥२९॥
रजन्याः पश्चिमे यामे सर्पाश्चित्राश्चरन्ति हि।
शेषेषूक्ता मण्डलिनो दिवा दर्वीकराः स्मृताः ॥३०॥
दर्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा।
राजिमन्तो वयोमध्ये जायन्ते मृत्युहेतवः ॥३१॥
नकुलाकुलिता बाला वारिविप्रहता कृशाः।
वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः ॥३२॥

तत्र दर्वीकराः। कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो महाकपोतो बलाहको महासर्पः शङ्खपालो लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः ककुदः पद्मो महापद्मो दर्भपुष्पो दधिमुखः पुण्डरीको भ्रुकुटीमुखो विष्किरः पुष्पाभिकीर्णो गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अलगर्दो आशीविष इति ॥३३॥

मण्डलिनस्तु आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डल-

श्वित्रमण्डल' पृषतो रोध्रपुष्पो मिलिन्दको गोनसो वृद्ध-गोनस' पनसो महापनसो वेणुपत्रक शिशुको मदन पालिहिर: पिङ्गलस्तन्तुक. पुष्पपाण्डु षड्गोऽग्निको बभ्रु: कषाय कलुष. पारावतो हस्ताभरणश्चित्रक एणीपद इति ॥ ३४॥

राजिमन्तस्तु। पुण्डरीको राजिचित्रोऽङ्गुलराजिविन्दु-राजि कर्दमकस्तृणशोषक. सर्षपक' श्वेतहनुर्दर्भपुष्प-चक्रको गोधूमक किक्किसाद इति ॥३५॥

निर्विषास्तु। गलगोली शूकपत्रोऽजगरो दिव्यको वर्षाहिक पुष्पशकली ज्योतीरथ क्षीरिका पुष्पकोऽहिप-ताकोऽन्धाहिको गौराहिको वृक्षेशय इति ॥३६॥

वैकरञ्जास्तु त्रयाणा दर्वीकरादीनां व्यतिकराज्जाता । तद्यथा। माकुलि पोटगल स्निग्धराजिरिति। तत्र कृष्ण-सर्पेण गोनस्या वैपरीत्येन वा जातो माकुलि । राजिलेन गोनस्या वैपरीत्येन वा जात. पोटगल । कृष्णसर्पेण राजिमत्या वैपरीत्येन वा जात स्निग्धराजिरिति । तेषा-माद्यस्य पितृवद्विषोत्कर्षो द्वयोर्मातृवदित्येके ॥३७॥

त्रयाणा वैकरञ्जाना पुनर्दिव्येलकरोध्रपुष्पकराजिचि त्रका. पोटगल पुष्पाभिकीर्णो दर्भपुष्पो वेल्लितक. सप्त तेषामाद्यास्त्रयो राजिलवत् शेषा मण्डलिवत्। एवमेतेषां सर्पाणामशीतिरिति ॥३८॥

तत्र महानेत्रजिह्वास्यशिरस पुमास सूक्ष्मनेत्रजिह्वास्य-शिरस: स्त्रिय । उभयलक्षणमन्दविषा अक्रोधा नपुसका इति ॥३९॥

तत्र सर्वेषां सर्पाणां सामान्यत एव दृष्टलक्षणं वक्ष्यामः ।

किं कारणं विषं हि निशितनिस्त्रिंशाशनिहुतवहदेश्यमाशुकारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति । न चावकाशोऽस्ति वाक्समूहमनुसर्त्तुम् ॥४०॥

प्रत्येकमपि दृष्टलक्षणेऽभिहिते सर्वत्र त्रैविध्यं भवति । तस्मात् त्रैविध्यमेव वक्ष्यामः । एतच्चातुरहितमसम्मोहकरञ्च । अपि चात्रैव सर्वसर्पव्यञ्जनावरोधः ॥४१॥

तत्र दर्वीकरविषेण त्वङ्नयननखदशनमूत्रपुरीषदंशकृष्णत्वं रौक्ष्यं शिरसो गौरवं सन्धिवेदनाकटीपृष्ठग्रीवादौर्बल्यं जृम्भणं वेपथुः स्वरावसादो घुर्घुरको जडता शुष्कोद्गारः कासश्वासौ हिक्का वायोरूर्द्ध्वंगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेणागमनं स्रोतोऽवरोधस्तास्ताश्च वातवेदना भवन्ति ॥४२॥

मण्डलिविषेण त्वगादीनां पीतत्वं शीताभिलाषः परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरः शोणितागमनमूर्द्ध्वमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति ॥४३॥

राजिमद्विषेण शुक्लत्वं त्वगादीनां शीतज्वरो रोमहर्षः स्तब्धत्वं गात्राणामादंशशोफः सान्द्रकफप्रसेकश्छर्दिरभीक्ष्णमक्ष्णोः कण्डूः कण्ठे श्वयथुर्घुर्घुरक उच्छ्वासनिरोधस्तमःप्रवेशस्तास्ताश्च कफवेदना भवन्ति ॥४४॥

पुरुषाभिदष्ट ऊर्द्ध्वं प्रेक्षतेऽधस्तात् स्त्रिया सिराश्चोत्तिष्ठन्ति ललाटे । नपुंसकाभिदष्टस्तिर्य्यक्प्रेक्षी भवति । गर्भिण्या पाण्डुमुखोध्मातश्च । सूतिकया शूलार्त्तो रुधिरं

मेहत्व, पजिह्विका चास्य भवति। ग्रासार्थिनाव काङ्क्षति। हृद्धेन मन्दावेगास्य। बालेनाशु मृदवश्च निर्विषेणाविष-लिङ्गम्। अन्धाहिकेनान्ध्यत्वमित्येके। ग्रसनादजगरः शरीरप्राणहरो न विषात्। तत्र सद्य प्राणहराहिदष्ट. पतति शस्त्राशनिहत इव भूमौ स्रस्ताङ्ग स्वपिति ॥४५॥

तत्र सर्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति।

तत्र दर्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति। तत् प्रदुष्टं कृष्णतामुपैति, तेन कार्ष्ण्यं पिपीलिकापरिसर्प-णमिव चाङ्गे भवति। द्वितीये मांसं दूषयति। तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति। तृतीये मेदो दूषयति तेन दंशक्लेद. शिरोगौरवं स्वेदश्चक्षुर्ग्रहणञ्च। चतुर्थे कोष्ठमनुप्रविश्य कफप्रधानान् दोषान् दूषयति। तेन तन्द्रा-प्रसेकसन्धिविश्लेषा भवन्ति। पञ्चमेऽस्थीन्यनुप्रविशति प्राणमग्निञ्च दूषयति। तेन पर्वभेदो हिक्का दाहश्च भवति। षष्ठे मज्जानमनुप्रविशति ग्रहणीञ्चात्यर्थं दूषयति। तेन गात्राणां गौरवमतीसारो हृत्पीडा मूर्च्छा च भवति। सप्तमे शुक्रमनुप्रविशति व्यानञ्चात्यर्थं कोपयति कफञ्च सूक्ष्मस्रोतोभ्य. प्रच्यावयति। तेन श्लेष्मवर्त्ति प्रादुर्भाव. कटी-पृष्ठभङ्गश्च सर्वचेष्टाविघातो लालास्वेदयोरतिप्रवृत्तिरुच्छा-सनिरोधश्च भवति ॥४६॥

तत्र मण्डलिना प्रथमे वेगे विषं शोणितं दूषयति। तत् तत्र प्रदुष्टं पीततामुपैति। तत्र परिदाह. पीतावभासता चाङ्गानां भवति। द्वितीये मांसं दूषयति। तेनात्यर्थं पीत-तापरिदाहौ दंशे श्वयथुश्च भवति। तृतीये मेदो दूषयति।

तेन पूर्ववच्चक्षुर्ग्रहणं तृष्णा दन्तक्लेदः स्वेदश्च। चतुर्थे कोष्ठमनुप्रविश्य ज्वरमापादयति। पञ्चमे परिदाहं सर्वगात्रेषु करोति। षष्ठसप्तमयोः पूर्ववत् ॥४७॥

राजिमतां प्रथमे वेगे विषं शोणितं दूषयति। तत् प्रदुष्टं पाण्डुतामुपैति। तेन रोमहर्षः शुक्लावभासश्च पुरुषो भवति। द्वितीये मांसं दूषयति। तेन पाण्डुतात्यर्थं जाड्यं शिरःशोफश्च भवति। तृतीये मेदो दूषयति। तेन चक्षुर्ग्रहणं दन्तक्लेदः स्वेदो घ्राणाक्षिस्रावश्च भवति। चतुर्थे कोष्ठमनुप्रविश्य मन्यास्तम्भं शिरोगौरवं चापादयति। पञ्चमे वाक्सङ्गं शीतज्वरञ्च करोति। षष्ठसप्तमयोः पूर्ववदिति ॥४८॥

भवन्ति चात्र।

धात्वन्तरेषु याः सप्त कलाः सम्परिकीर्त्तिताः।
तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥४९॥
येनान्तरेण हि कलां कालकल्पं भिनत्ति हि।
समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम् ॥५०॥
शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः।
लालास्रावी द्वितीये तु कृष्णाङ्गः पीड्यते हृदि ॥५१॥
तृतीये च शिरोदुःखं कण्ठग्रीवञ्च भज्यते।
चतुर्थे वेपते मूढः खादन् दन्तान् जहात्यसून् ॥५२॥
केचिद्वेगत्रयं प्राहुरन्त्यश्चैतेषु तद्विदः ॥५३॥
ध्यायति प्रथमे वेगे पक्षी मुह्यत्यतः परम्।
द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति ॥५४॥

केचिदेक विहङ्गेषु विषवेगमुशन्ति हि ।
मार्ज्जारनकुलादीना विष नातिप्रवर्त्तते ॥५५॥

---

पञ्चमोऽध्याय ।

अथात सर्पदष्टचिकित्सितकल्प व्याख्यास्याम: ।

सर्वैरेवादित सर्पै. शाखादष्टस्य देहिन. ।
दशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥१॥
प्लोतचर्मान्तवल्कानां मृदुनान्यतमेन च ।
न गच्छति विष देहमरिष्टाभिर्निवारितम् ॥२॥
दहेद् दशमथोत्कृत्य यत्र बन्धो न जायते ।
आचूषणच्छेददाहा सर्वत्रैव तु पूजिता ॥३॥
प्रतिपूर्य मुख वस्त्रैर्हितमाचूषण भवेत् ।
स दष्टव्योऽथवा सर्पो लोष्टो वापि हि तत्क्षणम् ॥४॥
अथ मण्डलिना दष्ट न कथञ्चन दाहयेत् ।
स पित्तविषबाहुल्याद् दशो दाहाद्विसर्पति ॥५॥
अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविद ।
सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता ॥६॥
देवब्रह्मर्षिभि प्रोक्ता मन्त्रा सत्यतपोमया ।
भवन्ति नान्यथा क्षिप्र विष हन्यु सुदुस्तरम् ॥७॥
विष तेजोमयैर्मन्त्रै सत्यब्रह्मतपोमयै ।
यथा निवार्य्यते क्षिप्र प्रयुक्तैर्न तथौषधै ॥८॥
मन्त्राणा ग्रहण कार्य्य स्त्रीमासमधुवर्जिना ।
जिताहारेण शुचिना कुशास्तरणशायिना ॥९॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवता. ।

पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नत ॥१०॥
मन्त्रास्तु विधिना प्रोक्ता हीना वा स्वरवर्णत' ।
यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रम ॥११॥
समन्तत. सिरादंशाद्विध्येत्तु कुशलो भिषक् ।
शाखाग्रे वा ललाटे वा वेध्यास्ता विसृते विषे ॥१२॥
रक्ते निर्ह्रियमाणे तु कृत्स्न निर्ह्रियते विषम् ।
तस्माद्विस्रावयेद्रक्त सा ह्यस्य परमा क्रिया ॥१३॥
समन्तादगदैर्दंश प्रच्छयित्वा प्रलेपयेत् ।
चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥१४॥
पाययेतागदांस्तांस्तान् क्षीरक्षौद्रघृतादिभि ।
तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका ॥१५॥
कोविदारशिरीषार्ककटभीर्वापि भक्षयेत् ।
न पिबेत् तैलकौलत्थमद्यसौवीरकाणि च ॥१६॥
द्रवमन्यत् तु यत्किञ्चित् पीत्वा पीत्वा तदुद्वमेत् ।
प्रायो हि वमनेनैव सुखं निर्ह्रियते विषम् ॥१७॥
फणिना विषवेगे तु प्रथमे शोणित हरेत् ।
द्वितीये मधुसर्पिर्भ्यां पाययेतागद भिषक् ॥१८॥
नस्यकर्माञ्जने युञ्ज्यात् तृतीये विषनाशने ।
वान्त चतुर्थे पूर्वोक्ता यवागूमथ दापयेत् ॥१९॥
शीतोपचार कृत्वादौ भिषक् पञ्चमषष्ठयो ।
दापयेच्छोधन तीक्ष्ण यवागूञ्चापि कीर्त्तिताम् ॥२०॥
सप्तमे त्ववपीडेन सिरस्तीक्ष्णेन शोधयेत् ।
तीक्ष्णमेवाञ्जन दद्यात् तीक्ष्णशस्त्रेण मूर्ध्नि च ॥२१
कुर्य्यात् काकपद चर्म सासृग्वा पिशितं क्षिपेत।

पूर्वं मण्डलिनां वेगे दर्वीकरवदाचरेत् ॥२२॥
अगदं मधुसर्पिर्भ्यां द्वितीये पाययेत च ।
वामयित्वा यवागूञ्च पूर्वोक्तामथ दापयेत् ॥२३॥
तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धिताम् ।
चतुर्थे पञ्चमे वापि दर्वीकरवदाचरेत् ॥२४॥
काकोल्यादिर्हितः षष्ठे पयस्त्र मधुरो गणः ।
हितोऽवपीडे त्वगदः सप्तमे विषनाशनः ॥२५॥
अथ राजिमतां वेगे प्रथमे शोणितं हरेत् ।
अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च ॥२६॥
वान्तं द्वितीये त्वगदं पाययेद्विषनाशनम् ।
तृतीयादिषु त्रिष्वेव विधिर्दर्वीकरो हितः ॥२७॥
षष्ठेऽञ्जनं तीक्ष्णतममवपीडश्च सप्तमे ।
गर्भिणीबालवृद्धानां सिराव्यधविवर्जितम् ॥२८॥
विषार्त्तानां यथोद्दिष्टं विधानं शस्यते मृदु ।
रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके ॥२९॥
गवाश्वयोश्च द्विगुणं त्रिगुणं महिषोष्ट्रयोः ।
चतुर्गुणन्तु नागानां केवलं सर्वपक्षिणाम् ॥३०॥
परिषेकान् प्रदेहांश्च सुशीतानवचारयेत् ।
माषकं त्वञ्जनस्येष्टं द्विगुणं नस्यतो हितम् ।
पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः ॥३१॥
देशप्रकृतिसात्म्यर्त्तुविषवेगबलाबलम् ।
प्रधार्य्य निपुणो बुद्ध्या ततः कर्म समाचरेत् ॥३२॥
वेगानुपूर्व्वमित्येतत् कर्मोक्तं विषनाशनम् ।
कर्मावस्थाविशेषेण विषयोरुभयोः शृणु ॥३३॥

विवर्णे कठिने शूने सरुजेऽङ्गे विषार्दिते ।
तूर्णं विस्रावणं कार्य्यमुक्तेन विधिना ततः ॥३४॥
क्षुधार्त्तमनिलप्राय तद्विषार्त्तं समाहितं ।
पाययेद्दधि तक्रं वा सर्पिः क्षौद्रं तथा रसम् ॥३५॥
तृड्दाहघर्मसम्मोहे पैत्ते पैत्तं विषातुरम् ।
शीतैः सवाहनस्नानप्रदेहैः समुपाचरेत् ॥३६॥
शीतं शीतप्रसेकार्त्तं श्लैष्मिकं कफकृद्विषम् ।
वामयेद्वमनैस्तीक्ष्णैस्तथा मूर्च्छामदान्वितम् ॥३७॥
कोष्ठदाहरुजाध्मानमूत्रसङ्गरुगन्वितम् ।
विरेचयेच्छकृद्वायुसङ्गपित्तातुरं नरम् ॥३८॥
शूनाक्षिकूटं निद्रार्त्तं विवर्णाविललोचनम् ।
विवर्णञ्चापि पश्यन्तमञ्जनैः समुपाचरेत् ॥३९॥
शिरोरुग्गौरवालस्यहनुस्तम्भगलग्रहे ।
शिरो विरेचयेत् क्षिप्रं मन्यास्तम्भे च दारुणे ॥४०॥
नष्टसंज्ञं विवृत्ताक्षं भग्नग्रीवं विरेचनैः ।
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्त्तं समुपाचरेत् ॥४१॥
ताडयेच्च सिराः क्षिप्रं [illegible] शाखाललाटजाः ॥४२॥
तास्वप्रसिच्यमानासु मूर्ध्नि शस्त्रेण शस्त्रवित् ।
कुर्य्यात् काकपदं [illegible] मेव स्रवन्ति ताः ॥४३॥
सरक्तं चर्म मांसं वा [illegible]च्चास्य मूर्ध्नि च ।
चर्मवृक्षकषायं वा चूर्णं [illegible] भिषक् ॥४४॥
वादयेच्चागदैर्लिप्तं दुन्दु[illegible]स्य पार्श्वयोः ।
लब्धसंज्ञं पुनश्चैनमूर्ध्व[illegible]धयेत् ॥४५॥
नि.शेषं नि[illegible]दुल्वयेत् ।

अल्पमप्यवशिष्टं हि भूयो वेगाय कल्पते ॥४६॥
कुर्य्याद्वा सादवैवर्ण्यं ज्वरकासशिरोरुज ।
शोफशोषप्रतिश्यायतिमिरारुचिपीनसान् ॥४७॥
तेषु चापि यथादोष प्रतिकर्म प्रयोजयेत् ।
विषार्त्तोपद्रवांश्चापि यथास्वं समुपाचरेत् ॥४८॥
अथारिष्टां विमुच्याशु प्रच्छयित्वाङ्कित तथा ।
दिह्यात् तत्र विष स्कन्नं भूयो वेगाय कल्पते ।
एव क्रियाक्रमैर्मन्त्रैरौषधोभिश्च यत्नत ॥४९॥
विषे हृतगुणे देहाद् यदा दोष प्रकुप्यति ।
तदा पवनमुद्वृत्त स्नेहाद्यै समुपाचरेत् ॥५०॥
तैलमत्स्यकुलत्थाम्लवर्ज्जैर्मारुतनाशनै ।
पित्तज्वरहरै पित्त कषायै स्नेहवस्तिभि ॥५१॥
कफमारग्वधाद्येन सक्षौद्रेण गणेन तु ।
श्लेष्मघ्नैरगदैश्चापि तिक्तै रूक्षैश्च भोजनै ॥५२॥
वृक्षप्रपातविषमपतित मृतमम्भसि ।
उद्वृत्तच्च मृत सद्यश्चिकित्सेन्नष्टसञ्ज्ञवत् ॥५३॥

गाढ बद्धेऽरिष्टया प्रच्छितेऽपि
तीक्ष्णैर्लेपैस्तद्विधैर्वा विशेषे ।
शूने गात्रे क्लिन्नमत्यर्थपूति
ज्ञेय मास तद्विषात् पूतिकष्टम ॥५४॥
सद्योविद्ध निस्रवेत् कृष्णरक्त
पाक यायाद्दह्यते चाप्यभीक्ष्णम् ।
कृष्णीभूत क्लिन्नमत्यर्थपूति
शीर्णं मास यात्यजस्रं क्षताच्च ॥५५॥

तृष्णा मूर्च्छा भ्रान्तिदाहौ ज्वरश्च
यस्य स्युस्त दिग्धविद्ध व्यवस्येत् ।
पूर्वोद्दिष्ट लक्षण सर्वमेत-
ज्जुष्ट यस्मात्त विशेष व्रणा स्यु ॥५६ ॥
लतादष्टा दिग्धविद्धा विषैर्वा
जुष्टा ये स्युर्व्रणा पूतिमासा ।
तेषा युक्त्या पूतिमासान्यपोह्य
वार्य्यौकोभि शोणित चापहृत्य ॥५७॥
हृत्वा दोषान् चिप्रमूर्द्ध्वन्त्वधश्च
सम्यक् सिञ्चेत् चीरिणा त्वक्कषाये ।
अन्तर्वस्त्र दापयेच्च प्रदेहान्
शीतैर्द्रव्यैराज्ययुक्तैर्विषघ्नै. ॥५८॥
भिन्नेऽस्मा वै दुष्टजातन कार्य्य.
पूर्वो मार्गं पैत्तिके यो विषे च ।
लिहद्दिगन्धे मधुक हरिद्रे
रक्ता नरेन्द्री लवणश्च वर्ग. ॥५९॥
कटुत्रिक चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसयुतानि ।
एषोऽगदो हन्ति विष प्रयुक्त:
पानाञ्जनाभ्यञ्जननस्ययोगै: ॥६०॥
अवार्य्यवीर्य्यो विषवेगहन्ता
महागदो नाम महाप्रभाव: ।
विडङ्गपाठातिफलाजमोदा-
हिङ्गूनि वक्र त्रिकटूनि चैव ॥६१॥

सर्वश्च वर्गो लवणश्च सूक्ष्मः
सचित्रकः क्षौद्रयुतो निधेयः।
शृङ्गे गवां शृङ्गमयेन चैव
प्रच्छादितः पक्षमुपेक्षितश्च ॥६२॥
एषोऽगदः स्थावरजङ्गमानां
जेता विषाणामजितो हि नाम्ना।
प्रपौण्डरीकं सुरदारुमुस्ता
कालानुसार्य्या कटुरोहिणी च ॥६३॥

स्थौणेयकं ध्यामकपद्मकानि पुन्नागतालीशसुवर्चिका च।
कुटन्नटैलासितसिन्धुवाराः शैलेयकुष्ठं तगरं प्रियङ्गु ॥६४॥
रोध्रं जलं काञ्चनगैरिकञ्च समागधञ्चन्दनसैन्धवञ्च।
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसंयुतानि ॥६५॥
एषोऽगदस्तार्क्ष्य इति प्रदिष्टो विषं निहन्यादपि तक्षकस्य।
मांसीहरेणुत्रिफलामुरङ्गीरक्तालतायष्टिकपद्मकानि ॥६६॥
विडङ्गतालीशसुगन्धिकैलात्वक्कुष्ठपत्राणि सचन्दनानि।
भार्गी पटोलं किणिही सपाठा मृगादनी कर्कटिका पुरश्च ॥६७॥
पालिन्द्यशोकौ क्रमुकं सुरस्या प्रसूनमारुष्करजञ्च पुष्पम्।
चूर्णान्यथैषां निहितानि शृङ्गे न्यसेच्च पित्तानि समाक्षिकाणि ॥६८॥
वराहगोधाशिखिशल्लकीनां मार्जारजं पार्षतनाकुले च।
यस्यागदोऽयं सुकृतो गृहे स्यान्नाम्नर्षभो नाम नरर्षभस्य ॥६९॥

न तत्र सर्पा कुत एव कीटा
त्यजन्ति वीर्य्याणि विषाणि चैव ।
एतेन मेर्य्य पटहाश्च दिग्धा
नानद्यमाना विषमाशु हन्यु ॥७०॥
दिग्धा पताकाश्च निरीक्ष्य सद्यो
विषाभिभूता ह्यविषा भवन्ति ।
लाक्षाहरेणुर्नलद प्रियङ्गु
शिग्रुद्दय यष्टिकपृथ्विकाश्च ॥७१॥
चूर्णीकृतोऽय रजनीविमिश्रो
वर्गो निधेयो मधुसर्पिषाक्त ।
शृङ्गे गवा पूर्ववदापिधान-
स्तत प्रयोज्योऽञ्जननस्यपानै ॥७२॥
सञ्जीवनो नाम गतासुकल्प-
मेषोऽगदो जीवयतीह मर्त्यम् ।
श्लेष्मातकी कट्फलमातुलुङ्ग
श्वेता गिरिह्वा किणिही सिता च ॥७३॥
सतण्डुलीयोऽगद एष मुख्यो
विषेषु दर्वीकरराजिलानाम् ।
द्राक्षासुगन्धानगवृत्तिका च
पिष्टा समङ्गा समभागयुक्ता ॥७४॥
देयो द्विभाग सुरसाच्छदस्य
कपित्थविल्वादपि दाडिमाच्च ।
तथार्द्धभागोऽसितसिन्धुवारा-
दङ्कोठमूलादपि गैरिकाच्च ॥७५॥

एषोऽगद क्षौद्रयुतो निहन्ति
विशेषतो मण्डलिना विषाणि ॥७६॥
वंशत्वगार्द्रामलक कपित्थं
कटुत्रिक हैमवती सकुष्ठा ।
करञ्जवीज तगर शिरीष-
पुष्पञ्च गोपित्तयुत निहन्ति ॥७७॥
विषाणि लूतोन्दुरुपन्नगाना
कीटञ्च लेपाञ्जननस्ययोगै ।
पुरीषमूत्रानिलगर्भसङ्गान्
निहन्ति वर्त्त्यञ्जननाभिलेपै ॥७८॥
काचार्मकोथान् पटलाञ्च घोरान्
पुष्पञ्च हन्त्यञ्जननस्ययोगै ॥७९॥
समूलपुष्पाङ्कुरवल्कवीजान्
क्वाथ शिरीषात् त्रिकटुप्रगाढ ।
सलावण क्षौद्रयुतोऽथ पीतो
विशेषत कीटविष निहन्ति ॥८०॥

कुष्ठ त्रिकटुक दार्वीमधूकलवणद्वयम् ।
मालतीनागपुष्पञ्च सर्वाणि मधुराणि च ॥८१॥
कपित्थरसपिष्टोऽय शकराक्षौद्रसयुत ।
विषं हन्त्यगद सर्व मूषिकाणा विशेषत ॥८२॥
सोमराजीफल पुष्प कटभी सिन्धुवारक: ।
चोरको वरुण कुष्ठ सर्पगन्धा ससप्तला ॥८३॥
पुनर्नवा शिरीषस्य पुष्पमारग्वधार्कजम् ।
श्यामाम्बष्ठा विडङ्गानि तथाम्राश्मन्तकानि च ॥८४॥

भूमौ कुरवकश्चैव गणः एकसरः स्मृतः ।
एकशो द्विश्चिशो वापि प्रयोक्तव्यो विषापहः ॥८५॥

---

## षष्ठोऽध्यायः ।

अथातो मूषिककल्पं व्याख्यास्यामः ।

पूर्वमुक्ता शुक्रविषा मूषिका ये समासतः ।
नामलक्षणभैषज्यैरष्टादश निबोध तान् ॥१॥
लालनः पुत्रकः कृष्णो हंसिरश्चिक्किरस्तथा ।
छुच्छून्दरोऽलसश्चैव कषायदशनोऽपि च ॥२॥
कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ।
कोकिलोऽरुणसञ्ज्ञश्च महाकृष्णस्तथोन्दुरः ॥३॥
श्वेतेन महता सार्द्धं कपिलेनाखुना तथा ।
मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥४॥
शुक्रं पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा ।
नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति ॥५॥
जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ।
पीडकोपचयश्चोग्रा विसर्पाः किटिभानि च ॥६॥
पर्वभेदो रुजस्तीव्रा ज्वरो मूर्च्छा च दारुणा ।
दौर्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् ॥७॥
दष्टरूपं समासोक्तमेतच्च व्यासतः शृणु ।
लालास्रावो लालनेन हिक्का छर्दिश्च जायते ॥८॥
तण्डुलीयककल्कन्तु लिह्यात्तत्र समाक्षिकम् ।
पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च जायते ॥९॥
चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभः ।

शिरीषेङ्गुदकल्कन्तु लिह्यात् तत्र समाचिकम् ॥१०॥
कृष्णेनास्रक् छर्दयति दुर्दिनेषु विशेषतः ।
शिरीषफलकुष्ठन्तु पिबेत् किंशुकभस्मना ॥११॥
हरिणेनाभिविद्धे ऽथो जृम्भा लोमाञ्चहर्षणम् ।
पिबेदारग्वधादिन्तु सुवान्तस्तत्र मानवः ॥१२॥
चिक्किरेण शिरोदुःख शोफो हिक्का वमी तथा ।
जालिनीमदनाङ्कोठकषायैर्वामयेत् तु तम् ॥१३॥
छुच्छुन्दरेन तट् छर्दिर्ज्वरो दौर्बल्यमेव च ।
ग्रीवास्तम्भ. पृष्ठशोफो गन्धाज्ञान विसूचिका ॥१४॥
चव्यं हरीतकी शुण्ठी विडङ्ग पिप्पली मधु ।
श्वेतकाबीज चारम्च वृहत्याश्चात्र दापयेत् ॥१५॥
ग्रीवास्तम्भोऽलसेनोर्ध्वं वायुर्दंशे रुजा ज्वरः ।
महागदं ससर्पिष्कं लिह्यात् तत्र समाचिकम् ॥१६॥
निद्रा कषायदन्तेन हृच्छोष कार्श्यमेव च ।
क्षौद्रोपेता शिरीषस्य लिह्यात् सारफलत्वचः ॥१७॥
कुलिङ्गेन रुजः शोफो राज्यश्च दंशमण्डले ।
सत्वे ससिन्धुवारे च लिह्यात् तत्र समाचिके ॥१८॥
अजितेन वमी मूर्च्छा हृद्ग्रहः कृष्णनेत्रता ।
तत्र स्नुहीक्षीरपिष्टां पालिन्दीं मधुना लिहेत् ॥१९॥
चपलेन भवेच्छर्दिर्मूर्च्छा च सह तृष्णया ।
सभद्रकाष्ठां सजटां क्षौद्रेण त्रिफलां लिहेत् ॥२०॥
कपिलेन व्रणे कोथो ज्वरो ग्रन्थ्युद्गमस्तथा ।
लिह्यान्मधुयुताश्वेतां श्वेतां चापि पुनर्नवाम् ॥२१॥
ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः ।

वर्षाभूनीलिनीक्वाथसिद्ध तत्र घृतं पिबेत् ॥२२॥
अरुणेनानिल. क्रुद्धो वातजान् कुरुते गदान् ।
महाकृष्णेन पित्तञ्च श्वेतेन कफ एव च ॥२३॥
महता कपिलेनासृक् कपोतेन चतुष्टयम् ।
भवन्ति चैषा दृष्टेषु ग्रन्थिमण्डलकर्णिका. ॥२४॥
पिडकोपचयाश्चोग्रा शोफश्च भृशदारुण' ।
दधिक्षीरघृतप्रस्थास्त्रय प्रत्येकशो मता ॥२५॥
करञ्जारग्वधश्योषबृहत्यश्मतीस्थिरा ।
नि क्वाथ्य चैषा क्वाथस्य चतुर्थांश पुनर्भवेत् ॥२६॥
त्रिवृत्तिलास्तताक्रसर्वगन्धा समृत्तिका ।
कपित्थदाडिमत्वक् च सुपिष्टानि तु दापयेत् ॥२७॥
तत् सर्वमेकत कृत्वा शनैर्मृद्वग्निना पचेत् ।
षद्घानामरुणादीना विषमेतद् व्यपोहति ॥२८॥
काकादनीकाकमाचीस्वरसेष्वथवा कृतम् ।
सिराश्च स्रावयेत् प्राज्ञ कुर्य्यात् सशोधनानि च ॥२९॥
सर्वेषाञ्च विधि कार्य्यो मूषिकाणा विषेष्वयम् ।
दग्धा विस्रावयेद् दश प्रच्छितञ्च प्रलेपयेत् ॥३०॥
शिरीषरजनीकुष्ठकुङ्कुमैरमृतायुतै. ।
छर्दन जालिनीक्वाथै: शुकाख्याङ्कोठयोरपि ॥३१॥
शुकाख्याकोषवत्योश्च मूल मदन एव च ।
देवदालीफलञ्चैव दध्ना पीत्वा विष वमेत् ॥३२॥
फलं वचा देवदाली कुष्ठं गोमूत्रपेषितम् ।
पूर्वकल्पेन योज्या स्यु सर्वोन्दुरुविषच्छिदि ॥३३॥
विरेचने त्रिवृद्दन्ती त्रिफला वस्क इष्यते ।

शिरोविरेचने सारं शिरीषफलमेव च ॥३४॥
कटुत्रिकाद्यश्च हितो गोमूत्रस्वरसोऽञ्जने।
कपित्थगोमयरसः सक्षौद्रो लेह इष्यते ॥३५॥
रसाञ्जनहरिद्रेन्द्रयवकटीषु वा कृतम्।
कल्कं सातिविषं प्रातर्लिह्याच्च क्षौद्रसंयुतम् ॥३६॥
तण्डुलीयकमूलेषु सर्पिः सिद्धं पिबेन्नरः।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥३७॥
मूषिकाणां विषं प्रायः कुप्यत्यभ्रेषु निर्हृतम्।
तत्राप्येष विधिः कार्य्यो यश्च दूषीविषापहः ॥३८॥
स्थिराणां रुजतां वापि व्रणानां कर्णिकां भिषक्।
पाटयित्वा यथादोषं व्रणवच्चापि शोधयेत् ॥३९॥
शृगालश्वतरक्ष्वृक्षव्याघ्रादीनां यदानिलः।
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥४०॥
तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान्।
अत्यर्थवधिरोऽन्धश्च सोऽन्योन्यमभिधावति ॥४१॥
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु।
सुप्तता जायते दंशे कृष्णञ्चातिस्रवत्यसृक् ॥४२॥
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः।
येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ॥४३॥
बहुशः प्रतिकुर्वाणः क्रियाहीनो विनश्यति ॥४४॥
दंष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति।
अप्सु वा यदि वादर्शे रिष्टं तस्य विनिर्दिशेत् ॥४५॥
त्रस्यत्यकस्माद् योऽभीक्ष्णं श्रुत्वा दृष्ट्वापि वा जलम्।
जलत्रासन्तु विद्यात्तं रिष्टं तमपि कीर्त्तितम् ॥४६॥

अदृष्टो वा जलत्रासी न कथञ्चन सिध्यति ।
प्रसुप्तोऽथोत्थितो वापि स्वस्थस्त्रस्तो न सिध्यति ॥४७॥
विस्राव्य दंशं तैर्दष्टे सर्पिषा परिदाहितम्
प्रदिह्यादगदै सर्पि. पुराणं वापि पाययेत् ॥४८॥
अर्कक्षीरयुतञ्चास्य दद्याच्छीर्षविरेचनम् ।
श्वेता पुनर्नवाञ्चास्य दद्याद्धुत्तूरकायुताम् ॥४९॥
पलल तिलतैलञ्च रूपिकाया पयो गुडः ।
निहन्ति विषमालर्कं मेघवृन्दमिवानिल ॥५०॥
मूलस्य शरपुङ्खायाः कर्षं धुस्तूरकार्द्धकम ।
तण्डुलोदकमादाय पेषयेत्तण्डुलै. सह ॥५१॥
उन्मत्तकस्य पत्रैस्तु सवेष्टापूपकं पचेत् ।
खादेद्दौषधकाले तदलर्कविषदूषित. ॥५२॥
करोत्यन्यान् विकारांस्तु तस्मिन् जीर्य्यति चौषधे ।
विकाराः शिशिरे याप्या गृहे वारिविवर्जिते ॥५३॥
ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि ।
शालिषष्टिकयोर्भक्तं क्षीरेणोष्णेन भोजयेत् ॥५४॥
दिनत्रये पञ्चमे वा विधिरेषोऽर्द्धमात्रया ।
कर्त्तव्यो भिषजावश्यमलर्कविषनाशन. ॥५५॥
कुप्येत् स्वय विष यस्य न स जीवति मानवः ।
तस्मात् प्रकोपयेदाशु स्वयं यावन्न कुप्यति ॥५६॥
बीजरत्नौषधीगर्भैं कुम्भै. शीताम्बुपूरितैः ।
स्नापयेत्तं नदीतीरे समन्त्रैर्वा चतुष्पथे ॥५७॥
बलिं निवेद्य तत्रापि पिण्याकपललं दधि ।
माल्यानि च विचित्राणि मास पक्वामक तथा ॥५८॥

अलकाधिपते यक्ष सारमेयगणाधिप ।
अलर्कजुष्टमेतन्मे निर्विषं कुरु माचिरात् ॥५९॥
दद्यात् संशोधनं तीक्ष्णमेव स्नातस्य देहिनः ।
अशुद्धस्य सुरूढेऽपि व्रणे कुप्यति तद्विषम् ॥६०॥
श्वादयोऽभिहिता व्याला वातपित्तप्रकोपणाः ।
अत करोति दष्टस्तु तेषां चेष्टा रुत नरः ॥६१॥
बहुशः प्रतिकुर्वाणो न चिरान्म्रियते च सः ॥६२॥
नखदन्तक्षतं व्यालैर्यत् क्षत तद्विमर्दयेत् ।
सिञ्चेत्तैलेन कोष्णेन ते हि वातप्रकोपजाः ॥६३॥

---

सप्तमोऽध्यायः ।

अथातो दुन्दुभिस्वनीयमध्यायं व्याख्यास्यामः ।

धवाश्वकर्णतिनिशपलाशपिचुमर्दपाटलि-पारिभद्रका-म्रोडुम्बर-करहाटकार्जुनककुभसर्जकपीतनश्लेष्मातकाङ्कोठा-मलकप्रग्रहकुटजशमीकपित्थाश्मन्तकार्कचिरविल्वमहावृक्षा-रुष्करारलुमधुकमधुशिग्रु-शाकगोजीमूर्वातिल्वकेक्षुरकगोप-घण्डारिभेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेद्दद्याच्चात्र पिप्पलीमूलतण्डुलीयकवराङ्ग-चोचकमञ्जिष्ठाकरञ्जिका-हस्तिपिप्पलीमरिचोत्पलसारिवा-विडङ्ग-गृहधूमानन्तासोम सरलावाह्लीक-गुहाकोशाम्रश्वे-तसर्षप-वरुण लवणप्लक्षनिचुलक-वर्द्धमानवञ्जुल-पुत्रश्रेणी-सप्तपर्णटुण्टुकैलवालुकनागदन्त्यतिविषाभया भद्रदारुकुष्ठह-रिद्रावचाचूर्णानि लोहानाञ्च समभागानि ततः क्षारवदा-गतपाकमवतार्य्य लोहकुम्भे निदध्यात् ॥१॥

अनेन दुन्दुभि लिम्पेत् पताकातोरणानि च।
श्रवणाद्दर्शनात् स्पर्शात् विषात् सम्प्रतिमुच्यते ॥२॥
एष क्षारागदो नाम शर्कराश्मरीषु च।
अर्शःसु वातगुल्मेषु कासशूलोदरेषु च ॥३॥
अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे।
शोफे सर्वसरे चापि देय श्वासे च दारुणे ॥४॥
एष सर्वविषार्त्तानां सर्वथैवोपयुज्यते।
तथा तक्षकमुख्यानामय दर्पाङ्गशोऽगदः ॥५॥
विडङ्गत्रिफलादन्तीभद्रदारुहरेणव।
तालीशपत्रमञ्जिष्ठा केशरोत्पलपद्मकम् ॥६॥
दाडिमं मालतीपुष्पं रजन्यौ सारिवे स्थिरे।
प्रियङ्गुस्तगरं कुष्ठं बृहत्यौ चैलवालुकम् ॥७॥
सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहम्।
सर्पिः कल्याणकं ह्येतद् ग्रहापस्मारनाशनम् ॥८॥
पाण्ड्वामयगरश्वासमन्दाग्निज्वरकासनुत्।
शोषिणां स्वल्पशुक्राणां बन्ध्यानाञ्च प्रशस्यते ॥९॥
अपामार्गस्य वीजानि शिरीषस्य तथैव च।
श्वेते द्वे काकमाचीञ्च गवां मूत्रेण पेषयेत् ॥१०॥
सर्पिरेतैस्तु ससिद्धं विषसंशमनं परम्।
अमृतं नाम विख्यातमपि सञ्जीवयेन्मृतम् ॥११॥
चन्दनागुरुणी कुष्ठं तगरं तिलपर्णिकम्।
प्रपौण्डरीकं नलदं सरलं देवदारु च ॥१२॥
भद्रश्रियं यवफलां भार्गीं नीलीं सुगन्धिकाम्।
कालेयकं पद्मकञ्च मधुकं नागरं जटाम् ॥१३॥

पुन्नागैलैलवालूनि गैरिक ध्यामक बलाम्।
तोय सर्जरस मांसीं सितपुष्पा हरेणुकाम॥१४॥
तालीशपत्र चुद्रैला प्रियङ्गु सकुटन्नटम्।
शैलपुष्पं सशैलेय पत्र कालानुसारिवाम्॥१५॥
कटुत्रिक शीतशिव काश्मर्य्य कटुरोहिणीम।
सोमराजीमतिविषा पृथ्विकामिन्द्रवारुणीम॥१६॥
उशीर वरुण मुस्त नख कुसुम्बुरं तथा।
श्वेते हरिद्रे स्थौणेय लाचाञ्च लवणानि च॥१७॥
कुमुदोत्पलपद्मानि पुष्पञ्चापि तथार्कजम्।
चम्पकाशोकसुमनस्तिलकप्रसवानि च॥१८॥
पाटलीशाल्मलीशेलुशिरीषाणां तथैव च।
सुरस्यास्तृणशून्याश्च सिन्धुवारस्य यानि च॥१९॥
धवाश्वकर्णयोश्चापि पुष्पाणि तिनिशस्य च।
गुग्गुलु कुङ्कुम बिम्बी सर्पाची गन्धनाकुलीम॥२०॥
एतत् सम्भृत्य सम्भार सूक्ष्मचूर्णानि कारयेत्।
गोपित्तमधुसर्पिर्भिर्युक्तं शृङ्गे निधापयेत्॥२१॥
भग्नस्कन्ध विवृत्ताक्ष मृत्योर्दंष्ट्रान्तर गतम्।
अनेनागदमुख्येन मनुष्य पुनराहरेत्॥२२॥
एषोऽग्निकल्प दुर्वार क्रुद्धस्यामिततेजस।
विष नागपतेर्हन्यात् प्रसभ वासुकेरपि॥२३॥
महासुगन्धिनामाय पञ्चाशीत्यङ्गयोजित।
राजा मदाना सर्वेषां राज्ञो हस्ते भवेत् सदा॥२४॥
तेनानुलिप्तस्तु नृपो भवेत् सर्वजनप्रिय।
भ्राजिष्णुताञ्च लभते शक्रमध्यगतोऽपि सन्॥२५॥

उष्णवर्ज्यो विधिः कार्य्यो विषार्त्तानां विजानता।
मुक्त्वा कीटविषं तद्धि शीतेनाभिप्रवर्द्धते ॥२६॥
अन्नपानविधावुक्तमुपधार्य्य शुभाशुभम्।
शुभं देयं विषार्त्तेभ्यो विरुद्धेभ्यश्च वारयेत् ॥२७॥
फाणितं शिग्रुसौवीरमजीर्णाध्यशनं तथा।
वर्जयेच्च समासेन नवधान्यादिकं गणम् ॥२८॥
दिवास्वप्नं व्यवायञ्च व्यायामं क्रोधमातपम्।
सुरातिलकुलत्थांश्च वर्जयेद्धि विषातुरः ॥२९॥
प्रसन्नदोषं प्रकृतिस्थधातु
मन्नाभिकाङ्क्षं सममूत्रजिह्मम्।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥३०॥

---

## अष्टमोऽध्यायः।

अथातः कीटकल्पं व्याख्यास्यामः।
सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः।
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥१॥
सर्वदोषप्रकृतिभिर्युक्तास्ते परिणामतः।
कीटत्वेऽपि सुघोराः स्युः सर्व एव चतुर्विधाः ॥२॥
कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः।
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका ॥३॥
आवर्त्तकस्तथोरभ्रसारिकामुखवैदली।
शरावकुर्दोऽभीराजी परुषश्चित्रशीर्षकः ॥४॥
शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः

अष्टादशेति वायव्याः कीटाः पवनकोपनाः ॥५॥
तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः।
कौण्डिल्यकः कणभको वरटी पत्रवृश्चिकः ॥६॥
विनासिका ब्रह्मणिका विन्दुलो भ्रमरस्तथा।
वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः ॥७॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ॥८॥
क्लीतः क्रमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः।
एते ह्यग्निप्रकृतयश्चतुर्विंशतिरेव च ॥९॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः।
विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः ॥१०॥
सैरेयकः प्रचलको वलभः किटिभस्तथा।
सूचीमुखः कृष्णगोधा यश्च काषायवासिकः ॥११॥
कीटगर्द्दभकश्चैव तथा त्रोटक एव च।
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः ॥१२॥
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः।
तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ॥१३॥
कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः।
तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा ॥१४॥
अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः।
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ॥१५॥
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः।
क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ॥१६॥
ज्वराङ्गमर्द्दरोमाञ्चवेदनाभिः समन्वितः।

छर्द्यतीसारतृष्णा च दाहो मोहविजृम्भिका ॥१७॥
वेपथुश्वासहिक्काश्च दाहः शीतञ्च दारुणम् ।
पिडकोपचयः शोफो ग्रन्थयो मण्डलानि च ॥१८॥
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ।
तैर्भवन्तीह दष्टानां यथास्वञ्चाप्युपद्रवाः ॥१९॥
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत् ।
दूषीविषप्रकोपाच्च तथैव विषलेपनात् ॥२०॥
लिङ्गं तीक्ष्णविषेष्वेतच्छृणु मन्दविषेष्वतः ।
प्रसेकोऽरोचकश्छर्दिः शिरोगौरवशीतता ॥२१॥
पिडकाकोठकण्डूनां जन्म दोषविभागतः ।
योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत् ॥२२॥
दूषीविषप्रकाराणां तथैवाप्यनुलेपनात् ।
एकजातीनतस्तूर्द्ध्वं कीटान् वक्ष्यामि भेदतः ॥२३॥
सामान्यतो दृष्टलिङ्गैः साध्यासाध्यक्रमेण च ।
त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः ।
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ॥२४॥
तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां दंशः कृष्णश्च भवति ॥२५॥
प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः ।
तथा निरूपमश्चापि पञ्च गौधेरकाः स्मृताः ॥२६॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ।
रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः ॥२७॥

गलगोली श्वेतकृष्णा रक्तराजी रक्तमण्डला सर्वश्वेता सर्षपिकेत्येवं षट् । ताभिर्दष्टे सर्षपिकावर्जं दाहशोफ-

क्लेदा भवन्ति। सर्षपिकया हृदयपीडातिसारश्च ॥२८॥

ग्रतपद्यस्तु पदषा कृष्णा चित्रा कपिलिका पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ। ताभिर्दष्टे शोफो वेदना दाहश्च हृदये। श्वेताग्निप्रभाभ्यामेतदेव दाहो मूर्च्छा चातिमात्र श्वेतपिडकोत्पत्तिश्च ॥२९॥

मण्डूका. कृष्ण सार कुहको हरितो रक्तो यववर्णाभो भ्रुकुटी कोटिकश्चेत्यष्टौ। तैर्दष्टस्य दंशकण्डू भवति। पीतफेनागमश्च वक्त्रात्। भ्रुकुटीकोटिकाभ्यामेतदेव दाहश्छर्दिर्मूर्च्छा चातिमात्रम ॥३०॥

विश्वम्भराभिदष्टे दंश सर्षपाकाराभि. पिडकाभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति ॥३१॥

अहिण्डुकाभिर्दष्टे तोददाहकण्डुश्वयथवो मोहश्च। कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते। शूकवृन्तादिभिर्दष्टे कण्डूकोठाः प्रवर्द्धन्ते शूकश्चात्र लक्ष्यते ॥३२॥

पिपीलिकाः स्थूलशीर्षा सम्वाहिका ब्राह्मणिकाङ्गुलिका कपिलिका चित्रवर्णेति षट्। ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवत ॥३३॥

मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिकेत्येव षट्। ताभिर्दष्टस्य दाहशोफौ भवत.। स्थालिकाकाषायीभ्यामेतदेव पिडकाश्च सोपद्रवा भवन्ति ॥३४॥

मशका. सामुद्रः परिमण्डलो हस्तिमशकः कृष्णः पार्वतीय इति पञ्च। तैर्दष्टस्य तीव्रकण्डूर्दंशशोफश्च। पार्वती-

यस्तु कीटैः प्राहणरैस्तुल्यलक्षणः। नखावकृष्टेऽत्यर्थं पिडकाः सदाहपाका भवन्ति। जलौकसा दृष्टलक्षणमुक्तं चिकित्सितञ्च ॥३५॥

भवन्ति चात्र।

गोधेरक स्थालिका च ये च श्वेताग्निसप्रभे।
भ्रुकुटीकोटिकश्चैव न सिध्यन्त्यैकजातिषु ॥३६॥
अवमूत्रपुरीषैस्तु सविषैरवमर्षणात्।
स्युः कण्डूदाहकोठाश्च पिडकातोदवेदनाः ॥३७॥
प्रक्लेदवास्तथास्रावो भृशं सम्पाचयेत् त्वचम्।
दिग्धविद्धक्रियास्तत्र यथावदवचारयेत् ॥३८॥
नात्यल्पं न चोत्सन्नमतिसंरम्भवेदनम्।
दृष्टादौ विपरीतार्त्तिं कीटदष्टं सुबाधकम् ॥३९॥
कीटैर्दंष्टानुग्रविषैः सर्पवत् समुपाचरेत्।
विविधानान्तु सर्पाणां त्वविश्ये न क्रिया हिता ॥४०॥
स्वेदमालेपनं सेकं चोष्णमत्रावचारयेत्।
अन्यत्र मूर्च्छिताद्दृशात् पाककोथप्रपीड़ितात् ॥४१॥
विषघ्नञ्च विधिं सर्वं कुर्य्यात्संशोधनानि च।
शिरीषकटुकं कुष्ठं वचा रजनिसैन्धवे ॥४२॥
क्षीरमज्जवसासर्पिः शुण्ठीपिप्पलिदारुषु।
उत्कारिका स्थिरादौ वा सुकृता स्वेदने हिता ॥४३॥
न स्वेदयेत् तथा दृश धूमं वक्ष्यामि वृश्चिके।
अगदानेकजातीषु प्रवक्ष्यामि पृथक् पृथक् ॥४४॥
कुष्ठं वक्रं वचा बिल्वमूलं पाठा सुवर्च्चिका।
गृहधूमं हरिद्रे द्वे तिलदष्टविषे हिता ॥४५॥

अगारधूमरजनीवक्र कुष्ठं पलाशजम् ।
गलगोलिकदष्टानामगदो विषनाशन ॥४६॥
कुङ्कुम तगर शिग्रु पद्मक रजनीद्वयम ।
अगदो जलपिष्टोऽय शतपद्विषनाशन. ॥४७॥
मेषशृङ्गी वचा पाठा निचुलो रोहिणी जलम् ।
सर्वमण्डूकदष्टानामगदो विषनाशन ॥४८॥
वचाश्वगन्धातिबलाबलासातिगुहागुहा ।
विश्वम्भराभिदष्टानामगदो विषनाशन ॥४९॥
शिरीष तगरं कुष्ठ हरिद्रे शुमती सह ।
अहिण्डुकाभिदंष्टानामगदो विषनाशन ॥५०॥
कण्डूमकाभिदंष्टाना रात्रौ शीता क्रिया हिता. ।
दिवा ते नैव सिध्यन्ति सूर्य्यरश्मिबलार्दिता ॥५१॥
वक्र कुष्ठमपामार्ग. शूकवृन्तविषेऽगद ।
भृङ्गस्वरसपिष्टा वा कृष्णवल्मीकमृत्तिका ॥५२॥
पिपीलिकाभिदंष्टाना मक्षिकामशकैस्तथा ।
गोमूत्रेण युतो लेप: कृष्णवल्मीकमृत्तिका ॥५३॥
प्रतिसूर्य्यकदष्टानां सर्पदष्टवदाचरेत् ।
त्रिविधा वृश्चिका: प्रोक्ता मन्दमध्यमहाविषा: ॥५४॥
गोशकृत्कोथजा मन्दा मध्या काष्ठेष्टिकोद्भवा ।
सर्पकोथोद्भवास्तीव्रा ये चान्ये विषसम्भवा. ॥५५॥
मन्दा द्वादश मध्यास्तु त्रय. पञ्चदशोत्तमा ।
दशविंशतिरित्येते सङ्ख्यया परिकीर्त्तिता. ॥५६॥

कृष्ण: श्याव कर्वुर. पाण्डुवर्णो
गोमूत्राभ: कर्कशो मेचकश्च ।

श्वेतो रक्तो रोमशः शाद्वलाभो
रक्तश्चैते मन्दवीर्या मतास्तु ॥५७॥
एभिर्दष्टे वेदना वेपथुश्च
गात्रस्तम्भः कृष्णरक्तागमश्च ।
शाखादष्टे वेदना चोर्द्ध्वमेति
दाहस्वेदौ कण्ठशोषो ज्वरश्च ॥५८॥
रक्तः पीतः कापिलेनोदरेण
सर्वे धूम्राः पर्वभिश्च त्रिभिः स्युः ।
एते मूत्रोच्चारपूत्यण्डजाताः
मध्या ज्ञेयास्त्रिप्रकारोरगाणाम् ॥५९॥
यस्त्वेतेषामन्वयाच्च प्रसूतो
दोषोत्पत्तिं तत्स्वरूपाच्च कुर्यात् ।
जिह्वाशोफो भोजनस्यावरोधो
मूर्च्छा चोग्रा मध्यवीर्याभिदष्टे ॥६०॥
श्वेतश्चित्रः श्यामलो लोहिताभो
रक्तः श्वेतो रक्तनीलोदरौ च ।
पीतो रक्तो नीलपीतोऽपरस्तु
रक्तो नीलो नीलशुक्लस्तथा च ॥६१॥
रक्तो बभ्रुः पूर्ववच्चैकपर्वा
यश्चापर्वा पर्वणी द्वे च यस्य ।
नानारूपा वर्णतश्चापि घोरा
ज्ञेयास्त्वेते वृश्चिकाः प्राणचौराः ॥६२॥
जन्मैतेषां [illegible]काथात् प्रदिष्टं
देहेभ्यो [illegible]नाना विषेण ।

एभिर्दष्टे सर्पवेगप्रवृत्ति

स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च ॥६३॥

खेभ्य कृष्ण शोणितञ्चापि तीव्र

तस्मात प्राणैस्त्यज्यते शीघ्रमेव ॥६४॥

उग्रमध्यविषैर्दष्टं चिकित्सेत् सर्पदष्टवत् ।

दंश मन्दविषाणान्तु चक्रतैलेन सेचयेत् ॥६५॥

विदार्य्यादिगणसिद्धेन सुखोष्णेनाथवा पुन ।

कुर्य्याच्चोत्कारिकास्वेद विषघ्नैरुपनाहनै ॥६६॥

आदंश स्वेदित चूर्णै प्रच्छित प्रतिसारयेत् ।

रजनीसैन्धवव्योषशिरीषफलपुष्पजै ॥६७॥

मातुलुङ्गाम्लगोमूत्रपिष्टञ्च सुरसाग्रजम ।

लेपे स्वेदे सुखोष्णञ्च गोमय हितमिष्यते ॥६८॥

पाने क्षौद्रयुत सर्पि क्षीर वा बहुशर्करम ।

गुडोदक वा सुहिम चातुर्जातकवासितम् ॥६९॥

पानमस्मै प्रदातव्य क्षीर वा सगुड हिमम् ।

शिखिकुक्कुटबर्हाणि सैन्धव तैलसर्पिषी ॥७०॥

धूपो हन्ति प्रयुक्तोऽय शीघ्रं वृश्चिकद विषम् ।

कुसुम्भपुष्प रजनी निशा वा कोद्रव तृणम् ॥७१॥

एभिर्घृताक्तैर्धूपस्तु पायुदेशे प्रयोजित ।

नाशयेदाशु कीटोत्थ वृश्चिकस्य च यद्विषम् ॥७२॥

लूताविष घोरतम दुर्विज्ञेयतमन्तु तत् ।

दुश्चिकित्स्यतम वापि भिषग्भिर्मन्दबुद्धिभि ॥७३॥

सविषं निर्विषञ्चैतदित्येव परिशङ्किते ।

विषघ्नमेव कर्त्तव्यमविरोधि यदौषधम् ॥७४॥

अगदानां हि संयोगो विषजुष्टस्य युज्यते।
निर्विषे मानवे युक्तोऽगदः सम्पद्यतेऽसुखम् ॥७५॥
तस्मात् सर्वं प्रयत्नेन ज्ञातव्यो विषनिश्चयः।
अज्ञात्वा विषसद्भावं भिषग् व्यापादयेन्नरम् ॥७६॥

प्रोद्भिद्यमानस्तु यथाङ्कुरेण
न व्यक्तजातिं प्रविभाति वृक्षः।
तद्वद् दुरालक्ष्यतमं हि तासां
विषं शरीरे प्रविकीर्णमात्रम् ॥७७॥
ईषच्च कण्डूप्रचलं सकोठ-
मव्यक्तवर्णं प्रथमेऽहनि स्यात्।
अन्तेषु शूनं परिनिम्नमध्य-
मव्यक्तरूपञ्च दिने द्वितीये ॥७८॥
त्र्यहेण तद्दर्शयतीह दंशं
विषं चतुर्थेऽहनि कोपमेति।
अतोऽधिकेऽह्नि प्रकरोति जन्तो-
र्विषप्रकोपप्रभवान् विकारान् ॥७९॥
षष्ठे दिने विप्रसृतञ्च सर्वान्
मर्मप्रदेशान् भृशमावृणोति।
तत् सप्तमेऽत्यर्थपरीतगात्रं
व्यापादयेन्मर्त्यमतिप्रवृद्धम् ॥८०॥
यास्तीक्ष्णचण्डोग्रविषा हि लूता-
स्ताः सप्तरात्रेण विनाशयन्ति।
अतोऽधिकेनापि निहन्युरन्या
यासां विषं मध्यमवीर्य्यमुक्तम् ॥८१॥

यासां कनीयो विषवीर्य्यमुक्तं
ता पञ्चमात्रेण विनाशयन्ति।
तस्मात् प्रयत्नं भिषगत्र कुर्य्या-
दाद्यपाताद्विषघातियोगैः ॥८२॥
विषन्तु लालानखमूत्रदंष्ट्रा-
रजः पुरीषैरथ चेन्द्रियेण।
सप्तप्रकारं विसृजन्ति लूता-
स्तदुग्रमध्यावरवीर्य्ययुक्तम् ॥८३॥
सकण्डुकोठं स्थिरमल्पमूलं
लालाकृतं मन्दरुजं वदन्ति।
शोफश्च कण्डूश्च पुलानिका च
धूमायनं चैव नखाग्रदंशे ॥८४॥
दंशन्तु मूत्रेण सकृष्णमध्यं
सरक्तपर्य्यन्तमवेहि दीर्णम्।
दंष्ट्राभिरुग्रं कठिनं विवर्णं
जानीहि दंशं स्थिरमण्डलञ्च ॥८५॥
रजःपुरीषेन्द्रियजं हि विद्धि
स्फोटं विपक्वामलपीलुपाण्डुम्।
एतावदेतत् समुदाहृतन्तु
वक्ष्यामि लूताप्रभवं पुराणम् ॥८६॥
सामान्यतो दृष्टमसाध्यसाध्यं
चिकित्सितञ्चापि यथाविशेषम् ॥८७॥
विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्।
वशिष्ठं कोपयामास गत्वाश्रमपदं किल ॥८८॥

कुपितस्य मुनेस्तस्य ललाटात् स्वेदविन्दवः ।
अपतन् दर्शनादेवमधस्तात्तीक्ष्णवर्चस ॥८९॥
लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च ।
ततो जातास्त्विमा घोरा नानारूपा महाविषा. ।
अपकाराय वर्त्तन्ते नृपसाधनवाहने ॥९०॥
यस्माल्लून तृण प्राप्ता मुने प्रस्वेदविन्दव ।
तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोडश ॥९१॥
कृच्छ्रसाध्यास्तथाऽसाध्या लूतास्तु द्विविधाः स्मृता. ।
तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु ॥९२॥
त्रिमण्डला तथा श्वेता कपिला पीतिका तथा ।
आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता ॥९३॥
ताभिर्दष्टे शिरोदु ख कण्डूर्दंशे च वेदना ।
भवन्ति च विशेषेण गदा श्लेष्मिकवातिका. ॥९४॥
सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा ।
कृष्णाऽग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता ॥९५॥
ताभिर्दष्टे दंशकोथ प्रवृत्ति क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदा स्युश्च त्रिदोषजा. ॥९६॥
पिडका विविधाकारा मण्डलानि महान्ति च ।
शोफा महान्तो मृदवो रक्ता श्यावाश्चलास्तथा ॥९७॥
सामान्य सर्वलूतानामेतद्दांशलक्षणम ।
विशेषलक्षण तासां वक्ष्यामि सचिकित्सितम ॥९८॥
त्रिमण्डलाया दंशेऽसृक् कृष्ण स्रवति दीर्य्यते ।
बाधि　　कलुषा दृष्टिस्तथा दाहश्च जे रो ॥९९॥
ललाः　　व रजनी नाकुला ऽश्वग न्धिका ।

नस्यकर्मणि शस्यन्ते पानाभ्यङ्गाञ्जनेषु च ॥१००॥
श्वेताया पिडका दंशे श्वेता कण्डुमती भवेत् ।
दाहमूर्च्छाज्वरवती विसर्पक्लेदरुक्करी ॥१०१॥
तत्र चन्दनरास्नैलाहरेणुनलवञ्जुला ।
कुष्ठ लामज्जक वक्र नलदश्चागदो हित ॥१०२॥
अदंशे पिडका ताम्रा कपिलाया स्थिरा भवेत् ।
शिरसो गौरव दाहस्तिमिर भ्रम एव च ॥१०३॥
तत्र पद्मककुष्ठैलाकरञ्जककुभत्वच ।
स्थिरार्कपर्ण्यपामार्गदूर्वा ब्राह्मी विषापहा ॥१०४॥
आदंशे पीतिकायास्तु पिडका जायते स्थिरा ।
तथा छर्दिर्ज्वर शूल रक्ते स्याताञ्च लोचने ॥१०५॥
तत्रेष्टा कुटजोशीरतुङ्गपद्मकवञ्जुला: ।
शिरीषकिणिहीशेलुकदम्बककुभत्वच ॥१०६॥
रक्तमण्डनिभेदंशे पिडका सर्षपा इव ।
जायन्ते तालुशोषश्च दाहश्चालविषान्विते ॥१०७॥
तत्र प्रियङ्गुह्रीवेर कुष्ठ लामज्जवञ्जुला ।
अगद शतपुष्पा च सपिप्पलवटाङ्कुरा ॥१०८॥
पूतिमूत्रविषा दंशो विसर्पी कृष्णशोणित ।
कासश्वास[illegible]मूर्च्छाज्वरदाहसमन्वित ॥१०९॥
मन शिल [illegible]मधुककुष्ठचन्दनपद्मकै ।
मधुमिश्रै [illegible]मज्जरगदस्तत्र कीर्त्तित ॥११०॥
दंशश्च प[illegible] [illegible]ङ्क्तो दाहक्लेदसमन्वित ।
रक्ताया [illegible] [illegible]ो विज्ञेयो रक्तसयुत ॥१११॥
कार्य्यस्तत्र [illegible] [illegible]यचन्दनोशीरपद्मकै ।

तथैवार्जुनशेलुभ्यां त्वग्भिराम्रातकस्य च ॥११२॥
पिच्छिलं कसनाद्दंशाद्रुधिरं शीतलं स्रवेत् ।
कासश्वासौ च तत्रोक्ता रक्तलूताचिकित्सितम् ॥११३॥
शरीषगन्धिरत्यासृक् कृष्णाया दंश एव तु ।
ज्वरमूर्च्छावमीदाहकासश्वाससमन्वितः ॥११४॥
तत्रैलावक्रसर्पाक्षीगन्धनाकुलिचन्दनैः ।
महासुगन्धिसहितैः प्रत्याख्यायागदः स्मृतः ॥११५॥
दंशे दाहोऽग्निवर्णाया स्रावोऽत्यर्थं ज्वरस्तथा ।
चोषकण्डूरोमहर्षौ दाहश्च स्फोटजन्म च ॥११६॥
कृष्णाप्रशमनं चात्र प्रत्याख्याय प्रयोजयेत् ।
सारिवोशीरयष्ट्याह्वचन्दनोत्पलपद्मकम् ॥११७॥
सर्वासामेव युञ्जीत विषे श्लेष्मातकत्वचम् ।
भिषक् सर्वप्रकारेषु तथा च क्षीरपिप्पलम् ॥११८॥
कृच्छ्रसाध्यविषा ह्यष्टौ प्रोक्ता इ च यदृच्छया ।
अवार्य्यविषवीर्य्याणां लक्षणानि निबोध मे ॥११९॥
धात सौवर्णिकादंश. सफेनो मत्स्यगन्धकः ।
श्वासकासौ ज्वरस्तृष्णा मूर्च्छा चात्र सुदारुणा ॥१२०॥
आदंशे लाजवर्णाया श्याम पूति स्रवेदसृक् ।
दाहो मूर्च्छातिसारश्च शिरोदुःखञ्च जायते ॥१२१॥
घोरदंशस्तु जालिन्या राजिमानवदीर्य्यते ।
स्तम्भः श्वासस्तमोवृद्धिस्तालुशोषश्च जायते ॥१२२॥
एणीपद्यास्तथा दंशो भवेत् कृष्णतिलाकृति. ।
तृष्णामूर्च्छाज्वरच्छर्दिकासश्वाससमन्वितः ॥१२३॥
दंशः काकण्डकादष्टे पाण्डुरक्तोऽतिवेदन. ।

रक्तो मालागुणादश्यो धूमगन्धोऽतिवेदनः ॥१२४॥
विदोर्य्यति च बहुधा दाहमूर्च्छाज्वरान्वित ।
असाध्याना भिषक्प्राज्ञ प्रयुञ्जीत चिकित्सितम् ॥१२५॥
दोषोच्छ्रायविशेषेण छेदकर्मविवर्जितम ।
साध्याभिराभिर्लूताभिर्दष्टमात्रस्य देहिन' ॥१२६॥
वृद्धिपत्रेण मतिमान् सम्यगादंशमुद्धरेत् ।
जम्ब्वोष्ठेनाग्नितप्तेन दहेद्दाकरजारणात् ॥१२७॥
अमर्मणि विधानज्ञो वर्जितस्य ज्वरादिभि. ।
दंशस्योत्कर्त्तनं कुर्य्यादल्पश्वयथुकस्य च ॥१२८॥
मधुसैन्धवसयुक्तैरगदैर्लेपयेत् तत ।
प्रियङ्गु रजनीकुष्ठसमङ्गामधुकैस्तथा ॥१२९॥
सारिवा मधुक द्राक्षा पयस्या क्षीरमोरटम ।
विदारीगोक्षुरक्षौद्रमधुक पाययेत वा ॥१३०॥
क्षीरिणा त्वक्कषायेण सुशीतेन च सेवयेत् ।
उपद्रवान् यथादोष विषघ्नैश्च प्रसाधयेत् ॥१३१॥
नस्याञ्जनाभ्यञ्जनपानधूम तथावपीड कवलग्रहञ्च ।
सशोधनञ्चाभयत: प्रयुञ्ज्याद्रक्त हरेच्चापि जलायुकाभि.
॥१३२॥
कीटदुष्टव्रणान् सर्वानहिदष्टव्रणानि च ।
आदशपाक यत्नेन चिकित्सेत सर्पदष्टवत् ॥१३३॥
विनिवृत्ते तत शोफे कर्णिकापातन हितम ।
निम्बपत्र त्रिवृद्दन्ती कुसुम्भ रजनी मधु ॥१३४॥
गुग्गुलु सैन्धव किण्व वच. पारावतस्य च ।
विषवृद्धिकरञ्चान्न हित्वा सम्भोजन हितम् ॥१३५॥

विषेभ्य खलु सर्वेभ्य कर्णिकामरुजा स्थिराम्।
प्रच्छयित्वा मधुयुतै शोधनीयैरुपाचरेत् ॥१३६॥
सप्तषष्ठस्य कीटाना शतस्यैतद्विभागश ।
दृष्टलक्षणमाख्यात चिकित्सा चाप्यनन्तरम् ॥१३७॥
सविंशमध्यायशतमेतदुक्त विभागश ।
इहोद्दिष्टाननिर्दिष्टान् सर्वान् वक्ष्याम्यथोत्तरे ॥१३८॥
सनातनत्वाद्वेदानामक्षरत्वात् तथैव च ।
तथा दृष्टफलत्वाच्च हितत्वादपि देहिनाम् ॥१३९॥
वाक्समूहार्थविस्तारात पूजितत्वाच्च देहिभि.।
चिकित्सितात् पुण्यतम न किञ्चिदपि सुश्रुमः ॥१४०॥
ऋषेरिन्द्रप्रभावस्यामृतयोनेर्भिषग्गुरो.।
धारयित्वा तु विमल मतं परमसम्मतम।
उक्ताहारसमाचार इह प्रेत्य च मोदते ॥१४१॥

इति सौश्रुते आयुर्वेदशास्त्रे पञ्चम
कल्पस्थान समाप्तम्।



# उत्तरतन्त्रम् ।

---

## प्रथमोऽध्याय ।

अथात औपद्रविकमध्यायं व्याख्यास्याम ।

अध्यायाना शते विंशे यदुक्तमसकृन्मया ।

वक्ष्यामि बहुधा सम्यगुत्तरेऽर्थानिमानिति॥ १॥

इदानी तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम् ।

निखिलेनोपदिश्यन्ते यत्र रोगा, पृथग्विधा ॥२॥

शालाक्यशास्त्राभिहिता विदेहाधिपकीर्त्तिता ।

ये च विस्तरतो दृष्टा कुमारा बाधहेतव ॥३॥

षट्सु कायचिकित्सासु ये चोक्ता परमर्षिभिः ।

उपसर्गादयो रोगा ये चाप्यागन्तव स्मृता ॥४॥

त्रिषष्टीरससंसर्गा सुश्रुतवृत्तस्तथैव च ।

युक्तार्था युक्तयश्चैव दोषभेदास्तथैव च ॥५॥

यत्रोक्ता विविधा अर्था रोगसाधनहेतव ।

महतस्तस्य तन्त्रस्य दुर्गाधस्याम्बुधेरिव ॥६॥

आदावेवोत्तमाङ्गस्थान् रोगानभिदधाम्यहम ।

सङ्ख्यया लक्षणैश्चापि साध्यासाध्यक्रमेण च ॥७॥

विद्याद् द्व्यङ्गुलबाहुल्य स्वाङ्गुष्ठोदरसम्मितम् ।

द्व्यङ्गुल सर्वत सार्द्ध भिषग्नयनबुद्बुदम् ॥८॥

सुवृत्त गोस्तनाकार सर्वभूतगुणोद्भवम् ।

पलं भुवोऽग्नितो रक्तं वातात् कृष्ण सित जलात् ॥९॥

आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे।
दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारद ॥१०॥
नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते।
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥११॥
मण्डलानि च सन्धींश्च पटलानि च लोचने।
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥१२॥
पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु।
अनुपूर्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥१३॥
पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः।
शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः ॥१४॥
ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः।
द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि ॥१५॥
जायन्ते तिमिरं येषु व्याधिः परमदारुणः।
तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् ॥१६॥
मेदस्तृतीयं पटलमाश्रितन्त्वस्थि चापरम्।
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥१७॥
शिराणां कण्डराणाञ्च मेदसः कालकस्य च।
गुणाः कालात्परः श्लेष्मा बन्धनेऽक्ष्णाः शिरायुतः ॥१८॥
शिरानुसारिभिर्दोषैर्विगुणैरूर्द्ध्वमागतैः।
जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥१९॥
तत्राविलं ससंरम्भमश्रुपूर्णोपदेहवत्।
गुरूषाचोषरागाद्यैर्जुष्टञ्चाव्यक्तलक्षणैः ॥२०॥
सशूलं वर्त्मकोषेषु शूकपूर्णाभमेव च।
विहन्यमानं रूपे वा क्रियास्वक्षि यथा पुरा ॥२१॥

दृष्ट्वैव धीमान् बुध्येत दोषेणाधिष्ठितञ्च तत्।
तत्र सम्भवमासाद्य यथादोषं भिषग्जितम्।
विदध्यान्नेत्रजा रोगा बलवन्तः स्युरन्यथा ॥२२॥
सङ्क्षेपतः क्रियायोगो निदानपरिवर्जनम्।
वातादीनां प्रतीघातः प्रोक्तो विस्तरतः पुनः ॥२३॥
उष्णाभितप्तस्य जलप्रवेशाद् दूरेक्षणात् स्वप्नविपर्ययाच्च।
प्रसक्तसंरोदनशोककोपक्लेशाभिघातादतिमैथुनाच्च ॥२४॥
शुक्तारनालाम्लकुलत्थमाष-
निषेवणाद्वेगविनिग्रहाच्च।
स्वेदाद्रजोधूमनिषेवणाच्च
छर्देर्विघाताद्वमनातियोगात् ॥२५॥
वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च
नेत्रे विकारान् जनयन्ति दोषाः ॥२६॥
वाताद्दश तथा पित्तात् कफाच्चैव त्रयोदश।
रक्तात् षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः ॥२७॥
तथा बाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः।
हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या ॥२८॥
यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः।
याप्योऽथ तन्मयः काचः साध्याः स्युः सान्यमारुताः ॥२९॥
शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्ययाः।
असाध्यो ह्रस्वजात्यां यो जलस्रावश्च पैत्तिकः ॥३०॥
परिस्रावी च नीलश्च याप्य काचोऽथ तन्मयः।
अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं शुक्तिकाह्वया ॥३१॥
दृष्टिः पित्तविदग्धा च पोथक्यो लगणश्च यः।

असाध्य कफजस्रावो याप्य. काचोऽथ तन्मय. ॥२२॥
अभिष्यन्दोऽधिमन्थश्च बलासग्रथितञ्च यत् ।
दृष्टि श्लेष्मविदग्धा च पोथक्यो लगणश्च य ॥२३॥
क्रिमिग्रन्थिपरिक्लिन्नवर्त्म शुक्लार्मपिष्टका' ।
श्लेष्मोपनाह: साध्यस्तु कथिता: श्लेष्मजेषु तु ॥२४॥
रक्तस्रावोऽजकाजात शोणितार्शोऽवलम्बितम् ।
शुक्र न साध्य काचश्च याप्यस्तज्ज प्रकीर्त्तित: ॥२५॥
मन्यस्यन्दौ क्लिष्टवर्त्महर्षोत्पातौ तथैव च ।
सिराजावञ्जनाख्या च सिराजालञ्च यत् स्मृतम् ॥२६॥
पर्वण्यथाव्रणं शुक्र शोणितार्मार्जुनश्च य. ।
एते साध्या विकारेषु रक्तजेषु भवन्ति हि ॥२७॥
पूयस्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी ।
असाध्या: सर्वजा याप्या काच. कोपश्च पक्ष्मण. ॥२८॥
वर्त्मावबन्धो यो व्याधि सिरासु पिडका च या ।
प्रस्तार्य्यर्माधिमासार्मस्नायुर्मोत्सङ्गिनी च या ॥२९॥
पूयालसश्चार्बुदञ्च श्यावकर्दमवर्त्मनी ।
तथार्शो वर्त्मशुक्रार्श शर्करावर्त्म यच्च वै ॥४०॥
सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च ।
अक्लिन्नवर्त्म कुम्भीका विसवर्त्म च सिध्यति ॥४१॥
सनिमित्तोऽनिमित्तश्च द्वावसाध्यौ तु बाह्यजौ ।
षट्सप्ततिविकाराणामेषा संप्रकीर्त्तना ॥४२॥
नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशति. ।
शुक्लभागे दशैकश्च चत्वार. कृष्णभागजा ॥४३॥
सर्वाश्रया. सप्तदश दृष्टिजा द्वादश

वाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥४४॥
भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः ॥४५॥

---

द्वितीयोऽध्यायः।

अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः।

पूयालसः सोपनाहः स्रावाः पर्वणिकालजी।
क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव ॥१॥

पक्वः शोफः सन्धिजः संस्रवेद् यः
सान्द्रं पूयं पूतिपूयालसः सः।
ग्रन्थिर्नाल्पो दृष्टिसन्ध्यावपाकः
कण्डूप्रायो नीरुजस्तूपनाहः ॥२॥
गत्वा सन्धीनश्रुमार्गेण दोषाः
कुर्य्युः स्रावान् रुग्विहीनान् स्वलिङ्गान्।
तान् वै स्रावान् नेत्रनाडीमथैके
तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा ॥३॥
पाकः सन्धौ संस्रवेद् यश्च पूयं
पूयास्रावो नैकरूपः प्रदिष्टः।
श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च
श्लेष्मास्रावो नीरुजः स प्रदिष्टः ॥४॥
रक्तास्रावः शोणितोत्थः सरक्तं
कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्।
पीताभासं नीलमुष्णं जलाभं
पित्तस्रावः संस्रवेत् सन्धिमध्यात् ॥५॥
ताम्रा तन्वी दाहशूलोपपन्ना

रक्ताज्ज्ञेया पर्वणी वृत्तशोफा ।
जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्
तस्मिन्नेवाख्यापिता पूर्वलिङ्गैः ॥६॥
क्रिमिग्रन्थिर्वर्त्मन पक्ष्मणश्च
कण्डूं कुर्य्युः क्रिमय सन्धिजाताः ।
नानारूपा वर्त्मशुक्लस्य सन्धौ
चरन्तोऽन्तर्नयनं दूषयन्ति ॥७॥

---

## तृतीयोऽध्यायः ।

अथातो वर्त्मगतरोगविज्ञानीयमध्याय व्याख्यास्याम ।
पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः ।
सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः ॥१॥
विवर्द्ध्य मास रक्तञ्च तदा वर्त्मव्यपाश्रयान् ।
विकाराञ्जनयन्त्याशु नामतस्तान्निबोधत ॥२॥
उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा ।
तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥३॥
बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धक. ।
क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥४॥
प्रक्लिन्नमपरिक्लिन्न वर्त्म वातहतन्तु यत् ।
अर्बुद निमिषश्चापि शोणितार्शश्च यत् स्मृतम् ॥५॥
लगणो विषनामा च पक्ष्मकोपस्तथैव च ।
एकविंशतिरित्येते विकारा वर्त्मसंश्रया ॥६॥
नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रवक्ष्महे ।
पिडकाभ्यन्तरमुखा वाह्याभोवर्त्मसंश्रया ।

विज्ञेयोऽलजिनी नाम तद्रूपपिडकान्विता ॥७॥
कुम्भीकबीजप्रतिमा पिडका पक्ष्मवर्त्मनोः।
आध्मायन्ते तु भिन्ना या कुम्भीकपिडकास्तु ता ॥८॥
कण्डूस्रावान्विता गुर्व्यो रक्तसर्षपसन्निभाः।
पिडकाश्च रुजावत्य पोथक्य इति सञ्ज्ञिता ॥९॥
पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता।
पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥१०॥
सूक्ष्मा खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥११॥
दीर्घोऽङ्कुर खर स्तब्धो दारुणो वर्त्मसम्भव ।
व्याधिरेष समाख्यात शुष्कार्श इति सञ्ज्ञित ॥१२॥
दाहतोऽवती ताम्रा पिडका वर्त्मसम्भवा।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥१३॥
वर्त्मोपचीयते यस्य पिडकाभि समन्तत.।
सवर्णाभि समाभिश्च विद्याद् बहलवर्त्म तत् ॥१४॥
कण्डूमताल्पतोदेन वर्त्मशोफेन यो नर.।
न समं छादयेदक्षि भवेद् बन्ध. स वर्त्मनः ॥१५॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च।
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म तदादिशेत् ॥१६॥
क्लिष्टं पुन पित्तयुक्तं विदहेच्छोणितं यदा।
तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम ॥१७॥
यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्।
दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम् ॥१८॥
अरुज बाह्यत शूनमन्त क्लिन्नं स्रवत्यपि।
कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते ॥१९॥

यस्य धौतानि धौतानि सम्बध्यन्ते पुनः पुनः ।
वर्त्मान्यपरिपक्वानि विद्यात्क्लिन्नवर्त्म तत् ॥२०॥
विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते ।
एतद्वातहतं विद्यात् सरुजं यदि वारुजम् ॥२१॥
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ।
विज्ञेयमर्वुदं पुंसां सरक्तमवलम्बितम् ॥२२॥
निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः ।
चालयेदतिवर्त्मानि निमेषः स गदो मतः ॥२३॥
छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः ।
दाहकण्डूरुजोपेतास्तेऽर्शः शोणितसम्भवाः ॥२४॥
अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः ।
सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु सः ॥२५॥
शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् ।
विसमन्तर्जलं इव विसवर्त्मेति तन्मतम् ॥२६॥
पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च ।
निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते ॥२७॥
उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते ।
वातातपानलद्वेषी पक्ष्मकोपः स उच्यते ॥२८॥

---

## चतुर्थोऽध्यायः ।

अथातः शुक्लगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।

प्रस्तारिशुक्लक्षतजाधिमांस-
स्नायुर्मसंज्ञाः खलु पञ्च रोगाः ।

स्युः शुक्तिकाचार्जुनपिष्टकौ च
जालं सिराणां पिडकाश्रयाः स्युः ॥१॥
रोगा बलासग्रथितेन सार्द्ध-
मेकादशाक्ष्णो खलु शुक्लभागे ॥२॥
प्रस्तारि ग्रथितमिहार्म्मशुक्लभागे
विस्तीर्णं तनु रुधिरप्रभं सनीलम् ।
शुक्लाख्यं मृदु कथयन्ति शुक्लभागे
सश्वेतं सममिह वर्द्धते चिरेण ॥३॥
यन्मांसं प्रचयमुपैति शुक्लभागे
पद्माभं तदुपदिशन्ति लोहितार्म्म ॥४॥
विस्तीर्णं मृदु बहलं यकृत्प्रकाशं
श्यावं वा तदधिकमांसजार्म्म विद्यात् ।
शुक्ले यत् पिशितमुपैति वृद्धिमेतत्
स्नाय्वर्म्मेत्यभिपठितं खरं प्रपाण्डु ॥५॥
श्यावाः स्युः पिशितनिभास्तु विन्दवो ये
शुक्तिर्वा शितनयने स शुक्तिसंज्ञः ।
एको यः शशरुधिरोपमस्तु विन्दुः
शुक्लस्थो भवति तमर्ज्जुनं वदन्ति ॥६॥
उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो
विन्दुर्यः सम्भवति पिष्टकः सुवृत्तः ।
जालाभः कठिनसिरो महान् सरक्तः
सन्तानः स्मृत इह जालसञ्ज्ञितस्तु ॥७॥
शुक्लस्थाः सितपिडकाः सिरावृता या-
स्ता विद्यादसितसमीपजाः सिराजाः ।

कांस्याभो भवति सिरावृत: सिते यो
बिन्दुर्वा स तु निरुजो बलासकाख्य ॥८॥

---

पञ्चमोऽध्याय ।

अथात: कृष्णगतरोगविज्ञानीयमध्याय व्याख्यास्य.म:

यत्सव्रण शुक्रमथाव्रण वा
पाकात्ययश्चाप्यजका तथैव ।
चत्वार एतेऽभिहिता. विकारा:
कृष्णाश्रया संग्रहत. पुरस्तात् ॥१॥
निमग्नरूप हि भवेत् तु कृष्णे
सूच्येव विद्ध प्रतिभाति यद्वै ।
स्राव स्रवेदुष्णमतीव रुक् च
तत् सव्रण शुक्रमुदाहरन्ति ॥२॥
दृष्टे समीपे न भवेत् तु यच्च
न चावगाढ न च सस्रवेद्धि ।
अवेदनावन्न च युग्मशुक्र
तत्सिद्धिमाप्नोति कदाचिदेव ॥३॥
सितं यदा भात्यसितप्रदेशे
स्यन्दात्मक नातिरुगश्रुयुक्तम् ।
विहायसीवाभ्रदलानुकारि
तदव्रण साध्यतम वदन्ति ॥४॥
गम्भीरजात बहलञ्च शुक्र
चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ॥५॥
विच्छिन्नमध्य पिशिताहृत वा

चलं सिरासक्तमदृष्टिकञ्च।
द्विलग्गतं लोहितमन्ततश्च
चिरोत्थितञ्चापि विवर्जनीयम् ॥६॥
उष्णाश्रुपात. पिडका च कृष्णे
यस्मिन् भवेन्मुद्गनिभश्च शुक्रम्।
तदप्यसाध्य प्रवदन्ति केचि-
दन्यच्च यत्तित्तिरिपक्षतुल्यम् ॥७॥
सञ्छाद्यते श्वेतनिभेन सर्व-
दोषेण यस्यासितमण्डलन्तु।
तमक्षिपाकात्ययमक्षिकोप-
समुत्थित तीव्ररुज वदन्ति ॥८॥
अजापुरीषप्रतिमो रुजावान्
स लोहितो लोहितपिच्छिलास्र.।
विदार्य्य कृष्ण प्रचयोऽभ्युपैति
तञ्चाजकाजातमिति व्यवस्येत् ॥९॥

---

षष्ठोऽध्याय.।

अथात: सर्व्वगतरोगविज्ञानीयमध्यायं व्याख्यास्याम.।

स्यन्दास्तु चत्वार इहोपदिष्टा-
स्तावन्त एवेह तथाधिमन्थाः।
शोफान्वितोऽशोफयुतश्च पाका-
वित्येवमेते दश सम्प्रदिष्टा. ॥१॥
हताधिमन्थोऽनिलपर्य्ययश्च
शुष्काक्षिपाकोऽन्यत एव वातः।

दृष्टिस्तथाम्लाध्युषिता सिराणा
मुत्पातहर्षावपि सर्वभागा ॥२॥
प्रायेण सर्वे नयनामयास्ते
भवन्त्यभिष्यन्दनिमित्तमूला' ।
तस्मादभिष्यन्दमुदीर्य्यमाण-
मुपाचरेदाशु हिताय धीमान् ॥३॥
निस्तोदन स्तम्भनरोमहर्ष-
सङ्घर्षपारुष्यशिरोऽभितापाः ।
विशुष्कभावा शि शिराश्रुता च
वाताभिपन्ने नयने भवन्ति ॥४॥
दाहप्रपाकौ शिशिराभिनन्दा
धूमायन वास्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ॥५॥
उष्णाभिनन्दा गुरुताक्षिशोफ.
कण्डूपदेहौ सिततातिशैत्यम् ।
स्रावो मुहु पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥६॥
ताम्राश्रुता लोहितनेत्रता च
राज्य समन्तादतिलोहिताश्च ।
पित्तस्य लिङ्गानि च यानि तानि
रक्ताभिपन्ने नयने भवन्ति ॥७॥
वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्था' स्युर्नयने तीव्रवेदनाः ॥८॥

उत्पाद्यत इवात्यर्थं नेत्र निर्मथ्यते तथा ।
शिरसोऽर्द्धन्तु त विद्यादधिमन्थं स्वलक्षणै. ॥९॥
नेत्रमुत्पाद्यत इव मथ्यतेऽरणिवच्च यत् ।
सङ्घर्षतोदनिर्भेदमाससरब्धमाविलम् ॥१०॥
कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम् ।
शिरसोऽर्द्धञ्च येन स्यादधिमन्थ. स मारुतात् ॥११॥
रक्तराजिचित स्रावि वह्निनेवावदह्यते ।
यकृत्पिण्डोपम दाहि क्षारेणाक्तमिव क्षतम् ॥१२॥
प्रपक्वोच्छूनवर्त्मान्त सस्वेद पीतदर्शनम ।
मूर्च्छाशिरोदाहयुत पित्तेनाध्यधिमन्थितम् ॥१३॥
शोफवन्नातिसरब्ध स्रावकण्डूसमन्वितम् ।
शैत्यगौरवपैच्छिल्यदूषिकाहर्षणान्वितम् ॥१४॥
रूप पश्यति दु खेन पांशुपूर्णमिवाविलम् ।
नासाध्मानशिरोदु खयुत श्लेष्माधिमन्थितम् ॥१५॥
बन्धुजीवप्रतीकाश ताम्यति स्पर्शनाक्षमम् ।
रक्तास्राव सनिस्तोद पश्यत्यग्निनिभा दिश ॥१६॥
रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते ।
यद्दीप्त रक्तपर्य्यन्त तद्रक्तेनाधिमन्थितम् ॥१७॥
हन्याद्दृष्टिं सप्तरात्रात् कफोत्थो-
ऽधीमन्थोऽसृक्सम्भव पञ्चरात्रात् ।
षड्रात्राद्वा मारुतोत्थो निहन्या-
न्मिथ्याचारात् पैत्तिक सद्य एव ॥१८॥
कण्डूपदेहाश्रुयुत पक्वोडुम्बरसन्निभ ।
दाहसहर्षताम्रत्वशोफनिस्तोदगौरवैः ॥१९॥

जुष्टो मुहुः स्रवेद्दास्रमुष्णशीताम्बु पिच्छिलम् ।
संरम्भी पच्यते यश्च नेत्रपाकः स शोफजः ॥२०॥
शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे ।
अन्तः सिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् ।
हताधिमन्थं जनयेत् तमसाध्यं विदुर्बुधाः ॥२१॥

यस्य द्वयाक्षिभ्रुवमाश्रितस्तु
यत्रानिलः सञ्चरति प्रदुष्टः ।
पर्य्यायशश्चापि रुजः करोति
तं वातपर्य्यायमुदाहरन्ति ॥२२॥
यत् कूणितं दारुणरूक्षवर्त्म
विलोकने चाविलदर्शनं यत् ।
सुदारुणं यत् प्रतिबोधने च
शुष्काक्षिपाकोपहतं तदक्षि ॥२३॥
यस्यावटूकर्णशिरोहनुस्थो
मन्यागतो वाप्यनिलोऽन्यतो वा ।
कुर्य्याद्रुजोऽतिभ्रुवि लोचने वा
तमन्यतोवातमुदाहरन्ति ॥२४॥
अम्लेन भुक्तेन विदाहिना वा
सञ्छाद्यते सर्वत एव नेत्रम् ।
शोफान्वितं लोहितकैः सनीलै-
रेतादृगम्लाध्युषितं वदन्ति ॥२५॥
अवेदना वापि सवेदना वा
यस्याक्षिराज्यो हि भवन्ति ताम्राः ।
मुहुर्विरज्यन्ति च ताः समन्तात्

व्याधि सिरोत्पात इति प्रदिष्टः ॥२६॥
महान् सिरोत्पात उपेक्षितस्तु
जायेत रोगस्तु सिराप्रहर्षः।
ताम्राच्छमस्रं स्रवति प्रगाढं
तथा न शक्नोत्यभिवीक्षितुञ्च ॥२७॥

---

## सप्तमोऽध्यायः।

अथातो दृष्टिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः।

मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम्।
खद्योतविस्फुलिङ्गाभा सिद्धा तेजोभिरव्ययैः ॥१॥
आवृता पटलेनाक्ष्णोर्बाह्येन विवराकृतिम्।
शीतसात्म्या नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥२॥
रोगास्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे।
पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम् ॥३॥
सिराभिरभिसम्प्राप्य विगुणोऽभ्यन्तरे भृशम्।
प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः ॥४॥
अव्यक्तानि स रूपाणि सर्वाण्येव प्रपश्यति।
दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥५॥
मक्षिकान् मशकान् केशान् जालकानि च पश्यति।
मण्डलानि पताकांश्च मरीचीः कुण्डलानि च ॥६॥
परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा।
दूरस्थान्यपि रूपाणि मन्यते च समीपतः ॥७॥
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात्।
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥८॥

ऊर्द्ध्वं पश्यति नाधस्तात् तृतीयं पटलं गते ।
महान्त्यपि च रूपाणि छादितानीव वाससा ॥९॥
कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते ।
यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि ॥१०॥
अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते ।
पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति ॥११॥
समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति ।
दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥१२॥
द्विधास्थिते त्रिधा पश्येद्‌ बहुधा चानवस्थिते ।
तिमिराख्यः स वै दोषश्चतुर्थपटलङ्गतः ॥१३॥
रुणद्धि सर्वतो दृष्टिं लिङ्गनाश. स उच्यते ।
तस्मिन्नपि तमोभूते नातिरूढे महागदे ॥१४॥
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः ।
निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ॥१५॥
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ।
तत्र वातेन चारूणि भ्रमन्तीव स पश्यति ॥१६॥
आविलान्यरुणाभानि व्याविद्धानि च मानवः ।
पित्तेनादित्यखद्योतशक्रचापतडिद्‌गुणान् ॥१७॥
शिखिवर्हविचित्राणि नीलकृष्णानि पश्यति ।
गौरचामरगौराणि श्वेताभ्रप्रतिमानि च ॥१८॥
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम् ।
सलिलप्लावितानीव परिजाड्यानि मानवः ॥१९॥
तथा रक्तेन रक्तानि तमांसि विविधानि च ।
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ॥२०॥

हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते।
सन्निपातेन चित्राणि विप्लुतानीव पश्यति ॥२१॥
बहुधा वा द्विधा वापि सर्वाण्येव समन्ततः।
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति ॥२२॥
पित्तं कुर्य्यात्परिम्लायि मूर्च्छितं रक्ततेजसा।
पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति ॥२३॥
विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च।
वक्ष्यामि षड्विधैरागैर्लिङ्गनाशमतः परम् ॥२४॥

रागोऽरुणो मारुतजः प्रदिष्टः
पित्तात् परिम्लाय्यथवापि नीलः।
कफात् सितः शोणितजस्तु रक्तः
समस्तदोषोऽथ विचित्ररूपः ॥२५॥

रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम्।
परिम्लायिनि रोगे स्यात् म्लाय्यानीलञ्च मण्डलम्।
दोषक्षयात् कदाचित् स्यात् स्वयं तत्र च दर्शनम् ॥२६॥
अरुणं मण्डलं वाताच्चञ्चलं परुषन्तथा।
पित्तान्मण्डलमानीलं कांस्याभं पीतमेव वा ॥२७॥
श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम्।
चलत्पद्मपलाशस्थः शुक्लबिन्दुरिवाम्भसः ॥२८॥
मृद्यमाने च नयने मण्डलं तद्विसर्पति।
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥२९॥
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे।
यथास्वदोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥३०॥

षड् लिङ्गनाशाः षडिमे च रोगा

दृष्ट्याश्रया षड् च षडेव च स्युः।
तथा नरः पित्तविदग्धदृष्टिः
कफेन चान्यस्त्वथ धूमदर्शी ॥२१॥
यो ह्रस्वजात्यो नकुलान्धता च
गम्भीरसंज्ञा च तथैव दृष्टिः ॥२२॥
पित्तेन दुष्टेन गतेन दृष्टिं
पीता भवेद्यस्य नरस्य दृष्टिः।
पीतानि रूपाणि च मन्यते यः
स मानवः पित्तविदग्धदृष्टिः ॥२३॥
प्राप्ते तृतीयं पटलन्तु दोषे
दिवा न पश्येन्निशि वीक्षते च।
तथा नरः श्लेष्मविदग्धदृष्टि-
स्तान्येव शुक्लानि हि मन्यते तु ॥२४॥
त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य।
दिवा स सूर्य्यानुगृहीतदृष्टिर्वीक्षेत रूपाणि कफाल्पभावात्
॥२५॥

शोकज्वरायासशिरोभितापै-
रभ्याहता यस्य नरस्य दृष्टिः।
सधूमकान् पश्यति सर्वभावां-
स्तं धूमदर्शीति वदन्ति रोगम् ॥२६॥
स ह्रस्वजात्यो दिवसेषु कृच्छ्रात्
ह्रस्वानि रूपाणि च यो न पश्येत्।
रात्रौ स शीतानुगृहीतदृष्टिः
पित्ताल्पभावादपि तानि पश्येत् ॥२७॥

विद्योतते येन नरस्य दृष्टि-
र्दोषाभिपन्ना नकुलस्य यद्वत्।
चित्राणि रूपाणि दिवा स पश्येत्
स वै विकारो नकुलान्ध्यसंज्ञः ॥३८॥
दृष्टिर्विरूपा श्वसनोपसृष्टा
सङ्कुच्यतेऽभ्यन्तरतश्च याति।
रुजावगाढ़ा च तमक्षिरोगं
गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ॥३९॥
बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ
निमित्ततश्चाप्यनिमित्ततश्च।
निमित्ततस्तत्र शिरोऽभितापाज्-
ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च ॥४०॥
सुरर्षिगन्धर्वमहोरगाणां
सन्दर्शनेनापि च भासुराणाम्।
हन्येत दृष्टिर्मनुजस्य यस्य
स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥४१॥

तत्राक्षि विस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः।
विदीर्य्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः
॥४२॥

इत्येते नयनागता महाविकाराः
संख्याताः पृथगिह षट् च सप्ततिश्च।
एतेषां पृथगिह विस्तरेण सर्वं
वक्ष्येऽहं तदनुचिकित्सितञ्च तावत् ॥४३॥

---

अष्टमोऽध्याय. ।

अथातश्चिकित्सितप्रविभागविज्ञानीयमध्यायं व्याख्यास्याम. ।

षट्सप्ततिर्येऽभिहिता व्याधयो नामलक्षणैः ।
चिकित्सितमिद तेषा समासाद्व्यासत शृणु ॥१॥
छेद्यास्तेषु दशैकश्च नव लेख्या प्रकीर्त्तिता ।
भेद्याः पञ्च विकारा स्युर्व्यध्या पञ्चदशैव तु ॥२॥
द्वादशा. अस्त्रकृत्याश्च याप्याः सप्त भवन्ति हि ।
रोगा वर्जयितव्याश्च दश पञ्च च जानता ।
असाध्यौ वा भवेतान्तु याप्यौ वागन्तुसञ्ज्ञितौ ॥३॥

अर्शोऽन्वितं भवति वर्त्म तु यत् तथार्शः
शुष्कं तथार्बुदमथो पिडका सिराजाः ।
जाल सिराजमपि पञ्चविध तथार्म
छेद्या भवन्ति सह पर्वणिकामयेन ॥४॥
उत्सङ्गिनी बहलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितस्त्विह बद्धवर्त्म ।
क्लिष्टञ्च पोथकियुतं खलु यच्च वर्त्म
कुम्भीकिनी च सह शर्करया च लेख्याः ॥५॥
श्लेष्मोपनाहगणौ च विसञ्च भेद्या
ग्रन्थिश्च यः कृमिकृतोऽञ्जननामिका च ॥६॥
आद्दौ सिरा निगदिताश्च ययो. प्रयोगी
पाकौ च यौ नयनयो. पवनोऽन्यतश्च ।
पूयालसानिलपर्य्ययमन्यसञ्ज्ञाः
स्यन्दास्तु यान्त्युपशम हि सिराव्यधेन ॥७॥

शुष्काक्षिपाककफपित्तविदग्धदृष्टि-
ष्वम्लाख्यशुक्रसहितार्जुनपिष्टकेषु ।
अक्लिन्नवर्त्म हुतभुग्ध्वजदर्शिशुक्लि-
प्रक्लिन्नवर्त्मसु तथैव बलाससञ्ज्ञे ॥८॥
आगन्तुनामययुगेन च दूषिताया
दृष्टौ न शस्त्रपतनं प्रवदन्ति तज्ज्ञाः ।
सम्पश्यत षडपि येऽभिहितास्तु काचा-
स्ते पक्ष्मकोपसहितास्तु भवन्ति याप्याः ॥९॥
चत्वार एव पवनप्रभवास्त्वसाध्या
द्वौ पित्तजौ कफनिमित्तज एक एव ।
अष्टादृका रुधिरजाश्च गदास्त्रिदोषा-
स्तावन्त एव गदितावपि बाह्यजौ द्वौ ॥१०॥

---

## नवमोऽध्यायः।

अथातो वाताभिष्यन्दप्रतिषेधं व्याख्यास्यामः।
पुराणसर्पिषा स्निग्धौ स्यन्दाधीमन्थपीडितौ ।
स्वेदयित्वा यथान्यायं सिरामोक्षेण योजयेत् ॥१॥
सम्पादयेद्वस्तिभिश्च सम्यक् स्नेहविरेचितौ ।
तर्पणैः पुटपाकैश्च धूमैराश्च्योतनैस्तथा ॥२॥
नस्यस्नेहपरीषेकैः शिरोवस्तिभिरेव च ।
वातघ्नानूपजलजमांसाम्लक्वाथसेचनैः ॥३॥
स्नेहैश्चतुर्भिरुष्णैश्च तत्पीताम्बरधारणैः ।
पयोभिः ...दैश्च स...ल्वणैः पायसैस्तथा ॥४॥
भिष... ...म्पादयेदेतानुपनाहैश्च पूजितैः ।

तथा चोपरिभुक्तस्य सर्पिः पानं प्रशस्यते ॥५॥
त्रिफलाक्वाथससिद्धं केवलं जीर्णमेव वा ।
सिद्धं वातहरैः क्षीरं प्रथमेन गणेन वा ।
स्नेहास्तैलादिना सिद्धा वातघ्नैस्तर्पणे हिता ॥६॥
स्नैहिकः पुटपाकश्च धूमो नस्यञ्च तद्विधम् ।
नस्यादिषु स्थिराक्षीरमधुरैस्तैलमिष्यते ॥७॥
एरण्डपल्लवे मूले त्वचि वाजं पयः शृतम् ।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥८॥
सैन्धवोदीच्ययष्ट्याह्वपिप्पलीभिः शृतं पयः ।
हितमर्द्धोदकं सेके तथाश्च्योतनमेव च ॥९॥
ह्रीवेरचक्रमञ्जिष्ठोडुम्बरत्वक्षु साधितम् ।
साम्भश्छागं पयो वापि शूलाश्च्योतनमुत्तमम् ॥१०॥
मधुकं रजनीं पथ्यां देवदारु च पेषयेत् ।
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥११॥
गैरिकं सैन्धवं कृष्णा नागरञ्च यथोत्तरम् ।
द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते ॥१२॥
स्नेहाञ्जनं हितं चात्र वक्ष्यते तद्यथाविधि ॥१३॥
रोगो यश्चान्यतो वातो यश्च मारुतपर्य्ययः ।
अनेनैव विधानेन भिषक्तावपि साधयेत् ॥१४॥
पूर्वभक्तं हितं सर्पिः क्षीरं वाप्यथ भोजने ।
वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि ॥१५॥
सक्षीरं कर्कटरसे सिद्धं चात्र घृतं पिबेत् ।
सिद्धं वा हिनमल्लाहु पत्तूरार्त्तगलाग्निकः ॥१६॥
सक्षीरं मेषशृङ्ग्या वा सर्पिर्वीरतरेण वा ।

सैन्धव दारु शुण्ठी च मातुलुङ्गरसे घृतम् ॥१७॥
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम्।
पूजितं सर्पिषश्चात्र पानमक्ष्णोश्च तर्पणम् ॥१८॥
घृतेन जीवनीयेन नस्यं तैलेन चाणुना।
परिषेके हितश्चात्र पयः शीतं ससैन्धवम् ॥१९॥
रजनीदारुसिद्धं वा सैन्धवेन समायुतम्।
सर्पिर्युतं स्तन्यघृष्टमञ्जनञ्च महौषधम् ॥२०॥
वसा वानूपजलजा सैन्धवेन समायुता।
नागरोन्मिश्रिता किञ्चिच्छुष्कपाके तदञ्जनम् ॥२१॥
पवनप्रभवा रोगा ये केचिद् दृष्टिनाशना.।
बीजेनानेन मेधावी तेषु कर्म प्रयोजयेत् ॥२२॥

---

## दशमोऽध्याय.।

अथातः पित्ताभिष्यन्दप्रतिषेधं व्याख्यास्यामः।

पित्तस्यन्दे पैत्तिके चाधिमन्थे
रक्तास्रावः स्रंसनञ्चापि कार्य्यम्।
अक्ष्णो. सेकालेपनस्याञ्जनानि
पैत्ते च स्याद्यद्विसर्पे विधानम् ॥१॥

गुन्द्रां शालि शैवल शैलभेद दार्वीमेलामुत्पल रोध्रमभ्रम्।
पद्मोत्पलं शर्कराद्दर्भमिक्षु ताल रोध्र वेतस पद्मकञ्च ॥२॥

द्राक्षां क्षौद्र चन्दनं यष्टिकाह्वं
योषित्क्षीरं रात्र्यनन्ते च पिष्ट्वा।
सर्पि.सिद्धं तर्पणे सेकनस्ये
शस्तं क्षीरं सिद्धमेतेषु वाजम ॥३॥

योज्यो वर्गो व्यस्त एषोऽन्यथा वा
सम्यङ्नस्ये ऽष्टार्धसख्यापि नित्यम्।
क्रिया. सर्वा पित्तहृथ्ये प्रशस्ता-
स्त्र्यहाच्चोर्द्ध क्षीरसर्पिश्च नस्यम ॥४॥
धालाश्मं स्याच्छोणित चाञ्जनार्थे
शल्लक्या वा शर्कराक्षौद्रयुक्तम्।
रसक्रिया शर्कराक्षौद्रयुक्ता
पालिन्द्यां वा मधुके वापि कुर्य्यात् ॥५॥
मुस्ता फेन. सागरस्योत्पलञ्च कमिघ्नैलाधात्रिबीजाद्रसञ्च।
तालीशैलागैरिकोशीरशङ्खैरेव युञ्ज्यादञ्जन स्तन्यपिष्टै. ॥६॥
चूर्णं कुर्य्यादञ्जनार्थे रसो वा
स्तन्योपेतो धातकीस्यन्दनाभ्याम्।
योषित्स्तन्य शातकुम्भ विघृष्ट
क्षौद्रोपेत कैंशुकञ्चापि पुष्पम् ॥७॥
रोध्र द्राक्षा शर्करामुत्पलञ्च
नार्य्या.'क्षीरे यष्टिकाह्व वचाञ्च।
पिष्ट्वा क्षीरे वर्णकस्य त्वचं वा
तोयोन्मिश्रे चन्दनोडुम्बरे च ॥८॥
कार्य्य. फेन. सागरस्याञ्जनार्थे
नारीस्तन्ये माक्षिके चापि घृष्ट:।
योषित्स्तन्ये स्थापित यष्टिकाह्व
रोध्र द्राक्षा शर्करामुत्पलञ्च ॥९॥
क्षौमावद्धं पथ्यमाश्च्योतने वा
सर्पिर्घृष्ट यष्टिकाह्व सरोध्रम्।

तोयोन्मिश्राः काश्मरीधात्रिपथ्या-
स्तद्दच्चाहुः कट्फलञ्चाम्बुनैव ॥१०॥
एषोऽम्लाख्येऽनुक्रमश्चापि शुक्तौ
कार्य्यं सर्वं स्यात्सिरामोक्षवर्ज्यं ॥११॥
सर्पिः पेयं त्रैफलं तैल्वकं वा
पेयं वा स्यात् केवलं यत् पुराणम्।
दोषेऽधस्ताच्छुक्तिकायामपास्ते
शीतैर्द्रव्यैरञ्जनं कार्य्यमाशु ॥१२॥
वैदूर्य्यं यत् स्फाटिकं वैद्रुमञ्च
मौक्तं शाङ्खं राजतं शातकुम्भम्।
चूर्णं सूक्ष्मं शर्कराक्षौद्रयुक्तं
शुक्तिं हन्यादञ्जनं चैतदाशु ॥१३॥
युञ्ज्यात्सर्पिर्धूमदर्शी नरस्तु
शेषं कुर्य्याद्रक्तपित्ते विधानम्।
यच्चैवान्यत् पित्तहृच्चापि सर्वं
यद्वीसर्पे पैत्तिके वै विधानम् ॥१४॥

---

## एकादशोऽध्यायः।

अथातः श्लेष्माभिष्यन्दप्रतिषेधं व्याख्यास्यामः।

स्यन्दाधिमन्थौ कफजौ प्रवृद्धौ जयेत्सिराणामथ मोक्षणेन।
स्वेदावपीडाञ्जनधूमसेकप्रलेपयोगैः कवडग्रहैश्च ॥१॥
रूक्षैस्तथाश्च्योतनसंविधानैस्तथैव रूक्षैः पुटपाकयोगैः।
वाराहमग्राह्यचाप्यपतर्पणान्ते प्रातस्तयोस्तिक्तघृतं प्रशस्तम्
॥२॥

तदन्नपानञ्च समाचरेद्धि यच्चक्षुषो नैव करोति हानिम्।
कुटन्नटास्फोतफणिज्झकविल्वपत्तूरपिल्वर्क्ककपित्थभङ्गैः ॥३॥
स्वेदं विदध्यादथवानुलेपं वर्हिष्ठशुण्ठीसुरकाष्ठकुष्ठैः।
सिन्धूत्थहिङ्गुत्रिफलामधूकप्रपौण्डरीकाञ्जनतुल्यताम्रैः ॥४॥
पिष्टैर्जलेनाञ्जनवर्त्तयः स्युः पथ्याहरिद्रामधुकाञ्जनैर्वा।
तीक्ष्णूषणानि त्रिफला हरिद्रा विडङ्गसारश्च समानि च स्युः
॥५॥

वर्हिष्ठकुष्ठामरकाष्ठशङ्खपाठानलव्योषमनःशिलाश्च।
पिष्टाम्बुना वा कुसुमानि जातीकरञ्जशोभाञ्जनजानि
युञ्ज्यात् ॥६॥

फलम्प्रकीर्य्यादथवापि शिग्रोः
पुष्पञ्च तुल्यं बृहतीद्वयस्य।
रसाञ्जनं चन्दनसैन्धवञ्च
मनःशिलालिं लशुनञ्च तुल्यम् ॥७॥

पिष्टाञ्जनार्थं कफजेषु धीमान्वर्त्तीर्विदध्यान्नयनामयेषु।
रोगे बलासग्रथितेऽञ्जनञ्चैः कर्त्तव्यमेतत्सुविशुद्धकाये ॥८॥

नीलान् यवान् गव्यपयोऽनुपीतान्
शलाकिनः शुष्कतनून् विदह्य।
तथाजकास्फोतकपित्थविल्व-
निर्गुण्डिजातीकुसुमानि चैव ॥९॥

तत्क्षारवत्सैन्धवतुल्यरोचन
पक्वं विदध्यादथ लोहनाड्याम्।
एतद् बलासग्रथितेऽञ्जनं स्या-
द्देशोऽनुकल्पस्तु फणिज्झकादौ ॥१०॥

महौषध मागधिकाश्च मुस्ता ससैन्धवं यन्मरिचञ्च शुक्लम्।
तन्मातुलुङ्गस्वरसेन पिष्ट नेत्राञ्जन पिष्टकमाशु हन्यात् ॥११॥
फलं वृहत्या मगधोद्भवानामादाय कल्कं फलपाककाले।
स्रोतोजयुक्तं खलु समरात्रात्तदुद्धृत स्यात्तु तथैव पथ्यम्
॥ १२ ॥
वार्ताकुशिग्विन्द्रसुरापटोलकिराततिक्तामलकीफलेषु।
कासीससामुद्ररसाञ्जनानि जात्यास्तथा कोरकमेव चापि
॥१३॥
प्रक्लिन्नवर्त्मन्युपदिश्यते तु योगाञ्जनं तन्मधुनावघृष्टम्।
नादेयमग्र्य मरिचञ्च शुक्ल नेपालजाता च समप्रमाणा
॥ १४ ॥
समातुलुङ्गद्रव एष योगः कण्डूं निहन्यात्सकदञ्जनेन।
सशृङ्गवेर सुरदारु मुस्तं सिन्धुप्रसूतं मुकुलानि जात्याः
॥१५॥
सुरासुपिष्टन्त्विदमञ्जन हि कण्ड्वाश्रुशोफे च हितं वदन्ति।
स्यन्दाधिमन्थक्रममाचरेच्च सर्वेषु चैतेषु सदाऽप्रमत्त. ॥१६॥

---

द्वादशोऽध्यायः।

अथातो रक्ताभिष्यन्दप्रतिषेध व्याख्यास्याम ।

मन्थ स्यन्द सिरोत्पातं सिराहर्षञ्च रक्तजम्।
एकैकेन विधानेन चिकित्सेच्चतुरो गदान् ॥१॥
व्याध्यार्त्तांश्चतुरोऽप्येतान् स्निग्धान् कौम्भेन सर्पिषा।
रसैरुदारैरथवा सिरामोक्षेण योजयेत् ॥२॥
विरिक्तानां प्रकामञ्च शिरास्येषा विशोधयेत्।

वैरेचनिकसिद्धेन सितायुक्तेन सर्पिषा ॥३॥
ततः प्रदेहाः परिषेचनानि नस्यानि धूमाश्च यथास्वमेव ।
आश्चोतनाभ्यञ्जनतर्पणानि स्निग्धाश्च कार्य्याः पुटपाक-
योगाः ॥४॥
नीलोत्पलोशीरकटङ्कटेरीकालीययष्टीमधुमुस्तरोध्रैः ।
सपद्मकैर्धौतघृतप्रदिग्धैरक्ष्णोः प्रलेपं परितः प्रकुर्य्यात् ॥५॥
रुजायां चाप्यतिभृशं स्वेदाश्च मृदवो हिताः ।
अक्ष्णोः समन्ततः कार्य्यं पातनञ्च जलौकसाम् ॥६॥
घृतस्य महती मात्रा पीता चार्त्तिं नियच्छति ।
पिताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥७॥
कसेरुमधुकाभ्यां वा चूर्णमम्बरसंहृतम् ।
न्यस्तमप्स्वान्तरिक्षासु हितमाश्चोतनम्भवेत् ॥८॥
पाटल्यर्जुनश्रीपर्णीधातकीधात्रिबिल्वतः ।
पुष्पाण्यथ बृहत्योश्च बिम्बा लोटाच्च तुल्यशः ॥९॥
समञ्जिष्ठानि मधुना पिष्टानीक्षुरसेन वा ।
रक्ताभिष्यन्दशान्त्यर्थमेतदञ्जनमिष्यते ॥१०॥
चन्दनं कुमुदं पत्रं शिलाजतु सकुङ्कुमम् ।
अयस्ताम्ररजस्तुत्थं निम्बनिर्यासमञ्जनम् ॥११॥
त्रपु कांस्यमलं चापि पिष्ट्वा पुष्परसेन तु ।
विपुला याः कृता वर्त्तयः पूजितास्ताञ्जने सदा ॥१२॥
स्यादञ्जनं घृतं क्षौद्रं सिरोत्पातस्य भेषजम् ।
तद्वत्सैन्धवकासीसस्तन्यघृष्टञ्च पूजितम् ॥१३॥
मधुना शङ्खनेपालीतुत्थदार्व्यः ससैन्धवाः ।
रसः शिरीषपुष्पाच्च सुरामरिचमाक्षिकैः ।

युक्तन्तु मधुना वापि गैरिकं हितमञ्जनम् ॥१४॥
सिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम् ।
मधुना तार्क्ष्यजं वापि कासीसं वा ससैन्धवम् ॥१५॥
वेत्राम्लस्तन्यसंयुक्तं फाणितन्तु ससैन्धवम् ।
पैत्तं विधिमशेषेण कुर्य्यादर्ज्जुनशान्तये ॥१६॥
इक्षुक्षौद्रसितास्तन्यदार्वीमधुकसैन्धवैः ।
सेकाञ्जनं चात्र हितमम्लैराश्चोतनं तथा ॥१७॥
सितामधुकटङ्कमस्तुक्षौद्राम्लसैन्धवैः ।
वीजपूरककोलाम्लदाडिमाम्लैश्च युक्तितः ॥१८॥
एकशो वा द्विशो वापि योजितं वा त्रिभिस्त्रिभिः ।
स्फटिकं विद्रुमं शङ्खो मधुकं मधु चैव हि ॥१९॥
शङ्खक्षौद्रसितायुक्तं सामुद्रं फेन एव च ।
द्वाविमौ विहितौ योगावञ्जनेऽर्ज्जुननाशनौ ॥२०॥
सैन्धवक्षौद्रकतकाः सक्षौद्रं वा रसाञ्जनम् ।
कासीसं मधुना वापि योज्यमश्माञ्जने सदा ॥२१॥
लोहचूर्णानि सर्वाणि धातवो लवणानि च ।
रत्नानि दन्ताः शृङ्गाणि गणश्चाप्यवसादनः ॥२२॥
कुक्कुटाण्डकपालानि लशुनं कटुकत्रयम् ।
करञ्जवीजमेलाश्च लेख्याञ्जनमिदं स्मृतम् ॥२३॥
पुटपाकावसानेन रक्तविस्रावणादिना ।
सम्पादितस्य विधिना कृत्स्नेन स्यन्दघातिना ॥२४॥
अनेनापहरेच्छुक्लमव्रणं कुशलो भिषक् ।
उत्तानमवगाढं वा कर्कशं वापि सव्रणम् ॥२५॥
शिरीषवीजमरिचपिप्पलीसैन्धवैरपि ।

शुक्रस्य घर्षणं कार्य्यमथवा सैन्धवेन तु ॥२६॥
कुर्य्यात्ताम्ररजःशङ्खशिलामरिचसैन्धवैः ।
अञ्ज्याद् द्विगुणितैरेभिरञ्जनं शुक्रनाशनम् ॥२७॥
कुर्य्यादञ्जनयोगौ वा सम्यक्श्लोकार्द्धिकाविमौ ॥२८॥
शङ्खकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ।
क्षौद्रदन्तार्णवमलशिरीषकुसुमैरपि ।
क्षाराञ्जनं वा वितरेद्दलशग्रथितापहम् ॥२९॥
मुद्गान् वा निस्तुषान् भृष्टान् शङ्खक्षौद्रसितायुतान् ।
मधूकसारं मधुना योजयेच्चाञ्जने सदा ॥३०॥
विभीतकास्थिमज्जा वा सक्षौद्रं शुक्रनाशनः ॥३१॥
शङ्खशुक्तिमधुद्राक्षामधूककतकानि च ।
द्वित्वग्गते सशूले वा वातघ्नं तर्पणं हितम् ॥३२॥
वंशजारुष्करौ तालं नारिकेलञ्च दाहयेत् ।
विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम् ।
बहुशोऽञ्जनमेतस्याच्छुक्रवैवर्ण्यनाशनम् ॥३३॥
अजका पार्श्वतो विद्धा सूच्या विस्राव्य चोदकम् ।
व्रणं गोमांसचूर्णेन पूरयेत् सर्पिषा सह ॥३४॥
बहुशोऽवलिखेच्चापि वर्त्मास्योपगतं यदि ॥३५॥
सशोफश्चाप्यशोफश्च द्वौ पाकौ यौ प्रकीर्त्तितौ ।
स्नेहस्वेदोपपन्नस्य तत्र विद्ध्वा सिरां भिषक् ।
सेकाश्च्योतननस्यानि पुटपाकांश्च कारयेत् ॥३६॥
सर्वतश्चापि शुद्धस्य कर्त्तव्यमिदमञ्जनम् ॥३७॥
ताम्रपात्रस्थितं मासं सर्पिः सैन्धवसंयुतम् ।
मैरेयं वापि दध्येव दध्युत्तरकमेव च ॥३८॥

घृतं कांस्यमलोपेतं स्तन्यं वापि ससैन्धवम् ।
मधूकसारं मधुना तुल्यांशं गैरिकेण वा ॥३९॥
सर्पिः सैन्धवताम्राणि योषित्स्तन्ययुतानि च ।
दाडिमारेवताश्मन्तकोलाम्लैश्च ससैन्धवम् ।
रसक्रिया वा वितरेत्सम्यक्पाकजिघांसया ॥४०॥
मांसं सैन्धवसंयुक्तं स्विन्नं सर्पिषि नागरम् ।
आश्च्योतनाञ्जनं योज्यमजाक्षीरसंयुतम् ॥४१॥
जात्याः पुष्पं सैन्धवं शृङ्गवेरं
कृष्णाबीजं कीटशत्रोश्च सारम् ।
एतत्पिष्टं नेत्रपाकेऽञ्जनार्थं
क्षौद्रोपेतं निर्विशङ्कं प्रयोज्यम् ॥४२॥
पूयालसे शोणितमोक्षणञ्च
हितं तथैवाप्युपनाहनञ्च ।
कृत्स्नो विधिश्चेक्षणपाकघातो
यथाविधानं भिषजा प्रयोज्यः ॥४३॥
कासीससिन्धुप्रभवार्द्रकैस्तु हितं भवेदञ्जनमेव चात्र ।
क्षौद्रान्वितैरेभिरथोपयुञ्ज्यादन्यत्तु ताम्रायसचूर्णयुक्तं ॥४४
स्नेहादिना सम्यगपास्य दोषांस्तृप्तं विधायाथ यथास्वमेव ।
प्रक्लिन्नवर्त्मानमुपक्रमेत सेकाञ्जनाश्च्योतननस्यधूमैः ॥४५॥
मुस्ताहरिद्रामधुकं प्रियङ्गुसिद्धार्थरोध्रोत्पलसारिवाभिः ।
क्षुण्णाभिराश्च्योतनमेव कार्यमत्राञ्जनं चाञ्जनमाक्षिकं स्यात् ॥४६॥
पत्रं फलञ्चामलकस्य पक्त्वा क्रियां विदध्यादथवाञ्जनार्थे ।
वंशस्य मूलेन रसक्रियां वा वर्त्तीकृतां ताम्रकपालपक्वाम् ॥४७

रसक्रियां वा त्रिफलाविपक्वां
पलाशपुष्पैः खरमञ्जरेर्वा ।
पिष्ट्वा छगल्या पयसा मलं वा
कासस्य दग्ध्वा सह ताम्रवेन ॥४८॥

प्रत्यञ्जने ताम्ररिचैरुपेतं चूर्णेन ताम्रस्य सहोपयोज्यम् ।
समुद्रफेनं लवणोत्तमञ्च शङ्खोऽथ मुद्गो मरिचञ्च शुक्लम् ॥४९॥

चूर्णाञ्जनं योज्यमथापि कण्डू-
मक्षिमवर्त्मान्युपहन्ति शीघ्रम् ।
प्रक्लिन्नवर्त्मन्यपि चैव एव
योगाः प्रयोज्याश्च समीक्ष्य दोषान् ॥५०॥

सकाञ्जलं ताम्रघटे च घृष्टं सर्पिर्युतं तुल्यकमञ्जनं च ॥५१॥

---

## त्रयोदशोऽध्यायः ।

अथातो लेख्यरोगप्रतिषेधं व्याख्यास्यामः ।

नव येऽभिहिता लेख्याः सामान्यस्तेष्वयं विधिः ।
स्निग्धवान्तविरिक्तस्य निवातातपसद्मनि ॥१॥
सुखोदकप्रतप्तेन वाससा सुसमाहितं ।
स्वेदयेद्वर्त्म निर्भुज्य वामाङ्गुष्ठाङ्गुलिस्थितम् ॥२॥
अङ्गुल्यङ्गुष्ठकाभ्यान्तु निर्भुग्नं वर्त्म यत्नतः ।
शीतान्तरीकृतं नैव चलति स्रस्तेऽपि वा ॥३॥
ततः प्रमृज्य शोतेन वर्त्म शस्त्रपदाङ्कितम् ।
लिखेच्छस्त्रेण पत्रैर्वा ततो रक्ते स्थिते पुनः ॥४॥
स्विन्नं मनोह्वाकासीसव्योषाञ्जनकसैन्धवैः ।

श्लक्ष्णपिष्टैः समाक्षीकैः प्रतिसार्य्योष्णवारिणा ॥५॥
प्रक्षाल्य हविषा सिक्तं व्रणवत् समुपाचरेत्।
स्वेदावपीडप्रभृतींस्त्यक्त्वा दूष्यं प्रयोजयेत्।
व्यासतस्ते समुद्दिष्टं विधानं लेख्यकर्म्मणि ॥६॥
असृगास्रावरहितं कण्डूशोफविवर्जितम्।
समं नखनिभं वर्त्म लिखितं सम्यगिष्यते ॥७॥
रक्तमक्षि स्रवेत् स्नानं चताक्ष्णस्त्वलतन्द्रु भ्रुवम् ॥८॥
रागशोफपरिस्रावास्तिमिरं व्याध्यनिर्जयं।
वर्त्म श्यावं गुरु स्तब्धं कण्डूहर्षोपदेहवत् ॥९॥
नेत्रपाकमुदीर्णं वा कुर्वीताप्रतिकारिणः।
एतद् दुर्लिखितं ज्ञेयं स्नेहयित्वा पुनर्लिखेत् ॥१०॥
व्यावर्त्तते यो वर्त्म पक्ष्म चापि विमुञ्चति।
स्यात् सरुक् स्रावभूयिष्ठं तदतिस्रावितं विदुः ॥११॥
स्नेहस्वेदादिरिष्टः स्यात् क्रमस्तत्रानिलापहः।
वर्त्मावबन्धं क्लिष्टञ्च बहलं यच्च कीर्त्तितम् ॥१२॥
पोथकी चाप्यवलिखेत् प्रच्छयित्वाग्रतः शनैः।
समं लिखेत् तु मेधावी श्यावकर्द्दमवर्त्मनी ॥१३॥
कुम्भीकिनीं शर्कराञ्च तथैवोत्सङ्गिनीमपि।
कर्त्तयित्वा तु शस्त्रेण लिखेत् पश्चादतन्द्रितः ॥१४॥
भवेयुर्वर्त्मसु च याः पिडकाः कठिना भृशम्।
रुक्षास्ताम्राश्च ताः पक्वा भिन्द्या छित्त्वा लिखेदपि ॥१५॥
तरुणीश्चाल्पसंरम्भाः पिडका बाह्यवर्त्मजाः।
विदित्वैताः प्रशमयेत् स्वेदालेपनशोधनैः ॥१६॥

## चतुर्दशोऽध्यायः ।

अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः ।

स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराश्रयम् ।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥१॥
कासीसमागधीपुष्पनैपाल्येलायुतेन तु ।
ततः क्षौद्रघृतं दत्त्वा सम्यग्बन्धमुपाचरेत् ॥२॥
रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च ।
प्रतिसारणमेकैकं भिन्ने लगणे इष्यते ॥३॥
महत्यपि च युञ्जीत क्षाराग्निविधिकोविदः ।
स्विन्नां भित्त्वा विनिष्पीड्य भिषगञ्जननामिकाम् ॥४॥
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ।
रसाञ्जनमधुभ्यां वा भित्त्वा वा शस्त्रकर्मवित् ॥५॥
प्रतिसार्योऽञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ।
सम्यक्स्विन्ने क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥६॥
त्रिफलातुल्यकासीससैन्धवैस्तु रसक्रियाम् ।
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ॥७॥
लेखयेन्मण्डलाग्रेण समन्तात् प्रच्छयेदपि ।
सन्निरुद्ध्य पत्रभङ्गैश्च स्वेदयित्वा यथासुखम् ॥८॥
आपाकादिविधिनोक्तेन पञ्चभेद्यानुपाचरेत् ।
सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम् ।
सम्यक् प्रयतो भूत्वा कुर्वीत प्रचरोपणम् ॥९॥

---

पञ्चदशोऽध्यायः।

अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः।

स्निग्धं भुक्तवतो ह्यन्नमुपविष्टस्य यन्नतः।
संरोषयेत्तु नयनं भिषक् चूर्णैस्तु लावणैः ॥१॥
ततः संरोषितं तूर्णं सुस्विन्नं परिघट्टितम्।
अर्म यत्र वलीजातं तत्रैतल्लगयेद्भिषक् ॥२॥
अपाङ्गं प्रेक्षमाणस्य वडिशेन समाहितः।
मुचुण्ड्याग्रहणं मेधावी सूचीसूत्रेण वा पुनः ॥३॥
न चोत्थापयता क्षिप्रं कार्य्यमभ्युन्नतं तु तत्।
शस्त्रपातभयाच्चास्य वर्त्मनी ग्राहयेद्दृढम् ॥४॥
ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम्।
उल्लिख्य मण्डलाग्रेण तीक्ष्णेन परिशोधयेत् ॥५॥
विमुक्तं सर्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात्।
नीत्वा कनीनकोपान्तं छिन्द्यान्नातिकनीनकम् ॥६॥
चतुर्भागस्थिते मांसे नाक्षिव्यापत्तिमर्हति।
कनीनकवधादस्र नाडी चाप्युपजायते ॥७॥
हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति।
अर्म यज्जालवच्चापि तदप्युन्नाम्य लम्बितम् ॥८॥
छिन्द्याद्वक्रेण शस्त्रेण वर्त्मशुक्लान्तमाश्रितम्।
प्रतिसारणमक्ष्णोस्तु ततः कार्य्यमनन्तरम् ॥९॥
यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च।
स्वेदयित्वा ततः पश्चाद् बध्नीयात् कुशलो भिषक् ॥१०॥
देशर्त्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम्।
व्रणवत् संविधानन्तु तस्य कुर्य्यादतः परम्।

वाग्हान्भुक्ता ज्वरस्विद् दत्त्वा शोधनमाचरेत् ॥११॥
करञ्जवीजामलकमधूके साधित पय ।
हितमाश्च्योतनं शूले विरक्ते क्षौद्रसंयुतम् ॥१२॥
मधुकोत्पलकिञ्जल्कदूर्वाकल्कैश्च मूर्द्धनि ।
प्रलेप. सघृत शीत क्षीरपिष्ट प्रशस्यते ॥१३॥
लेख्याञ्जनैरपहरेदर्मशेष भवेद्यदि ॥१४॥
अर्म चाल्प दधिनिभ नीलं रक्तमथापि वा ।
धूसर तनु यच्चापि शुक्रवत् तदुपाचरेत् ॥१५॥
चर्माभम्बहल यत्तु स्नायुमांसघनावृतम् ।
छेद्यमेव तदर्म स्यात् कृष्णमण्डलगञ्च यत् ॥१६॥
विशुद्धवर्णमक्लिष्ट क्रियास्वक्षिगतक्लमम् ।
छिन्नेऽर्मणि भवेत् सम्यग्यथास्वमनुपद्रवम् ॥१७॥
सिराजाले सिरा यास्तु कठिनास्ताश्च बुद्धिमान् ।
उल्लिखेन्मण्डलाग्रेण वडिशेनावलम्बिता ॥१८॥
सिरासु पिडका जाता या न सिध्यन्ति भेषजै ।
अर्मवन्मण्डलाग्रेण तासां छेदनमिष्यते ॥१९॥
रोगयोश्चैतयो कार्य्यमर्मोक्त प्रतिसारणम् ।
विधिश्चापि यथादोष लेखनद्रव्यसम्भृत: ॥२०॥
सन्धौ सस्वेद्य शस्त्रेण पर्वणीका विचक्षण ।
उत्तरे च त्रिभागे च वडिशेनावलम्बिताम् ॥२१॥
छिन्द्यात् ततोऽर्द्धमश्रे स्यादश्रुनाडी क्षतोऽन्यथा ।
प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते ॥२२॥
लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम् ।
शङ्ख समुद्रफेनञ्च मण्डूकीञ्च समुद्रजाम् ॥२३॥

स्फटिक कुरुविन्दश्च प्रवालाश्मकस्तथा।
वैदूर्य्योपलक मुक्तामयस्ताम्ररजांसि च ॥२४॥
समभागानि सञ्चिथ सार्द्धं श्रोतोञ्जनेन तु।
चूर्णाञ्जन कारयित्वा भाजने मेषशृङ्गजे ॥२५॥
सस्थाप्योभयत कालमञ्जयेत् सतत बुध:।
अर्माणि पिडका हन्यात् सिराजालानि तेन वै ॥२६॥
अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्बुदमेव च।
अभ्यन्तरं वर्त्मगया विधान तेषु वक्ष्यते ॥२७॥
वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्चिप्य प्रयत्नत:।
मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषग्वर. ॥२८॥
तत' सैन्धवकासीसकृष्णाभि. प्रतिसारयेत्।
स्थिते च रुधिरे वर्त्म दहेत् सम्यक् शलाकया ॥२९॥
क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि।
तीक्ष्णै रुभयतो भागैस्ततो दोषमधिक्षिपेत् ॥३०॥
वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम्।
शस्त्रकर्मण्युपरते मासञ्च स्यात् सुयन्त्रित. ॥३१॥

---

षोडशोऽध्याय ।

अथात. पक्ष्मकोपप्रतिषेध व्याख्यास्याम:।

याप्यस्तु यो वर्त्मभवो विकार.
पक्ष्मप्रकोपोऽभिहित. पुरस्तात्।
तत्रोपविष्टस्य नरस्य चर्म
वर्त्मोपरिष्टादनुतिर्य्यगेव ॥ १ ॥
भ्रुवोरधस्तात् परिमुच्य भागौ

पक्ष्माश्रितं चैकमतोऽवकृन्तेत् ।
कनीनकापाङ्गसमं समन्तात्
यवाकृति स्निग्धतनोर्नरस्य ॥२॥

उत्कृत्य शस्त्रेण यवप्रमाणं बालेन सीव्येद्भिषगप्रमत्तः ।
दत्त्वा च सर्पिर्मधुनावशेषं कुर्य्याद्विधानं विदितं व्रणे यत्
॥३॥

ललाटदेशे च निवद्धपट्टं प्राक्स्यूतमत्राप्यपरञ्च बद्ध्वा ।
स्थैर्य्यं गते चाप्यथ शस्त्रमार्गे बालान् विमुञ्चेत् कुशलोऽभि-
वीक्ष्य ॥४॥

एवं न चेच्छाम्यति तस्य वर्त्म
निर्भुज्य दोषोपहतां बलिञ्च ।
ततोऽग्निना वा प्रतिसारयेत् तां
क्षारेण वा सम्यगवेक्ष्य धीरः ॥५॥
छित्त्वा समं वाप्युपपक्ष्ममालां
सम्यग् गृहीत्वा वडिशैस्त्रिभिश्च ।
पथ्याफलेन प्रतिसारयेत् तु
पिष्टेन वा तीवरकेण सम्यक् ॥६॥

चत्वार एते विधयो विहन्तु पक्ष्मोपरोधं पृथगेव शस्ताः ।
विरेचनाश्च्योतनस्यधूमलेपाञ्जनस्नेहरसक्रियाश्च ॥७॥

—

## सप्तदशोऽध्यायः ।

अथातो दृष्टिगतरोगप्रतिषेधं व्याख्यास्यामः ।

त्रयः साध्यास्त्रयोऽसाध्या याप्याः षट् च भवन्ति हि ।
तत्रैकस्य प्रतीकारः कीर्त्तितो धूमदर्शिनः ॥१॥

दृष्टौ पित्तविदग्धायां विदग्धायां कफेन च।
पित्तश्लेष्महरं कुर्य्याद् विधिं शस्त्रचताद्दते ॥२॥
नस्यसेकाञ्जनालेपपुटपाकैः सतर्पणैः।
आद्ये तु त्रैफलं पेयं सर्पिस्तैल्वनमुत्तरे ॥३॥
तैल्वकं चोभयोः पथ्यं केवलं जीर्णमेव वा।
गैरिकं सैन्धवं कृष्णा गोदन्तस्य मसीन्तथा ॥४॥
गोमांसं मरिचं वीजं शिरीषस्य मनःशिला।
वृन्तं कपित्थान्मधुना स्वयङ्गुप्ताफलानि च।
चत्वार एते योगाः स्युरुभयोरञ्जने हिताः ॥५॥
कुञ्जकाशोकशालाम्रप्रियङ्गुनलिनोत्पलैः।
पुष्पैर्हरेणुकृष्णाह्वापथ्यामलकसंयुतैः ॥६॥
सर्पिर्मधुयुतैश्चूर्णैर्वेणुनाड्यामवस्थितैः।
अञ्जयेद् द्वावपि भिषक् पित्तश्लेष्मविभावितौ ॥७॥
आम्रजम्बूद्भवं पुष्पं तद्रसेन हरेणुकाम्।
पिष्ट्वा चौद्राज्यसंयुक्तां प्रयोज्यमथवाञ्जनम् ॥८॥
नलिनोत्पलकिञ्जल्कगैरिकैर्गोशकृद्रसैः।
गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम् ॥९॥
रसाञ्जनरसचौद्रतालीशस्वर्णगैरिकम्।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥१०॥
शीतं सौवीरकं वापि पिष्ट्वाथ रसभावितम्।
कूर्मपित्तेन मतिमान् भावयेद्रौहितेन वा ॥११॥
चूर्णाञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये ॥१२॥
काश्मरीपुष्पमधुकदार्वीरोध्ररसाञ्जनैः।
सचौद्रमञ्जनन्तद्वद्धितं नेत्रामये सदा ॥१३

स्रोतोजं सैन्धवं कृष्णे शुक्ले चापि पिबेत् ।
अजमूत्रेण ता वर्त्त्यः क्षणदान्ध्यान्जने हिता ॥१४॥
कालानुसारिवा कृष्णा नागरं मधुकं तथा ।
तालीशपत्रं क्षणदे गाङ्गेयञ्च शकृद्रसे ॥१५॥
कृतास्ता वर्त्तय पिष्टाश्छायाशुष्का सुखावहाः ।
मनःशिलाभयाव्योषबलाकालानुसारिवाः ॥१६॥
सफेना वर्त्तय पिष्टाश्छागक्षीरसमन्विताः ।
गोमूत्रपित्तमदिराशकृद्धात्रीरसे पचेत् ॥१७॥
क्षुद्राञ्जनं रसे चान्यद्यकृतस्त्रैफलेऽपि वा ।
गोमूत्राब्ध्यार्णवमलपिप्पलीक्षौद्रकट्फलम् ॥१८॥
सैन्धवोपहितं शुष्कमग्निहितं वेणुगह्वरे ।
मेदोयकृद्घृतच्छाजं पिप्पल्यः सैन्धवं मधु ॥१९॥
रसमामलकञ्चापि पक्वं सम्यङ्निधापयेत् ।
कोशे खदिरनिर्माणे तद्वत् क्षुद्राञ्जनं हितम् ॥२०॥
हरेणुमगधाजास्थिमज्जैलायकृदन्वितम् ।
शकृद्रसेनाञ्जनं वा श्लेषोपहतदृष्टये ॥२१॥

विपाच्य गोधायकृदर्द्धपाटितं
सुपूरितं मागधिकाभिरग्निना ।
निषेवितं तत् सकृदञ्जनेन
निहन्ति नक्ताध्यमसंशयं खलु ॥२२॥
तथा यकृच्छागभवं हुताशने
विपाच्य सम्यङ्मगधासमन्वितम् ।
प्रयोजितं पूर्ववदाशु संशयं
जयेत् क्षपान्ध्यं सकृदञ्जनान्नृणाम् ॥२३॥

प्लीहा यकृच्चाप्युपभचिते उभे प्रकल्पय शूल्ये घृततैलमञ्जनम ।
ते सार्षपस्नेहसमायुतेऽञ्जन नक्तान्ध्यमाशेव हृत. प्रयोजिते
।२४॥

नदीजशिस्त्रीकटुकान्यथाञ्जन
मन.शिला द्वे च निशे यकृद्रसे ।
सचन्दनेय गुटिकाथवाञ्जन
प्रशस्यते वै दिवसेष्वपश्यताम ।२५॥
भवन्ति याप्या खलु ये षडामया
हरेदसृक्तेषु सिराविमोक्षणे ।
विरेचयेच्चापि पुराणसर्पिषा
विरेचनाङ्गोपहितेन सर्वदा ॥२६॥
पयोविमिश्र पयसोद्भवे हित
वदन्ति पश्चाङ्गुलतैलमेव तु।
भवेद् घृत त्रैफलमेव शोधन
विशेषत. शोणितपित्तरोगयो' ॥२७॥
त्रिवृद्विरेक कफजे प्रशस्यते
त्रिदोषजे तैलमुशन्ति तत्कृतम् ।
पुराणसर्पिस्तिमिरेषु सर्वतो
हितं भवेदायसभाजनस्थितम ॥२८॥
हित च विद्यात् त्रिफलाघृत सदा
कृतश्च यन्मेषविषाणनामभि' ।
सदावलिह्यात् त्रिफला सुचूर्णितां
घृतप्रगाढा तिमिरेऽथ पित्तजे ॥२९॥

समीरजे तैलयुताङ्कफात्मके मधुप्रगाढ़ा विदधीत युक्तित.

गवा शकृतक्काथविपक्वमुत्तम हितन्तु तैल तिमिरेषु लावणम
॥२०॥

हितं घृत केवलमेव पैत्तिके
छागाविक यन्मधुरैर्विपाचितम् ।
तैल स्थिरादौ मधुरे च यद्गणे
तथाणुतैल पवनासृगुत्थयो ॥२१॥
सहाश्वगन्धातिबलावरीशृतं
हितश्च नस्ये त्रिवृत यदीरितम् ।
जलोद्भवानूपजमाससस्कृताद्
घृत विधेय पयसो यदुत्थितम् ॥२२॥
ससैन्धव. क्रव्यभुगेणमासयो-
र्हित ससर्पिं समधु पुटाह्वय ।
वसाथ गृध्रोरगताम्रचूडजा
सदा प्रशस्ता मधुकान्विताञ्जने ॥२३॥
प्रत्यञ्जन स्रोतसि यत्समुत्थित
क्रमाद्रसक्षीरघृतेषु भावितम् ।
स्थित दशाहत्रयमेतदञ्जन
कृष्णोरगास्ये कुशसम्प्रवेष्टिते ॥२४॥
तन्मालतीक्षारकसैन्धवायुत
सदाञ्जन स्यात्तिमिरेऽथ रागिणि ।
सुभावितं वा पयसा दिशत्रयं
काचापहं शास्त्रविदः प्रचक्षते ॥२५॥
हविर्हितं क्षीरभवन्तु पैत्तिके
वदन्ति नस्ये मधुरौषधै. कृतम् ।

तत्तर्पणे चैव हित प्रयोजित
सजाङ्गलस्तेषु च य पुटाह्वय ॥३६॥
रसाञ्जनक्षौद्रसितामन शिला-
समुद्राञ्जन तन्मधुकेन सयुतम।
समाञ्जन वा कनकाकरोद्भवं
सुचूर्णित श्रेष्ठमुशन्ति तद्विद. ॥३७॥
भिल्लोटगन्धोदकसेकसेवित
प्रत्यञ्जनञ्चात्र हित तु तुत्यकम्।
समेषशृङ्गाञ्जनभागसम्मित
जलोद्भव काचमल व्यपोहति ॥३८॥
पलाशरोहीतमधूकजा रसा
क्षौद्रेण युक्ता मदिराशमिश्रिता:।
उशीरलोध्रत्रिफलाप्रियङ्गुभि:
पचेत् तु नस्यङ्कफरोगशान्तये ॥३९॥
विडङ्गपाठाकिणिहीङ्गुदीत्वच
प्रयोजयेद् धूममुशीरसयुतम।
वनस्पतिक्काथविपाचित घृतं
हित हरिद्रानलदेऽवतर्पणे ॥४०॥
समागधा माक्षिकसैन्धवाढ्य
सजाङ्गल. स्यात् पुटपाक एव च।
मन शिलातूषणशङ्खमाक्षिकै'
ससिन्धुकासीसरसाञ्जनै क्रिया ॥४१॥
हिते च कासीसरसाञ्जने तथा
वदन्ति पथ्ये शुडनागरैर्युते।

यदञ्जन वा बहुशो निषेवितं
समूलवर्गे त्रिफलोदके शृते ॥४२॥
निशाचरास्थिस्थितमेतदञ्जन
क्षिपेच्च मास सलिले स्थिरे पुन.।
मेषस्य पुष्पैर्मधुकेन संयुत
तदञ्जनं सर्वकृते प्रयोजयेत् ॥४३॥
क्रियाश्च सर्वा घृतजोऽद्भवे हित
क्रम परिम्लायिनि चापि पित्तहृत्।
क्रमो हित स्यन्दहर' प्रयोजित.
समीक्ष्य दोषेषु यथास्वमेव च ॥४४॥
दोषोदयेनैव च विप्लुतिङ्गते
द्रव्याणि नस्यादिषु योजयेद् बुध ।
पुनश्च कर्मोऽञ्जनविस्तर शुभ
प्रवक्ष्यतेऽन्यस्तमपोह योजयेत् ॥४५॥
घृत पुराण त्रिफला शतावरी
पटोलमुद्गामलक यवानपि ।
निषेवमाणस्य नरस्य यत्नतो
भय सुघोरात्तिमिरान्न विद्यते ॥४६॥

शतावरीपायस एव केवलस्तथाकृतो वामलकेषु पायस ।
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिर व्यपोहति ॥४७॥

जीवन्तिशाकं सुनिषण्णकञ्च सतण्डुलीय वरवास्तुकञ्च ।
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलञ्च ॥४८॥

पटोलकर्कोटककारवेल्लवार्त्ताकुतकारिकरीरजानि।
शाकानि शिग्र्वार्त्तगलानि चैव हितानि दृष्टे घृतसाधितानि
॥४९॥

विवर्जयेत्सिरामोक्षं तिमिरे रागमागते।
यन्त्रणोत्पीडितो दोषो निहन्यादाशु दर्शनम् ॥५०॥
अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम्।
कृच्छ्रं द्वितीये रागि स्यात् तृतीये याप्यमुच्यते ॥५१॥
रागप्राप्तेष्वपि हितास्तिमिरेषु तथा क्रिया.।
यापनार्थं यथोद्दिष्टा सेव्याश्चापि जलौकस.॥५२॥
श्लैष्मिके लिङ्गनाशे तु कर्म वक्ष्यामि सिद्धये।
न चेदर्द्धेन्दुघर्माम्बुविन्दुमुक्ताकृति स्थिर ॥५३॥
विषमो वा तनुर्मध्ये राजिमान् वा बहुप्रभ।
दृष्टिस्थो लक्ष्यते दोष सरुजो वा सुलोहित ॥५४॥
स्निग्धस्विन्नस्य तस्याथ कालेनात्युष्णशीतले।
यन्त्रितस्योपविष्टस्य स्वा नासाम्प्रश्यत समम ॥५५॥
मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा त्वपाङ्गत।
उन्मील्य नयने सम्यक् सिराजालविवर्जिते ॥५६॥
नाधो नोर्द्ध्वं च पार्श्वाभ्यां छिद्रे दैवकृते तत।
शलाकया प्रयत्नेन विश्वस्तं यववक्त्रया ॥५७॥
मध्यप्रदेशिन्यङ्गुष्ठस्थिरहस्तगृहीतया।
दक्षिणेन भिषक् सव्यं विध्येत् सव्येन चेतरत् ॥५८॥
वारिविन्द्वागमं सम्यग् भवेच्छब्दस्तथा व्यधे।
ससिच्य विद्धमात्रन्तु योषितस्तन्येन कोविदः ॥५९॥
स्थिरे दोषे चले वापि स्वेदयेदक्षि वाह्यत.।

सम्यक् शलाका सस्थाप्य भङ्गैरनिलनाशनै. ॥६०॥
शलाकाग्रेण तु ततो निर्लिखेद् दृष्टिमण्डलम् ।
विध्यतो योऽन्यपार्श्वेऽस्यास्त रुद्धा नासिकापुटम् ॥६१॥
उच्छिङ्घनेन हर्त्तव्यो दृष्टिमण्डलज कफ ।
निरभ्र इव घर्मांशुर्यदा दृष्टि प्रकाशते ।६२॥
तदासौ लिखिता सम्यग् ज्ञेया या चापि निर्व्यथा ।
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनै ॥६३॥
घृतेनाभ्यज्य नयन वस्त्रपट्टेन वेष्टयेत् ।
ततो गृहे निराबाधे शयीतोत्तान एव च ॥६४॥
उद्गारकासक्षवथुष्ठीवनोज्जृम्भणानि च ।
तत्काल नाचरेदूर्ध्व विधिश्च स्नेहपीतवत् ॥६५॥
त्र्यहात् त्र्यहाच्च धावेत कषायैरनिलापहै. ।
वायोर्भयात् त्र्यहादूर्ध्व स्वेदयेदक्षि पूर्ववत् ॥६६॥
दशाहमेव सयम्य हित दृष्टिप्रसादनम् ।
पश्चात् कर्म च सेवेत लघ्वन्नञ्चापि मात्रया ॥६७॥
सिराव्यधावधौ पूर्व नरा ये च विवर्जिता. ।
न तेषा नीलिका विध्येदन्यत्राभिहिताद्भिषक् ॥६८॥
मूर्च्छति शोणितेनाक्षि सिरावेधादिसर्पता ।
तत्र स्त्रीस्तन्ययष्ट्याह्वपक्व सेके हित घृतम् ॥६९॥
अपाङ्गासन्नविद्धे तु शोफशूलास्रुरक्तता ।
तत्रोपनाह-भ्रूमध्ये कुर्य्याच्चोष्णाज्यसेचनम् ॥७०॥
व्यधेनासन्नकृष्णेन भाग कृष्णस्य पीड्यते।
तत्राध. शोधन सेक. सर्पिषा रक्तमोक्षणम् ॥७१॥
अथाप्युपरि विद्धे तु कष्टा रुक् सम्प्रवर्त्तते ।

तत्र कोष्णेन हविषा परिषेकः प्रशस्यते ॥७२॥
शूलाश्रुरागास्त्वत्यर्थमधो विद्धे भवन्ति हि ।
विदधीत भिषग्धीमान् तत्र पूर्वचिकित्सितम् ॥७३॥
रागाश्रुवेदनास्तम्भहर्षाश्चातिविघट्टिते ।
स्नेहस्वेदौ हितौ तत्र हितं वाप्यनुवासनम् ॥७४॥
दोषस्त्वथोपक्लिष्टोऽपि तद्वत् पुनरुद्धरेत् ।
कुर्याच्छुक्लारुणं तत्तु तीव्ररुङ्नष्टदर्शनम् ॥७५॥
मधुरैस्तत्र सिद्धेन घृतेनाक्ष्णः प्रसेचनम् ।
शिरोवस्तिश्च तेनैव दद्याच्चास्मैश्च भोजनम् ॥७६॥
दोषस्तु सञ्जातबलो यत्र सम्पूर्णमण्डलः ।
प्राप्य नश्येच्छलाकाग्रं तप्तमश्मिव मारुतम् ॥७७॥
मूर्द्धाभिघातव्यायामव्यवायवमिमूर्च्छनैः ।
दोषः प्रत्येति कोपाच्च विद्धोऽतितरुणश्च यः ॥७८॥
शलाका कर्कशा शूला खरा दोषपरिस्रुतिम् ।
व्रणं विशालं स्थूलाग्रा तीक्ष्णा हिंस्यादनेकधा ॥७९॥
जलास्रावन्तु विषमा क्रियासङ्गमथास्थिरा ।
करोति वर्जिता दोषैस्तस्मादेभिर्हिता भवेत् ॥८०॥
अष्टाङ्गुलायता मध्ये सूत्रेण परिवेष्टिता ।
अङ्गुष्ठपर्वसमिता वक्त्रयोर्मुकुलाकृतिः ॥८१॥
ताम्रायसी शातकौम्भी शलाका स्यादनिन्दिता ।
रागः शोफोऽर्बुदश्चोषो बुद्बुदं शूकराक्षिता ॥८२॥
अधिमन्थादयश्चान्ये रोगाः स्युर्व्यधदोषजाः ।
अहिताचारतो वापि यथास्वं तानुपाचरेत् ।
रुजायामक्षिरागे वा योगान् भूयो निबोध मे ॥८३॥

गैरिक सारिवा दूर्वा यवपिष्ट घृत पयः ।
मुखालेपः प्रयोज्योऽयं वेदनारागशान्तये ॥८४॥
मृदुभृष्टैस्तिलैर्वापि सिद्धार्थकसमायुतैः ।
मातुलुङ्गरसोपेतैः मुखालेपस्तदर्थकृत् ॥८५॥
पयस्यासारिवापत्रमञ्जिष्ठामधुकैरपि ।
अजाक्षीरान्वितैर्लेप सुखोष्ण पथ्य उच्यते ॥८६॥
दारुपद्मकशल्लकीभिरेवमेव कृतोऽपि वा ॥८७॥
द्राक्षामधुककुष्ठैर्वा तद्वत् सैन्धवसयुतैः ।
ससैन्धवे शृत क्षीर रुजारागनिवर्हणम् ॥८८॥
शतावरीपृथक्पर्णीमुस्तामलकपद्मकैः ।
साजक्षीरे शृत सर्पिर्दाहशूलनिवर्हणम् ॥८९॥
वातघ्नसिद्धे पयसि सिद्ध सर्पिश्चतुर्गुणे ।
काकोल्यादिप्रतीवाप तद् युञ्ज्यात् सर्वकर्मसु ॥९०॥
शाम्यत्येव न चेच्छूल स्निग्धस्विन्नस्य मोक्षयेत् ।
ततः सिरा दहेद्वापि मतिमान् कीर्त्तित तथा ॥९१॥
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ।
मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥९२॥
सुमनायाश्च पुष्पाणि मुक्ता वैदूर्य्यमेव च ।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ॥९३॥
प्रविधाय च तद्वर्त्तीर्योजयेच्चाञ्जने भिषक् ।
स्रोतोज सिद्रुम फेनं सागरस्य मन शिलाम् ॥९४॥
मरिचानि च तद्वर्त्तीं कारयेच्चापि पूर्ववत् ।
दृष्टिस्थैर्य्यार्थमेतत्तु विदध्यादञ्जने हितम् ॥९५॥
भूयो वक्ष्यामि मुख्यानि विस्तरेणाञ्जनानि च ।

कल्पे नानाप्रकाराणि तान्यपीह प्रयोजयेत् ॥ ८६ ॥

---

## अष्टादशोऽध्याय ।

अथात क्रिया.कल्प व्याख्यास्याम ।

सर्वशास्त्रार्थतत्त्वज्ञस्तपोदृष्टिरुदारधी ।
वैश्वामित्र प्रशशसाथ शिष्य काशिपतिर्मुनि ॥ १ ॥
तर्पण पुटपाकश्च सेक आश्चोतनाञ्जने ।
तत्र तत्रोपदिष्टानि तेषा व्यास निबोध मे ॥ २ ॥
सशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने ।
पूर्वाह्णे चापराह्णे वा कार्य्यमक्ष्णोस्तु तर्पणम ॥ ३ ॥
वातातपरजोहीने वेश्मन्युत्तानशायिन ।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ ४ ॥
समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयो ।
पूरयेद् घृतमण्डस्य विलीनस्य सुखोदके ॥ ५ ॥
आपक्ष्माग्रात्तत स्थाप्य पञ्च तद्वाक्शतानि च ।
स्वस्थे कफे षट् पित्तेऽष्टौ दश वाते तदुत्तमम ॥ ६ ॥
रोगस्थानविशेषेण केचित्काल प्रचक्षते ।
यथाक्रमोपदिष्टेषु त्रीण्येक पञ्च सप्त च ॥ ७ ॥
दश दृष्ट्यामथाष्टौ च वाक्शतानि विभावयेत् ।
ततश्चापाङ्गत: स्नेह स्रावयित्वाक्षि शोधयेत् ॥ ८ ॥
स्विन्नेन यवपिष्टेन स्नेहवीर्य्यैरितस्तत ।
यथास्व धूमपानेन कफमस्य विशोधयेत् ॥ ९ ॥
एकाह वा त्र्यह वापि पञ्चाहञ्चेष्यते परम ।
तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि लक्षयेत् ॥ १० ॥

सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवम् ।
निर्वृतिर्व्याधिविध्वंसः क्रियालाघवमेव च ॥११॥
गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत् ।
ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम् ॥१२॥
रूक्षमाविलमस्राढ्यमसहं रूपदर्शने ।
व्याधिवृद्धिश्च तज्ज्ञेयं हीनतर्पितमक्षि च ॥१३॥
अनयोर्दोषबाहुल्यात् प्रयत्नेन चिकित्सिते ।
धूमनस्याञ्जनैः सेकै रूक्षैः स्निग्धैश्च योगवित् ॥१४॥
ताम्यत्यतिविशुष्कञ्च यद्रूक्षं चातिदारुणम् ।
शीर्णपक्ष्माविलं जिह्मं रोगक्लिष्टञ्च यद् भृशम् ॥१५॥
तदक्षि तर्पणादेव लभेतोर्जामसंशयम् ।
दुर्दिनात्युष्णशीतेषु चिन्तायासभ्रमेषु च ॥१६॥
अशान्तोपद्रवे चाक्ष्णि तर्पणं न प्रशस्यते ।
पुटपाकस्तथैतेषु नस्यं येषु च गर्हितम् ॥१७॥
तर्पणार्हा न ये प्रोक्ताः स्नेहपानाक्षमाश्च ये ।
ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ॥१८॥
पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ।
स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥१९॥
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेखनः ।
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् ॥२०॥
स्नेहमांसवसामज्जमेदःस्वादौषधैः कृतः ।
स्नेहनः पुटपाकस्तु धार्य्यो द्वे वाक्शते तु सः ॥२१॥
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसम्भृतैः ।
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥२२॥

समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः ।
लेखनो वाक्शत तस्य पर धारणमुच्यते ॥२३॥
स्तन्यजाङ्गलमध्वाज्यतिक्तद्रव्यविपाचित ।
लेखनात्त्रिगुणो धार्य्य पुटपाकस्तु रोपण ॥२४॥
वितरेत्तर्पणोक्तन्तु धूम हित्वा तु रोपणम ।
स्नेहस्वेदौ द्वयो. कार्य्यौ कार्य्यौ नैव च रोपणे ॥२५॥
एकाह वा द्व्यह वापि त्र्यह वाप्यवचारणम् ।
यत्तथा तु क्रियाकालाद् द्विगुण कालमिष्यते ॥२६॥
तेजास्यनिलमाकाशमादर्शम्भास्वराणि च ।
नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा ॥२७॥
मिथ्योपचारादनयोर्यो व्याधिरुपजायते ।
अञ्जनाश्च्योतनस्वेदैर्यथास्वन्तमुपाचरेत् ॥२८॥
प्रसन्नवर्णं विशद वातातपसह लघु ।
सुखस्वप्नावबोध्यक्षि पुटपाकगुणान्वितम् ॥२९॥
अतियोगाद्रुज. शोफ पिड़कास्तिमिरोद्गम. ।
पाकोऽश्रुहर्षणञ्चापि हीने दोषोद्गमस्तथा ॥३०॥
अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ॥३१॥
द्वौ विल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ ।
द्रव्याणा विल्वमात्रन्तु द्रवाणा कुडवो मत. ॥३२॥
तदेकत्र समालोड्य पत्रै सुपरिवेष्टितम् ।
काश्मरीकुमुदैरण्डपद्मिनीकदलीभवै ।
मृदावलिप्तमङ्गारे. खादिरैरवकूलयेत् ॥३३॥
कृतकाश्मन्तकैरण्डपाटलावृषबादरै ।
क्षीरद्रुमकाष्ठैर्वा गोमयैर्वापि युक्तित: ॥३४॥

स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं नृणाम्।
तर्पणोक्तेन विधिना यथावदवचारयेत् ॥३५॥
कनीनके निषिच्य स्यान्नित्यमुत्तानशायिन ।
रक्ते पित्ते च तौ शीतौ कोष्णौ वातकफापहौ ॥३६॥
अत्युष्णतीक्ष्णौ सतत दाहपाककरौ स्मृतौ।
आप्लुतौ शीतलौ चाश्रुस्तम्भरुग्घर्षकारकौ ॥३७॥
अतिमात्रौ कषायत्वसङ्कोचस्फुरणावहौ।
हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम् ॥३८॥
युक्तौ कृतौ दाहशोफरुग्घर्षस्रावनाशनौ।
कण्डूपदेहदूषीकारक्तराजिविनाशनौ ॥३९॥
तस्मात् परिहरन् दोषान् विदध्यात्तौ सुखावहौ।
व्यापदश्च यथादोष नस्यधूमाञ्जनैर्जयेत् ॥४०॥
आद्यन्तयोश्चाप्यनयो स्वेदमुष्णाम्बुतैलिक ।
तथाहितोऽवसाने च धूम श्लेष्मसमुच्छ्रितौ ॥४१॥
यथादोषोपयुक्तन्तु नातिप्रबलमोजसा।
रागमाश्च्योतन हन्ति सेकस्तु बलवत्तरम् ॥४२॥
तौ त्रिधैवोपयुज्येते रोगेषु पुटपाकवत् ।
लेखने सप्त चाष्टौ वा बिन्दव स्नैहिके दश ॥४३॥
आश्च्योतने प्रयोक्तव्या द्वादशैव तु रोपणे।
सेकस्य द्विगुण काल पुटपाकात् परो मत ॥४४॥
अथवा कार्य्यनिर्वृत्तेरुपयोगो यथाक्रमम्।
पूर्वापराह्ले मध्याह्ने रुजाकालेषु चोभयो ॥४५॥
योगायोगान् स्नेहसेके तर्पणोक्तान् प्रचक्षते।
रोगान् सिरसि सम्भूतान् हत्वातिप्रबलान् गुणान् ॥४६॥

करोति शिरसो वस्तिरक्ता ये मूर्द्धतैलिका ।
शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु ॥४७॥
ऋज्वासीनस्य बध्नीयाद्वस्तिकोशं ततो दृढम् ।
यथाव्याधिशृतस्नेहपूर्णं सयम्य धारयेत् ॥४८॥
तर्पणोक्त दृग्गुण यथादोष विधानवित् ।
व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले ॥४९॥
नेत्र एव स्थिते दोषे प्राप्तमञ्जनमाचरेत् ।
लेखन रोपणञ्चापि प्रसादनमथापि वा ॥५०॥
तत्र पञ्च रसान् व्यस्तानाद्यैकरसवर्जितान् ।
पञ्चधा लेखन युञ्ज्याद्यथादोषमतन्द्रित ॥५१॥
नेत्रवर्त्मशिराकोशस्रोत शृङ्गाटकाश्रितम् ।
मुखनासाक्षिभिर्दोषमोजसा स्रावयेत्तु तत् ॥५२॥
कषायतिक्तकञ्चापि सस्नेह रोपण मतम् ।
तद् स्नेहशैत्याद्वर्ण्यं स्याद् दृष्टेश्च बलवर्द्धनम् ॥५३॥
मधुर स्नेहसम्पन्नमञ्जनन्तु प्रसादनम् ।
दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितम् ॥५४॥
यथादोष प्रयोज्यानि तानि दोषविशारदै ।
अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥५५॥
गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु ।
यथापूर्वं बल तेषा श्रेष्ठमाहुर्मनीषिण ॥५६॥
हरेणुमात्रा वर्त्ति स्याल्लेखनस्य प्रमाणत. ।
प्रसादनस्य चाध्यर्द्धा द्विगुणा रोपणस्य च ॥५७॥
रसाञ्जनस्य मात्रा तु पिष्टवर्त्तिमिता मता ।
द्वित्रिचतु.शलाकाश्च चूर्णस्याप्यनुपूर्वश: ॥५८॥

तेषां तुल्यगुणान्येव विदध्याद्भाजनान्यपि ।
सौवर्ण्यं राजतं शार्ङ्गन्ताम्रं वैदूर्य्यकांस्यजम् ॥५८॥
आयसानि च योज्यानि शलाकाश्च यथाक्रमम् ।
वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला ॥६०॥
अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा ।
औडुम्बर्य्यश्मजातापि शारीरी वा हिता भवेत् ॥६१॥
वामेनाक्षि विनिर्भुज्य हस्तेन सुसमाहितः ।
शलाकया दक्षिणेन क्षिपेत् कानीनमञ्जनम् ॥६२॥
आपाङ्गं वा यथायोग्यं कुर्य्याच्चापि गतागतम् ।
वर्त्मोपलेऽपि वा यत्तदङ्गुल्येव प्रयोजयेत् ॥६३॥
अक्षि नात्यन्तयोरञ्जनाद् बाधमानोऽपि वा भिषक् ।
न वा निर्वान्तदोषेऽक्षिणि धावनं सम्प्रयोजयेत् ॥६४॥
दोषं प्रतिनिवृत्तः सन् हन्याद् दृष्टेर्बलं तथा ।
गतदोषमपेताश्रु पश्येद्यत् सम्यगम्भसा ॥६५॥
प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनं ततः ।
श्रमोदावर्त्तरुदितमद्यक्रोधभयज्वरैः ॥६६॥
वेगाघातशिरोदोषैश्चार्त्तानां नेष्यतेऽञ्जनम् ।
रागरुक्तिमिरास्रावशूलसंरम्भसम्भ्रमान् ॥६७॥
निद्राक्षये क्रियाशक्ति प्रवाते दृग्बलक्षयम् ।
रजोधूमहते रागस्रावाधीमन्यसम्भवम् ॥६८॥
संरम्भशूलौ नस्यान्ते शिरोरुजि शिरोरुजम् ।
शिरःस्नातेऽतिशीते च रवावनुदितेऽपि च ॥६९॥
दोषस्थैर्य्यादपार्थं स्याद्दोषोत्क्लेशं करोति च ।
अजीर्णेऽप्येवमेव स्यात् स्रोतोमार्गावरोधनात् ॥७०॥

दोषवेगोदये दृष्ट कुर्य्यात्तांस्तानुपद्रवान् ।
तस्मात् परिहरन् दोषानञ्जन साधु योजयेत् ॥७१॥
लेखनस्य विशेषेण काल एष प्रकीर्त्तित ।
व्यापदश्च जयेदेता सेकाश्च्योतनलेपनै ॥७२॥
यथास्व धूमकवलैर्नस्यैश्चापि समुत्थिता ।
विशद लघु नास्रावि क्रियापटु सुनिर्मलम ॥७३॥
सम्यगान्तोपद्रव नेत्र विरिक्त सम्यगादिशेत् ।
जिह्म दारुणदुर्वर्ण स्रस्त रूक्षमतीव च ॥७४॥
नेत्र विरेकातियोगे स्यन्दते चातिमात्रश: ।
तत्र सन्तर्पण कार्य्य विधान चानिलापहम ॥७५॥
अक्षि मन्दविरिक्त स्यादुदग्रतरदोषवत् ।
धूमनस्याञ्जनैस्तत्र हित दोषावसेचनम् ॥७६॥
स्नेहवर्णबलोपेत प्रसन्न दोषवर्जितम् ।
ज्ञेय प्रसादने सम्यगुपयुक्तेऽक्षिनिर्वृतम ॥७७॥
किञ्चिद्धीनविकार स्यात्तर्पणाद्विकृतादृति ।
तत्र दोषहर रूक्ष भेषज शस्यते मृदु ॥७८॥
साधारणमपि ज्ञेयमेव रोपणलक्षणम् ।
प्रसादनवदाचष्टे तस्मिन् युक्तेऽतिभेषजम ॥७९॥
स्नेहन रोपण वापि हीनयुक्तमपार्थकम ।
कर्त्तव्य मात्रया तस्मादञ्जन सिद्धिमिच्छता ॥८०॥
पुटपाकक्रियाद्यासु क्रियास्वेकैव कल्पना ।
सहस्रशश्चाञ्जनेषु वीजेनोक्तेन पूजिता ॥८१॥
दृष्टेर्बलविवृद्ध्यर्थ याप्यरोगक्षयाय च ।
राजार्हाण्यञ्जनाग्र्याणि निबोधेतान्यत: परम् ॥८२॥

अष्टौ भागानञ्जनस्य नीलोत्पलसमन्विष. ।
औडुम्बर शातकुम्भ राजतञ्च समासत. ॥८३॥
एकादशैतान् भागांस्तु योजयेत् कुशलो भिषक् ।
मूषाच्चिप्त तदाध्मातमाहृत जातवेदसि ॥८४॥
खदिराश्मन्तकाङ्गारैर्गोशकृद्भिरथापि वा ।
गवा शकृद्रसे मूत्रे दध्नि सर्पिषि माक्षिके ॥८५॥
तैलमद्यवसामज्जसर्वगन्धोदकेषु च ।
द्राक्षारसेक्षुत्रिफलारसेषु सुहिमेषु च ॥८६॥
सारिवादिकषाये च कषाये चोत्पलादिके ।
निषेचयेत् पृथक् चैनं ध्मात ध्मात पुन पुन. ॥८७॥
ततोऽन्तरीक्षे सप्ताहं प्रोतबद्ध स्थित जले ।
विशोष्य चूर्णयेन्मुक्ता स्फटिक विद्रुम तथा ॥८८॥
कालानुसारिवां चैव शुचिरावाप्य योगत. ।
एतच्चूर्णाञ्जन श्रेष्ठ निहित भाजने शुभे ॥८९॥
दन्तस्फटिकवैदूर्य्यशङ्खशैलासनोद्भवे ।
शातकुम्भेऽथ शार्ङ्गे वा राजते वा सुसस्कृते ।
सहस्रपाकवत् पूजां कृत्वा राज्ञ प्रयोजयेत् ॥९०॥
तेनाञ्जितोक्षा नृपतिर्भवेत् सर्वजनप्रिय. ।
अधृष्य. सर्वभूताना दृष्टिरोगविवर्जित. ॥९१॥
कुष्ठञ्चन्दनमेलाश्च पत्रं मधुकमञ्जनम् ।
मेषशृङ्गस्य पुष्पाणि चक्रं रत्नानि सप्त च ॥९२॥
उत्पलस्य बृहत्योश्च पद्मस्यापि च केशरम् ।
नागपुष्पमुशीराणि पिप्पलीतुत्थमुत्तमम् ॥९३॥
कुक्कुटाण्डकपालानि दार्वीं पथ्या सरोचनाम् ।

मरिचान्यञ्जनमञ्जान तुल्यांश्च गृहगोधिकाम् ॥९४॥
कृत्वा सूक्ष्मं शुचिश्चूर्णं न्यसेदभ्यर्च्य पूर्ववत् ।
एतद्भद्रोदय नाम सदैवार्हति भूमिपः ॥९५॥
चक्र समरिचञ्चैव मांसी शैलेयमेव च ।
तुल्यांशानि समानैस्तैः समशैश्च मन शिला ॥९६॥
पत्रस्य भागाश्चत्वारो द्विगुणं सर्वतोऽञ्जनम् ।
तावच्च यष्टीमधुक पूर्ववच्चैतदञ्जनम् ॥९७॥
मनःशिला देवकाष्ठ रजन्यौ त्रिफलोषणम् ।
लाक्षालसुनमञ्जिष्ठासैन्धवैला समाचिका ॥९८॥
रोध्रं सावरकं चूर्णमायस ताम्रमेव च ।
कालानुसारिवाञ्चैव कुक्कुटाण्डदलानि च ॥९९॥
तुल्यानि पयसा पिष्ट्वा गुटिकां कारयेद् बुध ।
कण्डूतिमिरशुक्लार्मरक्तराज्युपशान्तये ॥१००॥
कास्यापमार्जनमसीमधुक सैन्धव नतम् ।
एरण्डमूलञ्च सम बृहत्यशद्वयान्वितम् ॥१०१॥
आजेन पयसा पिष्ट्वा ताम्रपात्र प्रलेपयेत् ।
सप्तकृत्वस्तु ता वर्त्यश्छायाशुष्का रुजापहा ॥१०२॥
पथ्यातुल्यकयष्ट्याह्वैस्तुल्यैर्मरिचषोडश ।
पथ्या सर्वविकारेषु वर्त्तौ शीताम्बुपेषिता ॥१०३॥
रसक्रिया विधानेन यथोक्तविधिकोविद ।
पिण्डाञ्जनानि कुर्वीत यथायोगमतन्द्रितः ॥१०४॥

———— ——

## एकोनविंशतितमोऽध्यायः।

अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः।

अभ्याहते तु नयने बहुधा नराणां
संरम्भरागतुमुलासु रुजासु धीमान्।
नस्यप्रलेपपरिषेचनतर्पणाद्य-
मुक्तं पुनः क्षतजपित्तजशूलपथ्यम्॥१॥
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः।
स्वेदाग्निधूमभयशोकरुजाभिघातै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत्॥२॥
सद्योहते नयन एष विधिस्तदूर्द्ध्वं
स्यन्दैरितो भवति दोषमवेक्ष्य कार्य्यः।
अभ्याहतं नयनमीषदथास्य वाष्प-
संस्वेदितं भवति तन्निरुजं क्षणेन॥३॥
साध्यं क्षतं पटलमेकमुभे तु कृच्छ्रे
त्रीणि क्षतानि पटलानि विवर्जयेत्तु।
स्यात् पिच्चितञ्च नयनं च्युति चावसन्नं
स्रस्तं च्युतञ्च हतदृक् च भवेत्तु याप्यम्॥४॥
विस्तीर्णदृष्टितनुरागमसत्प्रदर्शि
साध्यं यथास्थितमनाविलदर्शनञ्च।
प्राणोपरोधवमनक्षवकण्ठरोधै-
रुन्नम्यमाशु नयनं यदतिप्रविष्टम्॥५॥
नेत्रे विलम्बिनि विधिर्विहितः पुरस्ता-
दुच्छिद्य न शिरसि वार्य्यवसेचनञ्च।

षट्सप्ततिर्नयनजा य इमे प्रदिष्टा
रोगा भवन्त्यमहतां महताञ्च तेभ्य. ॥६॥
स्तन्यप्रकोपकफमारुतपित्तरक्तै-
र्बालाक्षिवर्त्मभव एव कुकूणकोऽन्यः।
स्नाति नेत्रमतिकण्डुमथाक्षिकूट
नासाललाटमपि तेन शिशु. स नित्यम् ॥७॥
सूर्य्यप्रभा न सहते स्रवति प्रवृद्ध
तस्याहरेद्रुधिरमाशु विनिर्लिखेच्च।
चौद्रायुतैश्च कटुभि प्रतिसारयेत् तु
मातु शिशोरभिहितञ्च विधि विदध्यात् ॥८॥
त वामयेत् तु मधुसैन्धवसम्प्रयुक्तै
पीत पय खलु फलै खरमञ्जरीणाम ॥९॥
स्यात्पिप्पलीलवणमाक्षिकसयुतैर्वा
नैन वमन्तमपि वामयितु यतेत।
दत्त्वा वचामशनदुग्धभुजे प्रयोज्य-
मूर्द्ध्वं ततः फलयुत वमन विधिज्ञै ॥१०॥
जम्ब्वाम्रधात्रयणदलै. परिधावनार्थं
कार्य्यं कषायमवसेचनमेव चापि।
आश्चोतने च हितमत्र घृतं गुडूची
सिद्ध तथाहुरपिच त्रिफलाविपक्वम् ॥११॥
नेपालजामरिचशङ्खरसाञ्जनानि
सिन्धुप्रसूतगुडमाक्षिकसयुतानि।
स्यादञ्जनं मधुरसामधुताम्रकैर्वा-
कृष्णायस घृतपयोमधु वापि दग्धम् ॥१२॥

ध्रौव्य पलाण्डु मधुक लवणोत्तमञ्च
लाक्षाञ्च गैरिकयुता गुटिकाञ्जन वा।
निम्बच्छद मधुकदार्विसितास्थलोध्र-
मिच्छन्ति चात्र भिषजोऽञ्जनमर्थतुल्यम॥१३॥
स्रोतोजशङ्खदर्विसैन्धवमर्धपक्ष
शुक्तं शिशोर्नुदति भावितमञ्जनेन।
स्यन्दे कफादभिहित क्रममाचरेच्च
बालस्य रोगकुशलोऽचिरगद जिघासु॥१४॥
समुद्र इव गम्भीर नैव शक्य चिकित्सितम्।
वक्तु निरवशेषेण श्लोकानामयुतैरपि॥१५॥
सहस्रैरपि च प्रोक्तमर्थमल्पमतिर्नर।
तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डित॥१६॥
तदिद बहुगूढार्थं चिकित्साबीजमीरितम्।
कुशलेनाभिपन्न तद्बहुधाभिप्ररोहति॥१७॥
तस्मान्मतिमता नित्य नानाशास्त्रार्थदर्शिना।
सर्वमूह्यमगाधार्थं शास्त्रमागमबुद्धिना॥१८॥

---

विंशतितमोऽध्याय।

अथात कर्णगतरोगविज्ञानीयमध्याय व्याख्यास्याम।

कर्णशूल प्रणादश्च बाधिर्य क्ष्वेड एव च।
कर्णस्राव कर्णकण्डू कर्णगूथस्तथैव च॥१॥
कृमिकर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा।
कर्णपाक पूतिकर्णस्तथैवार्शश्चतुर्विधम॥२॥
तथार्बुद सप्तविध शोफश्चापि चतुर्विध।

एते कर्णगता रोगा अष्टाविंशतिरीरिताः ॥३॥

समीरणः श्रोत्रगतोऽन्यथाचरः
समन्ततः शूलमतीव कर्णयोः।
करोति दोषैश्च यथास्वमावृतः
स कर्णशूलः कथितो दुराचरः ॥४॥

यदा तु नाडीषु विमार्गमागतः
स एव शब्दाभिवहासु तिष्ठति।
शृणोति शब्दान् विविधांस्तदा नरः
प्रणादमेनं कथयन्ति चामयम् ॥५॥

स एव शब्दाभिवहा यदा शिराः
कफानुयातो व्यनुसृत्य तिष्ठति।
तदा नरस्याप्रतिकारसेविनो
भवेत्तु वाधिर्य्यमसंशयं खलु ॥६॥

श्रमात् क्षयाद्रूक्षकषायभोजनात्
समीरणः शब्दपथे व्यवस्थितः।
विरिक्तशीर्षस्य च शीतसेविनः
करोति हि क्ष्वेडमतीव कर्णयोः ॥७॥

शिरोऽभिघातादथवा निमज्जतो
जले प्रपाकादथवापि विद्रधेः।
स्रवेत्तु पूयं श्रवणोऽनिलावृतः
स कर्णसंस्राव इति प्रकीर्त्तितः ॥८॥

कफेन कण्डूः प्रचितेन कर्णयो-
र्भृशं भवेत् स्रोतसि कर्णसंज्ञिते।
विशोषिते श्लेष्मणि पित्ततेजसा

भृशं भवेत् स्रोतसि कर्णगूथकः ॥९॥
स कर्णगूथो द्रवतां यदा गतो
विलायितो घ्राणमुखं प्रपद्यते।
तदा स कर्णप्रतिनाहसंज्ञितो
भवेद्विकारः शिरसोऽभितापनः ॥१०॥
यदा तु मूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तदञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यैः क्रिमिकर्णकस्तु सः ॥११॥
क्षताभिघातप्रभवस्तु विद्रधि-
र्भवेत्तथा दोषकृतोऽपरः पुनः।
स रक्तपीतारुणमस्रमास्रवेत्
प्रतोदधूमायनदाहचोषवान् ॥१२॥
भवेत् प्रपाकः खलु पित्तकोपतो
विकोथविक्लेदकरश्च कर्णयोः।
स्थिते कफे स्रोतसि पित्ततेजसा
विलाप्यमाने भृशसम्प्रतापनात् ॥१३॥
अवेदनो वाप्यथवा सवेदनो
घनं स्रवेत् पूति स पूतिकर्णकः।
प्रदिष्टलिङ्गान्यर्शांसि तत्त्वत-
स्तथैव शोफार्बुदलिङ्गमीरितम् ॥१४॥
मया पुरस्तात् प्रसमीक्ष्य योजये-
दिहैव तानि प्रयतो भिषग्वरः ॥१५॥

---

## एकविंशतितमोऽध्याय ।

अथात कर्णगतरोगप्रतिषेध व्याख्यास्याम ।
सामान्य कर्णरोगेषु घृतपान रसायनम् ।
अव्यायामोऽशिर स्नान ब्रह्मचर्य्यमकत्थनम ॥१॥
कर्णशूले प्रणादे च वाधिर्य्ये क्ष्वेडयोरपि ।
चतुर्णामपि रोगाणा सामान्य भेषज विदु ॥२॥
स्निग्ध वातहरै स्वेदैनर स्नेहविरेचितम ।
नाडीस्वेदैरुपचरेत्पिण्डस्वेदैस्तथैव च ॥३॥
विल्वैरण्डार्कवर्षाभूदधित्थोमन्तशिग्रुभि ।
वस्तगन्धाश्वगन्धाभ्या तर्कारीयववेणुभि ॥४॥
आरनालै शृतैरेभिर्नाडीस्वेद प्रयोजित ।
कफवातसमुत्थानं कर्णशूल निरस्यति ॥५॥
मीनकुक्कुटलावाना मासजै पयसापि वा ।
पिण्डै स्वेदञ्च कुर्वीत कर्णशूलनिवारणम् ॥६॥
अश्वत्थपत्रखल्ल वा विधाय बहुपत्रकम ।
तैलाक्तमसुसम्पूर्ण निदध्याच्छ्रवणोपरि ॥७॥
यत् तैल च्यवते तस्मात् खल्लादङ्गारसाधितात् ।
तत्प्राप्त श्रवणश्रोत सद्यो गृह्णाति वेदनाम् ॥८॥
क्षौमगुग्गुल्वगुरुभि सघृतैर्धूपयेच्च तम् ।
भक्तोपरि हित सर्पिर्वस्तिकर्म च पूजितम ॥९॥
निरन्नो निशि तत्सर्पि पीत्वोपरि पय पिबेत् ।
मूर्द्धवस्तिषु नस्ये च मस्तिष्के परिषेचने ॥१०॥
शतपाक बलातैल प्रशस्तञ्चापि भोजने ।
कण्टकारीमजाक्षीरे पक्वा क्षीरेण तेन च ॥११॥

विपचेत् कुक्कुटवसा कर्णयोस्तत् प्रपूरणम्।
तण्डुलीयकमूलानि फलमङ्कोठजन्तथा ॥१२॥
अहिंस्राकेन्द्रकामूल सरल देवदारु च।
लसुनं शृङ्गवेरञ्च तथा वंशावलेखनम् ॥१३॥
कल्कैरेषां तथाम्लैश्च पचेत् स्नेह चतुर्विधम्।
वेदनायाः प्रशान्त्यर्थं हित तत् कर्णपूरणम् ॥१४॥
लसुनार्द्रकशिग्रूणां मुरङ्ग्या मूलकस्य च।
कदल्या स्वरसः श्रेष्ठ. कदुष्णः कर्णपूरणे ॥१५॥
शृङ्गवेररसः क्षौद्र सैन्धव तैलमेव च।
कदुष्ण कर्णयोर्देयमेतद्वा वेदनापहम् ॥१६॥
वंशावलेखसयुक्ते मूत्रे चाजाविके भिषक्।
सर्पिः पचेत्तेन कर्णं पूरयेत् कर्णशूलिन. ॥१७॥
महत पञ्चमूलस्य काण्डमष्टादशाङ्गुलम्।
क्षौमेणावेष्ट्य ससिच्य तैलेनादीपयेत् ततः ॥१८॥
यत्तैल च्यवति तेभ्यो ष्टतेभ्यो भाजनोपरि।
ज्ञेयं तद्दीपिकातैल सद्यो गृह्णाति वेदनाम् ॥१९॥
कुर्य्यादेव भद्रकाष्ठे कुष्ठे काष्ठे च सारले।
मतिमान् दीपिकातैलं कर्णशूलनिबर्हणम् ॥२०॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान्।
सन्निदध्यात् स्नुहीकाण्डे कोरिते तच्छदावृते ॥२१॥
पुटपाकक्रमस्विन्नान् पीडयेदारसागमात्।
सुखोष्ण तद्रसं कर्णे दापयेच्छूलशान्तये ॥२२॥
कपित्थमातुलुङ्गाम्लशृङ्गवेररसैः शुभैः।
सुखोष्णै. पूरयेत् कर्णं तच्छूलविनिवृत्तये ॥२३॥

कर्णं कोष्णेन चुक्रेण पूरयेत् कर्णशूलिनः ।
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥२४॥
अष्टानामिह मूत्राणां मूत्रेणान्यतमेन वा ।
कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥२५॥
मूत्रेष्वम्लेषु वातघ्ने गणे च क्वथिते भिषक् ।
पचेच्चतुर्विधं स्नेहं पूरणं तच्च कर्णयोः ॥२६॥
एता एव क्रिया कुर्य्यात् पित्तघ्नैः पित्तसंयुते ।
काकोल्यादौ दशक्षीरं तिक्तं चात्र हितं हविः ॥२७॥
क्षीरवृक्षप्रवालेषु मधुके चन्दने तथा ।
कल्कक्वाथे परं पक्वं शर्करामधुकैः सरैः ॥२८॥
इङ्गुदीसर्षपस्नेहौ सकफे पूरणे हितौ ।
तिक्तौषधानां यूषाश्च स्वेदाश्च कफनाशनाः ॥२९॥
सुरसादौ कृतं तैलं पञ्चमूले महत्यपि ।
मातुलुङ्गरसं शुक्तं लशुनार्द्रकयोरसः ॥३०॥
एकैकं पूरणे तथ्यस्तैलं तेष्वथवा कृतम् ।
तीक्ष्णा मूर्ध्नि विरेकाश्च कवलाश्चात्र पूजिताः ॥३१॥
कर्णशूलविधिं कृत्स्नं पित्तघ्नं शोणितावृते ।
शूलप्रणादबाधिर्य्यक्ष्वेडानान्तु प्रकीर्त्तितम् ॥३२॥
सामान्यतो विशेषेण बाधिर्य्ये पूरणं शृणु ।
गवां मूत्रेण विल्वानि पिष्ट्वा तैलं विपाचयेत् ॥३३॥
सजलञ्च सदुग्धञ्च बाधिर्य्ये कर्णपूरणम् ।
सितामधुकविम्बीभिः सिद्धं वाजे पयस्यथ ॥३४॥
सिद्धं वा विल्वनि क्वाथे शीतीभूतं तदुद्धृतम् ।
पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥३५॥

बिल्वाम्बु गाढ तत्तैल वाधिर्य्ये कर्णपूरणम् ।
वक्ष्यते य प्रतिश्याये विधिः सोऽप्यत्र पूजित' ॥३६॥
वातव्याधिषु यश्चोक्तो विधि स च हितो भवेत् ।
कर्णस्रावे पूतिकर्णे तथैव क्रमिकर्णके ॥३७॥
समान कर्म कुर्वीत योगान् वैशेषिकानपि ।
शिरोविरेचनञ्चैव धूपनं पूरण तथा ॥३८॥
प्रमार्जन धावनञ्च वीक्ष्य वीक्ष्यावचारयेत् ।
राजवृक्षादितोयेन सुरसादिगणेन वा ॥३९॥
कर्णप्रक्षालन कार्य्यं चूर्णैरेषाञ्च पूरणम् ।
चूर्ण पञ्चकषायोत्थ कपित्थरसयोजितम् ॥४०॥
कर्णस्रावे प्रशसन्ति पूरणं मधुना सह ।
सर्जत्वक्चूर्णसंयुक्त कार्पासीफलजो रसः ॥४१॥
योजितो मधुना वापि कर्णस्रावे प्रशस्यते ।
लाक्षासर्जरसौ वापि चूर्णितौ कर्णपूरणम् ॥४२॥
सशैवलमहावृक्षजम्ब्वाम्रप्रसवायुतम् ।
कुलीरक्षौद्रमण्डूकीसिद्धं तैलञ्च पूजितम् ॥४३॥
तिन्दुकान्यभयारोध्रं समङ्गामलक मधु ।
पूरणञ्चात्र पथ्य स्यात्कपित्थरसयोजितम् ॥४४॥
रसमाम्रकपित्थानां मधूकधवशालजम् ।
पूरणार्थं प्रशसन्ति तैल वा तैर्विपाचितम् ॥४५॥
प्रियङ्गु मधुकाम्बष्ठाधातकीशीतपर्णिभि' ।
मञ्जिष्ठालोध्रलाक्षाभि कपित्थस्य रसेन वा ॥४६॥
पचेत् तैलं तदास्रावमवगृह्णाति पूरणात् ।
दुष्ट रसाञ्जन नार्य्याः क्षीरेण क्षौद्रसंयुतम् ॥४७॥

प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके।
निर्गुण्डीस्वरसे तैलं सिन्धुधूमरजोगुडः ॥४८॥
पूरणः पूतिकर्णस्य शमनो मधुसंयुतः।
कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम् ॥४९॥
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च।
कृमिघ्नं हरितालेन गवां मूत्रयुतेन च ॥५०॥
गुग्गुलुः कर्णदौर्गन्ध्ये धूपनं श्रेष्ठमुच्यते।
छर्दनं धूमपानञ्च कवडस्य च धारणम् ॥५१॥
कर्णक्ष्वेडे हितं तैलं सार्षपञ्चैव पूरणम्।
विद्रधौ वापि कुर्वीत विद्रध्युक्तं चिकित्सितम् ॥५२॥
प्रक्लेद्य धीमांस्तैलेन स्वेदेन प्रविलाप्य च।
शोधयेत्कर्णविट्कन्तु भिषक् सम्यक् शलाकया ॥५३॥
नाडीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम्।
विधिश्च कफहृत्सर्वं कर्णकण्डूमपोहति ॥५४॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत्।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥५५॥
कर्णपाकस्य भैषज्यं कुर्य्यात्पित्तविसर्पवत्।
कर्णच्छिद्रे वर्त्तमानं कीटं क्लेदमलादि वा ॥५६॥
शृङ्गेणापहरेद्धीमानथवापि शलाकया।
शेषाणान्तु विकाराणां प्राक् चिकित्सितमीरितम् ॥५७॥

---

## द्वाविंशतितमोऽध्यायः।

अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः।

अपीनसः पूतिनस्यं नासापाकस्तथैव च।

तथा शोणितपित्तञ्च पूयशोणितमेव च ॥१॥
क्षवथुभ्रंशथुर्दीप्तो नासानाह: परिस्रव: ।
नासाशोषेण सहिता दशैकाश्चेरिता गदा: ॥२॥
चत्वार्य्यर्शांसि चत्वार: शोफा सप्तार्वुदानि च ।
प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिता: ।
एकत्रिंशन्मितास्ते तु नासारोगा प्रकीर्त्तिता: ॥३॥
आनह्यते यस्य विधूप्यते च पापच्यते क्लिद्यति चापि नासा ॥४॥
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्ट व्यवस्येत्तमपीनसेन ।
तच्चानिलश्लेष्मभव विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥५॥
दोषैर्विदग्धैर्गलतालुमूले सवासितो यस्य समीरणस्तु ।
निरेति पूतिर्मुखनासिकाभ्या त पूतिनस्यं प्रवदन्ति रोगम् ॥६॥

घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्
यस्मिन् विकारे बलवांश्च पाक: ।
त नासिकापाकमिति व्यवस्येद्
विक्लेदकोथावपि यत्र दृष्टौ ॥७॥
चतुर्विध द्विप्रभव द्विमार्गं
वक्ष्यामि भूय: खलु रक्तपित्तम्।
दोषैर्विदग्धैरथवापि जन्तो-
र्ललाटदेशेऽभिहतस्य तैस्तु ॥८॥
नासा स्रवेत् पूयमसृग्विमिश्रं
तं पूयरक्तं प्रवदन्ति रोगम् ।

घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टे
यस्यानिलो नासिकया निरेति ॥९॥
कफानुयातो बहुशः सशब्द-
स्तं रोगमाहु क्षवथुं विधिज्ञाः ।
तीक्ष्णोपयोगादतिजिघ्रतो वा
भावान् कटूनर्कनिरीक्षणाद् वा ॥१०॥
सूत्रादिभिर्वा तरुणास्थिमर्म-
ण्युद्घाटिते य क्षवथुर्निरेति ।
प्रभ्रश्यते नासिकयैव यश्च
सान्द्रो विदग्धो लवणः कफस्तु ॥११॥
प्राक् सञ्चितो मूर्ध्नि च पित्ततप्त
प्रभ्रंशथुं व्याधिमुदाहरन्ति ।
घ्राणे भृशं दाहसमन्विते तु
विनि सरेद्धूम इवेह वायुः ॥१२॥
नासा प्रदीप्तेव च यस्य जन्तो-
र्व्याधिस्तु तं दीप्तमुदाहरन्ति ।
कफावृतो वायुरुदानसञ्ज्ञो
यदा स्वमार्गे विगुणः स्थितः स्यात् ॥१३॥
घ्राणं वृणोतीव तदा स रोगो
नासाप्रतीनाह इति प्रदिष्टः ।
अजस्रमच्छं सलिलप्रकाशं
यस्याविवर्णं स्रवतीह नासा ॥१४॥
रात्रौ विशेषेण हि तं विकारं
नासापरिस्रावमिति व्यवस्येत् ।

घ्राणश्रिते श्लेष्मणि मारुतेन
पित्तेन गाढं परिशोषिते च ॥ १५॥
समुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्राद्
यस्तस्य नासापरिशोष उक्तः ।
दोषैस्त्रिभिस्तैः पृथगेकशश्च
ब्रूयात् तथार्शांसि तथैव शोफान् ॥ १६॥

शालाक्यसिद्धान्तमवेक्ष्य वापि सर्वात्मकं सप्तममर्बुदं तु ।
रोगं प्रतिश्यायमिह प्रदिष्टं स वक्ष्यते पञ्चविधः पुरस्तात्
॥ १७॥

शोफाश्च शोफविज्ञाने नासास्रोतोऽव्यवस्थिताः ।
निदानेऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत् ॥ १८॥

---

त्रयोविंशतितमोऽध्यायः ।

अथातो नासागतरोगप्रतिषेधं व्याख्यास्यामः ।

पूर्वोद्दिष्टे पूतनस्ये च जन्तोः स्नेहस्वेदौ छर्द्दनं स्रंसनञ्च ।
युक्तं भक्तं तीक्ष्णमल्पं लघु स्यादुष्णं तोयं धूमपानञ्च काले
॥ १॥

हिङ्गु व्योषं वत्सकाख्यं शिवाटी
लाक्षा वीजं सौरभं कट्फलञ्च ।
उग्रा कुष्ठं तीक्ष्णगन्धाविडङ्गं
श्रेष्ठं नित्यं चावपीडे करञ्जम् ॥ २॥

एतैर्द्रव्यैः सार्षपं मूत्रयुक्तं तैलं धीमान्नस्यहेतोः पचेच्च ।
नासापाके पित्तहृत्सविधानं कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च
॥ ३॥

हत्वा रक्तं चीरवृक्षत्वचश्च
साज्याः सेका योजनीयाश्च लेपाः।
वच्याम्यूर्द्धं रक्तपित्तोपशान्तिं
नाडीवच्चात् पूयरक्ते चिकित्सा ॥४॥
वान्ते सम्यक् चावपीडं वदन्ति
तीक्ष्णं धूमं शोधनं चात्र नस्यम्।
चेप्यं नस्यं मूर्द्धवैरेचनीयै-
र्नाड्या चूर्णं चवथौ भ्रंशथौ च ॥५॥
कुर्य्यात् स्वेदान् मूर्ध्नि वातामयघ्नान्
स्निग्धान् धूमान् यच्चदन्यद्धितं च।
दीप्ते रोगे पैत्तिकं सविधानं
कुर्य्यात् सर्वं स्वादु यच्छीतलञ्च ॥६॥
नासानाहे स्नेहपानं प्रधानं
स्निग्धा धूमा मूर्द्धवस्तिश्च नित्यम्।
बलातैलं सर्वथैवोपयोज्यं
वातव्याधावन्यदुक्तञ्च यच्चत् ॥७॥
नासास्रावे घ्राणतश्चूर्णमुक्तं
नाड्या देयं योवपीडश्च तीक्ष्णः।
तीक्ष्णा धूमा देवदार्वग्निकाभ्यां
मांसं वाजं युक्तमत्रादिशन्ति ॥८॥
नासाशोषे चीरसर्पिः प्रधानं
सिद्धं तैलं चाणुकल्पे च नस्ये।
सर्पिःपानं भोजनं जाङ्गलैश्च
स्नेहः स्वेदः स्नैहिकश्चापि धूमः ॥९॥

शेषान् रोगान् घ्राणजान् सन्नियच्छे-
दुक्तं तेषां यद्यथासविधानम् ॥१०॥

---

चतुर्विंशतितमोऽध्यायः ।

अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः ।

नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः ।
सन्धारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम् ॥१॥

चयङ्गता मूर्द्धनि मारुतादयः
पृथक् समस्ताश्च तथैव शोणितम् ।
प्रकोप्यमाना विविधैः प्रकोपणै-
र्नृणां प्रतिश्यायकरा भवन्ति हि ॥२॥

शिरोगुरुत्वं क्षवथोः प्रवर्त्तनं तथाङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः ॥३॥

आनद्धा पिहिता नासा तनुस्रावप्रवर्त्तिनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥४॥
स्वरोपघातश्च भवेत् प्रतिश्यायेऽनिलात्मके ।
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ॥५॥
कृशोऽतिपाण्डुः सन्तप्तो भवेत् तृष्णाभिपीडितः ।
सधूमं सहसा वह्निं वमतीव च मानवः ॥६॥
कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः ।
शुक्लावभासः शूनाक्षो भवेद् गुरुशिरोमुखः ॥७॥
शिरोगलौष्ठतालूनां कण्डूयनमतीव च ।
भूत्वा भूत्वा प्रतीश्यायो योऽकस्माद्विनिवर्त्तते ॥८॥

सम्पक्को वाप्यपक्को वा स सर्वप्रभवः स्मृतः ।
लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे ॥९॥
रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्त्तते ।
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥१०॥
दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च ।
मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धास्तथाणवः ॥११॥
क्रिमिमूर्द्धविकारेण समानं चास्य लक्षणम् ।
प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति ॥१२॥
मुहुरानह्यते चापि मुहुर्विव्रियते तथा ।
निःश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धान्न वेत्ति च ॥१३॥
एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ।
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ॥१४॥
कालेन रोगजनना जायन्ते दुष्टपीनसाः ।
बाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ॥१५॥
कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पीनसाः ॥१६॥
नवं प्रतिश्यायमपास्य सर्वमुपाचरेत्सर्पिष एव पानैः ।
स्वेदैर्विचित्रैर्वमनैश्च युक्तैः कालोपपन्नैरवपीडनैश्च ॥१७॥

अपच्यमानस्य हि पाचनार्थं
स्वेदो हितोऽम्लैरहिमश्च भोज्यः ।
निषेव्यमाणं पयसार्द्रकं वा
सम्पाचयेदिक्षुविकारयोगैः ॥१८॥

पक्वं घनं चाप्यवलम्बमानं शिरोविरेकैरपकर्षयेत्तम् ।
विरेचनास्थापनधूमपानैरवेक्ष्य दोषान् कवलग्रहैश्च ॥१९॥
निवातशय्यासनचेष्टनानि मूर्ध्नो गुरूष्णञ्च तथैव वासः ।

तीक्ष्णा निरेका शिरस सधूमा रुक्ष पलान्नं विजया च से-
व्या ॥२०॥

शीताम्बुयोषिच्छिशिरावगाहचिन्तातिरुक्षाशनवेगरोधान् ।
शोकञ्च मद्यानि नवानि चैव विवर्ज्जयेत् पीनसरोगजुष्ट ॥२१॥

छर्द्यङ्गसादज्वरगौरवार्त्तमरोचकारत्यतिसारयुक्तम् ।
विलङ्घनै पाचनदीपनीयैरुपाचरेत् पीनसिन यथावत् ॥२२॥

बहुद्रवैर्वातकफोपसृष्ट प्रच्छर्दयेत् पीनसिन वय स्थम् ।
उपद्रवांश्चापि यथोपदेश स्वैर्भेषजैर्भोजनसविधानै ।
जयेद्विदित्वा मृदुता गतेषु प्राग्लक्षणेषूक्तमथादिशेच्च ॥२३॥

वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ।
पञ्चभिर्लवणै. सिद्ध प्रथमेन गणेन च ॥२४॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्द्दितेरितम् ।
पित्तरक्तोत्थयो. पेय सर्पिर्मधुरकै शृतम् ॥२५॥
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ।
श्रीसर्जरसपत्तङ्गप्रियङ्गुमधुशर्करा' ॥२६॥
द्राक्षामधूलिकागोजीश्रीपर्णीमधुकैस्तथा ।
युज्यन्ते कवलाश्चात्र विरेको मधुरैरपि ॥२७॥
धवत्वक्त्रिफलाश्यामातिल्वकैर्मधुकेन च ।
श्रीपर्णीरजनीमिश्रै: क्षीरे दशगुणे पचेत् ॥२८॥
तैल कालोपपन्नं तन्नस्य स्याद्‌नयोर्हितम् ।
कफजे सर्पिषा स्निग्धं तिलमाषविपक्कया ॥२९॥
यवाग्वा वामयेद्वान्त' कफघ्नं क्रममाचरेत् ।
उभे बले बृहत्यौ च विडङ्ग' सत्रिकण्टकम् ॥३०॥
श्वेतामूलं सदां भद्रां वर्षाभूश्चात्र सहरेत् ।

तैलमेभिर्विपक्वं तु नस्यमस्योपकल्पयेत् ॥३१॥
सरलाकिणिहीदारुनिकुम्भेङ्गुदिभि कृता ।
वर्त्तयश्चोपयोज्या स्युर्धूमपाने यथाविधि ॥३२॥
सर्पींसि कटुतिक्तानि तीक्ष्णधूमा कटूनि च ।
भेषजान्युपयुक्तानि हिन्यु सर्वप्रकोपजम् ॥३३॥
रसाञ्जने सातिविषे मुस्तायां भद्रदारुणि ।
तैल विपक्वं नस्यार्थे विदध्याच्चात्र बुद्धिमान् ॥३४॥
मुस्तातेजोवतीपाठाकट्फल कटुका वचा ।
सर्षपा पिप्पलीमूलं पिप्पल्य. सैन्धवाग्निकौ ॥३५॥
तुल्य करञ्जवीजञ्च लवणं भद्रदारु च ।
एतै कृतं कषायन्तु कवले सम्प्रयोजयेत् ॥३६॥
हितं मूर्द्धविरेकेण तैलमेभिर्विपाचितम् ।
क्षीरमर्द्धजले क्वाथ्य जाङ्गलैर्मृगपक्षिभि. ॥३७॥
पुष्पैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि ।
हिमे क्षीरावविष्टेऽस्मिन् घृतमुत्पाद्य यत्नत. ॥३८॥
सर्वगन्धासितानन्ता मधुकं चन्दनं तथा ।
अवाप्य विपचेद्भूयो दशक्षीरन्तु तद् घृतम् ॥३९॥
नस्यप्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ।
यथास्व दोषशमनैस्तैल कुर्य्याच्च यत्नत ॥४०॥
समूत्रपित्तास्तूद्दिष्टा. क्रिया. कृमिषु योजयेत् ।
यापनार्थं कृमिघ्नानि भेषजानि च बुद्धिमान् ॥४१॥

---

पञ्चविंशतितमोऽध्यायः ।

अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।

शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥१॥
सूर्य्यावर्त्तान्तवातार्द्धावभेदकशङ्खकैः ।
एकादशप्रकारस्य लक्षणं सम्प्रवक्ष्यते ॥२॥

यस्यानिमित्तं शिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम् ।
बन्धोपतापैश्च भवेद्विशेषः
शिरोऽभितापः स समीरणेन ॥३॥

यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमवती च नासा ।
शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्त-
कोपात् ॥४॥

शिरोगलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च ।
शूनाक्षिकूटं वदनञ्च यस्य शिरोऽभितापः स कफप्रकोपात्
॥५॥

शिरोऽभितापे त्रितयप्रवृत्ते
सर्वाणि लिङ्गानि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः
स्पर्शासहत्वं शिरसो भवेच्च ॥६॥

वसाबलासक्षतसम्भवानां शिरोगतानामिह संक्षयेण ।
क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्
॥७॥

सस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ।

निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भज्यमानं स्फुरतीव चा-
न्त. ॥८॥

घ्राणाच्च गच्छेत्सलिलं सरक्तं
शिरोऽभितापः कृमिभिः स घोर. ।
सूर्य्योदयं या प्रतिमन्दमन्द-
मक्षिभ्रुवं रुक् समुपैति गाढम् ॥९॥

विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च ।
शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तु. सुखमाप्नुयाच्च
॥१०॥

तं भास्करावर्त्तमुदाहरन्ति
सर्वात्मकं कष्टतमं विकारम् ।
दोषास्तु दुष्टास्त्रय एव मन्या
सम्पीड्य घाटा स्वरुजा सुतीव्राम् ॥११॥
कुर्वन्ति साक्षिभ्रुवशङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ।
गण्डस्य पार्श्वेषु करोति कम्पं
हनुग्रहं लोचनजांश्च रोगान् ॥१२॥

अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ।
यस्योत्तमाङ्गार्द्धमतीव जन्तो. सम्भेदतोदभ्रमशूलजुष्टम् ॥१३
पक्षाद्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं त्रितयाद्व्यवस्येत् ।
शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तै. ॥१४॥

रुजः सुतीव्राः प्रतनोति मूर्ध्नि
विशेषतश्चापि हि शङ्खयोस्तु ।
सुकष्टमेनं खलु शङ्खकाख्यं

महर्षयो वेदविदः पुराणा ॥१५॥
व्याधिं वदन्त्युद्गतमृत्युकल्पं
भिषक्सहस्रैरपि दुर्निवारम् ॥१६॥

---

## षड्विंशतितमोऽध्यायः ।

अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ।
वातव्याधिविधिं कार्य्यं शिरोरोगेऽनिलात्मके ।
पयोऽनुपानं सेवेत घृतं तैलमथापि वा ॥१॥
मुद्गान् कुलत्थान्माषांश्च खादेच्च निशि केवलान् ॥२॥
कटूष्णांश्च ससर्पिष्कानुष्णं चानु पयः पिबेत् ।
पिबेद्वा पयसा तैलं तत्कल्कं वापि मानवः ॥३॥
वातघ्नसिद्धैः क्षीरैश्च सुखोष्णैः सेकमादिशेत् ।
तत्सिद्धैः पायसैर्वापि सुखोष्णैर्लेपयेच्छिरः ॥४॥
स्विन्नैर्वा मत्स्यपिशितैः कृशरैर्वा ससैन्धवैः ।
चन्दनोत्पलकुष्ठैर्वा सुश्लक्ष्णैर्मगधायुतैः ॥५॥
स्निग्धस्य तैलं नस्यं स्यात् कुलीररससाधितम् ।
वरुणादौ गणे क्षुण्णे क्षीरमर्द्धोदकं पचेत् ॥६॥
क्षीरशेषञ्च तन्मथ्य शीतं सारमुपाहरेत् ।
ततो मधुरकैः सिद्धं नस्ये तत् पूजितं हविः ॥७॥
तस्मिन् विपक्वे क्षीरे च पेयं सर्पिः सशर्करम् ।
धमन्यास्य यथाकालं स्नैहिकं योजयेद्भिषक् ॥८॥
पानाभ्यञ्जननस्येषु वस्तिकर्मणि सेचने ।
विदध्याच्चैव तत् धीमान् बलातैलमथापि वा ॥९॥

भोजयेच्च रसैः स्निग्धैः पयोभिर्वा सुसंस्कृतैः ।
पित्तरक्तसमुत्थानौ शिरोरोगौ निवारयेत् ॥१०॥
शिरोलेपैः ससर्पिष्कैः परीषेकैश्च शीतलैः ।
क्षीरेक्षुरसधान्याम्लमस्तुक्षौद्रसिताजलैः ॥११॥
नलवञ्जुलकह्लारचन्दनोत्पलपद्मकैः ।
शङ्खशैवलयष्ट्याह्वमुस्ताम्भोरुहसंयुतैः ॥१२॥
शिरःप्रलेपः सघृतैर्वीसर्पैश्च तथाविधैः ।
मधुरैश्च सुखालेपैर्नस्यकर्मभिरेव च ॥१३॥
आस्थापनैर्विरेकैश्च पथ्यैश्च स्नेहवस्तिभिः ।
क्षीरसर्पिर्हितं नस्यं वसा वा जाङ्गला शुभा ॥१४॥
उत्पलादिविपक्वेन क्षीरेणास्थापनं हितम् ।
भोजनं जाङ्गलरसैः सर्पिषा चानुवासनम् ॥१५॥
मधुरैः क्षीरसर्पिस्तु स्नेहने च सशर्करम् ।
पित्तरक्तघ्नमुद्दिष्टं यच्चान्यदपि तद्धितम् ॥१६॥
कफोत्थितं शिरोरोगं जयेत्कफनिवारणैः ।
शिरोविरेकैर्वमनैस्तीक्ष्णैर्गण्डूषधारणैः ॥१७॥
अच्छं च पाययेत्सर्पिः स्वेदयेच्चाप्यभीक्ष्णशः ।
शिरोमधुकसारेण स्निग्धञ्चापि विरेचयेत् ॥१८॥
इङ्गुदस्य त्वचा वापि मेषशृङ्ग्या च वा भिषक् ।
आभ्यामेव कृता वर्त्तीर्धूमपाने प्रयोजयेत् ॥१९॥
श्रेयः कट्फलचूर्णञ्च कवलाश्च कफापहाः ।
शरलाकुष्ठशार्ङ्गेष्टादेवकाष्ठैः सरोहिषैः ॥२०॥
क्षारपिष्टैः सलवणैः सुखोष्णैर्लेपयेच्छिरः ।
यवषष्टिकयोश्चान्नं व्योषक्षारसमायुतम् ॥२१॥

पटोलमुद्गकौलत्थैर्मांसैर्वा भोजयेद्रसै ।
शिरोरोगी त्रिदोषाख्ये त्रिदोषघ्ना विधिर्हित ॥२२॥
सर्पि पान विशेषेण पुराण वा दिशन्ति हि ।
क्षयजे क्षयमासाद्य कर्त्तव्यो बृहणो विधि ॥२३॥
पाने नस्ये च सर्पि स्याद्वातघ्नमधुरै शृतम् ।
क्षयकासापह चात्र सर्पि पथ्यतम विदु. ॥२४॥
क्रिमिभिर्भक्ष्यमाणस्य वक्ष्यन्ते शिरस. क्रिया ।
नस्य हि शोणित दद्यात्तेन मूर्च्छन्ति जन्तव ॥२५॥
मत्ता शोणितगन्धेन समायान्ति यतस्तत ।
तेषा निर्हरण कार्य्य ततो मूर्द्धविरेचनै ॥२६॥
क्षवशिग्रुकवीजैर्वा काञ्चनीलीसमायुतै ।
क्रिमिघ्नैरवपीडैश्च मूत्रपिष्टैरुपाचरेत् ॥२७॥
पूतिमत्स्ययुतान् धूमान् क्रिमिघ्नांश्च प्रयोजयेत् ।
भोजनानि क्रिमिघ्नानि पानानि विविधानि च ॥२८॥
सूर्य्यावर्त्ते विधातव्य नस्यकर्मादिभेषजम् ।
भोजन जाङ्गलप्राय क्षीराद्यविकृतैर्घृतम् ॥२९॥
तथार्द्धभेदके व्याधौ प्राप्तमन्यच्च यद्भवेत् ।
शिरीषमूलकफलैरवपीडोऽत्रयोर्हित. ॥३०॥
वशमूलककर्पूरैरवपीड प्रयोजयेत् ।
अवपीडो हितश्चात्र वचामागधिकायुत' ॥३१॥
मधुकेनावपीडो वा मधुना सह सयुत: ।
मन.शिलावपीडो वा मधुना चन्दनेन वा ॥३२॥
तेषामन्ते हित नस्य सर्पिर्मधुरसान्वितम् ।
सारिवोत्पलकुष्ठानि मधुक चाम्लपेषितम् ॥३३॥

सर्पिस्तैलयुतो लेपो द्वयोरपि सुखावहः।
एष एव प्रयोक्तव्य शिरोरोगे कफात्मके ॥३४॥
अनन्तवाते कर्त्तव्य सूर्य्यावर्त्तेरितो विधि ।
सिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥३५॥
आहारश्च विधातव्यो वातपित्तविनाशन ।
मधुमस्तकसंयावघृतपूरैश्च भोजनै ॥३६॥
क्षीरसर्पिः प्रशसन्ति नस्ये पाने च शङ्खके ।
जाङ्गलाना रसै स्निग्धैराहारश्चात्र शस्यते ॥३७॥
शतावरी तिलान् कृष्णान् मधुक नीलमुत्पलम् ।
दूर्वां पुनर्नवाञ्चैव लेपे साध्ववचारयेत् ॥३८॥
महासुगन्धामथवा पालिन्दीञ्चाम्लपेषिताम् ।
शीताश्चात्र परीषेकान् प्रदेहानत्र योजयेत् ॥३९॥
अवपीडश्च देयोऽत्र सूर्य्यावर्त्तनिवारण ।
क्रिमिक्षयकृतौ हित्वा शिरोरोगेषु बुद्धिमान् ॥४०॥
मधुतैलसमायुक्तै. शिरास्यतिविरेचयेत् ।
पश्चात्सर्षपतैलेन ततो नस्य प्रयोजयेत् ॥४१॥
न चेच्छान्ति व्रजत्येव स्निग्धस्विन्नास्ततो भिषक् ।
पश्चादुपाचरेत्सम्यक् सिराणामथ मोक्षणै. ॥४२॥
षट् सप्ततिर्नेत्ररोगा दशाष्टादश कर्णजाः ।
एकत्रिंशद् घ्राणगता. शिरस्येकादशैव तु ॥४३॥
इति विस्तरतो दृष्टा सलक्षणचिकित्सिताः ।
संहितायामभिहिताः सप्तषष्टिर्मुखामयाः ॥४४॥
एतावन्तो यथास्थूलमुत्तमाङ्गगता गदाः ।
अस्मिन् शास्त्रे निगदिता. सङ्ख्यारूपचिकित्सितै. ॥४५॥

इति सुश्रुताचार्य्यविरचित आयुर्वेदशास्त्रे सुश्रुत उत्तरतन्त्रे शालाक्यतन्त्र समाप्तम् ।

---

सप्तविंशतितमोऽध्याय ।

अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः

बालग्रहाणा विज्ञान साधनञ्चाप्यनन्तरम ।
उत्पत्ति कारणञ्चैव सुश्रुतैकमना शृणु ॥१॥
स्कन्दग्रहस्तु प्रथम स्कन्दापस्मार एव च ।
शकुनी रेवती चैव पूतना चान्धपूतना ॥२॥
पूतना शीतनामा च तथैव मुखमण्डिका ।
नवमो नैगमेषश्च य पितृग्रहसञ्ज्ञितः ॥३॥

धात्रीमात्रो. प्राक्प्रदुष्टापचारान्
शौचभ्रष्टान्मङ्गलाचारहीनान् ।
त्रस्तान् हृष्टास्तर्जितान् क्रन्दितान् वा
पूजाहेतोर्हिंस्युरेते कुमारान् ॥४॥
ऐश्वर्य्यस्थास्ते न शक्या विशन्तो
देह द्रष्टु मानुषैर्विश्वरूपा ।
आप्त वाक्य तत्समीक्ष्याभिधास्ये
लिङ्गान्येषा यानि देहे भवन्ति ॥५॥
शूनाक्ष क्षतजसगन्धिक स्तनद्विट्
वक्रास्यो हतचलितैकपक्ष्मनेत्र ।
उद्विग्न सुलुलितचक्षुरल्परोदी
स्कन्दार्त्तो भवति च गाढमुष्टिवर्चा ॥६॥
नि.सञ्ज्ञो भवति पुनर्भवेत्ससञ्ज्ञ.

स रब्ध करचरणैश्च नृत्यतीव ।
विण्मूत्रे सृजति विनद्य जृम्भमाणः
फेनञ्च प्रसृजति तत्सखाभिपन्न ॥७॥
स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सस्राविव्रणपरिपीडित समन्तात् ।
स्फोटैश्च प्रततनु सदाहपाकै-
र्विज्ञेयो भवति शिशु. चत शकुन्या ॥८॥
रक्तास्यो हरितमलोऽतिपाण्डुदेह
श्यावो वा ज्वरमुखपाकवेदनार्त्त ।
रेवत्या व्यथिततनुश्च कर्णनास
मृद्नाति ध्रुवमभिपीडित कुमार ॥९॥
स्रस्ताङ्गः स्वपिति सुख दिवा न रात्रौ
विड्भिन्न सृजति च काकतुल्यगन्धि. ।
छर्द्यार्त्तो हृषिततनूरुह कुमार-
स्तृष्णालुर्भवति च पूतनागृहीत ॥१०॥
यो द्वेष्टि स्तनमतिसारकासहिक्का-
छर्दीभिर्ज्वरसहिताभिरर्द्यमान ।
दुर्वर्ण सततमध शयोऽम्लगन्धि-
स्त ब्रूयुर्भिषजोऽन्धपूतनार्त्तम् ॥११॥
उद्विग्नो भृशमतिवेपते प्ररुद्यात
सलीनः स्वपिति च यस्य चान्त्रकूज ।
विस्राङ्गो भृशमतिसार्य्यते च यस्त
जानीयाद्भिषगिह शीतपूतनार्त्तम् ॥१२॥
म्लानाङ्ग. सुरुचिरपाणिपादवक्त्रा

बह्वाशी कलुषसिरावृतोदरो यः।
सोऽङ्गेगो भवति च मूत्रतुल्यगन्धिः
स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः ॥१३॥
यः फेनं वमति विनश्यति च मध्ये
सोऽङ्ग विलपति चोर्ध्वमीक्षमाणः।
ज्वीर्य्येत प्रततमथो वसासगन्धि-
र्नि सन्नो भवति हि नैगमेषजुष्टः ॥१४॥
प्रस्तब्धो यः स्तनद्वेषी मुह्यति चाविशन्मुहुः।
तं बालं न चिराद्धन्ति ग्रहः सम्पूर्णलक्षणः ॥१५॥
विपरीतमतः साध्यं चिकित्सेदचिरार्दितम्।
गृहे पुराणहविषाभ्यज्य बालं शुचौ शुचिः ॥१६॥
सर्षपान् प्रकिरेत्तेषां तैलैर्दीपञ्च कारयेत्।
सदा सन्निहितश्चापि जुहुयाद्धव्यवाहनम् ॥१७॥
सर्वगन्धौषधीवीजैर्गन्धमाल्यैरलङ्कृतम्।
अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति सस्मरन् ॥१८॥
नमः स्कन्दाय देवाय ग्रहाधिपतये नमः।
शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥१९॥
निरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम् ॥२०॥

---

## अष्टाविंशतितमोऽध्यायः।

अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः।
स्कन्दग्रहोपसृष्टानां कुमाराणाञ्च शस्यते।
वातघ्नद्रुमपत्राणां निःक्वाथः परिषेचने ॥१॥

तेषां मूलेषु सिद्धञ्च तैलमभ्यञ्जने हितम् ।
सर्वगन्धसुरामण्डकैटर्य्यावापमिष्यते ॥२॥
देवदारुणि रास्नायां मधुरेषु द्रुमेषु च ।
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥३॥
सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ।
उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः ॥४॥
सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान् ।
मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥५॥

रक्तानि माल्यानि तथा पताका
रक्ताश्च गन्धा विविधाश्च भक्ष्याः ।
घण्टा च देवाय बलिर्निवेद्यः
सकुक्कुटः स्कन्दग्रहे हिताय ॥६॥
स्नानं त्रिरात्रं निशि चत्वरेषु
कुर्य्यात् पुनः शालियवैर्नवैस्तु ।
अद्भिश्च गायत्र्यभिमन्त्रिताभिः
प्रज्वालनं चाहुतिभिश्च वह्नेः ॥७॥

रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ।
अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः ॥८॥
तपसां तेजसां चैव यशसां वपुषां तथा ।
निधनं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥९॥
ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ।
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥१०॥
देवदेवस्य महतः पावकस्य च यः सुतः ।
गङ्गोमाकृत्तिकानाञ्च स ते शर्म प्रयच्छतु ॥११॥

रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ।
रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥१२॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ।
बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ।
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥१॥
सर्वगन्धविपक्वन्तु तैलमभ्यञ्जने हितम् ।
क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥२॥
विपक्वव्यं घृतं वापि पानीयं पयसान्वितम् ।
उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥३॥
गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ।
वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च ॥४॥
अनन्तां कुक्कुटीं बिम्बीं मर्कटीञ्चापि धारयेत् ।
पक्वापक्वानि मांसानि प्रसन्नं रुधिरं पयः ॥५॥
भूतौदनो निवेद्यश्च स्कन्दापस्मारिणोऽवटे ।
चतुष्पथे च कर्त्तव्यं स्नानमस्य यतात्मना ॥६॥
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ।
विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥७॥

---

## त्रिंशत्तमोऽध्यायः ।

अथातः शकुनीप्रतिषेधं व्याख्यास्यामः ।
शकुन्यभिपरीतस्य कार्य्यो वैद्येन जानता ।
वेतसाम्रकपित्थानां निःक्वाथः परिषेचने ॥१॥

कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशो ।
मधुकोशीरह्रीवेरसारिवोत्पलपद्मकैः ॥२॥
लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिह्येच्छिशुम ।
अर्थेष्ट्वाणि चूर्णानि पथ्यानि विविधानि च ।
स्कन्दग्रहे धूपनानि तानीष्टापि प्रयोजयेत् ॥३॥
शतावरीसृगैर्वारुनागदन्तीनिदिग्धिकाः ।
लक्ष्मणा सहदेवाञ्च बृहतीञ्चापि धारयेत् ॥४॥
तिलतण्डुलकं माल्यं हरितालं मनःशिला ।
बलिरेष करञ्जेषु निवेद्यो वियतात्मना ॥५॥
निकुञ्जे च प्रयोक्तव्य स्नानमस्य यथाविधि ।
स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम् ॥६॥
कुर्य्याच्च विविधां पूजां शकुन्या कुसुमैः शुभैः ॥७॥
अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता ।
अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥८॥
दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा ।
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥९॥

---

## एकत्रिंशत्तमोऽध्यायः ।

अथातो रेवतीप्रतिषेधं व्याख्यास्यामः ।
अश्वगन्धाजशृङ्गी च सारिवा सपुनर्नवा ।
सहे विदारी च तथा कषायाः सेचने हिताः ॥१॥
तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्जरसेऽपि वा ॥२॥
धवाश्वकर्णककुभधातकीतिन्दुकीषु च ।
काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते ॥३॥

कुलत्था मङ्गचूर्णश्च प्रदेहा सर्वगन्धिकाः।
उष्ट्रोलूकपूरीषाणि यवा यवफलो घृतम् ॥४॥
सन्ध्ययोरुभयो कार्य्यमेतदुद्धूपनं शिशो।
वरुणारिष्टकमय रुचकं सैन्दुकं तथा ॥५॥
सततं धारयेच्चापि कृतं वा पौत्रजीविकम्।
शुक्ला सुमनसो लाजा पय शाल्योदनं तथा ॥६॥
बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना।
सङ्गमे च भिषक् स्नानं कुर्य्याद्धात्रीकुमारयो. ॥७॥
नानावस्त्रधरा देवी चित्रमाल्यानुलेपना।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥८॥
लम्बा कराला विनता तथैव बहुपुत्रिका।
रेवती सततं माता स ते देवी प्रसीदतु ॥९॥

———

द्वात्रिंशत्तमोऽध्याय।

अथात पूतनाप्रतिषेधं व्याख्यास्याम।

कपोतवङ्काऽरलुको वरुण पारिभद्रक।
आस्फोता चैव योज्या: स्युर्बालाना परिषेचने ॥१॥
वचा वयस्था गोलोमी हरितालं मन.शिला।
कुष्ठं सजरसश्चैव तैलार्थे वर्ग इष्यते ॥२॥
हितं घृतं तुगाक्षीर्य्या सिद्धं मधुरकेषु च।
कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा ॥३॥
देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकं।
एलाहरेणवश्चापि योज्या उद्धूपने सदा ॥४॥
गन्धनाकुलिकुम्भीकामज्जानो बदरस्य च।

ककंटास्थि घृतञ्चैव धूपनं सर्षपै सह ॥५॥
काकादनी चित्रफला विम्बी गुञ्जाञ्च धारयेत् ।
मत्स्यौदनञ्च कुर्वीत कृशरां पललं तथा ॥६॥
शरावसम्पुटे कृत्वा बलिं शून्यगृहे हरेत् ॥७॥
उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते ।
पूज्या च पूतना देवी बलिभिः सोपहारकैः ॥८॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा ।
शून्यागाराश्रिता देवी दारकं पातु पूतना ॥९॥
दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका ।
भिन्नागाराश्रया देवी दारकं पातु पूतना ॥१०॥

---

## त्रयस्त्रिंशत्तमोऽध्याय ।

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः ।

तिक्तकद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने ।
सुरासौवीरकं कुष्ठं हरितालं मनःशिला ॥१॥
तथा सर्जरसञ्चैव तैलार्थमुपदिश्यते ।
पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥२॥
शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ।
सर्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः ॥३॥
पुरीषं कौक्कुटं केशाश्चर्म सर्पत्वचन्तथा ।
जीर्णाञ्च भिक्षुसङ्घाटीं धूपनायोपकल्पयेत् ॥४॥
कुक्कुटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत् ।
मांसमामं तथा पक्वं शोणितञ्च चतुष्पथे ॥५॥
निवेद्यमन्तश्च गृहे शिशोरक्षानिमित्ततः ।

शिरीषश्च स्नपनं कुर्य्यात् सर्वगन्धादिकैः शुभैः ॥६॥
कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ।
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥७॥

---

चतुस्त्रिंशत्तमोऽध्यायः ।

अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः ।
कपित्थं सुवहां बिम्बीं तथा बिल्वं प्रचीबलम् ।
नन्दीं भल्लातकीञ्चापि परिषेके प्रयोजयेत् ॥१॥
बस्तमूत्रं गवां मूत्रं मुस्तञ्च सुरदारु च ।
कुष्ठञ्च सर्वगन्धांश्च तैलार्थमवचारयेत् ॥२॥
रोहिणीसर्जखदिरपलाशककुभत्वचः ।
निःक्वाथ्य तस्मिन्निःक्वाथे सक्षीरं विपचेद् घृतम् ॥३॥
गृध्रोलूकपुरीषाणि बस्तगन्धामहिस्त्वचः ।
निम्बपत्राणि मधुकं धूपनार्थं प्रयोजयेत् ॥४॥
धारयेदपि लम्बाञ्च गुञ्जां काकादनीं तथा ।
नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् ॥५॥
देव्यै देयश्चोपहारो वारुणीरुधिरं तथा ।
जलाशयान्ते बालस्य स्नापनं चोपदिश्यते ॥६॥
मुद्गौदनाशना देवी सुराशोणितपायिनी ।
जलाशयालया देवी पातु त्वां शीतपूतना ॥७॥

---

पञ्चत्रिंशत्तमोऽध्यायः ।

अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः ।
कपित्थबिल्वतर्कारीवाशीगन्धर्वहस्तकाः ।

कुवेराक्षी च योज्याः स्युश्शालाना परिषेचने ॥१॥
स्वरसैश्चं द्रुक्षाणां तथाजहरिगन्धयोः ।
तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने भिषक् ॥२॥
मधुलिकायाः पयसि तुगाक्षोर्य्याञ्च णे तथा ।
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥३॥
वचासर्जरसं कुष्ठं सार्षपञ्चोद्भूपने हितम् ।
धारयेदपि जिह्वाश्च चाषचीरोल्लिसर्पिणाः ॥४॥
वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ।
मनःशिलाञ्चोपहरेद्गोष्ठमध्ये बलिं तथा ॥५॥
पायसं सपुरोडासं बल्यर्थमुपहारयेत् ।
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥६॥
अलङ्कृता रूपवती सुभगा कामरूपिणी ।
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥७॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ।
विल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने ।
सुरासौवीरधान्याम्लैः परिषेकश्च शस्यते ॥१॥
प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ।
पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥२॥
पञ्चमूलद्वयक्काथे चीरे मधुरकेषु च ।
पचेद्घृतञ्च मेधावी खर्ज्जूरीमस्तकेऽपि च ॥३॥
वचा वयःस्था गोलोमी जटिला वापि धारयेत् ।
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥४॥

सिद्धार्थकवचाहिङ्गु कुष्ठञ्चैवाच्छते. सह ।
भल्लातकाजमोदाश्च हितमुद्रूपन शिशो: ॥५॥
मर्कटोलूकगृध्राणां पुरीषाणि नखग्रहे ।
धूप सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥६॥
तिलतण्डुलकं माल्य भक्ष्यांश्च विविधानपि ।
कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥७॥
अधस्ताद्वटवृक्षस्य स्नपन चोपदिश्यते ।
बलि न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥८॥
अजाननश्चलाक्षिभ्रू कामरूपी महायशा: ।
बाल पालयिता देवो नैगमेषोऽभिरक्षतु ॥९॥

---

सप्तत्रिंशत्तमोऽध्याय: ।

अथातो ग्रहोत्पत्तिमध्यायं व्याख्यास्याम: ।

नव स्कन्दादय. प्रोक्ता बालानां य इमे ग्रहा: ।
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहा ॥१॥
एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभि. ।
सृष्टा शरवनस्थस्य रक्षितस्यात्मतेजसा ॥२॥
स्त्रीविग्रहा ग्रहा ये तु नानारूपा मनीरिता: ।
गङ्गोमाकृत्तिकानाञ्च ते भागा राक्षसा स्मृता: ॥३॥
नैगमेषस्तु पार्वत्या सृष्टो मेषाननो ग्रह: ।
कुमारधारी देवस्य गुहस्यात्मसम. सखा ॥४॥
स्कन्दापस्मारसञ्ज्ञो य सोऽग्निमाग्निसमद्युति: ।
स च स्कन्दसखा नाम विशाख इति चोच्यते ॥५॥
स्कन्द: सृष्टो भगवता देवेन त्रिपुरारिणा ।

विभर्त्ति चापरा सञ्ज्ञा कुमार इति स ग्रह. ॥६॥
बाललीलाधरो योऽय देवो रुद्राग्निसम्भव. ।
मिथ्याचारेषु भगवान् स्वय नैष प्रवर्त्तते ॥७॥
कुमार स्कन्दसामान्यादत्र केचिदपण्डिता. ।
गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तका ॥८॥
ततो भगवति स्कन्दे सुरसेनापतौ कृते ।
उपतस्थुर्ग्रहाः सर्वे दीप्तशक्तिधरं गुहम् ॥९॥
ऊचु. प्राञ्जलयश्चैन वृत्तिं न सन्दिश प्रभो ।
तेषामर्थे तत स्कन्दः शिवं देवमचोदयत् ॥१०॥
ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् ।
तिर्य्यग्योनिं मानुषञ्च दैवञ्च त्रितय जगत् ॥११॥
परस्परोपकारेण वर्त्तते धार्य्यतेऽपि च ।
देवा मनुष्यान् प्रीणन्ति तैर्य्यग्योनींस्तथैव च ॥१२॥
वर्त्तमानैर्य्यथाकाल शीतवर्षोष्णमारुतैः ।
इज्याञ्जलिनमस्कारजपहोमव्रतादिभि ॥१३॥
नरा सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् ।
भागधेय विभक्तञ्च शेषं किञ्चिन्न विद्यते ॥१४॥
तद् युष्माक शुभा वृत्तिर्बालेष्वेव भविष्यति ।
कुलेषु येषु नेज्यन्ते देवाः पितर एव च ॥१५॥
ब्राह्मणा. साधवश्चैव गुरवोऽतिथयस्तथा ।
निवृत्ताचारशौचेषु परपाकोपभोजिषु ॥१६॥
उत्सन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु ।
गृहेषु तेषु ये बालास्तान् गृह्णीध्वमशङ्किताः ॥१७॥
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ।

एवं ग्रहा: समुत्पन्ना बालान् गृह्णन्ति चाप्यत: ॥१८॥
ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मता: ।
वैकल्यं मरणं चाशु ध्रुवं स्कन्दग्रहे मतम् ॥१९॥
स्कन्दग्रहोऽत्युग्रतम: सर्वेष्वेव यत: स्मृत: ।
अन्यो वा सर्वरूपस्तु न साध्यो ग्रह उच्यते ॥२०॥

---

## अष्टत्रिंशत्तमोऽध्याय: ।

अथातो योनिव्यापत्प्रतिषेधं व्याख्यास्याम: ॥
प्रवृद्धलिङ्गं पुरुषं यात्यर्थमुपसेवते ।
रूक्षदुर्बलबालायास्तस्या वायु: प्रकुप्यति ॥ १ ॥
स दुष्टो योनिमासाद्य योनिरोगाय कल्पते ।
त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु ॥२॥
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ।
मिथ्याचारेण या: स्त्रीणां प्रदुष्टेनार्त्तवेन च ॥३॥
जायन्ते वीजदोषाच्च दैवाच्च शृणु ता: पृथक् ।
उदावर्त्ता तथा वन्ध्या विप्लुता च परिप्लुता ॥४॥
वातला चेति वातोत्था पित्तोत्था रुधिरक्षरा ।
वामिनी स्रंसिनी चापि पुत्रघ्नी पित्तला च या ॥५॥
अत्यानन्दा च या योनि: कर्णिनी चरणाद्वयम् ।
श्लेष्मिका सकफा ज्ञेया षण्ढी च फलिनी तथा ॥६॥
महती सूचिवक्त्रा च सर्वजेति त्रिदोषजा ।
सफेनिलमुदावर्त्ता रज: कृच्छ्रेण मुञ्चति ॥७॥
वन्ध्या नष्टार्त्तवा विद्याद्विप्लुता नित्यवेदनाम् ।
परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ॥८॥

वातला कर्कशा स्तब्धा शूलनिस्तोदपीड़िता।
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदना ॥९॥
सदाहं क्लिश्यते यस्या सा लोहितक्षरा।
सवातमुद्गिरेद्बीज वामिनी रजसायुतम् ॥१०॥
प्रस्रंसिनी स्यन्दते तु क्षोभिता दु प्रसूश्च या।
स्थित स्थित हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥११॥
अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥१२॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति।
कर्णिन्या कर्णिका योनौ श्लेष्मासृग्भ्यान्तु जायते ॥१३॥
मैथुनाचरणात् पूर्वं पुरुषादतिरिच्यते।
बहुशश्चातिचरणादन्या बीजं न विन्दति ॥१४॥
श्लेष्मला पिच्छिला योनिः कण्डूयुक्तातिशीतला।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत् ॥१५॥
अनार्त्तवस्तना षण्ढी खरस्पर्शा च मैथुने।
अतिकायगृहीतायास्तरुण्याः फलिनी भवेत् ॥१६॥
विवृतातिमहायोनिः सूचीवक्त्रातिसंवृता।
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥१७॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रितिर्भवेत्।
पञ्चासाध्या भवन्तीमा योनयः सर्वदोषजाः ॥१८॥
प्रतिदोषन्तु साध्यासु स्नेहादिक्रम इष्यते।
दद्यादुत्तरवस्तींश्च विशेषेण यथोदितान् ॥१९॥
कर्कशा शीतला स्तब्धामल्पस्पर्शाञ्च मैथुने।
कुम्भीस्वेदैरुपचरेत् सानूपौदकसंयुतैः ॥२०॥

मधुरौषधसयुक्तान् वेशवारांश्च योनिषु।
निक्षिपेद्धारयेच्चापि पिचुन्तैलमतन्द्रित ॥२१॥
धावनानि च पथ्यानि कुर्वीतापूरणानि च।
ओषचोषान्वितासूक्तं कुर्य्याच्छीतं विधिं भिषक् २०॥
दुर्गन्धां पिच्छिलां चापि चूर्णैं पञ्चकषायजे।
पूरयेद्राजवृक्षादिकषायैश्चापि धावनम ॥२३॥
योन्यान्तु पूयस्राविण्या शोधनद्रव्यसम्भृतै।
सगोमूत्रै सलवणै पिण्डैरापूरण हितम् ॥२४॥
बृहतीफलकल्कस्य द्विहरिद्रायुतस्य।
कण्डूमतीमपस्पर्शां पूरयेद्धूपयेत् तथा ॥२५॥
वर्त्तिं प्रदद्यात् कर्णिन्या शोधनद्रव्यसम्भृताम्।
प्रस्र सिनी घृताभ्यक्ता चीरस्विन्ना प्रवेशयेत् ॥२६॥
पिधाय वेशवारेण ततो बन्ध समाचरेत्।
प्रतिदोष विदध्याच्च सुरारिष्टासवान् भिषक् ॥२७॥
प्रात प्रातर्निषेवेत रसोनादुद्धृत रसम्।
चीरमासरसप्रायमाहार विदधीत च ॥२८॥
शुक्रार्त्तवादयो दोषा स्तनरोगाश्च कीर्त्तिता।
क्लैब्योत्थानानि मूढस्य गर्भस्य विधिरेव च ॥२९॥
गर्भिणीप्रतिरोगेषु चिकित्सा चाप्युदाहृता।
ता सर्वथा प्रयुञ्जीत योनिव्यापत्सु बुद्धिमान् ॥३०॥
अपप्रजातारोगांश्च चिकित्सेदुत्तराद्भिषक् ॥३१॥
इति सुश्रुताचार्य्यविरचित आयुर्वेदशास्त्रे सुश्रुत
उत्तरतन्त्रे कौमारभृत्य समाप्तम्।

———

## एकोनचत्वारिंशत्तमोऽध्यायः।

अथातो ज्वरप्रतिषेधं व्याख्यास्यामः।

येनामृतमपां मध्यादुद्धृतं पूर्वजन्मनि।
यतोऽमरत्वं सम्प्राप्तास्त्रिदशास्त्रिदिवेश्वरात् ॥१॥
शिष्यास्तं देवमासीनं पप्रच्छुः सुश्रुतादयः।
व्रणस्योपद्रवाः प्रोक्ताः व्रणिनामप्यतः परम् ॥२॥
समासाद् व्यासतश्चैव ब्रूहि नो भिषजां वर।
उपद्रवेण जुष्टस्तु व्रणः कृच्छ्रेण सिध्यति ॥३॥
उपद्रवास्तु व्रणिनः कृच्छ्रसाध्याः प्रकीर्त्तिताः।
प्रक्षीणबलमांसस्य दोषधातुपरिक्षयात् ॥४॥
तस्मादुपद्रवान् कृत्स्नान् ब्रूहि नः सचिकित्सितान्।
सर्वकायचिकित्सासु ये दृष्टाः परमर्षिभिः ॥५॥
तेषां तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः।
ज्वरमादौ प्रवक्ष्यामि स रोगानीकराट् स्मृतः ॥६॥
रुद्रकोपाग्निसम्भूतः सर्वभूतप्रतापनः।
तैस्तैर्नामभिरित्येषां सत्वानां परिकीर्त्त्यते ॥७॥
जन्मादौ निधने चैव प्रायो विशति देहिनः।
अतः सर्वविकाराणामयं राजा प्रकीर्त्तितः ॥८॥
ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम्।
कर्मणा लभते यस्माद्देवत्वं मानुषादपि ॥९॥
पुनश्चैव च्युतः स्वर्गान्मानुष्यमनुवर्त्तते।
तस्मात्ते देवभागेन सहन्ते मानुषा ज्वरम् ॥१०॥
शेषाः सर्वे विपद्यन्ते तैर्य्यग्योना ज्वरार्दिताः।
स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा ॥११॥

विकारा युगपद्यस्मिन् ज्वरः स परिकीर्त्तितः।
दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुरेव च ॥१२॥
अनेककारणोत्पन्नः स्मृतस्त्वष्टविधो ज्वरः।
दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपनैः ॥१३॥
व्याप्य देहमशेषेण ज्वरमापादयन्ति हि।
दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमूष्मणा ॥१४॥
सहिताश्च समागत्य रसस्वेदप्रवाहिणाम्।
स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम् ॥१५॥
निरस्य वहिरूष्माणं पक्तिस्थानाच्च केवलम्।
शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम् ॥१६॥
जनयन्त्यथ वृद्धिञ्च स्ववर्णञ्च त्वगादिषु।
मिथ्यातियुक्तैरपि च स्नेहाद्यैः कर्मभिर्नृणाम् ॥१७॥
विविधादभिघाताच्च रोगोत्थानात् प्रपाकतः।
श्रमात् क्षयादजीर्णाच्च विषात् सात्म्यर्त्तुपर्य्ययात् ॥१८॥
ओषधीपुष्पगन्धाच्च शोकान्नक्षत्रपीडनात्।
अभिचाराभिशापाभ्यां मनोभूताभिशङ्कया ॥१९॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः।
स्तन्यावतरणे चैव ज्वरो दोषैः प्रवर्त्तते ॥२०॥
तैर्वेगवद्भिर्बहुधा समुद्भ्रान्तैर्विमार्गगैः।
विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः ॥२१॥
रुणद्धि चाप्यपान्यातुं यस्मात्तस्माज्ज्वरातुरः।
भवत्यत्युष्णगात्रश्च न च स्विद्यति सर्वशः ॥२२॥
श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥२३॥

जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तम ।
अप्रहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे ॥२४॥
सामान्यतो विशेषात् तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाह कफान्नान्नाभिनन्दनम् ॥२५॥
सर्वलिङ्गसमावाय सर्वदोषप्रकोपजे ।
द्वयोर्द्वयोस्तु रूपेण संसृष्ट द्वन्द्वज विदु ॥२६॥
वेपथुर्विषमो वेग कण्ठौष्ठमुखशोषणम ।
निद्रानाश क्षवस्तम्भो गात्राणा रौक्ष्यमेव च ॥२७॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्य बद्धविट्कता ।
जृम्भाध्मान तथा शूल भवत्यनिलजे ज्वरे ॥२८॥
वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्व तथा वमिः ।
कण्ठौष्ठमुखनासाना पाक स्वेदश्च जायते ॥२९॥
प्रलाप कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्व पैत्तिके भ्रम एव च ॥३०॥
गौरव शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता ।
स्रोतोरोधो रुगल्पत्व प्रसेको मधुरास्यता ॥३१॥
नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकता ।
प्रतिश्यायोऽरुचि' कास कफजेऽक्ष्णोश्च शुक्लता ॥३२॥
निद्रानाशो भ्रम श्वासस्तन्द्रा सुप्ताङ्गतारुचि ।
तृष्णा मोहो मद स्तम्भो दाह. शीत हृदि व्यथा ॥३३॥
पक्तिश्चिरेण दोषाणामुन्माद. श्यावदन्तता ।
रसना परुषा कृष्णा सन्धिमूर्द्धास्थिजा रुज ॥३४॥
निर्भुग्नकलुषे नेत्रे कर्णौ शब्दरुगन्वितौ ।
प्रलाप. स्रोतसाम्पाकः कूजन चेतनाच्युतिः ॥३५॥

स्वेदमूत्रपुरीषाणामल्पश्च सुचिरात् स्रुति ।
सर्वजे सर्वलिङ्गानि विशेषश्चात्र मे शृणु । ३६॥
नात्युष्णशीतोऽल्पसञ्ज्ञो भ्रान्तप्रेची हतस्वर ।
खरजिह्व शुष्ककण्ठ स्वेदविण्मूत्रवर्जित ॥३७॥
सास्रनिर्भुग्नहृदयो भक्तद्वेषी हतप्रभ ।
श्वसन् निपतित शेत प्रलापोपद्रवायुत ॥३८॥
तमभिन्यासमित्याहुर्हतौजसमथापरे।
सन्निपातज्वर कृच्छ्रमसाध्यमपरे विदु ॥३९॥
निद्रोपेतमभिन्यास चीणमेनं हतौजसम।
संन्यस्तगात्र सन्यास विद्यात्सर्वात्मके ज्वरे ॥४०॥
ओजो विस्रंसते यस्य पित्तानिलसमुच्छ्रयात्।
स गात्रस्तम्भशीताभ्या शयने स्यादचेतन ॥४१॥
अपि जाग्रत् स्वपन् जन्तुस्तन्द्रालुश्च प्रलापवान् ।
सहृष्टरोमा स्रस्ताङ्गो मन्दसन्तापवेदन ॥४२॥
ओजोनिरोधज तस्य जानीयात कुशलो भिषक ॥४३॥
सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥४४॥
त्रिदोषोच्छ्रायलिङ्गास्तु द्वन्द्वजास्त्रिविधाः स्मृता ।
जृम्भाध्मानमदोत्कम्पपर्वभेदपरिच्चयाः ।
रुट् प्रलापाभितापाः स्युर्ज्वरे मारुतपैत्तिके ॥४५॥
शूलकासकफोत्क्लेशशीतवेपथुपीनसाः ।
गौरवारुचिविष्टम्भा वातश्लेष्मसमुद्भवे ॥४६॥
शीतदाहारुचिस्तम्भस्वेदमोहमदभ्रमा.।
कासाङ्गसादहृल्लासा भवन्ति कफपैत्तिके ॥४७॥

चामाणां ज्वरमुक्तानां मिथ्याहारविहारिणाम्।
दोषः स्वल्पोऽपि सम्वृद्धो देहिनामनिलेरितः॥४८॥
सततान्येद्युष्कत्र्याख्यचातुर्थान् सप्रलेपकान्।
कफस्थानविभागेन यथासंख्यं करोति हि॥४९॥
अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते।
ततश्चामाशयं प्राप्य घोरं कुर्य्याज्ज्वरं नृणाम्॥५०॥
तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः।
दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत्॥५१॥
कफस्थानेषु वा दोषस्तिष्ठन् द्वित्रिचतुर्षु वा।
विपर्य्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान्॥५२॥
परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः।
आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे॥५३॥

वाताधिकत्वात् प्रवदन्ति तज्ज्ञा-
स्तृतीयकञ्चापि चतुर्थकञ्च।
औपात्यके मद्यसमुद्भवे च
हेतुं ज्वरे पित्तकृतं वदन्ति॥५४॥

प्रलेपकं वातबलासकञ्च कफाधिकत्वेन वदन्ति तज्ज्ञाः।
मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु॥५५॥

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च॥५६॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः॥५७॥
द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमः स्मृतः॥५८॥

प्रसक्तस्य भिषातोऽथस्वेतनाप्रभवस्तु यः ।
रात्र्यह्नोः षट्सु कालेषु कीर्त्तितेषु यथा पुरा ॥५९॥
प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः ।
स चापि विषमो देहं न कदाचिद् विमुञ्चति ॥६०॥
ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ।
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ॥६१॥
धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते ।
अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः ॥६२॥
दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥६३॥
सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ।
मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ॥६४॥
कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ।
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥६५॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ॥६६॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।
अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ॥६७॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥६८॥
वातेनोद्धूयमानस्तु यथा पूर्य्येत सागरः ।
वातेनोदीरितास्तद्वद्दोषाः कुर्वन्ति वै ज्वरान् ॥६९॥
यथा वेगागमे वेलां छादयित्वा महोदधेः ।
वेगहानौ तदेवाम्भस्तत्रैवान्तर्निधीयते ॥७०॥
दोषवेगोदये तद्वदुदीर्य्येत ज्वरोऽस्य वा ।

वेगहानौ प्रशाम्येत यथाम्भः सागरे तथा ॥७१॥
विविधेनाभिघातेन ज्वरो य सम्प्रवर्त्तते।
यथादोषप्रकोपन्तु तथा म थे त त ज्वरम ॥७२॥
श्यावास्यता विषकृते दाहातीसारहृद्ग्रहा ।
अभक्तारुक् पिपासा च तोदो मूर्च्छा बलक्षय ॥७३॥
ओषधीगन्धजे मूर्च्छा शिरोरुक् वमथुस्तथा ।
कामजे चित्तविभ्र शस्तन्द्रालस्यमभक्तरुक् ॥७४॥
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ।
भयात् प्रलाप शोकाच्च भवेत् कोपाच्च वेपथु ॥७५॥
अभिचाराभिशापाभ्या मोहस्तृष्णाभिजायते ।
भूताभिषङ्गादुद्वेगहास्यकम्पनरोदनम ॥७६॥
श्रमक्षयाभिघातेभ्यो देहिना कुपितोऽनिल ।
पूरयित्वाखिल देह ज्वरमापादयेद्भृशम ॥७७॥
रोगाणा तु समुत्थानाद्विदाहागन्तुतस्तथा ।
ज्वरोऽपर सम्भवति तैस्तैरन्यैश्च हेतुभि ॥७८॥
दोषाणा स तु लिङ्गानि कदाचिन्नातिवर्त्तते ।
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥७९॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ।
हतप्रभेन्द्रिय क्षाम दुरात्मानमुपद्रुतम ॥८०॥
गम्भीरतीक्ष्णवेगार्त्त ज्वरित परिवर्जयेत् ।
हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिक ॥८१॥
ज्वरवेगो भवेत्तीव्रो यथापूर्व सुखक्रिय ।
इति ज्वरा समाख्याता कर्मेदानीं प्रवच्यते ॥८२॥
ज्वरस्य पूर्वरूपेषु वर्त्तमानेषु बुद्धिमान् ।

पाययेत घृत स्वच्छ तत स लभते सुखम ॥८३॥
विधिर्मारुतजेष्वेष पैत्तिकेषु विरेचनम् ।
मृदु प्रच्छर्दन तद्वत्कफजेषु विधीयते ॥८४॥
सर्वं द्विदोषजेषूक्त यथादोष विकल्पयेत् ।
अस्नेहनीयोऽशोध्यश्च सयाज्यो लङ्घनादिना ॥८५॥
रूपप्राग्रूपयोविद्यान्नानात्व वह्निधूमवत् ।
अव्यक्तरूपेषु हितमैकान्तेनापतर्पणम् ॥८६॥
आमाशयस्थे दोषे तु सोत्क्लेशे वमन परम ।
आनद्धास्तिमितैर्दोषैर्यावन्त कालमातुर ॥८७॥
कुर्य्यादनशन तावत्तत ससर्गमाचरेत् ।
न लङ्घयेन्मारुतजे क्षयजे मानसे तथा ॥८८॥
अलङ्घ्याश्चापि ये पूर्वं द्विव्रणीये प्रकीर्त्तिता. ।
अनवस्थितदोषाग्ने लँङ्घन दोषपाचनम् ॥८९॥
ज्वरघ्न दीपन काङ्क्षारुचिलाघवकारकम् ।
सृष्टमारुतविण्मूत्र क्षुत्पिपासाऽसह लघुम् ॥९०॥
प्रसन्नात्मेन्द्रिय क्षाम नर विद्यात् सुलङ्घितम् ।
बलक्षयस्तृषाशोषस्तन्द्रानिद्राभ्रमक्लमा ॥९१॥
उपद्रवाश्च श्वासाद्या सम्भवन्त्यतिलङ्घनात् ।
दीपन कफविच्छेदि पित्तवातानुलोमनम् ॥९२॥
कफवातज्वरार्त्तेभ्यो हितमुष्णाम्बु तृट्छिदम् ।
तद्धि मार्दवकृद्दोषस्रोतसा शीतमन्यथा ॥९३॥
सिच्यमानेन तोयेन ज्वर [illegible] न वर्द्धते ।
पित्तमद्यविषोत्थे [illegible] रक्तै शृतम् ॥९४॥
गाङ्गेयनागरोशीर [illegible] रक्तै ।

दीपनी पाचनी लघ्वी ज्वरार्त्तानां ज्वरापहा ॥८५॥
अन्नकाले हिता पेया यथास्वम्पाचनै कृता ।
बहुदोषस्य मन्दाग्ने: सप्तरात्रात्परं ज्वरे ॥८६॥
लङ्घनाद्यैर्यवागूभिर्यदा दोषो न पच्यते ।
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ॥८७॥
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत् ।
पञ्चमूलीकषायन्तु पाचनं पवनज्वरे ॥८८॥
सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम् ।
पिप्पल्यादिकषायन्तु कफजे परिपाचनम् ॥८९॥
द्वन्द्वजेषु तु संसृष्टं दद्यादथ विवर्जयेत् ।
पीताम्बुर्लङ्घितो भुक्तो जीर्णे क्षीणः पिपासितः ॥१००॥
रूढे ज्वरे लघौ देहे प्रचलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥१०१॥
दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम् ।
हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः ॥१०२॥
दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता ।
गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः ॥१०३॥
स्वापः स्तम्भो गुरुत्वञ्च गात्राणां वह्निमार्दवम् ।
मुखस्याशुद्धिरग्लानिः प्रसक्तो बलवान् ज्वरः ॥१०४॥
लिङ्गैरेभिर्विजानीयाज्ज्वरमामं विचक्षणः ।
सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम् ॥१०५॥
दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ।
पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ॥१०६॥
अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः ।

भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ।
शोधनं शमनीयन्तु करोति विषमज्वरम् ॥१०७॥
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ।
अतिप्रवर्त्तमानञ्च साधयेदतिसारवत् ॥१०८॥
यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः ।
अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् ॥१०९॥
पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन् महात्ययम् ।
विषमं वा ज्वरं कुर्य्याद् बलव्यापदमेव च ॥११०॥
तस्मान्निर्हरणं कार्य्यं दोषाणां वमनादिभिः ॥१११॥
प्राक्कर्म वमनं चास्य कार्य्यमास्थापनं तथा ।
विरेचनं तथा कुर्य्याच्छिरसश्च विरेचनम् ॥११२॥
क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे ।
पित्तप्राये विरेकस्तु कार्य्यः प्रशिथिलाशये ॥११३॥
सरुजेऽनिलजे कार्य्यं सोदावर्त्ते निरूहणम् ।
कटीपृष्ठग्रहार्त्तस्य दीप्ताग्नेरनुवासनम् ॥११४॥
शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ।
कफाभिपन्ने शिरसि कार्य्यं मूर्द्धविरेचनम् ॥११५॥
दुर्बलस्य समाध्मातमुदरं सरुजं दिहेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥११६॥
अम्लपिष्टैः सुखोष्णैश्च पवने तूर्द्ध्वमागते ।
बद्धमूत्रपुरीषाय गुदे वर्त्तिं निधापयेत् ॥११७॥
पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ।
पाययेत यवागूं वा मारुतस्यानुलोमनीम् ॥११८॥
शुद्धयोभयतो यस्य ज्वरः शान्तिं न गच्छति ।

समेषदोषरूक्षस्य तस्य त सर्पिषा जयेत् ॥ ११९॥
कृशञ्चैवाल्पदोषञ्च शमनीयैरुपाचरेत् ।
उपवासैर्बलस्थन्तु ज्वरे सन्तर्पणोत्थिते ॥१२०॥
क्लिन्ना यवागू मन्दाग्निस्तृषार्त्तं पाययेन्नरम ।
तृट्छर्द्दिदाहघर्मार्त्तं मद्यप लाजतर्पणम ॥१२१॥
सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् ।
उपवासश्रमकृते क्षीणे वाताधिके ज्वरे ॥१२२॥
दीप्ताग्नि भोजयेत् प्राज्ञो नर मांसरसौदनम ।
मुद्गयूषौदनञ्चापि हित कफसमुत्थिते ॥१२३॥
स एव सितया युक्त शीत पित्तज्वरे हित ।
दाडिमामलमुद्गाना यूषश्चानिलपैत्तिके ।
ह्रस्वमूलकयूषेण भोजयेत्कफवातिके ॥१२४॥
पटोलनिम्बयूषस्तु पथ्य पित्तकफात्मके ।
दाहच्छर्द्दियुत चाम निरन्न तृष्णयार्द्दितम् ॥१२५॥
सिताक्षौद्रयुत लाजतर्पणं पाययेत च ।
कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा ॥१२६॥
मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत् ।
यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितै. ॥१२७॥
मद्य पुराण मन्दाग्नेर्यवान्नोपहित हितम ।
सव्योषं वितरेत्तक्र कफारोचकपीडिते ॥१२८॥
कृशोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्द्दित. ।
विबद्धः सृष्टदोषश्च रूक्ष पित्तानिलज्वरी ॥१२९॥
पिपासार्त्त सदाहो वा पयसा स सुखी भवेत् ।
तदेव तु पय. पीत तरुणे हन्ति मानवम् ॥१३०॥

सर्वज्वरेषु सप्ताहं मात्रावद्भोजनं हितम्।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥१३१॥
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा ॥१३२॥
गुर्व्वभिष्यन्दकाले च ज्वरी नाद्यात्कथञ्चन।
न तु तस्याहितं भुक्तमायुषे वा सुखाय वा ॥१३३॥
सततं विषमं वापि क्षीणस्य सुचिरोत्थितम्।
ज्वरं सभोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥१३४॥
मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान्।
आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥१३५॥
लावान् कपिञ्जलानेणान् पृषतान् शरभान् शशान्।
कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकान् ॥१३६॥
मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत्।
सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरींस्तथा ॥१३७॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
ज्वरितानां प्रकोपन्तु यदा याति समीरणः ॥१३८॥
तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः।
परिषेकावगाहांश्च स्नेहान् संशोधनानि च ॥१३९॥
स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः।
न भजेत ज्वरोत्सृष्टो यावन्नो बलवान् भवेत् ॥१४०॥
त्यक्तस्यापि ज्वरेणाशु दुर्बलस्याहितैर्ज्वरः।
प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः ॥१४१॥
तस्मात्कार्य्यः परीहारो ज्वरमुक्तेन जन्तुना।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥१४२॥

ज्वरे प्रमोहो भवति स्वल्पैरप्यवचेष्टितै ।
निषस्य भोजयेत्तस्मान्मूत्रोच्चारी च कारयेत् ॥१४३॥
अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ।
शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः ॥१४४॥
न जातु तर्पयेत् प्राज्ञ सहसा ज्वरकर्षितम् ।
तेन सन्दूषितो ह्यस्य पुनरेव भवेज्ज्वरः ॥१४५॥
चिकित्सेच्च ज्वरान् सर्वान्निमित्तानां विपर्य्ययै ।
श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् ॥१४६॥
स्त्रीणामपप्रजातानां स्तन्यावतरणे च यः ।
तत्र सशमन कुर्य्याद्यथादोष विधानवित् ॥१४७॥
अत सशमनीयानि कषायाणि निबोध मे ।
सर्वज्वरेषु देयानि यानि वैद्येन जानता ॥१४८॥
पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ।
कृत कषाय सगुडं हन्याच्छ्वसनज ज्वरम् ॥१४९॥
शृतशीतकषाय वा गुडूच्या पेयमेव तु ।
बलादर्भश्वदंष्ट्राणा कषाय पादशेषितम ।
शर्कराघृतसंयुक्त पिबेद्वातज्वरापहम् ॥१५०॥
शतपुष्पावचाकुष्ठ देवदारुहरेणुकाः ।
कुस्तुम्बरूणि नलदं मुस्तं चैवाम्बु साधयेत् ॥१५१॥
क्षौद्रेण सितया चापि युक्तः क्वाथोऽनिलात्मके ॥१५२॥
द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः ससारिवाः ।
निःक्वाथ्य सगुड क्वाथ पिबेद्वातकृते ज्वरे ॥१५३॥
गुडूच्याः स्वरसो ग्राह्य शतावर्य्याश्च तत्समः ।
निहन्यात्सगुडः पीतः सद्योऽनिलकृत ज्वरम् ॥१५४॥

घृताभ्यङ्गस्वेदलेपानवस्थासु च योजयेत् ।
आपर्णिचन्दनोशीरपरूषकमधूकजः ।
शर्करामधुरो हन्ति कषायः पैत्तिक ज्वरम ॥१५५॥
शीत पित्तज्वर हन्यात्सारिवाद्य सशर्करम् ॥१५६॥
सयष्टीमधुक हन्यात्तथैवोत्पलपूर्वकम ।
शृतशीतकषाय वा सोत्पल शर्करायुतम ॥१५७॥
गुडूचीपद्मरोध्राणा सारिवोत्पलयोस्तथा ।
शर्करामधुरः क्राथः शीतः पित्तज्वरापह ॥१५८॥
द्राक्षारग्वधयोश्चापि काश्मर्य्यस्याथवा पुन ।
स्वादुतिक्तकषायाणा कषायै. शर्करायुतैः ॥१५९॥
रूशाते. शमयेत्तृष्णा प्रवृद्धा दाहमेव च ।
शीत मधुयुत तोयमाकण्ठाद्वा पिपासितम ॥१६०॥
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ।
चारे क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः ॥१६१॥
अन्तर्दाहे विधातव्यमेतैश्चान्यैश्च शीतलैः ।
निदध्यादप्सु चालोड्य निशापर्य्युषित ततः ॥१६२॥
क्षौद्रेण युक्त पिबतो ज्वरदाहौ प्रशाम्यतः ।
पद्मक मधुक द्राक्षा पुण्डरीकमथोत्पलम ॥१६३॥
यवान् भृष्टानुशीराणि समङ्गा काश्मरीफलम् ।
जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत् ॥१६४॥
केशर मातुलङ्गस्य मधुसैन्धवसयुतम् ।
शर्करादाडिमाभ्या वा द्राक्षाखर्ज्जूरयोस्तथा ।
वैरस्ये धारयेत्कल्क गण्डूषञ्च यथा हितम् ॥१६५॥
सप्तच्छद गुडूचीञ्च निम्बस्फूर्जकमेव च ।

क्वाथयित्वा पिबेत् क्वाथं सक्षौद्रं कफजे ज्वरे ॥१६६॥
कट्फलं नागपुष्पं हरिद्रा कटुरोहिणी ।
कीटजञ्च फलं हन्यात्सेव्यमानं कफज्वरम् ॥१६७॥
हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम ।
कुष्ठमिन्द्रयवान् मूर्वां पटोलं चापि साधितम् ॥१६८॥
पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥१६९॥
सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ।
मुस्तेन च कृतः क्वाथः पीतो हन्यात् कफज्वरम् ॥१७०॥
मुस्तं वत्सकबीजानि त्रिफलाकटुरोहिणी ।
परूषकाणि च क्वाथः कफज्वरविनाशनः ॥१७१॥
राजवृक्षादिवर्गस्य कषायं मधुसंयुतम् ।
कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितम् ॥१७२॥
नागरं धान्यकं भार्गीमभया सुरदारु च ।
वचा पर्पटकं मुस्तं भूनिम्बमथ कट्फलम् ॥१७३॥
निःक्वाथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितम् ।
पातव्यं श्वासकासघ्नं श्लेष्मोत्क्लेके गलग्रहे ।
हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे ॥१७४॥
एलापटोलत्रिफलायष्ट्याह्वाना वृषस्य च ।
क्वाथो मधुयुतः पीतो हन्ति पित्तकफज्वरम् ॥१७५॥
कटुकाविजयाद्राक्षामुस्तपर्पटकैः कृतः ।
कषायो नाशयेत्पीतः श्लेष्मपित्तभवं ज्वरम् ॥१७६॥
भार्गीवचापर्पटकधान्यहिङ्ग्वभयाघनैः ।
काश्मर्यनागरैः क्वाथः सक्षौद्रः श्लेष्मपित्तजे ॥१७७॥
शर्करामलमात्रां तु कटुकामुष्णवारिणा ।

पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥१७८॥
किराततिक्तममृतं द्राक्षामामलकं शटीम् ।
निःक्वाथ्य वातपित्तोत्थे तं क्वाथं सगुडं पिबेत् ॥१७९॥
रास्ना वृषोऽथ त्रिफला राजवृक्षफलैः सह ।
कषायः साधितः पीतो वातपित्तज्वरं जयेत् ॥१८०॥
सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ।
यथादोषोच्छ्रयञ्चापि ज्वरान् सर्वानुपाचरेत् ॥१८१॥
ह्रस्वीकविल्ववर्षाभूः पयश्चोदकमेव च ।
पचेत् क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ॥१८२॥
उदकाशास्लयं क्षीरं शिंशपासारसंयुतम् ।
तत्क्षीरशेषं क्वथितं पेयं सर्वज्वरापहम् ॥१८३॥
नलवेतसयोर्मूले मूर्वायां देवदारुणि ।
कषायं विधिवत् कृत्वा पेयमेतज्ज्वरापहम् ॥१८४॥
त्रैफले वा ससर्पिष्कः क्वाथः पेयस्त्रिदोषजे ॥१८५॥
अनन्ता बालकं मुस्तां नागरं कटुरोहिणीम् ।
सुखाम्बुना प्रागुदयात् पाययेताक्षसम्मितम् ।
एष सर्वज्वरान् हन्ति दीपयत्याशु चानलम् ॥१८६॥
द्रव्याणि दीपनीयानि तथा वैरेचनानि च ।
एकशो वा द्विशो वापि ज्वरघ्नानि प्रयोजयेत् ॥१८७॥
सर्पिर्मध्वभयातैललेहोऽयं सर्वजं ज्वरम् ।
शान्तिं नयेत् हन्त्यचापि सक्षौद्रा प्रबलं ज्वरम् ॥१८८॥
ज्वरे तु विषमे कार्य्यमूर्द्ध्वं चाधश्च शोधनम् ।
घृतं क्षीरोदरोक्तं वा निहन्याद्विषमज्वरम् ॥१८९॥
गुडप्रगाढ़ां त्रिफलां पिबेद्वा विषमार्द्दितः ॥१९०॥

गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ।
प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत् ।
त्रिचतुर्भिः पचेत् क्वाथं पञ्चभिर्वा समन्वितैः ॥१९१॥
मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ।
हरीतक्याश्च सर्वोऽयं त्रिविधो योग इष्यते ॥१९२॥
सर्पिः क्षीरसिताक्षौद्रमागधीर्वा यथाबलम् ।
दशमूलीकषायेण मागधीर्वा प्रयोजयेत् ॥१९३॥
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः ।
ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ॥१९४॥
कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत् ।
तिल्वकावापमेतद्धि विषमज्वरनाशनम् ॥१९५॥
पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ।
कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ॥१९६॥
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ।
पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ॥१९७॥
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकम् ।
क्षयकासं ससन्तापं पार्श्वशूलानपास्यति ॥१९८॥
गुडूचीत्रिफलावासात्रायमाणायवासकैः ।
क्वथितैर्निधिवत्सद्भिरेतैः कल्कीकृतैः समैः ॥१९९॥
द्राक्षासागधिकाम्भोदनागरोत्पलचन्दनैः ।
पीतं सर्पिः क्षयश्वासकासाजीर्णज्वरान् जयेत् ॥२००॥
कलशीबृहतीद्राक्षात्रायन्तीनिदिग्धगोक्षुरैः ।
बलापर्पटकाम्भोदशालपर्णीयवासकैः ॥२०१॥
प्रक्वाथ्य क्वथितैः सर्पिः कल्कैरेभिः समन्वितैः ।

शटीतामलकीभार्गीमेदाकतकपौष्करै ।२०२॥
चीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ।
शिरःपार्श्वरुजाकासचयप्रशमनं परम् ॥२०३॥
पटोलीपर्पटारिष्टगुडूचीत्रिफलाद्वयै ।
कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनै ॥२०४॥
दार्वीशक्रयवोशीरत्रायमाणाकणोत्पलै ।
धात्रीभृङ्गरजोनीरुकाकमाचीरसैर्घृतम् ॥२०५॥
सिद्धमाश्वपचोकुष्ठज्वरशक्राज्जुनव्रणान् ।
हन्त्यान्ध्यनवदनैकर्णजान् घ्राणजान् गदान् ॥२०६॥
विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलै ।
प्रियङ्ग्वेलैलवालूकचन्दनामरदारुभि ॥२०७॥
बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयै ।
हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः ॥२०८॥
द्विचीरं विपचेत्सर्पिर्मालतीकुसुमैः सह ।
विषमज्वरकश्वासगुल्मोन्मादगरापहम् ॥२०९॥
एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमम ।
अलक्ष्मीग्रहरक्षोग्निमान्द्यापस्मारपापनुत् ॥२१०॥
शस्यते नष्टशुक्राणां बन्ध्यानां गर्भदं परम् ।
मेध्यं चक्षुष्यमायुष्यं रेतोमार्गरुजापहम् ॥२११॥
एतैरेव यथाद्रव्यैः सर्वगन्धैश्च साधितम् ।
कपिलायाः घृतप्रस्थं सुवर्णमणिसंयुतम् ।२१२॥
ततक्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमै ।
सुमनश्चम्पकाशोकशिरीषकुसुमैर्घृतम् ॥२१३॥
तथानलदपद्मानां केशरैर्दाडिमस्य च ।

तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च ॥२१४॥
कृत मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम् ।
दत्त सर्वज्वरान् हन्ति महाकल्याणक घृतम ।
दर्शनस्पर्शनाभ्यान्तु सर्वरोगहर शिवम ॥२१५॥
अधृष्य सर्वभूताना वलीपलितवर्जित ।
अस्याभ्यासाद् घृतस्येह जीवेद्वर्षशतत्रयम् ॥२१६॥
गव्य दधि च मूत्रञ्च क्षीर सर्पि शकृद्रस ।
समभागानि पाच्यानि कल्कांश्चैतान् समावपेत् ॥२१७॥
त्रिफला चित्रक मुस्त हरिद्रे द्वे विषा वचाम ।
विडङ्ग त्र्यूषणञ्चव्य सुरदारु तथैव च ॥२१८॥
पञ्चगव्यमिद पानाद्विषमज्वरनाशनम ।
पञ्चगव्यस्मृते गर्भात्पाच्यमन्यद् वृषेण च ॥२१९॥
बलयाथ पर पाच्य गुडूच्या तद्वदेव तु ।
जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितम् २२०॥
एतेनैव तु कल्पेन घृतं पञ्चाविक पचेत् ।
पञ्चाजम्पञ्चमहिष चतुरुष्ट्रमथापि वा ॥२२१॥
त्रिफलोशीरसम्पाककटुकातिविषान्वितै ।
शतावरीसप्तपर्णगुडूचीरजनीद्वयै ।२२२॥
चित्रकत्रिवृतामूर्वापटोलारिष्टबालकै. ।
किराततिक्तकवचाविशालापद्मकोत्पलै ॥२२३॥
सारिवाद्वययष्ट्याह्वचविकारक्तचन्दनै ।
दुरालभापर्पटकत्रायमाणाटरूषकै. ॥२२४॥
रास्नाकुष्ठमर्माञ्जिष्ठामागधीनागरैस्तथा ।
धात्रीफलरसै. सम्यग् द्विगुणै. साधित हवि. ।२२५॥

परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणम्।
पाण्डुप्लीहाग्निमान्द्येभ्य एतदेव परं हितम् ॥२२६॥
पटोलकटुकादार्वीनिम्बवासफलत्रिकम्।
दुरालभापर्पटकत्रायमाणा फलोन्मिता ॥२२७॥
प्रस्थमामलकानाञ्च क्वाथयेत्सलिलार्मणे।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥२२८॥
रक्तपित्तकफस्वेदक्लेदपूयाङ्गशोषणम्।
कामलाज्वरवीसर्पगण्डमालाहरं परम ॥२२९॥
शृतम्पय शर्करा च पिप्पल्यो मधुसर्पिषी।
पञ्चसारमिदं पेयं मथितं विषमज्वरे ॥२३०॥
क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते ॥२३१॥
लाक्षाविश्वनिशामूर्वामञ्जिष्ठास्वर्जिकामयै।
षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत् ॥२३२॥
क्षीरिवृक्षासनारिष्टं जम्बूसप्तच्छदार्जुनैः।
शिरीषखदिरास्फोतामृतवल्लरटरूषकैः ॥२३३॥
कटुकापर्पटोशीरवचातिजीवतीघनैः।
साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहम् ॥२३४॥
निर्विषैर्भुजगैर्नागैर्विनीतैः कृततस्करैः।
वासयेदागमे चैनं तदहर्भोजयेन्न च ॥२३५॥
अत्यभिष्यन्दिगुरुभिर्वामयेद्वा पुनः पुनः।
मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनम् ॥२३६॥
पुराणं वा घृतं कामसुदारं वा विरेचनम्।
निरूहयेद्वा मतिमान् सुस्विन्नं तदहन्तरम् ॥२३७॥
अजाश्वोष्ट्रमरीमाणि वचाकुष्ठं पलङ्कषा।

निम्बपत्रं मधुयुतं धूपनन्तस्य दापयेत् ॥२३८॥
वैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ।
पिप्पलीसैन्धवं तैलं नैपाली चेक्षणाञ्जनम् ॥२३९॥
उपरीक्तानि सर्पींषि यान्युक्तानि पुरा मया ।
कल्योक्तं चाजितं सर्पिः सेव्यमानं ज्वरं जयेत् ॥२४०॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद् भूताभिषङ्गोत्थं विज्ञानाद्यैश्च मानसम् ॥२४१॥
श्रमक्षये च भुञ्जीत घृताभ्यक्तो रसौदनम् ।
अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ॥२४२॥
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ।
अभिघातज्वरे कुर्यात् क्रियामुष्णाविवर्जिताम् ॥२४३॥
कषायमधुरां स्निग्धां यथादोषमथापि वा ।
ओषधीगन्धविषजौ विषपित्तप्रसाधनैः ॥२४४॥
जयेत् कषायं च हितं सर्वगन्धकृतं तथा ।
निम्बदारुकषायं वा हितं सौमनसं तथा ॥२४५॥
यवान्नविकृतिं सर्पिर्मद्यञ्च विरमे हितम् ।
सम्पूजयेद् द्विजान् गाश्च देवमीशानमम्बिकाम् ॥२४६॥
कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम् ।
दिह्यादुष्णेन वर्गेण परस्योष्णो विविहितः ॥२४७॥
सिञ्चेत् कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः ।
दिह्यात् पलाशैरथवा सुरसार्जकशिग्रुजैः ॥२४८॥
क्षारतैलेन चाभ्यङ्गं सशुक्तेन विधीयते ।
पानमारग्वधादेश्च क्वथितस्य विशेषतः ॥२४९॥
अवगाहः सुखोष्णश्च वातघ्नक्काथसंयुतः ।

जित्वा शीतं क्रमैरेभि सुखोष्णजलसेचितम् ॥२५०॥
प्रवेश्योर्णिककार्पासकौशेयाम्बरसम्वृतम् ।
शाययेद् ग्लानदेहञ्च कालागुरुविभूषितम् ॥२५१॥
स्तनाढ्या रूपसम्पन्ना कुशला नवयौवना ।
भजेयु प्रमदा गात्रै शीतदैन्यापहारिभि ॥२५२॥
शरच्छशाङ्कवदना नीलोत्पलदलेक्षणा ।
स्फुरितभ्रूलताभङ्गललाटतटकम्पना ॥२५३॥
प्रलम्बिविलसत्काञ्च्यो बिम्बीफलनिभाधरा ।
कृशोदर्य्योऽतिविस्तीर्णजघनोद्वहनालसा ॥२५४॥
कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधरा ।
सुगन्धिधूपितश्लक्ष्णवस्त्राशुक्रविभूषणा ॥२५५॥
गाढमालिङ्गयेयुस्त नर वनलता इव ।
प्रह्लादं चास्य विज्ञाय ता स्त्रीरपनयेत् पुन ॥२५६॥
तासामङ्गवरश्लेषनिवारितहिमज्वरम् ।
भोजयेद्धितमन्नञ्च तथा सुखमवाप्नुयात् ॥२५७॥
दाहाभिभूते तु विधिं कुर्य्याद्दाहविनाशनम् ।
मधुफाणितयुक्तेन निम्बपत्राम्भसापि वा ॥२५८॥
दाहज्वरार्त्तं मतिमान् वामयेत् क्षिप्रमेव च ।
शतधौतघृताभ्यक्त दिह्याद्वा यवशक्तुभि ॥२५९॥
कोलामलकसयुक्तै शूकधान्याम्लसयुतै ।
अम्लपिष्टै सुशीतैश्च फेणिलापल्लवैस्तथा ॥२६०॥
अम्लपिष्टैस्तु शीतैर्वा पलाशतरुजैर्दिहेत् ।
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च ।
लिप्तेऽङ्गे दाहतृण्मूर्च्छा सर्वथैव प्रशाम्यति ॥२६१॥

यवार्द्धकुडवं पिष्ट्वा मञ्जिष्ठार्द्धपलं तथा ।
अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥२६२॥
एतत् प्रह्लादनं तैलं ज्वरदाहविनाशनम ॥२६३॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गण ।
उत्पलादिर्गणो यस्तु पिष्टैर्वा तैः प्रलेपयेत् ॥२६४॥
तत्कषायाम्लससिद्धाः स्नेहाश्चाभ्यञ्जने हिता' ।
तथा शीतकषाये वा दाहार्त्तमवगाहयेत् ॥२६५॥
दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवम ।
परिषिच्याम्बुभि शीतै प्रलिम्पेच्चन्दनादिभिः ॥२६६॥
सानन्दा दीनमनसमाश्लिषेयुर्वराङ्गनाः ।
पेलवक्षौमसवीताश्चन्दनार्द्रपयोधराः ॥२६७॥
बिभ्रत्योऽजस्रजश्चित्रा मणिहारविभूषिता ।
भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुरुहै सुखैः ॥२६८॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुन ।
हितञ्च भोजयेदन्न तथाप्नोति सुख महत् ॥२६९॥
पित्तज्वरोक्त शमन विरेकोऽन्यद्धितञ्च यत् ।
निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु ।
दुर्निवारतर तद्धि ज्वरार्त्तेषु विशेषत ॥२७०॥
छर्दिमूर्च्छापिपासादीनविरोधाज्ज्वरस्य तु ।
उपद्रवान् जयेच्चापि प्रत्यनीकेन हेतुना ।
विशेषमपर चात्र शृणूपद्रवनाशनम् ॥२७१॥
मधुकं रजनीमुस्तं दाडिमञ्चाम्लवेतसम् ।
अञ्जनं तिन्तिडीकञ्च नलदं पत्रमुत्पलम ॥२७२॥
त्वच व्याघ्रनखं चैव मातुलुङ्गरसो मधु ।

दिह्यादेभिर्ज्वरार्त्तस्य मधुशुक्तयुतैः शिरः ॥२७३॥
शिरोऽभितापसम्मोहवमिहिक्काप्रवेपथून् ।
प्रदेहो नाशयत्येष ज्वरितानामुपद्रवान् ॥२७४॥
मधूकमथ ह्रीवेरमुत्पलानि मधूलिकाम ।
लीढ्वा चूर्णानि मधुना सर्पिषा च जयेद्वमिम् ॥२७५॥
कफप्रसेकास्रक्पित्तहिक्काश्वासांश्च दारुणान् ॥२७६॥
लिहन् ज्वरार्त्तस्त्रिफलां पिप्पलीश्च समाक्षिकाम ।
कासे श्वासे च मधुना सर्पिषा स सुखी भवेत् ॥२७७॥
विदारीदाडिमं लोध्रं दाधित्थं वीजपूरकम ।
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः ॥२७८॥
दाडिमस्य सितायाश्च द्राक्षामलकयोस्तथा ।
वैरस्ये धारयेत् कल्कं गण्डूषञ्च यथाहितम् ॥२७९॥
क्षीरेक्षुरसमाध्वीकसर्पिस्तैलोष्णवारिभिः ।
शून्ये मूर्ध्नि हितं नस्यं जीवनीयशृतं घृतम् ॥२८०॥
चूर्णितस्त्रिफलाश्यामात्रिवृत्पिप्पलिसंयुतः ।
मक्षौद्रः शर्करायुक्तो विरेकस्तु प्रशस्यते ॥२८१॥
पक्वे पित्तज्वरे रक्ते चोर्द्धगे वेपथौ तथा ।
कफवातोत्थयोरेव स्नेहाभ्यङ्गैर्विशोधयेत् ॥२८२॥
हृतदोषो भ्रमार्त्तस्तु लिह्यात् क्षौद्रसिताभया ।
वातघ्नमधुरैर्योज्या निरूहा वातजे ज्वरे ॥२८३॥
विभज्य दोषं प्राणञ्च यथास्वं वानुवासनम् ॥२८४॥
उत्पलादिकषायाभ्याञ्चन्दनोशीरसंयुता ।
शर्करामधुरा शीता पित्तज्वरहरा मता ॥२८५॥
आम्रादीनां त्वचं शङ्खं चन्दनामलकोत्पलैः ।

गैरिकाञ्जनमञ्जिष्ठामृणालान्यथ पद्मकम् ॥२८६॥
श्लक्ष्णपिष्टन्तु पयसा शर्कराक्षौद्रसंयुतम्।
सुप्तं शीतलं वस्तिं दूयमानाय दापयेत् ॥२८७॥
ज्वरदाहापहं तेषु सिद्धञ्चैवानुवासनम् ॥२८८॥
आरग्वधगणक्वाथाः पिप्पल्यादिसमायुताः।
सक्षौद्रा एव देयाः स्युः कफज्वरविनाशनाः ॥२८९॥
कफघ्नैरेव संसिद्धा द्रव्यैश्चाप्यनुवासनाः ॥२९०॥
संसर्गे सन्निपाते च संसृष्टा वस्तयो हिताः।
संसृष्टैरेव संसृष्टा द्रव्यैश्चाप्यनुवासनाः ॥२९१॥
वातरोगापहाः सर्वे स्नेहा ये सम्यगीरिताः।
विना तैलं त एव स्युर्योज्या मारुतजे ज्वरे ॥२९२॥
निखिलेनोपयोज्याश्च त एवाभ्यञ्जनादिषु।
पैत्तिके मधुरैस्तिक्तैः सिद्धं सर्पिः प्रयुज्यते ॥२९३॥
श्लैष्मिके कटुतिक्तैश्च संसृष्टानीतरेषु च।
हृतावशेषं पित्तन्तु त्वकस्थं जनयति ज्वरम् ॥२९४॥
पिबेदिक्षुरसं तत्र शीतं वा शर्करोदकम्।
शालिषष्टिकगौरन्नमश्नीयात् क्षीरसंप्लुतम् ॥२९५॥
कफवातोत्थयोरेव स्वेदाभ्यङ्गौ प्रयोजयेत्।
घृतं द्वादशरात्रात्तु देयं सर्वज्वरेषु च ॥२९६॥
तेनान्तरेणाशयं स्वं गता दोषा भवन्ति हि ॥२९७॥
धातून् प्रक्षोभयन् दोषो मोक्षकालेऽवलीयते।
तेन व्याकुलचित्तस्तु म्रियमाण इवेहते ॥२९८॥
लघुत्वं शिरसः स्वेदो मुखमापाण्डुपाकि च।
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम् ॥२९९॥

मभुक्तोधोद्भवो घोरो बलवर्णाग्निसादकः ।
रोगाराट् रोगसङ्घातो ज्वर इत्युपदिश्यते ॥२००॥
व्यापित्वात् सर्वसस्पर्शात् कृच्छ्रत्वादन्तसम्भवात् ।
अन्तको ह्येष भूताना ज्वर इत्युपदिश्यते ॥२०१॥

---

चत्वारिंशत्तमोऽध्याय ।

अथातोऽतीसारप्रतिषेध व्याख्यास्याम ।
गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलै ।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनै ॥१॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात् ।
शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्त्तुपर्य्ययात् ॥२॥
जलाभिरमणैर्वेगविघातै. कृमिदोषत ।
नृणा भवत्यतीसारो लक्षण तस्य वक्ष्यते ॥३॥
सशम्यापा धातुरन्त कृशानु
वर्चोमिश्रो मारुतेन प्रणुन्न ।
व्रजत्यधो(ऽ)तीवाथ सरत्येव यस्माद्
व्याधि घोर त त्वतीसारमाहु ॥४॥
एकैकश सर्वशश्चापि दोषै
शोकेनान्य षष्ठ आमेन चोक्त. ।
केचित् प्राहुर्नैकरूपप्रकार
नैवेत्येव काशिराजस्त्ववोचत् ॥५॥
दोषावस्थास्तस्य नैकप्रकारा.
काले काले व्याधितस्योद्भवन्ति
हृन्नाभिपायूदरकुक्षितोद-

गात्रावसादानिलसन्निरोधा ॥६॥
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य गुरु सराणि।
शूलाविष्ट सक्तमूत्रोऽन्त्रकूजी
स्रस्तापानः सन्नकट्यूरुजङ्घ ॥७॥
वर्चो मुञ्चत्यल्पमल्पं सफेन
रूक्ष श्याव सानिल मारुतेन।
दुर्गन्ध्युष्णं वेगवन्मांसतोय-
प्रख्यं भिन्न खिन्नदेहोऽतितीक्ष्णम् ॥८॥
पित्तात् पीतं नोलमालोहित वा
तृष्णामूर्च्छादाहपाकज्वरार्त्त.।
तन्द्रा निद्रा गौरवोत्क्लेशसादी
वेगाशङ्की सृष्टविट्कोऽपि भूय ॥९॥
शुक्लं सान्द्रं श्लेष्मणा श्लेषयुक्तं
भक्तद्वेषी निःस्वनं हृष्टरोमा।
तन्द्रायुक्तो मोहसादास्यशोषी
वर्च. कुर्य्यान्नैकवर्णं तृषार्त्त. ॥१०॥
सर्वोद्भूत. सर्वलिङ्गोपपत्ति'
कृच्छ्रश्चाय बालवृद्धेष्वसाध्यः।
तैस्तैर्भावै. शोचतोऽप्याशनस्य
वाष्पो वेग. पक्तिमाविध्य जन्तो: ॥११॥
कोष्ठ गत्वा क्षोभयन् यस्य रक्तं
तच्चाधस्तात् काकनन्तीप्रकाशम्।
वर्चोमिश्रं नि.पुरीषं सगन्ध

निर्गन्ध वा साय्यते तेन कोष्ठात् ॥१२॥
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यै कष्ट एष प्रदिष्ट ।
आमाजीर्णैं प्रद्रुता चोभयन्त
कोष्ठ दोषा सम्प्रदुष्टा सभक्तम् ॥१३॥
नानावर्ण नैकश सारयन्ति
कृच्छ्राज्जन्तो षष्ठमेन वदन्ति ॥१४॥
ससृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्ध विच्छिन्न चामसञ्ज्ञितम ॥१५॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य तु ।
लाघवञ्च मनुष्यस्य तस्य पक्वं विनिर्दिशेत् ॥१६॥
सर्पिर्मेदोवेसवाराम्बुतैल-
मज्जं क्षीरं क्षौद्ररूप स्रवेद् यत् ।
मञ्जिष्ठाभ मस्तुलुङ्गोपम वा
विस्र शीत प्रेतगन्ध्यञ्जनाभम् ॥१७॥
राजीमद् वा चन्द्रकै सन्तत वा
पूयप्रख्य कर्दमाभ तथोष्णम् ।
हन्यादेतद् यत् प्रतीपं भवेच्च
क्षीण हन्य स्योपसर्गा प्रभूता. ॥१८॥
असवृतगुद क्षीण दुराध्मातमुपद्रुतम् ।
गुदे पक्वे गतोष्माणमतीसारकिण त्यजेत् ॥१९॥
शरीरिणामतीसार सभूतो येन केनचित् ।
दोषाणामेव लिङ्गानि कदाचिन्नातिवर्त्तते ॥२०॥
स ह्याजीर्णनिमित्तस्तु बहुशूलप्रवाहिक. ।

विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः।
विषार्शःक्रिमिसम्भूतो यथास्व दोषलक्षण ॥२१॥
आमपक्वक्रम हित्वा नातिसारे क्रिया यतः।
अत सर्वातिसारास्तु ज्ञेया पक्कामलक्षणै ॥२२॥
तत्र लङ्घनमेवादौ पूर्वरूपेषु देहिनाम।
तत. पाचनसयुक्त यवाग्वादिक्रमो हित: ॥२३॥
अथवा वामयित्वा तु शूलाध्माननिपीडितम्।
पिप्पलीसैन्धवाम्भोभिर्लङ्घनाद्यैरुपाचरेत् ॥२४॥
कार्य्य च वमनस्यान्ते प्रायशो लघुभोजनम्।
खड्यूषयवागूषु पिप्पल्याद्येव योजयेत् ॥२५॥
अनेन विधिना चाम यस्य वै नोपशाम्यति।
हरिद्रादि वचादि वा पिबेत् प्रात स मानवः ॥२६॥
आमातिसारिणा कार्य्य नादौ सग्रहणं नृणाम्।
तेषा दोषा विबद्धा प्रागजनयन्त्यामयानिमान् ॥२७॥
प्लीहपाण्ड्वामयानाहमेहकुष्ठोदरज्वरान्।
शोफगुल्मग्रहण्यर्श शूलालसकहृद्ग्रहान् ॥२८॥
सशूल बहुश कृच्छ्राद्विबन्ध योऽतिसार्य्यते।
दोषान् सन्निचितान् वाथ पथ्याभि सम्प्रवर्त्तयेत् ॥२९॥
योऽतिद्रव प्रभूतञ्च पुरीषमतिसार्य्यते।
तस्यादौ वमन कुर्य्यात् पश्चाल्लङ्घनपाचनम ॥३०॥
स्तोक स्तोक विबन्ध वा सशूल योऽतिसार्य्यते।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥३१॥
आमे च लङ्घन शस्तमादौ पाचनमेव वा।
योगाश्चात्र प्रवक्ष्यन्ते त्वामातीसारनाशनाः ॥३२॥

देवदारुवचामुस्तानागरातिविषाभयाः ।
कलिङ्गातिविषाहिङ्गुसौवर्चलवचाभयाः ॥३३॥
अभयाधान्यकं मुस्तं बालकं बिल्वमेव च ।
मुस्तं पर्पटकं शुण्ठीवचासातिविषाभयाः ॥३४॥
अभयातिविषाहिङ्गुवचासौवर्चलं तथा ।
चित्रकं पिप्पलीमूलं वचाकटुकरोहिणी ॥३५॥
पाठावत्सकबीजानि हरीतक्यो महौषधम् ।
मूर्वा निर्दहनी पाठा त्र्यूषणं गजपिप्पली ॥३६॥
सिद्धार्थका भद्रदारु शताह्वा कटुरोहिणी ।
एला सावरकं कुष्ठं हरिद्रे कौटजा यवाः ॥३७॥
मेषशृङ्गीत्वगेले च क्रिमिघ्नं वृश्चिकाणि च ।
वृचादनी वीरतरुर्बृहत्यौ द्वे सहे तथा ॥३८॥
एरण्डत्वक् च तैन्दुकी दाडिमी कौटजी शमी ।
पाठा तेजोवती मुस्तं पिप्पली कौटजं फलम् ॥३९॥
पटोलदीप्यकौ बिल्वं हरिद्रे देवदारु च ।
विडङ्गमभया पाठा शृङ्गवेरं घनं वचा ॥४०॥
वचा वत्सकबीजानि सैन्धवं कटुरोहिणी ।
हिङ्गुवत्सकबीजानि वचाबिल्वशलाटु च ॥४१॥
नागरातिविषा मुस्तं पिप्पल्यो वत्सकं फलम् ।
महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः ॥४२॥
प्रयोज्या विंशतिर्योगाः श्लोकार्द्धविहितास्त्विमे ॥४३॥
धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा ।
निःक्वाथान् वा पिबेदेषां सुखोष्णान् साम्बुसाधितान् ॥४४
इति खिलेनोपदिष्टोऽयं विधिरामोपशान्तये ॥४५॥

हरीतकीमतिविषा हिङ्गु सौवर्च्चल वचाम् ।
पिबेत् सुखाम्बुना जन्तुरामातीसारपीडित ॥४६॥
पटोल दीप्यक विल्व वचापिप्पलिनागरम् ।
मुस्त कुष्ठ विडङ्गञ्च पिबेद्वा वापि सुखाम्बुना ॥४७॥
शृङ्गवेर गुडूचीञ्च पिबेदुष्णेन वारिणा ।
लवणान्यथ पिप्पल्यो विडङ्गानि हरीतकी ।
चित्रक शिंशपा पाठा भार्ङ्गष्टा लवणानि च ॥४८॥
हिङ्गुवृत्तकवीजानि लवणानि च भागशः ।
हस्तिदन्त्यथ पिप्पल्य. कल्कावचसमौ स्मृतौ ॥४९॥
वचागुडूचीकाण्डानि योगोऽयं परमो मत ।
एते सुखाम्बुना योगा देया पञ्च सता मता. ॥५०॥
पयस्युत्क्वाथ्य मुस्ताना विंशतिन्त्रिगुणाम्भसि ।
क्षीरावशिष्टं तत्पीतं हन्त्याम शूलमेव च ॥५१॥
निवृत्तेष्वामशूलेषु यस्य न प्रगुणोऽनिल. ।
स्तोक स्तोक रुजामच्च सशूल योऽतिसार्य्यते ।
सक्षारलवणैर्युक्त मन्दाग्नि. प्रपिबेद् घृतम् ॥५२॥
क्षीरनागरचाङ्गेरीकोलदध्यम्लसाधितम ।
सर्पिरच्छं पिबेद्वापि शूलातिसारशान्तये ॥५३॥
दध्ना तैलघृतं पक्वं सव्योषजातिचित्रकै. ।
सविल्वपिप्पलीमूलदाडिमैर्वा रसान्वितैः ॥५४॥
निखिलो विधिरुक्तोऽयं वातश्लेष्मोपशान्तये ।
तीक्ष्णोष्णवर्ज्यमेनन्तु विदध्यात्पित्तजे भिषक् ।
यथोक्तमुपवासान्ते यवागूश्च प्रशस्यते ॥५५॥
बलयोरंशुमत्याश्च श्वदंष्ट्राहतीषु च ।

शातावर्य्याश्च ससिद्धा सुशीता मधुसयुता ॥५६॥
मुद्गादिषु च यूषा स्युर्दीपनै सुसस्कृता ।
मृदुभिर्दीपनैस्तिक्तैर्द्रव्यै स्यादामपाचनम् ॥५७॥
हरिद्रातिविषापाठावत्सबीजरसाञ्जनम् ।
रसाञ्जन हरिद्रे द्वे बीजानि कुटजस्य च ॥५८॥
पाठा गुडूची भूनिम्बस्तथैव कटुरोहिणी ।
एते. श्लोकार्द्धनिर्दिष्टै क्वाथा. स्यु पित्तपाचना: ॥५९॥
मुस्त कुटजबीजानि भूनिम्ब सरसाञ्जनम् ।
दार्वी दुरालभा विल्व बालक रक्तचन्दनम् ॥६०॥
चन्दन बालक मुस्तं भूनिम्ब सदुरालभम् ।
मृणाल चन्दनं रोध्रं नागर नीलमुत्पलम् ॥६१॥
पाठा मुस्त हरिद्रे द्वे पिप्पली कौटज फलम् ।
फलत्वच वत्सकस्य शृङ्गवेरघृते वचा ।
षडेतेऽभिहिता योगा पित्तातिसारनाशना: ॥६२॥
विल्वशक्रयवाम्भोदबालकातिविषाकृत. ।
कषायो हन्त्यतीसार साम पित्तसमुद्भवम् ॥६३॥
मधुकोत्पलविल्वाम्बुह्रीवेरोशीरनागरै. ।
कृत: क्वाथो मधुयुत: पित्तातीसारनाशन. ॥६४॥
यदा पक्वोऽप्यतीसार. सरत्येव मुहुर्मुहु ।
ग्रहण्या मार्दवाज्जन्तोस्तत्र सस्तम्भनं हितम् ॥६५॥
समङ्गा धातकीपुष्प मञ्जिष्ठा लोध्रमुस्तकम् ।
शाल्मलीवेष्टक रोध्रं वृक्षदाडिमयोस्त्वचौ ॥६६॥
आम्रास्थिमध्यं लोध्रञ्च विल्वमध्यं प्रियङ्गव: ।
मधुकं शृङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥६७॥

चत्वार एते योगाः स्युः पक्कातीसारनाशनाः।
उक्ता ये उपयोज्यास्ते सक्षौद्रास्तण्डुलाम्बुना ॥६८॥
शीतं कषायमेकं वा पेयं मधुसमायुतम्।
लोध्राम्बष्ठाप्रियङ्ग्वादीन् गणानेव प्रयोजयेत् ॥६९॥
पद्मां समङ्गां मधुकं विल्वजम्बूशलाटु वा।
पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करम् ॥७०॥
कच्छुरामूलकल्कं वा उदुम्बरफलोपमम्।
पयस्याचन्दनं पद्मां सितामुस्ताब्जकेशरम्।
पक्कातिसारं योगोऽयं जयेत्पीतः सशोणितम् ॥७१॥
निरामरूपं शूलार्त्तं लङ्घनाद्यैश्च कर्षितम्।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेद्घृतम् ॥७२॥
बलाद्वहत्यंशुमती कच्छुरामूलसाधितम्।
मधूच्छिष्टं समधुकं पिबेच्छूलैरभिद्रुतः ॥७३॥
दार्वीविल्वकणाद्राक्षाकटुकेन्द्रयवैर्घृतम्।
साधितं हन्त्यतीसारं वातपित्तकफात्मकम् ॥७४॥
पयो घृतञ्च मधु च पिबेच्छूलैरभिद्रुतः।
सिताजमोदकट्वङ्गमधुकैरवचूर्णितम् ॥७५॥
अवेदनं सुसम्पक्कं दीप्ताग्नेः सुचिरोत्थितम्।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥७६॥
त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेसरसंयुतम्।
काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम्।
मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥७७॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं ततः।
शीतं मधुयुतं कृत्वा पाययेतोदरामये ॥७८॥

जीवन्तीमेषशृङ्ग्यादिष्वेव द्रव्येषु साधयेत् ॥७९॥
तित्तिरिं लुञ्चितं सम्यक् निःकृष्टान्त्रन्तु पूरयेत्।
न्यग्रोधादित्वचा कल्कै पूर्ववच्चावकल्पयेत् ॥ ८०
रसमादाय तस्याथ सुस्विन्नस्य समाक्षिकम्।
शर्करोपहित शीत पाययेच्चोदरामये ॥८१॥
लोध्रचन्दनयष्ट्याह्वदार्वीपाठासितोत्पलान्।
तण्डुलोदकसम्पिष्टान् दीर्घवृन्तत्वगन्वितान् ॥८२॥
पूर्ववत् कूलितात्तस्माद्रसमादाय शीतलम्।
मध्वाक्तम्पाययेच्चैतत्कफपित्तोदरामये ॥८३॥
एव प्ररोहै कुर्वीत वटादीना विधानवित्।
पुटपाकान् यथायोग आज्यलोपहितान् शुभान् ॥८४॥
बहुश्लेषसरक्तञ्च मन्दवात चिरोत्थितम्।
कौटजं फाणितञ्चापि हन्त्यतीसारमोजसा ॥८५॥
अम्बष्ठादि मधुयुत पिप्पल्यादिसमन्वितम्।
पृश्निपर्णीबलाविल्वशालकोत्पलधान्यकै. ॥८६॥
सनागरै. पिबेत् पेया साधितामुदरामयी।
अरलुत्वक्प्रियङ्गुञ्च मधुक दाडिमाङ्कुरान् ॥८७॥
आवाप्य पिष्ट्वा दधनि यवागू साधयेद् द्रवाम्।
एषा सर्वानतीसारान् हन्ति पक्वानसंशयम् ॥८८॥
रसाञ्जन सातिविषं त्वग्बीज कौटज तथा।
धातकी नागरञ्चैव पाययेत्तण्डुलाम्बुना ॥८९॥
सशूलरक्तज घ्नन्ति योगा मधुसमन्विता.।
मधुक विल्वपेश्यश्च शर्करा मधुसंयुता: ॥९०॥
अतीसार निहन्युश्च शालिषष्टिकयो, कणा.।

तद्वल्लीढ मधुयुत वदरीमूलमेव तु ॥९१॥
वदर्य्यर्जुनजम्बाम्रशल्लकीवेतसत्वच ।
शर्करा चौद्रसयुक्ता पीता घ्नन्त्युदरामयम् ॥९२॥
एतैरेव यवागूश्च मण्डान् यूषांश्च कारयेत् ।
पानीयानि च तृष्णासु द्रव्येष्वेतेषु बुद्धिमान् ॥९३॥
क्षत शाल्मलिवृन्तेषु कषायं हिमसञ्ज्ञकम् ।
निशापर्य्युषित पेय सचौद्रं मधुकान्वितम् ॥९४॥
विबद्धवातविट्शूलपरीत सप्रवाहिक ।
सरक्तपित्तश्च पय: पिबेत् तृष्णासमन्वित ॥९५॥
यथामृत तथा चीरमतीसारेषु पूजितम ।
चिरोत्थितेषु तत् पेयमपांभागैस्त्रिभि शृतम् ॥९६॥
दोषशेषं हरेत्तद्धि तस्मात्पथ्यतम स्मृतम् ।
हित. स्नेहविरिक्तो वा वस्तय: पिच्छिलाश्च ये ॥९७॥
पिच्छिलास्वरसे सिद्धं हितञ्च घृतमुच्यते ।
शक्तता यस्तु संसृष्टमतिसार्य्येत शोणितम् ॥९८॥
प्राक् पश्चाद्वा पुरीषस्य सरक्तपरिकर्त्तिक. ।
चीरिशुङ्गाशृत सर्पि. पिबेत् सचौद्रशर्करम् ॥९९॥
दार्वीत्वक्पिप्पलीशुण्ठीलाचाशक्रयवैर्घृतम् ।
सयुक्त भद्ररोहिण्या पक्व पेयादिमिश्रितम् ॥१००॥
त्रिदोषमप्यतीसार पीत हन्ति सुदारुणम् ।
गौरवे वमन पथ्य यस्य स्यात् प्रबल कफ. ॥१०१॥
ज्वरे दाहे सविड्बन्धे मारुताद्रक्तपित्तवत् ।
सम्पक्वे बहुदोषे च विबन्धे मूत्रशोधने. ।
कार्य्यमास्थापन चिप्र तथाचैवानुवासनम् ॥१०२॥

प्रवाहेण गुदभ्रंशे मूत्राघाते कटिग्रहे ।
मधुराम्लशृतं तैलं सर्पिर्वाप्यनुवासनम् ॥१०३॥
गुदपाकस्तु पित्तेन यस्य स्याद्दीप्ताग्निनः ।
तत्र पित्तहरा सेकास्तत्सिद्धाश्चानुवासना ॥१०४॥
दधिमण्डसुराबिल्वसिद्धं तैलं समाहृते ।
भोजने च हितं चीरं कच्छुरामूलसाधितम् ॥१०५॥
अल्पाल्पं बहुशोरक्तं सरुग्य उपवेश्यते ।
यदा वायुर्विबद्धश्च पिच्छावस्तिस्तदा हितं ॥१०६॥
प्रायेण गुददौर्बल्यं दीर्घकालातिसारिणाम् ।
भवेत् तस्माद्धितं तेषां गुदे तैलावचारणम् ॥१०७॥
कपित्थशाल्मलीफण्डीवनकार्पासिदाडिमा ।
यूथिकाकच्छुराशेलु शणश्चूचूः सदाधिका ॥१०८॥
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥१०९॥
एष आहारसंयोगो हितः सर्वातिसारिणाम् ।
तिलकल्को हितश्चात्र मौद्गो मुद्गरसस्तथा ॥११०॥
पित्तातिसारी यो मर्त्यः पित्तलानि निषेवते ।
पित्तं प्रदुष्टं तस्याशु रक्तातीसारमावहेत् ।
ज्वरं शूलं तृषं दाहं गुदपाकञ्च दारुणम् ॥१११॥
यो रक्तं शकृतः पूर्वं पश्चाद्वा प्रतिसार्य्यते ।
स पल्लवैर्वटादीनांससर्पिः साधितं पयः ॥११२॥
पिबेत् स शर्कराचौद्रमथवाप्यभिमथ्य तत् ।
नवनीतमथो लिह्यात् तक्रं चानुपिबेत् ततः ॥११३॥
पियालशाल्मलीप्लचशल्लकीतिनिशत्वचः ।

क्षीरे विमृदिता. पीता सक्षौद्रा रक्तनाशनाः ॥११४॥
मधुकं शर्करा लोध्रं पयस्यामथ सारिवाम्।
पिबेच्छागेन पयसा सक्षौद्रां रक्तनाशनीम ॥११५॥
मञ्जिष्ठा सारिवा लोध्र पद्मक कुमुदोत्पलम्।
पिबेत् पद्माश्च दुग्धेन छागेनासृक्प्रशान्तये ॥११६॥
शर्करोत्पललोध्राणि समङ्गा मधुकन्तिला ।
तिला मोचरसो लोध्र तथैव मधुकोत्पलम् ॥११७॥
कच्छुरा तिलकल्कश्च योगाश्चत्वार एव तु।
आजेन पयसा पेया. सरक्ते मधुसयुताः ॥११८॥
द्रवे सरक्ते स्रवति बालविल्व सफाणितम्।
सक्षौद्रतैल प्रागेव लिह्यादाशु हित हि तत् ॥११९॥
कोशकार घृते भृष्ट लाजचूर्णं सिता मधु।
सशूल रक्तपित्तोत्थं लीढं हन्त्युदरामयम् ॥१२०॥
विल्वमध्य समधुक शर्कराक्षौद्रसयुतम्।
तण्डुलाम्बुयुतो योग पित्तरक्तोत्थितं जयेत् ॥१२१॥
गुदपाके च य उक्तास्तेऽत्रापि विधयः स्मृता.।
रुजाया वाप्रशाम्यन्त्या पिच्छावस्तिर्हितो भवेत् ॥१२२॥
रक्तविड्दोषबहुलं दीप्ताग्निर्योऽतिसार्य्यते।
विडङ्गत्रिफलाकृष्णाकषायैस्त विरेचयेत् ॥१२३॥
अथवैरण्डसिद्धेन पयसा केवलेन वा।
यवागूर्वितरेत्तस्य वातघ्नैर्दीपने कृताः ॥१२४॥
दीप्ताग्निर्निःपुरीषो य सार्य्यते फेनिल शकृत्।
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम्।
स्विन्नानि गुडतैलाभ्या भक्षयेद्बदराणि च ॥१२५॥

सुस्विन्नान् पिष्टवद्वापि समं बिल्वशलाटुभिः ।
दध्नोपयुज्य कुल्माषान् श्वेतामनुपिबेत् सुराम् ॥१२६॥
श्वयमास सरुधिरं समङ्गा सघृत दधि ।
खादेद्विपाच्य सेवेत सृष्टम्न शक्कत क्षये ॥१२७॥
ससक्ततो यमके माषयवकोलरस शुभः ।
भोजनार्थञ्च दातव्यो दधिदाडिमसाधित ॥१२८॥
विड बिल्वशलाटूनि नागर चाम्लपेषितम् ।
दध्न सरञ्च यमके भृष्टो वर्चः क्षये हितः ॥१२९॥
सशूलं चीणवर्चा यो दीप्ताग्निरतिसार्य्यते ।
स पिबेद्दीपनैर्युक्तं सर्पिः सशाहकैः सह ॥१३०॥

वायुः प्रवृद्धो निचित बलासं
नुदत्यधस्तादहिताशनस्य ।
प्रवाहमाणस्य मुहुर्मलाक्तं
प्रवाहिका ता प्रवदन्ति तज्ज्ञाः ॥१३१॥
प्रवाहिका वातकृता सशूला
पित्तात् सदाहा सकफा कफाच्च ।
सशोणिता. शोणितसम्भवास्तु
ता. स्नेहरूक्षप्रभवा मतास्तु ॥१३२॥
तासामतीसारवदादिशेच्च
लिङ्गं क्रम चामविपक्वताञ्च ।
न शान्तिमायाति विलङ्घनैर्या
योगैरुदीर्णा यदि पाचनैर्वा ॥१३३॥
ता चीरमेवाशु मृत निहन्ति
तैल तिला. पिच्छिलवस्तयश्च ।

आर्द्रै कुशै: सपरिवेष्टितानि
वृन्तान्यथार्द्राणि हि शाल्मलीनाम् ॥१२४॥
पक्वानि सम्यक् पुटपाकयोगे-
नापीड्य तेभ्यो रसमाददीत ।
क्षीर घृत तैलहविर्विमिश्रं
कल्केन यष्टीमधुकस्य वापि ॥१२५॥
वस्ति विदध्याद्भिषगप्रमत्त
प्रवाहिकामूत्रपुरीषसङ्गे ।
द्विपञ्चमूलीक्वथितेन शूले
प्रवाहमाणस्य समाक्षिकेण ॥१२६॥
क्षीरेण चास्थापनमग्रामुक्तं
तैलेन युञ्ज्यादनुवासनञ्च ।
वातघ्नवर्गे लवणेषु चैव
तैलञ्च सिद्धं हितमन्नपाने ॥१२७॥
लोध्र विड विल्वशलाटु चैव
लिह्याच्च तैलेन कटुत्रिकालम् ।
दध्ना ससारेण समाक्षिकेण
भुञ्जीत नि सारकपीडितस्तु ॥१२८॥
सुतसकुप्यक्वथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन ।
शूलार्दितो व्योषविदारिगन्धा-
सिद्धेन दुग्धेन हिताय भोज्य. ॥१२९॥
वातघ्नसग्राहकदीपनीयैः
कृतान् रसाश्चाप्युभोजयेच्च ।

खादेच्च मत्स्यान् रसमाप्नुयाच्च
वातघ्नसिद्धं सघृत सतैलम् ॥१४०॥
एणाव्यजानान्तु वटप्रवालैः
सिद्धानि साड्रं पिशितानि खादेत्।
मेध्यस्य सिद्धन्त्वथ वापि रक्तं
वस्तस्य दध्ना घृततैलयुक्तम् ॥१४१॥
खादेत् प्रयुक्तैः शिखिलावजैश्च
भुञ्जीत यूषैर्दधिभिश्च मुख्यैः।
माषान् सुसिद्धान् घृतमण्डयुक्तान्
खादेच्च दध्नामरिचोपदंशान् ॥१४२॥
महारुजे मूत्रकृच्छ्रे भिषग्वस्तिं प्रदापयेत्।
पयोमधुघृतोन्मिश्रं मधुकोत्पलसाधितम् ॥१४३॥
स वस्तिः शमयेत्तस्य रक्तं दाहमथो ज्वरम्।
मधुरौषधसिद्धञ्च हितं तस्यानुवासनम् ॥१४४॥
रात्रावहनि वा नित्यं रुजार्त्तो यो भवेन्नरः।
यथा यथा सतैलः स्याद्वातशान्तिस्तथा तथा ॥१४५॥
प्रशान्ते मारुते वापि शान्तिं याति प्रवाहिका।
तस्मात् प्रवाहिकारोगे मारुतं शमयेद्भिषक् ॥१४६॥
पाठाजमोदा कुटजस्य वीजं
शुण्ठीसमा मागधिकाश्च पिष्टाः।
सुखाम्बु पीताः शमयन्ति रोगं
मेध्याण्डसिद्धं सघृतं पयो वा ॥१४७॥
शुण्ठी घृतं सच्चवकं सतैलं
विपाच्य लीढ्वामयमाशु हन्यात्।

गजाशनाकुम्भिकदाडिमानां
रसे कृते तैलघृते सदध्नि ॥१४८॥
विल्वान्विता पथ्यतमा यवागू-
र्धारोष्णदुग्धस्य तथा च पानम्।
लघूनि पथ्यान्यथ दीपनानि
स्निग्धानि भोज्यान्युदरामयेषु ॥१४९॥
हिताय नित्यं वितरेद्धि भोज्य
योगांश्च तांस्तान् भिषगप्रमत्तः ॥१५०॥

तृष्णापनयनी लघ्वी दीपनी वस्तिशोधनी।
ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥१५१॥
रौक्ष्याज्जाते क्रिया स्निग्धा रूक्षा स्नेहनिमित्तजे।
भयजे सान्त्वनापूर्वा शोकजे शोकनाशिनी ॥१५२॥
विषार्शःक्रिमिसम्भूते हिता चोभयशर्मदा।
छर्दिमूर्च्छातृडाद्यांश्च साधयेदविरोधतः ॥१५३॥
समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत्।
ज्वरे चैवातिसारे च सर्वत्रान्यत्र मारुतम् ॥१५४॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥१५५॥
कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे।
कर्मदोषोद्भवाश्चान्ये कर्मजास्तेष्वहेतुकाः ॥१५६॥
नश्यन्ति त्वक्रियाभिस्ते क्रियाभिः कर्मसङ्क्षये।
शाम्यन्ति दोषसम्भूता दोषसंचयहेतुभिः ॥१५७॥
तेषामल्पनिदाना ये प्रतिकष्टा भवन्ति च।
मृदवो बहुदोषा वा कर्मदोषोद्भवास्तु ते।

कर्मदोषक्षयकृता तेषां सिद्धिर्विधीयते ॥१५८॥
दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ॥१५९॥
अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिन ।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥१६०॥
तस्मात्कार्य्यः परीहारस्त्वतीसारे विरिक्तवत् ।
यावन्न प्रकृतिस्थ स्याद्दोषत प्राणतस्तथा ॥१६१॥
षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता ।
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता ॥१६२॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः ।
तस्मात्सन्दूषिते वह्नौ ग्रहणी सम्प्रदुष्यति ॥१६३॥
एकशः सर्वशश्चैव दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति ॥१६४॥
पक्वं वा सरुज पूति मुहुर्बद्ध मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जना ॥१६५॥
तस्योत्पत्तौ विदाहान्ने सदनालस्यतृट्क्लमा. ।
बलक्षयोऽरुचिः कास कर्णक्ष्वेडान्त्रकूजनम् ॥१६६॥
अथ जाते भवेज्जन्तुः शूनपादकर. कृशः ।
पर्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान् ॥१६७॥
उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम् ।
प्रसेकमुखवैरस्यतमकारुचिपीडित. ॥१६८॥
वाताच्छूलाधिकै पायुहृत्पार्श्वोदरमस्तकैः ।
पित्तात् सदाहैर्गुरुभि. कफात् त्रिभ्यस्त्रिलक्षणैः ॥१६९॥
दोषवर्णनखैस्तद्वद्विण्मूत्रनयनानने. ।
हृत्पाण्डूदरगुल्मार्श.प्लीहाशङ्की च मानवः ॥१७०॥

यथादोषोच्छ्रयन्तस्य विशुद्धस्य यथाक्रमम् ।
पेयादि वितरेत् सम्यग्दीपनीयोपसम्भृतम ॥१७१॥
ततः पाचनसंग्राहिदीपनीयगणत्रयम ।
पिबेत् प्रात सुरारिष्टस्नेहमूत्रसुखाम्बुभि ।
तक्रेण वाथ तक्रं वा केवलं हितमुच्यते ॥१७२॥
क्रिमिगुल्मोदरार्शोघ्नी क्रियाश्चात्रावचारयेत् ।
चूर्णं हिग्वादिकं चात्र घृत वा प्लीहनाशनम ॥१७३॥
कल्केन मगधादेश्च चाङ्गेरीस्वरसेन वा ।
चतुर्गुणेन दध्ना च घृत सिद्ध हित भवेत् ॥१७४॥
सर्वथा दीपन सर्वं ग्रहणीरोगिणा हितम ।
ज्वरादीनविरोधाच्च साधयेत् स्वचिकित्सिते. ॥१७५॥

---

एकचत्वारिंशत्तमोऽध्यायः ।

अथात शोषप्रतिषेधं व्याख्यास्याम. ।
अनेकरोगानुगतो बहुरोगपुरोगम ।
दुर्विज्ञेयो दुर्निवार शोषो व्याधिर्महाबलः ॥१॥
संशोषणाद्रसादीना शोष इत्यभिधीयते ।
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुन ॥२॥
राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः ।
तस्मात् त राजयक्ष्मेति केचिदाहुर्मनीषिणः ॥३॥
संव्यस्तैर्जायते दोषैरिति केचिद्वदन्ति हि ।
एकादशानामेकस्मिन् सान्निध्यात् तत्समुत्थितः ॥४॥
क्रियाणा चाविभागेन प्रागेवोत्पादनेन च ।
एक एवमत. शोषः सन्निपातात्मको मतः ॥५॥

उद्रेकात् तत्र लिङ्गानि दोषाणां निपतन्ति हि ॥६॥
क्षयाद्वेगप्रतीघाताद् व्यायामाद्विषमाशनात् ।
जायते कुपितैर्दोषैर्व्याप्तदेहस्य देहिनः ॥७॥
कफप्रधानैर्दोषैर्हि रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा ।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥८॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥९॥
स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥१०॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोध्वंसो विज्ञेयः कफकोपतः ॥११॥
एकादशभिरेतैर्वा षड्भिर्वापि समन्वितम् ।
कासातीसारपार्श्वार्त्तिस्वरभेदारुचिज्वरैः ॥१२॥
त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्दितं जन्तुमिच्छन् सुविपुलं यशः ॥१३॥
व्यवायशोकस्थाविर्य्यव्यायामाध्वोपवासतः ।
व्रणोरःक्षतपीडाभ्यां शोषानन्ये वदन्ति हि ॥१४॥
व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥१५॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः ॥१६॥
जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥१७॥

हीयते श्लेष्मणा हीनं तथैवारतिपीडितः।
सम्प्रसुतास्यनासाक्षः शुष्करूक्षमलच्छविः॥१८॥
अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः॥१९॥
व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः।
उरःक्षतकृतैर्लिङ्गैः संयुक्तश्च क्षतादृते॥२०॥
रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात्।
व्रणितस्य भवेच्छोषः स चासाध्यतमः स्मृतः॥२१॥
व्यायामभाराध्ययनैरभिघातातिमैथुनैः।
कर्म्मणा चाप्युरस्येन वक्षो यस्य विदारितम्।
तस्योरसि क्षते रक्तं पूयं श्लेष्मा च गच्छति॥२२॥
कासमानश्छर्दयेच्च पीतरक्तासितारुणम्।
सन्तप्तवक्षाः सोऽत्यर्थं दूयनात्परिताम्यति॥२३॥
दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः॥२४॥
केषाञ्चिदेव शोषो हि कारणैर्भेदमागतः।
न तत्र दोषलिङ्गानां समस्तानां निपातनम्॥२५॥
क्षया एव हि ते ज्ञेयाः प्रत्येकं धातुसंक्षयात्।
चिकित्सितं तु तेषां हि प्रागुक्तं धातुसंक्षये॥२६॥

श्वासाङ्गसादकफसंस्रवतालुशोष-
च्छर्द्यग्निसादमदपीनसकासनिद्राः।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः॥२७॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च।

त वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून् पवनधूमदवार्दिताश्च ॥२८॥
महाशन चीयमाणमतीसारनिपीडितम ।
शूनमुष्कोदर चैव यक्ष्मिण परिवर्जयेत् ॥२९॥
उपाचरेदात्मवन्त दीप्ताग्निमकृश नवम ।
स्थिरादिवर्गसिद्धेन घृतेनाजाविकेन च ॥३०॥
स्निग्धस्य मृदु कर्त्तव्यमूर्ध्वञ्चाधश्च शोधनम् ।
आस्थापन तथा कार्य्यं शिरसश्च विरेचनम् ॥३१॥
यवगोधूमशालीश्च रसैर्भुञ्जीत शोधित. ।
दृढेऽग्नौ तु क्षयेचापि निवृत्तोपद्रव नरम् ॥३२॥
व्यवायशोषिण प्रायो भजन्ते वातजा गदा. ।
तु तृणीयो विधिस्तस्मै हित स्निग्धोऽनिलापहः ॥३३॥
काकानुलूकान्नकुलान् विडालान्
गण्डूपदान् व्यालविलेशयाखून् ।
गृध्राश्च दद्याद्विविधै प्रकारै.
ससैन्धवान् सर्षपतैलभृष्टान् ॥३४॥
देयानि मांसानि च जाङ्गलानि
मुद्गाढकीसूपरसाश्च हृद्या ।
खरोष्ट्रनागाश्वतराश्वजानि
देयानि मांसानि सुकल्पितानि ॥३५॥
मांसोपदंशाश्च पिबेदरिष्टान्
माध्वीकयुक्ता मदिराश्च सेव्याः ।
अर्कामृताक्षारजलोषितेभ्य
कृत्वा यवेभ्यो विविधांश्च भक्ष्यान् ॥३६॥

खादेत् पिबेत् सर्पिरजाविकं वा
अग्नौ यवाग्वा सह भक्तकाले।
सर्पिर्मधुभ्यां त्रिकटु प्रलिह्या-
च्चव्याविडङ्गोपहितं क्षयार्त्तः॥३७॥
मांसादमांसेषु घृतञ्च सिद्धं
शोषापहं क्षौद्रकणासमेतम्।
द्राक्षासितामागधिकावलेहः
सक्षौद्रतैलः क्षयरोगघाती॥३८॥
घृतेन चाजेन समाक्षिकेन
तुरङ्गगन्धातिलमाषचूर्णम्।
सिताश्वगन्धामगधोद्भवानां
चूर्णं घृतक्षौद्रयुतं प्रलिह्यात्॥३९॥
क्षीरं पिबेद्वाप्यथ वाजिगन्धा-
विपक्वमेवं लभते च पुष्टिम्।
तदुत्थितं क्षीरघृतं सिताढ्यं
प्रातः पिबेद्वाथ पयोऽनुपानम्॥४०॥
उत्सादने चापि तुरङ्गगन्धा
योज्या यवाश्चैव पुनर्नवे च।
कृत्स्ने वृषे तत्कुसुमैश्च सिद्धं
सर्पिः पिबेत् क्षौद्रयुतं हिताग्नी॥४१॥
यक्ष्माणमेतत् प्रबलञ्च कासं
श्वासञ्च हन्यादपि पाण्डुताञ्च।
शकृद्रसो गोऽश्वगजाव्यजानां
क्वाथासिताश्चापि तथैव मार्गैः॥४२॥

मूर्वाहरिद्राखदिरद्रुमाणां
क्षीरस्य भागस्त्वपरो घृतस्य।
भागान् दशैतान् विपचेद्विधिज्ञो
दत्त्वा त्रिवर्गं मधुरञ्च कृत्स्नम् ॥४३॥
कटुत्रिकञ्चैव सभद्रदारु
घृतोत्तमं यक्ष्मनिवारणाय।
द्वे पञ्चमूल्यौ वरणं करञ्ज
भल्लातकं बिल्वपुनर्नवे च ॥४४॥
यवान् कुलत्थान् वदराणि भार्गीं
पाठा हुताशं समहौषधं च।
कृत्वा कषायं विपचेद्धि तस्य
षड्भिर्हि पालैर्घृतपात्रमेकम् ॥४५॥
व्योषं महावृक्षपयोऽभयाञ्च
चव्यं सुराह्वं लवणोत्तमञ्च।
एतद्धि शोषं जठराणि चैव
हन्यात् प्रमेहांश्च सहानिलेन ॥४६॥
गोऽश्वाव्यजेभैणखरोष्ट्रजाजै
शकृद्रसक्षीररसघृतोत्थैः।
द्राक्षाश्वगन्धामगधासिताभिः
सिद्धं घृतं यक्ष्मविकारहारि ॥४७॥
एलाजमोदामलकाभयाक्ष-
मायव्ररिष्टासनशालसारान्।
विडङ्गभल्लातकचित्रकोग्रा-
कटुत्रिकाम्भोदसुराष्ट्रजांश्च ॥४८॥

पक्का जले तेन पचेद्‌ द्विसर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च।
त्रिंशत्पलान्यत्र सितोपलाया
दत्त्वा तुगाक्षीरिपलानि षट्‌ च ॥४९॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्
क्षौद्रं ततो मन्थहत विदध्यात्।
पलं पल प्रातरतः प्रलिह्यात्
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥५०॥
एतद्धि मेध्यं परम पवित्र
चक्षुष्यमायुष्यमथो यशस्यम्।
यक्ष्माणमाशु व्यपहन्ति चैतत्
पाण्ड्वामयञ्चैव भगन्दरञ्च ॥५१॥
श्वासञ्च हन्ति स्वरभेदकास-
हृत्प्लीहगुल्मग्रहणीगदांश्च।
न चात्र किञ्चित् परिवर्जनीय
रसायनञ्चैतदुपास्यमानम् ॥५२॥
प्लीहोदरोक्तं विहितञ्च सर्पि-
स्त्वीण्येव चान्यानि हितानि चात्र।
उपद्रवांश्च स्वरवैकृतादीन्
जयेद्‌ यथास्व प्रसमीक्ष्य शास्त्रम् ॥५३॥
अजाशकृन्मूत्रपयोघृताढ्य-
च्छासालयानि प्रतिसेवमानः।
स्नानादिनानाविधिना जहाति
मासादशेष नियमेन शोषम् ॥५४॥

रसोनयोगं विधिवत् क्षयार्त्तः
क्षीरेण वा नागबलाप्रयोगम् ।
सेवेत वा मागधिकाविधान
तथोपयोज जतुनोऽश्मजस्य ॥५५॥
शोक स्त्रिय क्रोधमसूयनञ्च
त्यजेदुदारान् विषयान् भजेत ।
वैद्यान् द्विजातीस्त्रिदशान् गुरूंश्च
वाचश्च पुण्या शृणुयाद् द्विजेभ्य. ॥५६॥

---

## द्विचत्वारिंशत्तमोऽध्याय ।

अथातो गुल्मप्रतिषेधं व्याख्यास्याम' ।
यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागता' ।
जनयन्ति नृणा गुल्मं स पञ्चविध उच्यते ॥१॥
हृद्वस्त्योरन्तरे ग्रन्थि सञ्चारी यदि वाचल. ।
चयापचयवान् वृत्त स गुल्म इति कीर्त्तितः ॥२॥
पञ्चगुल्माश्रया नृणा पार्श्वे हृन्नाभिवस्तयः ।
कुपितानिलमूलत्वाद् गूढमूलोदयादपि ॥३॥
गुल्मवद्वा विशालत्वाद् गुल्म इत्यभिधीयते ।
स यस्मादात्मनि चय गच्छत्यप्स्विव बुद्बुदः ॥४॥
अन्तः सरति यस्माच्च न पाकमुपयात्यत. ।
स व्यस्तैर्जायते दोषै समस्तैरपि वोच्छ्रितै' ॥५॥
पुरुषाणां तथा स्त्रीणा ज्ञेयो रक्तेन चापर' ।
सदन मन्दता वह्नेराटोपोऽन्त्रविकूजनम् ॥६॥
विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ।

द्वेषोऽन्ने वायुरुदूर्द्ध्वश्च पूर्व्वरूपेषु गुल्मिनाम् ॥७॥

हृत्कुक्षिशूलं मुखकण्ठशोषो
वायोर्निरोधो विषमाग्निता च।
ते ते विकाराः पवनात्मकाश्च
भवन्ति गुल्मेऽनिलसम्भवे तु ॥८॥
स्वेदज्वराहारविदाहदाहा-
स्तृष्णाङ्गरागः कटुवक्तता च।
पित्तस्य लिङ्गान्यखिलानि यानि
पित्तात्मके तानि भवन्ति गुल्मे ॥९॥
स्तैमित्यमन्नेऽरुचिरङ्गसाद-
श्छर्द्दिः प्रसेको मधुरास्यता च।
कफस्य लिङ्गानि च यानि तानि
भवन्ति गुल्मे कफसम्भवे तु ॥१०॥
सर्व्वात्मकः सर्व्वविकारयुक्तः
सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये ॥११॥
नवप्रसूताऽहितभोजना या
या चामगर्भं विसृजेदृतौ वा।
वायुर्हि तस्याः परिगृह्य रक्तं
करोति गुल्मं सरुजं सदाहम् ॥१२॥
पैत्तस्य लिङ्गेन समानलिङ्गं
विशेषणं चाप्यपरं निबोध ॥१३॥
न स्पन्दते नोदरमेति वृद्धिं
भवन्ति लिङ्गानि च गर्भिणीनाम्।
तं गर्भकालातिगमे चिकित्स्य-

मरुद्गभव गुल्ममुशन्ति तज्ज्ञा ॥१४॥
वातगुल्मार्दितं स्निग्धं युक्तं स्नेहविरेचनैः ।
उपाचरेद् यथाकालं निरूहैः सानुवासनैः ॥१५॥
पित्तगुल्मार्दितं स्निग्धं काकोल्यादिघृतेन तु ।
विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् ॥१६॥
श्लेष्मगुल्मार्दितं स्निग्धं पिप्पल्यादिघृतेन तु ।
तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥१७॥
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ।
पित्तवद्रक्तगुल्मिन्या नार्य्याः कार्य्यः क्रियाविधिः ॥१८॥
विशेषमपरं चास्याः शृणु रक्तविभेदनम् ।
पलाशभस्मतोयेन सिद्धं सर्पिः प्रयोजयेत् ॥१९॥
दद्यादुत्तरवस्तिञ्च पिप्पल्यादिघृतेन तु ।
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ॥२०॥
आनूपौदकमज्जानो वसा तैलं घृतं दधि ।
विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥२१॥
जाङ्गलैकशफानान्तु वसा सर्पिश्च पैत्तिके ।
तैलं जाङ्गलमज्जानः ... गुल्मे कफोत्थिते ॥२२॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद् घृतम् ।
शर्करासैन्धवोपेतं तद्धितं वातगुल्मिने ॥२३॥
चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः ।
दीप्यकग्रन्थिकाजाजीहवुषाधान्यकैः समैः ॥२४॥
दध्यारनालबदरमूलकस्वरसैर्घृतम्
तत्सिद्धं वातगुल्मघ्नं दौबल्याटोपशूलनुत् ॥२५॥
हिङ्गुसौवर्च्चलाजाजीविडदाडिमदीप्यकैः ।

पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥२६॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम्।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥२७॥
विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः।
हिङ्गुसौवर्च्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ॥२८॥
वीजपूररसोपेतं सर्पिर्दधिचतुर्गुणम्।
साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित् ॥२९॥
रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम्।
सुरारनालदध्यम्लमूलकस्वरसैः सह ॥३०॥
व्योषदाडिमवृक्षाम्लयवानीचव्यसैन्धवैः।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ॥३१॥
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान्।
कासापस्मारमन्दाग्निप्लीहशूलानिलान् जयेत् ॥३२॥
दधिसौवीरकं सर्पिः क्वाथौ मुद्गकुलत्थजौ।
पञ्चाढकानि विपचेद्दावाप्य द्विपलान्यथ ॥३३॥
सौवर्च्चलं स्वर्जिकाञ्च देवदार्वथ सैन्धवम्।
वातगुल्मापहं सर्पिरेतद्दीपनमेव च ॥३४॥
तृणमूलकषाये तु जीवनीयैः पचेद् घृतम्।
न्यग्रोधादिगणे वापि गणे वाप्युत्पलादिके।
रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयम् ॥३५॥
आरग्वधादौ विपचेद्दीपनीययुतं घृतम्।
क्षारवर्गे पचेच्चान्यत् पचेन्मूत्रगणेऽपरम् ॥३६॥
घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयम्।
यथादोषोच्छ्रयञ्चापि चिकित्सेत्सान्निपातिकम् ॥३७॥

चूर्णं हिङ्ग्वादिकं वापि घृत वा प्लीहनाशनम्।
पिबेद् गुल्मापह काले सर्पिस्तैल्वकमेव वा॥३८॥
तिलेक्षुरकपालाशसार्षप यवनालजम्।
भस्म मूलकजञ्चापि गोजाविखरहस्तिनाम् ॥३९॥
मूत्रेण महिषीणाञ्च पालिकैश्चावचूर्णितैः।
कुष्ठसैन्धवयष्ट्याह्वनागरक्रमिवातिभि' ॥४०॥
साजमोदैश्च दशभि. सामुद्राच्च पलैर्युतम्।
अथ पात्रेऽग्निनाल्पेन पक्का लेह्यमथोद्धरेत् ॥४१॥
तस्य मात्रां पिबेद्दध्ना सुरया सर्पिषापि वा।
धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा।
गुल्म वातविकारांश्च क्षारोऽय हन्त्यसशयम् ॥४२॥
स्वर्जिकाकुष्ठसहित' क्षारः केतकजोऽपि वा।
तैलेन शमयेत् पीतो गुल्मं पवनसम्भवम् ॥४३॥
पीतं सुखाम्बुना वापि स्वर्जिकाकुष्ठसैन्धवम्।
क्षीरसुरुवूकञ्च वर्षाभूद्वहतीद्वयम् ॥४४॥
चित्रकञ्च जलद्रोणे पक्का पादावशेषितम्।
मागधीचित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ॥४५॥
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम्।
तुषोषित दशाहन्तु जीर्णभक्तः पिबेन्नरः ॥४६॥
अरिष्टोऽयं जयेद् गुल्ममविपाकमरोचकम् ॥४७॥
पाठानिकुम्भरजनीत्रिकटुत्रिफलाग्निकम्।
लवण द्वन्द्वबीजञ्च तुल्यं स्याद्नवं गुडम् ॥४८॥
पथ्याभिः सहित चूर्णं गवां मूत्रयुतं पचेत्।
गुटिकास्तद्घनीभूत कृत्वा खादेद्भुक्तवान् ॥४९॥

गुल्मप्लीहाग्निसादांस्ता नाशयेयुरशेषत ।
हृद्रोग ग्रहणीदोष पाण्डुरोगञ्च दारुणम ॥५०॥
सशूले सोन्नतस्यन्दे दाहपाकरुगन्विते ।
गुल्मे रक्त जलौकोभिः सिरामोक्षेण वा हरेत् ॥५१॥
सुखोष्णा जाङ्गलरसा सुस्निग्धा व्यक्तसैन्धवा ।
कटुत्रिकसमायुक्ता हिता पाने च गुल्मिनाम ॥५२॥
पेया वातहरे सिद्धा कौलत्था संस्कृता रसा ।
खला सपञ्चमूलाश्च गुल्मिना भोजने हिता ॥५३॥
बद्धवर्चोऽनिलानान्तु साद्रक चीरमिष्यते ।
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ॥५४॥
गुल्मिन सर्व एवोक्ता दुर्विरेच्यतमा भृशम ।
अतश्चैतास्तु सुस्विन्नान् स्रसनेनोपपादयेत् ॥५५॥
विलेपनाभ्यञ्जनानि तथा संदहनानि च ।
उपनाहाश्च कर्त्तव्या सुखोष्णा शाल्वणादय ॥५६॥
उदरोक्तानि सर्पीषि चूर्णवर्त्तिक्रियास्तथा ।
लवणानि च योज्यानि यान्युक्तान्युदरामये ॥५७॥
वातवर्चोनिरोधे तु सामुद्रार्द्रकसर्षपे ।
कृत्वा पायौ विधातव्या वर्त्तयो मरिचोत्तरा ॥५८॥
दन्तीचित्रकमूलेषु तथा वातहरेषु च ।
कुर्य्यादरिष्टान् सर्वांश्च सूत्रस्थाने यथेरितान् ॥५९॥
खादेद् वाप्यङ्कुरान् भृष्टान् पूतीकन्दपवज्जान् ।
ऊर्द्ध्ववातमनुष्यञ्च गुल्मिन न निरूहयेत् ॥६०॥
पिबेत् त्वचनागर वा सगुडा वा हरीतकीम् ।
गुग्गुलु त्वचतां दन्ती द्रवन्तीं सैन्धव वचाम् ॥६१॥

मूत्रमद्यपयोद्राक्षारसर्वीक्ष्य बलाबलम् ।
एव पीलूनि पिष्टानि पिबेत् सलवणानि तु ॥६२॥
पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवै. ।
युक्ता हन्ति सुरा गुल्म शीघ्र काले प्रयोजिता ॥६३॥
बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान् ।
कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ॥६४॥
अथास्योपद्रव शूल कथञ्चिदुपजायते ।
शूल निखानितमिव सुख येन तु वेत्त्यसौ ॥६५॥
तत्र विण्मूत्रसरोध. कृच्छ्रोच्छ्वास: स्थिराङ्गता ।
तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिवृत्तता ॥६६॥
रोमहर्षोऽरुचिश्छर्दिर्भुक्तावृद्धिर्जडाङ्गता ।
वाय्वादिभिर्यथासङ्ख्य मिश्रैर्वा वीक्ष्य योजयेत् ॥६७॥
पथ्याविलवण क्षार हिङ्गुतुम्बुरुपौष्करम् ।
यवान्यथ हरिद्रा च विडङ्गान्यम्लवेतसम् ।
विदारी त्रिफला भीरु शृङ्गाटी गुडशर्करा ॥६८॥
काश्मरीफलयष्ट्याह्वपरूषकहिमानि च ।
षड्ग्रन्थातिविषादारुपथ्यामरिचवृक्षकान् ॥६९॥
कृष्णामूलकचव्यञ्च नागरक्षारचित्रकान् ।
उष्णाम्लकाञ्जिकक्षीरतोयैः श्लोकसमापनात् ॥७०॥
यथाक्रम विमिश्रांश्च द्वन्द्वे सर्वांश्च सर्वजे ।
तथैव सेकावगाहप्रदेहाभ्यङ्गभोजनम् ॥७१॥
शिशिरोदकपूर्णाना भाजनानाञ्च धारणम् ।
वमनोन्मर्दनस्वेदलङ्घनक्षपणक्रियाः ॥७२॥
स्नेहादिश्च क्रम. सर्वो विशेषेणोपदिश्यते ।

वल्लूर मूलक मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेदालुकङ्गुल्मी मधुराणि फलानि च ॥७३॥
विना गुल्मेन यच्छूल गुल्मस्थानेषु जायते।
निदान तस्य वक्ष्यामि रूपञ्च सचिकित्सितम् ॥७४॥
वातमूत्रपुरीषाणा विग्रहादतिभोजनात्।
अजीर्णाध्यशनायासविरुद्धान्नोपसेवनात् ॥७५॥
पानीयपानात् क्षुत्काले विरूढ़ानाञ्च सेवनात्।
पिष्टान्नशुष्कमासानामुपयोगात्तथैव च ॥७६॥
एवविधाना द्रव्याणामन्येषा चोपसेवनात्।
वायुः प्रकुपित कोष्ठे शूल सञ्जनयेद् भृशम् ॥७७॥
निरुच्छ्वासो भवेत् तेन वेदनापीड़ितो नर ॥७८॥
शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः।
शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते ॥७९॥
निराहारस्य यस्यैव तीव्रं शूलमुदीर्य्यते।
प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च ॥८०॥
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नर.।
एतैर्लिङ्गै[illegible]याच्छूल वातसमुद्भवम् ॥८१॥
तृष्णा दा[illegible]मूर्च्छा तीव्र शूल तथैव च।
शीताभिक[illegible]ति शीतेनैव प्रशाम्यति ॥८२॥
एतैर्लिङ्गै[illegible]च्छूलम्पित्तसमुद्भवम्।
शूलेनोत्पी[illegible]ल्लास उपजायते ॥८३॥
अतीव पू[illegible]थैव गुरुगात्रता.।
एतत् श्ले[illegible]स्योक्तं निदर्शनम् ॥८४॥
सर्वाणि [illegible] निर्दिशेत्सान्निपातिकम्।

सन्निपातसमुत्थानमसाध्यं त विनिर्दिशेत् ॥८५॥
शूलानां लक्षणं प्रोक्तं चिकित्सां च निबोध मे ॥८६॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥८७॥
पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितैर्हितः ।
तद्वच्छालीन वा स्निग्धमुष्णं भुञ्जीत भोजनम् ॥८८॥
चिरबिल्वाङ्कुरान् वापि तैलभृष्टांस्तु भक्षयेत् ।
वैहङ्गांश्च रसान् स्निग्धान् जाङ्गलान् शूलपीडितः ॥८९॥
यथालाभं निषेवेत मांसानि बिलशायिनाम् ।
सुरासौवीरकं शुक्तं मस्तु दाम्बिकस्तथा दधि ॥९०॥
सकाललवणं पेयं शूले वातसमुद्भवे ।
कुलत्थयूषो युक्ताम्लो लावकीयूषसंस्कृतः ॥९१॥
ससैन्धवः समरिचो वातशूलविनाशनः ।
विडङ्गं शिग्रुकाम्पिल्लपथ्याश्यामाम्लवेतसान् ॥९२॥
सुरसामश्वकर्णञ्च सौवर्चलयुतान् पिबेत् ।
मद्येन वातजं शूलं क्षिप्रमेव प्रशाम्यति ॥९३॥
पृथ्वीकाजाजिचविकायवानीव्योषचित्रकाः ।
पिप्पल्यः पिप्पलीमूलं सैन्धवं चेति चूर्णयेत् ॥९४॥
तानि चूर्णानि पयसा पिबेत् काम्बलिकेन वा ।
मध्वासवेन चुक्रेण सुरासौवीरकेण वा ॥९५॥
अथ वै तानि चूर्णानि मातुलुङ्गरसेन वा ।
तथा बदरयूषेण भावितानि पुनः पुनः ॥९६॥
तानि हिङ्गुप्रगाढानि सह शर्करया पिबेत् ।
सह दाडिमसारेण वर्त्तिः कार्य्या भिषग्जिता ॥९७॥

सा वस्तिर्वातिकं शूलं क्षिप्रमेव व्यपोहति ।
गुडतैलेन वा लीढा पीता मद्येन वा पुनः ॥९८॥
बुभुक्षाप्रभवे शूले लघु सन्तर्पणं हितम् ।
उष्णैः क्षीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ॥९९॥
वातशूले समुत्पन्ने रूक्षं स्निग्धेन योजयेत् ।
सुसंस्कृता प्रदेया स्युर्घृतपूरा विशेषतः ॥१००॥
वारुणीञ्च पिबेज्जन्तुस्तथा सम्पद्यते सुखी ।
एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितम् ॥१०१॥
अथ पित्तसमुत्थस्य क्रिया वक्ष्याम्यतः परम् ।
स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥१०२॥
शीतलानि च सेवेत सर्वाण्युष्णानि वर्जयेत् ।
मणिराजतताम्राणि भाजनानि च सर्वशः ॥१०३॥
वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ।
गुडशालियवाः क्षीरं सर्पिःपानं विरेचनम् ॥१०४॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ।
रसान् सेवेत पित्तघ्नान् पित्तलानि विवर्जयेत् ॥१०५॥
पलाशधान्वनं वापि पिबेद्यूषं सशर्करम् ।
परूषकाणि मृद्वीकाखर्जूरोदकजान्यपि ॥१०६॥
तत् पिबेच्छर्करायुक्तं पित्तशूलनिवारणम् ।
अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥१०७॥
वमनं कारयेत् तत्र पिप्पलीवारिणा भिषक् ।
रूक्षः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः ॥१०८॥
पिप्पलीशृङ्गवेरञ्च श्लेष्मशूले भिषग्जितम् ।
पाठा वचा त्रिकटुकं तथा कटुकरोहिणीम् ॥१०९॥

चित्रकस्य च निर्यूहं पिबेद्‌ यूषं समार्जकम्।
एरण्डफलमूलानि मूलं गोक्षुरकस्य च ॥११०॥
शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम्।
दद्याच्छृगालविन्नाञ्च सहदेवां तथैव च ॥१११॥
महासहां क्षुद्रसहां मूलञ्चेक्षुरकस्य च।
एतत् सम्भृत्य सम्भार जलद्रोणे विपाचयेत्।
चतुर्भागावशेषन्तु यवक्षारयुतं पिबेत् ॥११२॥
वातिकं पैत्तिकं वापि श्लैष्मिकं सान्निपातिकम्।
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः ॥११३॥
पिप्पल्यः स्वर्जिकाक्षारो यवाश्चित्रक एव च।
सैन्धवञ्चैव समानीय भस्म कुर्य्याद्विचक्षणः ॥११४॥
तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्‌जितम्।
रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः ॥११५॥
स सशब्दं करोत्याशु ध्मानं गुडुगुडायनम्।
सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासो तदा नरः ॥११६॥
नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीडितः।
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥११७॥
तत्र पुष्करमूलानि हिङ्गुसौवर्चलं विडम्।
सैन्धवं तुम्बुरुपथ्याचूर्णं कृत्वा तु पाययेत् ॥११८॥
पार्श्वहृद्वस्तिशूलेषु यवक्वाथेन संयुतम्।
सर्पिः प्लीहोदरोक्तं वा घृतं वा हिङ्गुसंयुतम् ॥११९॥
बीजपूरकसारं वा पयसा सह साधितम्।
एरण्डतैलमथवा मद्यमस्तुपयोरसैः।
भोजयेच्चापि पयसा जाङ्गलेन रसेन वा ॥१२०॥

प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः।
तदास्य भोजन भुक्तं सोपस्तम्भं न पच्यते ॥१२१॥
उच्छ्वसित्यामशक्तता शूलेनाहम्यते मुहुः।
नैवासने न शयने तिष्ठन्न लभते सुखम्।
कुक्षिशूल इति ख्यातो वातादामसमुद्भव' ॥१२२॥
वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलम्।
ससर्गपाचन कुर्य्याद्‌ध्नैर्दीपनसंयुतैः ॥१२३॥
नागरं दीप्यकं चव्य हिङ्गु सौवर्च्चल विडम्।
मातुलुङ्गास्य बीजानि तथा श्यामोरुबूकयोः।
बृहत्या कण्टकार्य्याश्च क्वाथं शूलहर पिबेत् ॥१२४॥
वचा सौवर्चल हिङ्गु कुष्ठ सातिविषाभया।
कुटजस्य च बीजानि सद्य शूलहराणि तु ॥१२५॥
विरेचन प्रयुञ्जीत ज्ञात्वा दोषबलाबलम्।
स्नेहवस्तीन्निरूहांश्च कुर्य्याद्दोषनिवर्हणम् ॥१२६॥
उपनाहा स्नेहसेका धान्याम्लपरिषेचनम्।
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥१२७॥
हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं परम्।
स हृच्छूल इति ख्यातो रसमारुतसम्भव. ॥१२८॥
तत्रापि कर्माभिहितं यदुक्तं हृद्विकारिणाम्।
संरोधात् कुपितो वायुर्वस्तिमाहृत्य तिष्ठति ॥१२९॥
वस्तिवङ्क्षणनाभीषु ततः शूलोऽस्य जायते।
विण्मूत्रवातसरोधी वस्तिशूलः स मारुतात् ॥१३०॥
नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्दकः।
मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात् ॥१३१॥

वायुः प्रकुपितो यस्य रुक्षाहारस्य देहिनः ।
मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकम् ॥१३२॥
शूलं सञ्जनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि ।
दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥१३३॥
सर्वत्र वर्द्धते क्षिप्रं शूलं तत्र सवाष्पवत् ।
पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते ॥१३४॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ।
विट्शूलमेतज्जानीयाद्भिषक् परमदारुणम् ॥१३५॥
क्षिप्रं दोषहरं कार्य्यं भिषजा साधु जानता ।
स्वेदनं वमनञ्चैव निरूहाः स्नेहवस्तयः ॥१३६॥
पूर्वोद्दिष्टान् पाययेत योगान् कोष्ठविशोधनान् ।
उदावर्त्तहराश्चास्य क्रियाः सर्वाः सुखावहाः ॥१३७॥
अतिमात्रं यदा भुक्तं पावके मृदुतां गते ।
स्थिरीभूतं तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥१३८॥
अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति ।
मूर्च्छाध्मानं विदाहञ्च हृदुत्क्लेशो विलम्बिकाम् ।
विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ॥१३९॥
क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः ।
गुल्मावस्थाः क्रियाः कार्य्या यथावत् सर्वशूलिनाम् ॥१४०॥

---

## त्रिचत्वारिंशत्तमोऽध्यायः ।

अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ।

वेगाघातोष्णरुक्षान्नैरतिमात्रोपसेवितैः ।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥१॥

दूषयित्वा रस दोषा विगुणा हृदय गता ।
कुर्वन्ति हृदये बाधा हृद्रोग त प्रचक्षते ॥२॥
चतुर्विध स दोषैश्च पञ्चम क्रिमिभिस्तथा ।
पृथग्लिङ्ग प्रवक्ष्यामि चिकित्सितमनन्तरम् ॥३॥
आयम्यते मारुतजे हृदय तुद्यते तथा ।
निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ॥४॥
तृष्णोषादाहचोषा स्यु पैत्तिके हृदयक्लम ।
धूमायनञ्च मूर्च्छा च स्वेद शोषो मुखस्य च ॥५॥
गौरव कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम् ।
माधुर्य्यमपि चास्यस्य बलासावतते हृदि ॥६॥
उत्क्लेश ष्ठीवन तोद शूलो हृल्लासकस्तम ।
अरुचि श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत् ॥७॥
भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवा ।
क्रिमिजे क्रिमिजातीना श्लैष्मिकीणाञ्च ये मताः ॥८॥
वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलक्काथेन सस्नेहलवणेन तु ॥९॥
पिप्पल्येलावचाहिङ्गुयवभस्मानि सैन्धवम् ।
सौवर्चलमथो शुण्ठीमजमोदाञ्च चूर्णितम् ॥१०॥
फलधान्याम्लकौलत्थदधिमद्यासवादिभि ।
पाययत विशुद्धञ्च स्नेहेनान्यतमेन वा ॥११॥
भोजयेज्जीर्णशाल्यन्न जाङ्गलैः सघृतैरसै ।
वातघ्नसिद्ध तैलञ्च दद्याद्वस्ति प्रमाणत ॥१२॥
श्रीपर्णीमधुकक्षौद्रसितोत्पलजलैर्वमेत् ।
पित्तोपसृष्टे हृदये सेवेत मधुरै घृतम् ॥१३॥

घृत कषायाश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥१४॥
द्राक्षस्य च रसैर्मुख्यैर्जाङ्गलैः सघृतैर्भिषक् ।
सक्षौद्रं वितरेद्वस्तिं तैलं मधुकसाधितम् ॥ १५॥
वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके ।
चूर्णन्तु पाययेतोक्तं वातजे भोजयेच्च तम् ॥१६॥
फलादिमथ मुस्तादिं त्रिफलां वा पिबेन्नरः ॥१७॥
श्यामाद्वल्कल्कयुतं घृतं वापि विरेचनम् ।
बलातैलैर्विदध्याच्च वस्तिं वस्तिविशारदः ॥१८॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।
दध्ना वा पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥१९॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ।
विडङ्गगाढैर्धान्याम्लं पाययेताप्यनन्तरम् ॥२०॥
हृदयस्थाः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ।
यवान्नं वितरेच्चास्य सविडङ्गमतः परम् ॥२१॥

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः ।

व्यवायमम्लं लवणानि मद्यं
मृदं दिवास्वप्नमतीव तीक्ष्णम् ।
निषेवमाणस्य विदूष्य रक्तं
कुर्वन्ति दोषास्त्वचि पाण्डुभावम् ॥१॥
पाण्ड्वामयोऽष्टार्द्धविधः प्रदिष्टः
पृथक् समस्तैर्युगपच्च दोषैः ।
सर्वेषु चैतेष्विह पाण्डुभावो

यतोऽधिकोऽत खलु पाण्डुरोग ॥२॥

त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथा. ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥३॥

सकामलापानकिपाण्डुरोग.
कुम्भाह्वयो लाघरकोऽलसाख्यः ।
विभाष्यते लक्षणमस्य कृत्स्न
विबोध वक्ष्याम्यनुपूर्वशस्तत् ॥४॥

कृष्णेक्षणं कृष्णसिरावनद्ध तद्वर्णविण्मूत्रनखाननञ्च ।
वातेन पाण्डु मनुज व्यवस्येद् युक्त तथान्यैस्तदुपद्रवैश्च ॥५॥
पीतेक्षण पीतसिरावनद्ध तद्वर्णविण्मूत्रनखाननञ्च ।
पित्तेन पाण्डु मनुज व्यवस्येद् युक्तं तथान्यैस्तदुपद्रवैश्च ॥६॥
शुक्लेक्षणं शुक्लसिरावनद्ध तद्वर्णविण्मूत्रनखाननञ्च ।
कफेन पाण्डु मनुज व्यवस्येद् युक्त तथान्यैस्तदुपद्रवैश्च ॥७॥

सर्वात्मके सर्वमिदं व्यवस्येद्
वक्ष्यामि लिङ्गान्यथ कामलाया ॥८॥

यो ह्यामयान्ते सहसान्नमम्ल-
मद्यादपथ्यानि च तस्य पित्तम् ।
करोति पाण्डु वदन विशेषात्
तन्द्राबलत्व प्रथमोदिताश्च ॥९॥

भेदस्तु तस्याः खलु कुम्भसाह्व.
शोफो महांस्तत्र च पर्वभेद ।
ज्वराङ्गमर्दभ्रमसादतन्द्रा-
क्षयान्विता लाघरकोऽलसाख्यः ॥१०॥

त वातपित्ताभिपरीतलिङ्ग

हलीमकं नाम वदन्ति तज्ज्ञाः।
उपद्रवास्तेष्वरुचि पिपासा
छर्दिर्ज्वरो मूर्द्धरुजाग्निसाद ॥११॥
शोफस्तथा कण्ठगतोऽबलत्व
मूर्च्छा क्लमो हृदयवपीडनञ्च।
साध्यन्तु पाण्डामयिन समीक्ष्य
स्निग्ध घृतेनोर्द्ध्वमधश्च शुद्धम् ॥१२॥
सम्पादयेत् चौद्रघृतप्रगाढ़ैर्हरीतकीचूर्णयुतै प्रयोगैः।
पिबेद्‌ घृत वा रजनीविपक्व यत् त्रैफल तैल्वकमेव वापि ॥१३॥

विरेचनद्रव्यकृतं पिबेद्वि
योगांश्च वैरेचनिकान् घृतेन।
मूत्रे निकुम्भार्द्धपल विपाच्य
पिबेद्भीत्या कुडवार्द्धमात्रम् ॥१४॥
खादेद्‌ गुड वाप्यभयाविमिश्र-
मारग्वधादिक्वथित पिबेद्वा।
अयोरजोव्योषविडङ्गचूर्ण
लिह्याद्धरिद्रा त्रिफलान्विता वा ॥१५॥
सर्पिर्मधुभ्या विद्धीत वापि
शास्त्रप्रदृष्टाभिहिताश्च योगान्।
हरेच्च दोषान् बहुशोऽल्पमात्रान्
क्षयेद्वि दोषेष्वतिनिर्हृतेषु ॥१६॥
धात्रीफलाना रसमिक्षुजञ्च
मन्थं पिबेत् चौद्रयुत हिताशी।

उभे बृहत्यौ रजनी शुकाख्या
शुकादनीं चापि सकाकमाचीम ॥१७॥
आदारिविम्बीं सकदम्बपुष्पीं
विपाच्य सर्पिर्विपचेत्कषाये ।
तत्पाण्डुता हन्त्युपयुज्यमान
क्षीरेण वा मागधिका यथाग्नि ॥१८॥

हितञ्च यष्टीमधुकं कषाय चूर्णं सम वा मधूनावलिह्यात् ।
गोमूत्रयुक्त त्रिफलादलाना दद्यादयसच्चूर्णमनल्पकालम॥१९॥
प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा काञ्चनगैरिकोत्थम् ।
आजं शकृद्वा कुडवप्रमाण विड हरिद्रालवणोत्तमञ्च ॥२०॥

पृथक्पलांशानि समग्रमेत-
च्चूर्णं हिताशी मधुनावलिह्यात् ॥२१॥
मण्डूरलोहाग्निविडङ्गपथ्या-
व्योषांशक सर्वसमानताप्य ।
मूत्रायुतोऽय मधुनावलेह
पाण्डामय हन्त्यचिरेण घोरम् ॥२२॥
विभीतकाग्नेयमलनागराणा
चूर्णं तिलानाञ्च गुडश्च मुख्य ।
तक्रानुपानो वटकाप्रयुक्त
क्षिणोति घोरानपि पाण्डुरोगान् ॥२३॥
सौवर्चल हिङ्गु किराततिक्त-
कलायमात्राणि सुखाम्बुना वा ।
मूर्वाहरिद्रामलकञ्च लिह्यात्
स्थित गवां सप्त दिनानि मूत्रे ॥२४॥

मूत्रं बलाचित्रकयोः पिबेद्वा
पाण्ड्वामयार्त्तोऽश्मसमं हिताशी ।
सुखाम्बुना वा लवणेन तुल्यं
शिग्रोः फलं क्षीरभुजोपयोज्यम् ॥२५॥
न्यग्रोधवर्गस्य पिबेत् कषायं
शीतं सिताक्षौद्रयुतं हिताशी ।
शालादिकं चाप्यथ सारचूर्णं
धात्रीफलं वा मधुनावलिह्यात् ॥२६॥
विडङ्गमुस्तत्रिफलाजमोदपरूषकव्योषविमिश्रमन्यः ।
चूर्णीकृता वा गुड़शर्करे च तथैव सर्पिर्मधुनी शुभे च ॥२७॥
सम्भारमेतद्विपचेन्निधाय
सारोदके सारवतो गणस्य ।
जातञ्च लेह्यं मतिमान् विदित्वा
निधापयेन्मोक्षकजे समुद्रे ॥२८॥
हन्त्येष लेहः खलु पाण्डुरोगं
सशोथमुग्रामपि कामलाञ्च ।
सशर्करा कामलिना त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥२९॥
कालेयकं चापि घृतं विपक्वं
हितं च तस्याद्रजनीविमिश्रम् ।
धातुं नदीजं जतुशैलजं वा
कुम्भाह्वये मूत्रयुतं पिबेद्वा ॥३०॥
मूत्रस्थितं सैन्धवसम्प्रयुक्तं
मासं पिबेद्वापि हि लौहकिट्टम् ।

दग्ध्वाक्षकाष्ठैर्मलमायसं वा
गोमूत्रनिर्वापितमष्टवारान् ॥ २१॥
विचूर्ण्य लीढं मधुनाचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्यात्।
सिन्धूद्भवं वाग्निसमं च कृत्वा
सिक्त्वा च मूत्रे सकृदेव तप्तम् ॥ २२॥
लौहञ्च किट्टं बहुशश्च तप्तं निर्वाप्य मूत्रे बहुशस्तथैव।
एकीकृतं गोजलपिष्टमेतदैकध्यमावाप्य पचेदुखायाम् ॥ २३॥
यथा न दह्येत तथा विशुष्कं
चूर्णीकृतं पेयमुदश्विता तत्।
तक्रौदनाशी विजयेत रोगं
पाण्डुं तथा दीपयतेऽनलञ्च ॥ २४॥
द्राक्षागुडूच्यामलकीरसैश्च सिद्धं घृतं लाघवके हितञ्च।
गौडानरिष्टान्मधुशर्कराश्च मूत्रासवान् क्षारकृतांस्तथैव ॥ २५॥
स्निग्धान् रसानामलकैरुपेतान्
कोलान्वितान् वापि हि जाङ्गलानाम्।
सेवेत शोफाभिहितांश्च योगान्
पाण्ड्वामयी शालियवांश्च नित्यम् ॥ २६॥
श्वासातिसारारुचिकासमूर्च्छा
हृट्छर्दिशूलज्वरशोफदाहान्।
तथा विपाकस्वरभेदसादान्
जयेद् यथास्वम्प्रसमीक्ष्य शास्त्रम् ॥ २७॥
अन्तेषु शूनं परिहीनमध्यं
म्लानं तथान्तेषु च मध्यशूनम्।

गुदेऽथ शेफस्यथ मुष्कयोश्च
शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥३८॥
विवर्जयेत पाण्डुकिनं यशोऽर्थी
तथातीसारज्वरपीडितञ्च ॥३९॥

---

## पञ्चचत्वारिंशत्तमोऽध्यायः।

अथातो रक्तपित्तप्रतिषेधं व्याख्यास्यामः।

क्रोधशोकभयायासविरुद्धान्नातपानलान्।
कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः ॥१॥
नित्यमभ्यसतो दुष्टो रसः पित्तञ्च कोपयेत्।
विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितम् ॥२॥
ततः प्रवर्त्तते रक्तमूर्द्धं चाधो द्विधापि वा।
आमाशयाद्व्रजेदूर्द्धमधः पक्वाशयाद्व्रजेत् ॥३॥
विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्त्तते।
केचित् सयकृतं प्लीह्नः प्रवदन्त्यसृजो गतिम् ॥४॥
ऊर्द्धं साध्यमधोयाप्यमसाध्यं युगपद्गतम्।
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥५॥
लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति।
वाह्यास्तल्लक्षणैस्तस्य संश्रयादोषोच्छ्रितीर्विदुः ॥६॥

दौर्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा
भुक्ते चान्ने विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा।
तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च
द्वेषो भक्तेऽविपाको विरतिरपि रते रक्तपित्तोपसर्गाः ॥७॥
मांसप्रक्षालनाभं क्वथितमिव च यत् कर्दमाम्भोनिभं वा

मेद पूयास्रकल्प यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत् कृष्णं यच्च नीलं भृशमतिकुणप यत्र चोक्ता विकारा.
तद्वर्ज्य रक्तपित्तं सुरपतिधनुषा यच्च तुल्य विभाति ॥८॥
नारी सशास्त्रमुद्रिक्तं यदसृग् बलिनो यतः ।
तत् पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥९॥
अथ प्रवृत्तं वमनैरूर्द्ध्वमार्गं विरेचनैः ।
जयेदन्यतरच्चापि क्षीणस्य शमनैरसृक् ॥१०॥
अतिप्रवृत्तदोषस्य पूर्वं लोहितपित्तिन ।
अक्षीणबलमांसाग्ने कर्त्तव्यमपतर्पणम ॥११॥
लङ्घितस्य तत. पेया विदध्यात् स्वल्पतण्डुलाम ।
तर्पणं पाचनं लेहान् सर्पींषि विविधानि च ॥१२॥
द्राक्षामधुककाश्मर्य्यसितायुक्तं विरेचनम् ।
यष्टीमधुकयुक्त च सक्षौद्रं वमन हितम् ॥१३॥
पयांसि शीतानि रसाश्च जाङ्गला.
सतीनयूषाश्च सशालिषष्टिका ।
पटोलशेलूसुनिषण्णयूथिका-
वटातिमुक्ताङ्कुरसिन्दुवारजम ॥१४॥
हितश्च शाक घृतसस्कृत सदा
तथैव धात्रीफलदाडिमान्वितम् ।
रसाश्च पारावतशङ्कुमंजा-
स्तथा यवाग्वोऽभिहिता घृतोत्तराः ॥१५॥
सन्तानिकाश्चोत्पलवर्गसाधिते
क्षीरे प्रशस्ता मधुशर्करोत्तमा ।
हिमाः प्रदेहा मधुशर्कराश्च ये

घृतानि पथ्यानि च रक्तपित्तिनाम् ॥१६॥
मधूकशोभाञ्जनकोविदारजै
प्रियङ्गुकाया कुसुमैश्च चूर्णितै.।
भिषग्विदध्याच्चतुरः समाक्षिकान्
हिताय लेहानसृज प्रशान्तये ॥१७॥
लिह्याच्च दूर्वावटजाश्च पल्लवान्
मधुद्वितीयान् सितकार्णिकस्य च।
हितञ्च खर्जूरफल समाक्षिक
फलानि चान्यान्यपि तद्गुणान्यथ ॥१८॥

रक्तातिसारप्रोक्ताश्च योगानत्रापि योजयेत्।
शुक्लेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥१९॥
योजयित्वा क्षिपेद्रात्रावाकाशे मोत्पलन्तु तत्।
प्रात. सुतं क्षौद्रयुत पिबेच्छोणितपित्तवान् ॥२०॥
पिबेच्छीतकषाय वा जम्ब्वाम्राजुर्नसम्भवम्।
उडुम्बरफल पिष्ट्वा पिबेत्तद्रसमेव वा ॥२१॥
त्रपुषीमूलकल्क वा सक्षौद्र तण्डुलाम्बुना।
पिबेद्दसम कल्क यष्टीमधुकमेव वा ॥२२॥
चन्दन मधुक रोध्रमेवमेव सम पिबेत्।
करञ्जवीजमेव वा सिताक्षौद्रयुत पिबेत् ॥२३॥
मज्जानमिङ्गुदस्यैवं पिबेन्मधुकसयुतम्।
सुखोष्ण लवण वीज कारञ्जं दधिमस्तुना ॥२४॥
पिबेद्वापि त्र्यहं मर्त्यो रक्तपित्ताभिपीडित.।
रक्तपित्तहरा. शस्ता: षडेते योगसत्तमा ॥२५॥
पथ्याश्चैवावपीड़ेषु घ्राणत. प्रसृतेऽसृजि।

अतिनिस्रुतरक्तो वा क्षौद्रयुक्तं पिबेदसृक्।
यकृद्वा भक्षयेदाजमामं पित्तसमायुतम् ॥२६॥
पलाशवृक्षस्वरसे विपक्वं सर्पिः पिबेत् क्षौद्रयुतं सुशीतम्।
वनस्पतीनां स्वरसे कृतं वा सशर्करं क्षीरघृतं पिबेद्वा ॥२७॥

द्राक्षामुशीरामलमथ पद्मकं सिता
पृथक्पलांशान्युदके समावपेत्।
स्थितं निशान्तद्रुधिरामयं जयेत्
पीतं पयो वाम्बु समं हिताशिनः ॥२८॥
तुरङ्गवर्च्चः स्वरसं समाक्षिकं
पिबेत्सिताक्षौद्रयुतं वृषस्य वा।
लिहेत्तथा वास्तुकबीजचूर्णं
क्षौद्रान्वितं तण्डुलसाह्वयं वा ॥२९॥
लिह्याच्च लाजाञ्जनचूर्णमेक-
मेव सिताक्षौद्रयुता तुगाख्याम्।
द्राक्षां सितां तिक्तकरोहिणीञ्च
हिमाम्बुना वा मधुकेन युक्ताम् ॥३०॥
पथ्यां महौषधं रजनीं घृतञ्च
लिह्यात्तथा शोणितपित्तरोगी ॥३१॥

वासाकषायोत्पलमृत्प्रियङ्गुलोध्राञ्जनाम्भोरुहकेशराणि।
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥३२॥

गायत्रिजम्ब्वर्जुनकोविदार-
शिरीषरोध्राशनशाल्मलीनाम्।
पुष्पाणि शिग्रोश्च विचूर्ण्य लेह्यो

मध्वन्वितः शोणितपित्तरोगे ॥२३॥
सक्षौद्रमिन्दीवरभस्म वारि
कारञ्जबीजं मधुसर्पिषी च।
जम्ब्वर्जुनाम्रक्वथितञ्च तोयं
घ्नन्ति त्रयं पित्तमसृक् च योगाः ॥२४॥
मूलानि पुष्पाणि च मातुलुङ्गाः
पिष्ट्वा पिबेत्तण्डुलधावनेन।
घ्राणप्रवृत्ते जलमाशु देयं
सशर्करं नासिकया पयो वा ॥२५॥
द्राक्षारसं क्षीरघृतं पिबेद्वा
सशर्करञ्चेक्षुरसं हिमं वा।
शीतोपचारं मधुरञ्च कुर्या-
द्विशेषतः शोणितपित्तरोगे ॥२६॥
द्राक्षाघृतक्षौद्रसितायुतेन
विदारिगन्धादिविपाचितेन।
क्षीरेण चास्थापनमग्रमुक्तं
हितं घृतञ्चाप्यनुवासनार्थम् ॥२७॥
प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः
सुवर्णकालीयकशङ्खचन्दनैः।
सिताम्बगन्धाम्बुदयष्टिकाह्वयै-
र्मृणालसौगन्धिकतुल्यपेषितैः ॥२८॥
निरूह्य चैनं पयसा समाक्षिकै-
र्घृतप्लुतैः शीतजलाम्बुसेचितम्।
क्षीरौदनं भुक्तमथानुवासयेद्

घृतेन यष्टीमधुसाधितेन च ॥३९॥
अधोवह शोणितमाशु नाशयेत्
तथातिसारं रुधिरस्य दुस्तरम्।
विरेकयोगे त्वति चैव शस्यते
वाम्यस्य रक्ते विजिते बलान्विते ॥४०॥
एवविधा उत्तरवस्तयश्च मूत्राशयस्थे रुधिरे विधेया।
प्रवृत्तरक्तेषु च पायुजेषु कुर्य्याद्विधानं खलु रक्तपैत्तम् ॥४१॥
विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्य्यो विजानता।
शस्त्रकर्म्मणि रक्तं वा यस्यातीव प्रवर्त्तते ॥४२॥
त्रयाणामपि दोषाणां शोणितस्य च सर्वशः।
लिङ्गान्यालोक्य कर्त्तव्यं चिकित्सितमनन्तरम् ॥४३॥

---

## षट्चत्वारिंशत्तमोऽध्याय।

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्याम.।
क्षीणस्य बहुदोषस्य विरुद्धाहारसेविन.।
विघातादभिघाताद्वा हीनसत्वस्य वा पुन.॥१॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च।
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥२॥
हृत्पीडा जृम्भणं ग्लानिं सञ्ज्ञानाशो बलस्य च।
सर्वासां पूर्वरूपाणि यथास्वमुपलक्षयेत् ॥३॥
सञ्ज्ञावहासु नाडीषु पिहितास्वनिलादिभि।
तमोऽभ्युपैति सहसा सुखदु.खव्यपोहकृत् ॥४॥
सुखदुःखव्यपोहाच्च नर पतति काष्ठवत्।
मोहो मूर्च्छेति तां प्राहु. षड्विधा सा प्रकीर्त्तिता ॥५॥

वातादिभिः शोणितेन मद्येन च विषेण च ।
षट्स्वपि तासु पित्तं हि प्रभुत्वेनावतिष्ठते ॥६॥
पृथिव्यम्बुस्तमोरूपं रक्तगन्धश्च तन्मयः ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥७॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ।
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ॥८॥
त एव तस्माज्जायन्ते ताभ्यां मोहा यथेरिताः ।
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥९॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः ।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥१०॥
वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते ।
वेदितव्यन्तीव्रतरं यथास्वं विषलक्षणैः ॥११॥

सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च ।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छास्वनिवारितानि ॥१२॥
सिताविशालेक्षुरसप्लुतानि
द्राक्षामधूकस्वरसान्वितानि ।
खर्जूरकाश्मर्य्यरसैः शृतानि
पानानि सर्पींषि सजीवनानि ॥१३॥
सिद्धानि वर्गे मधुरे पयांसि
सदाडिमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च
मूर्च्छासु पथ्याश्च सदा सतीनाः ॥१४॥

भुजङ्गपुष्प मरिचान्युशीर
कोलस्य मध्यञ्च पिबेत् समानि।
सतीनतोयेन विस मृणाल
क्षौद्रेण कृष्णा सितया च पथ्याम ॥१५॥
कुर्य्याच्च नासावदनावरोध
क्षीर पिबेद्वाप्यथ मानुषीणाम्।
मूर्च्छाप्रसक्ता तु शिरोविरेकै-
र्जयेदभीक्ष्ण वमनैश्च तीक्ष्णैः ॥१६॥

हरीतकीक्वाथघृत पिबेद्वा धात्रीफलाना स्वरसैः कृत वा।
द्राक्षासिताटाडिमलाजवन्ति शीतानि नीलोत्पलपद्मवन्ति
॥१७॥

पिबेत् कषायाणि च गन्धवन्ति
पित्तज्वरं यानि शम नयन्ति।
प्रभूतदोषस्तमसोऽतिरेकात्
सम्मूर्च्छितो नैव विबुध्यते य ॥१८॥
सन्यस्तसंज्ञो भृशदुश्चिकित्स्यो
ज्ञेयस्तदा बुद्धिमता मनुष्य ॥१९॥
यथामलोष्ट सलिले निषिक्त
समुद्धरेदाश्वविलीनमेव।
तद्वच्चिकित्सेत्त्वरयाभिषक्त-
मवेदन मृत्युवशप्रयातम ॥२०॥

तीक्ष्णाञ्जनाभ्यञ्जनधूमयोगैस्तथा नखाभ्यन्तरतोदपातैः।
वादित्रगीतानुनयैरपूर्वैर्विघट्टनैर्गुप्तफलावघर्षणैः ॥२१॥

आभि, क्रियाभिश्च न लब्धसञ्ज्ञः

सानाहलालाश्वसनश्च वर्ज्यं ।
प्रभूतसर्प्पं वमनानुलोम्यै-
स्तीक्ष्णैर्विशुद्ध लघुपथ्यभुक्तम ॥२२॥
फलत्रिकैश्चित्रकनागराद्यैस्तथाश्मजाताज्जतुन प्रयोगै ।
सशर्करैर्मासमुपक्रमेत विशेषतो जीर्णघृत स पाय्य ॥२३॥
यथास्वञ्च ज्वरघ्नानि कषायाण्युपयोजयेत् ।
सर्वं मूर्च्छापरीताना विषजाना विषापहम् ॥२४॥

---

सप्तचत्वारिंशत्तमोऽध्याय' ।
अथात. पानात्ययप्रतिषेध व्याख्यास्याम ।
मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च ।
रूक्षमाशुकरञ्चैव व्यवायि च विकाशि च ॥१॥
औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिम् ।
विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥२॥
मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकर्मकृत् ।
हर्षदञ्च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥३॥
तदम्ल रसत प्रोक्त लघुरोचनदीपनम् ।
केचिल्लवणवर्ज्यांस्तु रसानत्रादिशन्ति हि ॥४॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥५॥
काम्यता मनसस्तुष्टिर्धैर्यं तेजोऽतिविक्रमः ।
विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणा. ॥६॥
तदेवानन्नमत्येन सेव्यमानममात्रया ।
कायाग्निना ह्यग्निसम समेत्य कुरुते मदम् ॥७॥

मदेन करणानान्तु भावान्यत्वे कृते सति।
निगूढमपि भाव स्वमकार्य्योकुरुतेऽवश ॥८॥
त्रयवस्थश्च मदो ज्ञेय पूर्व्वो मध्योऽथ पश्चिम।
पूर्व्वे वीर्य्यरतिप्रीतिहर्षभाष्यादिवर्द्धनम ॥९॥
प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा।
विसंज्ञ पश्चिमे भ्रते नष्टकर्म्मक्रियागुण ॥१०॥
श्लैष्मिकानल्पपित्ताश्च स्निग्धान्मात्रोपसेविन:।
पान न बाधतेऽत्यर्थं विपरीतास्तु बाधत ॥११॥
निर्भक्तमेकान्तत एव मद्य निषेव्यमाण मनुजेन नित्यम।
उत्पादयेत् कष्टतमान्विकारानापादयेच्चापि शरीरभेदम् ॥१२
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥१३॥
अत्यम्लभक्ष्यावततोदरेण
साजीर्णभुक्तेन तथाबलेन।
उष्णाभितप्तेन च सेव्यमानं
करोति मद्य विविधान विकारान् ॥१४॥
पानात्यय परमदम्पानाजीर्णमथापि वा।
पानविभ्रममुग्रञ्च तेषा वक्ष्यामि लक्षणम् ॥१५॥
स्तम्भाङ्गमर्द्दहृदयग्रहतोदकम्पा.
पानात्ययेऽनिलकृते शिरसो रुजश्च।
स्वेदप्रलापमुखशोषणदाहमूर्च्छा.
पित्तात्मके वदनलोचनपीतता च ॥१६॥
श्लेष्मात्मके वमथुशीतकफप्रसेका.
सर्व्वात्मके भवति सर्व्वविकारसम्पत्।

तृष्णा शरीरगुरुता विरसाननत्वं
श्लेष्माधिकत्वमरुचिर्मलमूत्रसङ्ग ॥१७॥
लिङ्ग परस्य तु मदस्य वदन्ति तज्ज्ञा-
स्तृष्णारुजा शिरसि सन्धिषु चापि भेद ।
आध्मानमुद्गिरणमम्लरसो विदाहो
ऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम ॥१८॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ।
हृल्लासतोदवमथुज्वरकण्ठधूम-
मूर्च्छाकफस्रवणमूर्द्धरुजो विदाह' ॥१९॥
द्वेष सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः ।
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतं विजह्यात् ॥२०॥
जिह्वौष्ठदन्तमसित त्वथवापि नील
पीते च यस्य नयने रुधिरप्रभे च ।
हिक्काज्वरौ वमथुवेपथुपार्श्वशूला'
कासभ्रमावपि च पानहत भजन्ते ॥२१॥
तेषा निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध ।
मद्यन्तु चुक्रमरिचार्द्रकदीप्यकुष्ठ-
सौवर्चलायुतमलं पवनस्य शान्त्यै ॥२२॥
मृद्वीकदीप्यकमहौषधहिङ्गुभिर्वा
सौवर्चलेन च युतं वितरेत् सुखाय ।

आम्रातकाम्रफलदाडिममातुलुङ्गै
कुर्य्याच्छुभान्यपि च षाडवपानकानि ॥२३॥
सेवेत वा फलरसोपहितान् रसादी-
नानूपवर्गपिशितान्यपि गन्धवन्ति।
पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं समधुशर्करमिष्टगन्धम् ॥२४॥
पीत्वा च मद्यमपि चेन्मुरसमप्रगाढं
निःशेषितं क्षणमवस्थितमुल्लिखेच्च।
लावैणतित्तिरिरसांश्च पिबेदनम्लान्
मौद्गान् सुखाय सघृतान ससितांश्च यूषान् ॥२५॥
पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन बिल्वविदुलोदकसंयुतेन।
सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान् हिताय ॥२६॥
पथ्यं यवान्नविकृतान्यपि जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात्।
कुर्य्याच्च सर्वमथ सर्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथाप्रधानम् ॥२७॥
सामान्यमन्यदपि यत् सुसमग्रमग्र्य
वक्ष्यामि यच्च मनसो मदकृत् सुखञ्च।
त्वङ्नागपुष्पमगधैलमधूकधान्यैः
श्लक्ष्णैरजाजिमरिचैश्च कृतं समांशैः ॥२८॥
पानं कपित्थरसवारिपरूषकाद्य
मानात्ययेषु विधिवत्स्रुतमम्बरान्ते।

ह्रीवेरपद्मपरिपेलवसम्प्रयुक्तैः
पुष्पैः प्रलिप्य करवीरजलोद्भवैश्च ॥२९॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च वितरेदमलैः सुशीतैः।
त्वक्पत्रचोचमरिचैलभुजङ्गपुष्प-
श्लेष्मातकप्रसवकल्कगुडैरुपेतम् ॥३०॥
द्राक्षायुतं हृतमलं मदिरामयार्त्तै-
स्तत्पानकं शुचि सुगन्धि नरैर्निषेव्यम्।
पिष्ट्वा पिबेच्च मधुकं कटुरोहिणीञ्च
द्राक्षाञ्च मूलमसकृत् त्रपुषीभवं यत् ॥३१॥
कर्पासमूलमथ नागबलाञ्च तुल्यां
पीत्वा सुखी भवति साधु सुवर्चलाञ्च।
काश्मर्य्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासु कृतमम्बुनि पानकं यत् ॥३२॥
तद्बीजपूरकरसायुतमाशु पीतं
शान्तिं परां मदगदेष्वचिरात्करोति।
द्राक्षासितामधुकजीरकधान्यकृष्णा-
स्त्वेवं कृतं द्रवतया च पिबेत्तथापि ॥३३॥
सौवर्चलायुतमुदाररसं फलाम्लं
भार्गीशृतेन च जलेन हितावसेकः ॥३४॥
इक्ष्वाकुधामार्गववृश्चकाणि काकाह्वयोडुम्बरिकाश्च दुग्धे।
विपाच्य तस्याञ्जलिना वमेद्धि मद्यं पिबेदह्नि गते त्वजीर्णे
॥३५॥
त्वक्पिप्पलीभुजगपुष्पविडैरुपेतं

सेवेत हिङ्गुमरिचैलयुतं फलाम्लम् ।
उष्णाम्बुसैन्धवयुतास्त्वथवा विडत्वक्-
चव्यैलहिङ्गुमगधाफलमूलशुण्ठीः ॥३६॥
हृद्यैः खडैरपि च भोजनमत्र शस्तं
द्राक्षाकपित्थफलदाडिमपानकं यत् ।
तत्पानविभ्रमहरं मधुशर्कराढ्य-
माम्रातकोलरसपानकमेव वापि ॥३७॥
खर्जूरवेत्रककरीरपरूषकेषु
द्राक्षाद्वयेषु च कृतं ससितं हितं वा ।
श्रीपर्णियुक्तमथवा तु पिबेदिमानि
यष्ट्याह्वयोत्पलहिमाम्बु विमिश्रितानि ॥३८॥
क्षीरिप्रबालबिसजीरकनागपुष्प-
पत्रैलबालुसितशारिवपद्मकानि ।
आम्रातभव्यकरमर्दकपित्थकोल-
वृक्षाम्लवेत्रफलजीरकदाडिमानि ॥३९॥
सेवेत वा मरिचजीरकनागपुष्प
त्वक्पत्रविश्वचविकैलयुतान् रसांश्च ।
सूक्ष्माम्बरस्रुतहिमांश्च सुगन्धिगन्धान्
पानोद्भवान्नुदति सप्तगदानशेषान् ॥४०॥
पञ्चेन्द्रियार्थविषया मृदुपानयोगा
हृद्याः सुखाश्च मनसः सततन्नियोज्याः ।
पानात्ययेषु विकचोत्पलनितम्बवत्य
पीनोन्नतस्तनभरा नतमध्यदेशाः ॥४१॥
प्रौढ़ाः स्त्रियोऽभिनवयौवनपीनगात्राः

सेव्याश्च पञ्चविषयातिशयस्वभावा ॥४२॥
पिबेद्रसं पुष्पफलोद्भव वा सितामधूक्तविसुगन्धियुक्तम ।
सञ्चूर्ण्य सयोज्य च नागपुष्पैरजाजिकृष्णामरिचैश्च तुल्यैः ॥४३
वर्षाभूयष्ट्याह्वमधूकलाचात्वक्कुन्दाराङ्कुरजीरकाणि ।
द्राक्षाञ्च कृष्णामथ केशरञ्च क्षीरे समालोड्य पिबेत् सुखो-
ष्णम् ॥४४॥

भवेच्च मद्यं न तु येन पातित
प्रकामपीतेन सुरासवादिना ।
तदेव तस्मै विधिवत् प्रदापयेद्
विपर्य्यये भ्रशमसौ च गच्छति ॥४५॥
यथा नरेन्द्रोपहृतस्य कस्यचिद्
भवेत् प्रसादस्तत एव नान्यत ॥४६॥

विच्छिन्नमद्य सहसा योऽतिमद्य निषेवते ।
तस्य पानात्ययोद्दिष्टा विकारा सम्भवन्ति हि ॥४७॥
मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि च ।
स्रोतांसि शोषयेयाता तेन तृष्णा प्रजायते ॥४८॥
पाटलोत्पलकन्देषु मुद्गपर्ण्यां च साधितम् ।
पिबेन्नागधिकामिश्र तवाम्भोहिमशीतलम ॥४९॥
सर्पिस्तैलवसामज्जदधि भृङ्गरसैर्युतम ।
क्वाथेन विल्वयवयो सर्वगन्धैश्च पेषितै ॥५०॥
पक्वमभ्यञ्जने श्रेष्ठं सेके क्वाथ सुशीतल ।
रसवन्ति च भोज्यानि यथास्वमवचारयेत् ॥५१॥
पानकानि सुशीतानि हृद्यानि सुरभीणि च ।
लघं प्राशस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥५२॥

दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥५३॥
शीतं विधानमत ऊर्द्ध्वमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणाम् ।
तत्रादितो मलयजेन हितः प्रदेह-
श्चन्द्रांशुहारतुहिनोदकशीतलेन ॥५४॥
शीताम्बुशीतलतरैश्च शयानमेव
हारैर्मृणालवलयैरबलाः स्पृशेयुः ।
भिन्नोत्पलोज्ज्वलहिमे शयने शयीत
पत्रेषु वा सजलबिन्दुषु पद्मिनीनाम् ॥५५॥
आसादयन् पवनमाहृतमिष्टगन्ध-
कह्लारपद्मदलशैवलसञ्चयेभ्यः ।
शीतैर्वनान्तपवनैः परिसृज्यमानः
पीतश्चरेद्वनकाननदीर्घिकासु ॥५६॥
दाहाभिभूतमथवा परिषेचयेत्तु
शीतैरुशीरजलचन्दनवारिभिस्तम् ॥५७॥
विश्राविता हृतमला नववारिपूर्णा
पद्मोत्पलोज्ज्वलजलामधिवासिताश्च ।
वापीर्भजेत हरिचन्दनभूषिताङ्ग
कान्ताकरस्पर्शकण्टकितरोमकूपः ॥५८॥
तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्य
शीतैः करोरुवदनैः कठिनैः स्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबला मधुरैः प्रलापैः ॥५९॥
धारागृहे प्रगलितोदकदुर्दिनाभे

स्नात. शयीत सलिलानिलशीतकुक्षौ ।
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पत्राम्बुचन्दनरसैरुपलिप्तकुड्ये ॥६०॥
मासीतमालघनकुङ्कुमपद्मपत्र-
जात्युत्पलप्रियककेशरपुण्डरीके ।
पुन्नागनागकरवीरकृतोपकारे
तस्मिन् गृहे कमलरेणुरुणे शयीत ॥६१॥
यत्राहतानिलविकम्पितपुष्पदाम्नि
हेमन्तविन्ध्यहिमवन्मलयाचलानाम् ।
शीताम्भसा सकदलीहरितद्रुमाणा
उद्भिन्ननीलनलिनाम्बुरुहाकराणाम् ॥६२॥
चन्द्रोदयस्य च कथा शृणुयान्मनाप्ताः
ग्लान सुदीनमनस मनसोऽनुकूला ।
पीनस्तनोरुजघना घनसारदिग्धा.
ता एवमार्द्रवसना. सह संविशेयु ॥६३॥
स्निग्धाबला शिथिलमेखलहारयष्ट्य: ॥६४॥
हर्षयेयु पुनर्नार्य्यः स्वगुणैरहसि स्थिता ।
ता शैत्याच्छमयेयुश्च पित्तपानात्यय स्त्रिय: ॥६५॥
रक्तपित्तप्रसादाद्दाहेष्वयमेव विधि स्मृत ।
सामान्यतो विशेषन्तु शृणु दाहेष्वशेषत. ॥६६॥
कृत्स्नदेहानुग रक्तमुद्रिक्त दहति ध्रुति ।
सचूष्यते दह्यते च ताम्राभस्ताम्रलोचन ॥६७॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते ।
त विलङ्घ्य विधानेन सष्टाहारमाचरेत् ॥६८॥

अप्रशाम्यति दाहे च रसैस्तत्र जाङ्गलैः।
शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत् सिराः ॥६९॥
पित्तज्वरसमः पित्तात् स चाप्यस्य विधिर्हितः।
तृष्णानिरोधादब्धातौ क्षीणे तत्र समुत्थितम् ॥७०॥
स वाह्याभ्यन्तरं देहं दहेद्वै मन्दचेतसः।
सशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ॥७१॥
तत्रोपशमयेत् तेजस्त्वब्धातुञ्च विवर्द्धयेत्।
पाययेत् काममम्भश्च शर्कराढ्यं पयोऽपि वा ॥७२॥
शीतमिक्षुरसं मन्थं वितरेच्चेरितं विधिम्।
असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात् सुदुस्तरः ॥७३॥
विधिं सद्योव्रणीयोक्तस्तस्य लक्षणमेव च ॥७४॥
धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृषान्वितः।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥७५॥
रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः।
क्षतजेनाश्नतश्चान्यः शोचतो वाप्यनेकधा।
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान् ॥७६॥
तमिष्टविषयोपेतं सुहृद्भिरपि सहतम्।
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत् ॥७७॥
मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः।
सर्व एव च वर्ज्याः स्युः शीतगात्रेषु देहिषु ॥७८॥
एवंविधो भवेद्यस्तु मदिरामयपीडितः।
प्रशान्तोपद्रवश्चापि शोधनं प्राप्तमाचरेत् ॥७९॥

सजीरकाण्यार्द्रकशृङ्गवेर-
सौवर्चलान्यर्द्धजलप्लुतानि।

मद्यानि हृद्यान्यथ गन्धवन्ति
पीतानि सद्य. शमयन्ति तृष्णाम् ॥८०॥
जलप्लुतश्चन्दनभूषिताङ्ग स्रग्वी सभक्तां पिशितोपदंशाम्।
पिबेत् सुरां नैव लभेत रोगान् मनामतिघ्नञ्च मद न याति
॥८१॥

---

अष्टचत्वारिंशत्तमोऽध्याय ।

अथातस्तृष्णाप्रतिषेधमध्याय व्याख्यास्याम. ।

सतत य पिबेद्वारि न तृप्तिमधिगच्छति ।
पुन: काङ्क्षति तोयञ्च त तृष्णार्दितमादिशेत् ॥१॥
सङ्क्षोभशोकश्रममद्यपानाद्रुक्षाम्लशुष्कोष्णकटूपयोगात्।
धातुक्षयाल्लङ्घनसूर्य्यतापात् पित्तञ्च वातश्च भृश प्रवृद्धौ ॥२॥
स्रोतांसि सदूषयत: समेतौ
यान्यम्बुवाहीनि शरीरिणा हि ।
स्रोत स्वपां वाहिषु दूषितेषु
जायेत तृष्णा प्रबला ततस्तु ॥३॥
तिस्र स्मृतास्ता. क्षतजा चतुर्थी
क्षयात्तथान्यामसमुद्भवा च ।
स्यात्सप्तमी भक्तनिमित्तजा तु
लिङ्गानि तासां शृणु चौषधानि ॥४॥
ताल्वोष्ठकण्ठास्यविशोषदाहा:
सन्तापमोहभ्रमविप्रलापा: ।
पूर्वाणि रूपाणि भवन्ति तासा-
मुत्पत्तिकालेषु विशेषतो हि ॥५॥

शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरोगलेषु ।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति
॥६॥
मूर्च्छाप्रलापारुचिवक्त्रशोषा पीतेक्षणत्वं प्रततश्च दाहः ।
शीताभिकाङ्क्षा मुखतिक्तता च पित्तात्मिकायां परिधूमनञ्च
॥७॥
वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णावलासेन भवेत्तु तत्र ।
निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमा-
त्रम् ॥८॥
शीतज्वरश्छर्दिररोचकश्च कफात्मिकायां त्वपि पाक एव ।
एतानि रूपाणि भवन्ति यस्मात्तयार्दितः काङ्क्षति नाति
चाम्भः ॥९॥
क्षतस्य रुक्शोणितनिर्गमाभ्यां
तृष्णा चतुर्थी क्षतजा मता तु ।
तयाभिभूतस्य निशादिनानि
गच्छन्ति दुःखं पिबतोऽपि तोयम् ॥१०॥
रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु ।
पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचि-
दाहुः ॥११॥
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ।
त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता ॥१२॥
स्निग्धं तथाम्ललवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति ।
क्षीणं विचित्तं बधिरं तृषार्त्तं विवर्जयेन्निर्गतजिह्वमाशु
॥१३॥

तृष्णाभिवृद्धावुदरे च पूर्णे त वामयेन्माग धिकोदकेन ।
विलेपनं चात्र हितं वदन्ति स्वाद्दाडिमाम्रातकमातुलुङ्गैः
॥१४॥

तृष्णाप्रयोगैरिह सा निवार्य्या
शीतैश्च सम्यग्रसवीर्य्यजातैः ।
गण्डूषमम्लैर्विरचे च वक्त्रे
कुर्य्याच्छुभैरामलकस्य चूर्णैः ॥१५॥
सुवर्णरूप्यादिभिरग्नितप्तै-
र्लोष्टैः कृतं वा सिकतोपलैर्वा ।
जलं सुखोष्णं शमयेत्तु तृष्णां
सशर्करं चौद्रयुतं हिमं वा ॥१६॥

पञ्चाङ्गिका पञ्चगणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ।
पिबेत् सुखोष्णं मनुजोऽल्पशस्तु तर्षो विमुच्येत हि वात-
जाया ॥१७॥

पित्तघ्नवर्गेण कृतं कषायः सशर्करं चौद्रयुतं सुशीतं ।
पीतस्तृषां पित्तकृतां निहन्ति चीरं शृतं वाप्यथ जीवनीयैः
॥१८॥

बिल्वाढकीकण्टकपञ्चमूलीदर्भेषु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥१९॥

सर्वासु तृष्णास्वथवापि पैत्तं
कुर्य्याद्विधिस्तेन विना न शान्तिः ।
पर्य्यागतोडुम्बरजो रसस्तु
सशर्करस्तत्क्वथितोदकं वा ॥२०॥
वर्गस्य सिद्धस्य च सारिवादेः

पातव्यमम्भः शिशिरं तृषार्त्तैः ।
कशेरुशृङ्गाटकपद्ममोच-
बिसेषु सिद्धं क्षतजान्निहन्ति ॥२१॥
नीलोत्पलोशीरकुचन्दनानि दत्त्वा प्रवाते निशि वासयेत्तु ।
तदुत्तमं तोयमुदारगन्धि सितायुतं क्षौद्रयुतन्तथैव ॥२२॥
द्राक्षाप्रगाढञ्च हिताय वैद्यः
तृष्णार्द्दितेभ्यो वितरेन्नरेभ्यः ।
ससारिवादौ तृणपञ्चमूले
तथोत्पलादौ मधुरे गणे च ॥२३॥
कुर्य्यात्कषायञ्च यथैव युक्तं
मधूकपुष्पादिषु वापरेषु ।
राजादनक्षीरिकपीतनेषु
षट्पानकान्यत्र हितानि च स्युः ॥२४॥
सतुण्डिकेरीण्यथवा पिबेत् तु
पिष्टानि कार्पाससमुद्भवानि ।
क्षतोद्भवां शूलनिवारणेन
जयेद्रसानामसृजश्च पाने ॥२५॥
क्षयोत्थिता क्षीरघृतं निहन्यान्मांसोदकं वा मधुकोदकं वा ।
आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरथ दीपनानाम् २६
आम्रातभल्लातबलायुतानि पिबेत्कषायाण्यथ दीपनानि ।
गुर्व्वन्नजातां वमनैर्जयेच्च क्षयादृते सर्व्वकृताञ्च तृष्णाम् ॥२७॥
अमोद्भवां मासरसो निहन्ति गुडोदकं वाप्यथवापि मन्थः ।
भक्तोपरोधात् तृषितो यवागूमुष्णां पिबेन्मन्थमथो हिमं च
॥२८॥

या स्नेहपीतस्य भवेच्च तृष्णा तत्रोष्णमम्भ प्रपिबेन्मनुष्य ।
मद्योद्भवामर्द्धजल निहन्ति मद्य तृषा यापि हि मद्यपस्य
॥२९॥
उष्णोद्भवा हन्ति जल सुशीत सशर्करश्चेचुरस तथाम्भ. ।
क्षै स्वै. कषायैर्वमनानि तासा तथा ज्वरोक्तानि च पाचनानि ॥३०॥

लेपावगाहौ परिषेचनानि
कुर्य्यात्तथा शीतगृहाणि चापि ।
सशोधन चीररसौ घृतानि
सर्वासु लेहान्मधुरान् हिमाश्च ॥३१॥

---

एकोनपञ्चाशत्तमोऽध्याय: ।

अथातश्छर्दिप्रतिषेधमध्याय व्याख्यास्याम. ।

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः ॥१॥
श्रमात् चयात्तथोद्वेगादजीर्णात् क्रिमिदोषत. ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नत. ॥२॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नानन वेगैरर्दयन्नङ्गभञ्जनैः ॥३॥
निरुच्यते छर्दिरिति दोषो वक्त्र प्रधावित ।
दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गत. ॥४॥
ऊर्द्ध्वमागच्छति भृश विरुद्धाहारसेविनाम् ।
हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषोऽन्नपाने च भृश वमीना पूर्वलक्षणम् ॥५॥

प्रछर्दयेत् फेनिलमल्पमल्पं
शूलार्दितोऽभ्यर्दितपार्श्वपृष्ठः ।
श्रान्तः सघोषं बहुशः कषायं
जीर्णेऽधिकं सानिलजा वमिस्तु ॥ ६॥

योऽम्लं भृशं वा कटुतिक्तवक्त्रः
पीतं सरक्तं हरितं वमेद्वा ।
सदाहचोषज्वरवक्त्रशोष-
मूर्च्छान्विता पित्तनिमित्तजा सा ॥ ७॥

यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धं ।
अभक्तरुग्गौरवसादयुक्तो वमेद्वमी सा कफकोपजा स्यात् ॥ ८॥

सर्वाणि रूपाणि भवन्ति यस्यां
सा सर्वदोषप्रभवा मता तु ।
वीभत्सजा दौहृदजामजा च
या सात्म्यतो वा क्रमिजा च या हि ॥ ९॥

सा पञ्चमी तां च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ।
आमाशयोत्क्लेशभवाश्च सर्वास्तस्माद्धितं लङ्घनमेव तासु ॥ १०॥

शूलहृल्लासबहुला क्रमिजा च विशेषतः ।
क्रमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ ११॥

क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम् ।
छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम् ॥ १२॥

वमीषु बहुदोषासु छर्दनं हितमुच्यते ।
विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ॥ १३॥

संसर्गाश्चानुपूर्व्वेण यथा वभषजाथ नान् ।
[illegible] ॥ १४॥

यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत्।
हन्यात् चीरघृतं पीत छर्दिं पवनसम्भवाम् ॥१५॥
मुद्गामलकयूषो वा ससर्पिष्क ससैन्धव'।
यवागू मधुमिश्रा वा पञ्चमूलीकृता पिबेत्॥१६॥
पिबेद्वाव्यक्तसिन्धूत्थफलाम्ल वैष्किर रसम।
सुखोष्णलवण वात्र हित स्नेहविरेचनम ॥१७॥
पित्तोपशमनीयानि पानानि शिशिराणि च।
कषायाण्युपयुक्तानि घ्नन्ति पित्तकृता वमीम् ॥१८॥
शोधन म धुरैश्चात्र द्राक्षारससमायुतै।
बलवत्या प्रशसन्ति सर्पिस्तैल्वकमेव च ॥१९॥
आरग्वधादिभिर्यूषं दद्याद्वा योगमेव च।
पाययेताथ सक्षौद्र कफजाया चिकित्सक. ॥२०॥
कृतकृत्या विधिवत्कषायं हिमसञ्ज्ञितम्।
तिसृष्वपि भवेत्पथ्य माक्षिकेण समन्वितम् ॥२१॥
वीभत्सजा हृद्यतमैर्दौहृदा काङ्क्षितै फलै.।
लङ्घ..र्वमनैश्चामा साम्यैश्वासात्मकोपजाम् ॥२२॥
कृमिहृद्रोगवच्चापि कृमिजा साधयेद्वमीम।
वितरेच्च यथादोष प्रस्त विधिमनन्तरम् ॥२३॥
दधित्थरससयुक्ता पिप्पलीमाक्षिकान्विताम्।
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्य' प्रतिमुच्यते ॥२४॥
समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना।
तर्पण वा मधुयुत तिसृणामपि भेषजम ॥२५॥
स्वयङ्गुप्ता सयष्ट्याह्वा तण्डुलाम्बु मधुद्रवाम्।
पिबेद्यवागूमथवा सिद्धा पत्रै. कारञ्जजै: ॥२६॥

शुक्ताम्ललवणाः पिष्टाः कुसुम्भ्योऽथवा हिताः।
तण्डुलाम्बुयुत खादेत्कपित्थ तूषणेन वा ॥२७॥
सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ।
पिबेत्पयोऽग्नितप्तञ्च निर्वाप्य गृहगोधिकाम् ॥२८॥
सर्पिःक्षौद्रयुतान् वापि लाजशक्तून् पिबेत्तथा ।
सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा ॥२९॥
धात्रीरसे चन्दन वा शृतं मुद्गदलाम्बु वा ।
कोलामलकमज्जान लिह्याद्वा त्रिसुगन्धिकम् ॥३०॥
सक्षौद्रा शालिलाजाना यवागू वा पिबेन्नर. ।
श्रेयास्युपहरेच्चापि मनोघ्राणसुखानि च ॥३१॥
जाङ्गलानि च मांसानि स्वादुवन्त्यानकानि च ।
भोजनानि विचित्राणि कुर्य्यात्सर्वाण्यतन्द्रितः ॥३२॥

---

## पञ्चाशत्तमोऽध्यायः ।

अथातो हिक्काप्रतिषेध व्याख्यास्याम ।

विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ।
शीतपानासनस्थानरजोधूमानिलानलै ॥१॥
व्यायामकर्मभाराध्ववेगाघातापतर्पणै. ।
आमदोषाभिघातस्त्रीक्षयरोगप्रपीडनै. ॥२॥
विषमाशनाध्यशनैस्तथा संशमनैरपि ।
हिक्का श्वासश्च कासश्च नृणा समुपजायते ॥३॥
मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत्प्लीहान्त्राणि मुखादिवाक्षिपन् ।
सघोषवानाशु हिनस्त्यसून् यत-

स्ततस्तु हिक्केति भिषग्भिरुच्यते ॥४॥
अन्नजा यमला क्षुद्रा गम्भीरा महती तथा।
कफेनानुगतो वायुः पञ्च हिक्काः करोति हि ॥५॥
मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः।
पूर्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥६॥
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः।
हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥७॥
चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते।
कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्दिशेत् ॥८॥
विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात् प्रधाविता ॥९॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी।
शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ॥१०॥
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता।
मर्माण्यापीडयन्तीव सततं या प्रवर्त्तते ॥११॥
देहमायाम्य वेगेन घोषयत्यतितृष्यतः।
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥१२॥

आयम्यते हिक्कतोऽङ्गानि यस्य
दृष्टिश्चोर्द्ध्वं ताम्यते यस्य गाढम्।
क्षीणोऽन्नद्विट् कासते यश्च हिक्की
तौ द्वावन्त्यौ वर्जयेद्धिक्कमानौ ॥१३॥
प्राणायामोद्विजनत्रासनानि
सूचीतोदैः संभ्रमश्चात्र शस्तः।
यष्ट्याह्वं वा माक्षिकेणावपीडः

पिप्पल्यो वा शर्कराचूर्णयुक्ताः ॥१४॥
सर्पिः कोष्णं क्षीरमिक्षोरसो वा
नातिक्षीणे स्त्र सनं छर्दनञ्च ।
नारीपय पिष्टमशुक्तचन्दन
घृत सुखोष्णं च ससैन्धव तथा ॥१५॥
चूर्णीकृत सैन्धवमम्भसा तथा
निहन्ति हिक्काञ्च हितञ्च नस्यतः ।
युञ्ज्याद्धूपं शालनिर्य्यासजात
नैपालं वा गोविषाणोद्भव वा ॥१६॥
सर्पि.स्निग्धैः चर्मबालै कृतं वा
हिक्कास्थाने स्वेदन वापि कार्य्यम् ।
क्षौद्रोपेत गैरिकं काञ्चनाह्व
लिह्याद्भस्म ग्राम्यसत्वास्थिज वा ॥१७॥
तद्वच्छ्वाविच्छेषगोशल्यकानां
रोमाण्यन्तर्धूमदग्धानि चात्र ।
मध्वाज्याक्त बर्हिपत्रप्रसूत-
मेव भस्मौडुम्बर तैल्वक वा ॥१८॥
खर्जिसार बीजपूराद्रसेन
क्षौद्रोपेतं हन्ति लीढाशु हिक्काम् ।
सर्पिः सग्धा घ्नन्ति हिक्कां यवाग्वः
कोष्णश्वासा पायसो वा सुखोष्ण. ॥१९॥
शुण्ठीतोये साधितक्षीरमाज
तद्वत्पीत शर्करासयुत वा ।
माद्धसेवां सेव्यमान निहन्याद्

घ्रात्वा हिक्कामाशु मूत्रं त्वजाव्यो ॥२०॥
सपूतिकीटं लशुनोग्रगन्धा-
हिङ्गमाचूर्णं सुभावितन्तत्।
क्षौद्रं सिता वारणकेशरञ्च
पिबेद्रसेनेक्षुमधूकजेन ॥२१॥
पिबेत्पलं वा लवणोत्तमस्य
द्वाभ्यां पलाभ्यां हविषः समग्रम्।
हरीतकीं कोष्णजलानुपानां
पिबेद् घृतं क्षारमधुप्रपन्नम् ॥२२॥

रसङ्कपित्थान्मधुपिप्पलीभ्यां पिचुप्रमाणं प्रपिबेत् सुखाय ॥२३॥

कृष्णां सिता चामलकञ्च लीढं सशृङ्गवेरं मधुनाथवापि।
कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुना च लीढम् ॥२४॥

पाटलायाः फलं पुष्पं गैरिकं कटुरोहिणी।
खर्जूरमध्यं मागध्यः काश्मीर्य्यं दधि नाम च ॥२५॥
चत्वारो यूषयोगाः स्युः प्रतिपादप्रदर्शिताः।
मधुद्वितीया कर्त्तव्यास्ते हिक्कासु विजानता ॥२६॥

कपोतपारावतलावशल्यक-
श्वदंष्ट्रगोधाहृषदंशजान् रसान्।
पिबेत् फलाम्लानहिमान् ससैन्धवान्
स्निग्धांस्तथैवाम्बमृगद्विजोद्भवान् ॥२७॥
विरेचनं पथ्यतमं ससैन्धवं
घृतं सुखोष्णञ्च शितोपलायुतम्।

सदागतावूर्ध्वगतेऽनुवासन
वदन्ति केचिच्च हिताय हिक्किनाम् ॥२८॥

---

## एकपञ्चाशत्तमोऽध्याय ।

अथात श्वासप्रतिषेध व्याख्यास्याम ।

येरेव कारणैर्हिक्का बहुभि' सम्प्रवर्त्तते ।
तैरेव कारणै: श्वासो घोरो भवति देहिनाम ॥१॥
विहाय प्रकृति वायु प्राणोऽथ कफसयुत ।
श्वासयत्यूर्द्ध्वगो भूत्वा त श्वास परिचक्षते ॥२॥
क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्व पञ्चधा ।
भिद्यते स महाव्याधि श्वास एको विशेषत: ॥३॥
प्राग्रूप तस्य हृत्पीडा भक्तद्वेषोऽरति. परा ।
आनाह पार्श्वयो शूल वैरस्य' वदनस्य च ॥४॥
किञ्चिदारभमाणस्य यस्य श्वास. प्रवर्त्तते ।
निषसस्यैति शान्तिञ्च स क्षुद्र इतिसञ्ज्ञित: ॥५॥
दृट्स्वेदवमथुप्राय कण्ठघुर्घुरिकान्वित: ।
विशेषाद् दुर्द्दिने ताम्येच्छ्वास. स्यात्तमको मत: ॥६॥
घोषेण महताविष्ट. सकास. सकफो नर ।
य श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडित ॥७॥
स शाम्यति कफे हीने स्वपतश्च विवर्द्धते ।
मूर्च्छाज्वराभिभूतस्य ज्ञेय प्रतमकस्तु स ॥८॥
आध्मातो दह्यमानेन वस्तिना सरुजं नर: ।
सर्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नन्तमादिशेत् ॥९॥
नि.सञ्ज्ञ: पार्श्वशूलार्त्त, शुष्ककण्ठोऽतिघोषवान् ।

सरक्तनेत्रस्त्वायम्य य श्वस्यात् स महान् स्मृत. ॥१०॥
मर्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ।
ऊर्द्ध्वप्रेक्षी हतरवस्तमूर्द्ध्वश्वासमादिशेत् ॥११॥
क्षुद्र साध्यतमस्तेषा तमक कृच्छ्र उच्यते ।
त्रय श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥१२॥
स्नेहवस्तिं विना केचिदूर्द्ध्वञ्चाधश्च शोधनम् ।
मृदुप्राणवता श्रेष्ठ श्वासिनामादिशन्ति हि ॥१३॥
कासे श्वासे च हिक्काया हृद्रोगे चापि पूजितम् ।
घृत पुराणं ससिद्धमभयाविडरामठै ॥१४॥
सौवर्चलाभयाविल्वैः संस्कृत वा नव घृतम् ।
पिप्पल्यादिप्रतीवाप सिद्ध वा प्रथमे गणे ॥१५॥
सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ।
हिङ्ग्वाविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥१६॥
द्विक्षीरं साधित सर्पिश्चतुर्गुणजलान्वितम् ।
कोलमात्रं पिबेत्तद्धि श्वासकासौ व्यपोहति ॥१७॥
अर्शांस्यरोचक गुल्म शकृद्भेदं क्षय तथा ।
कृतस्त्रे वृषकषाये वा पचेत् सर्पिश्चतुर्गुणे ॥१८॥
तन्मूलकुसुमावापं शीत क्षौद्रेण योजयेत् ।
शृङ्गीमधुरिकाभार्गीशुण्ठीतार्क्ष्यसिताम्बुदैः ॥१९॥
सहरिद्रैः सयष्ट्याह्वैः समैरावाप्य योगतः ।
घृतप्रस्थ पचेद्धीमान् शीततोये चतुर्गुणे ।
श्वासहासस्तथा हिक्का सर्पिरेतन्नियच्छति ॥२०॥
सुवहाकालिकाभार्गीशुकाख्यानैचुलम्फलम् ।
काकादनीं शृङ्गवेरं वर्षाभू बृहतीद्वयम् ॥२१॥

कोलमात्रैर्घृतप्रस्थं पचेद्भिर्जलाढकैः ।
कदूष्णं पीतमेतद्धि श्वासामयविनाशनम् ॥२२॥
सौवर्चलयवक्षारकटुकाख्योषचित्रकैः ।
वचाभयाविडङ्गैश्च साधितं श्वासशान्तये ।
गोपवल्ल्युदके सिद्धं स्यादन्यद्दिगुणे घृतम् ॥२३॥
तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः ।
विल्वपुष्करपूतीकसौवर्चलकणाग्निभिः ॥२४॥
पथ्यातेजोवतीयुक्तं सर्पिर्जलचतुर्गुणम् ।
हिङ्गुपादयुतं सिद्धं सर्वश्वासहरम्परम् ॥२५॥
पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः ।
वासाघृतं षट्पलञ्च घृतं चात्र हितं भवेत् ॥२६॥
तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे ।
सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति ॥२७॥
फलाम्ला विष्किररसाः स्निग्धाः शव्यक्तसैन्धवाः ।
एणादीनां शिरोभिर्वा कौलत्था वा सुसंस्कृताः ॥२८॥
हन्युः श्वासञ्च कासञ्च सक्तानि पयांसि च ।
तिनिशस्य च बीजानि कर्कटाख्या सुवर्चिका ॥२९॥
दुरालभाथ पिप्पल्यः कटुकाख्या हरीतकी ।
श्वाविन्मयूररोमाणि कोला मागधिका कणाः ॥३०॥
भार्गीत्वक्शृङ्गवेरञ्च शर्कराशल्लकाङ्गजम् ।
त्रिकण्टकस्य बीजानि चूर्णितानि तु केवलम् ॥३१॥
पञ्चश्लोकार्द्धिकास्त्वेते लेहा ये सम्यगीरिताः ।
सर्पिर्मधुभ्यां ते लेह्याः काशश्वासार्दितैर्नरैः ॥३२॥
शणच्छदस्य पुष्पाणि पिप्पल्यश्चापि मस्तुना ।

पिबेत् संचूर्ण्य मधुना धानाश्चाप्यथ भक्षयेत् ॥३३॥
अर्काङ्कुरैर्भावितानां यवानां साध्वनेकशः ।
सर्पिषा वा पिबेदेषां सक्षौद्रं श्वासपीडितः ॥३४॥
शिरीषकदलीकुन्दपुष्पमागधिकायुतम् ।
तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥३५॥
कोलमज्जां तालमूलमृष्यचर्ममसीमपि ।
लिह्यात् क्षौद्रेण भार्गीं वा सर्पिर्मधुसमायुताम् ॥३६॥
निम्बे कदम्बबीजं वा सक्षौद्रं तण्डुलाम्बुना ॥३७॥
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम् ।
सर्पिर्मधुभ्यां विलिहन् हन्ति श्वासान् सुदारुणान् ॥३८॥
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम् ।
लिह्यात् तैलेन तुल्यानि श्वासार्त्तो हितभोजनः ॥३९॥
गवां पुरीषस्वरसं मधुमागधिकायुतम् ।
लेहः श्वासेषु कासेषु वाजिनां वा शकृद्रसः ॥४०॥
पाण्डुरोगेषु शोथेषु ये योगाः सम्प्रकीर्त्तिताः ।
श्वासकासापहास्तेऽपि कासघ्ना ये च कीर्त्तिताः ॥४१॥
भार्गीत्वक्लूषणं तैलं हरिद्रां कटुरोहिणीम् ।
पिप्पलीं मरिचं चण्डाङ्गीं शकृद्रसमेव च ॥४२॥
तलकोटस्य बीजेषु पचेदुत्कारिकां शुभाम् ।
सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान् ॥४३॥
पुराणसर्पिः पिप्पल्यः कौलत्थो जाङ्गलो रसः ।
सुरासौवीरकं हिङ्गु मातुलुङ्गरसो मधु ॥४४॥
द्राक्षामलकबिल्वानि शस्तानि श्वासहिक्किनाम् ।
श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत् ॥४५॥

युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितं कफं ।
स्वस्थो विलयनं याति मारुतश्चास्य शाम्यति ॥४६॥
स्निग्धं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनम ।
वातश्लेष्मविबन्धो वा भिषग्धूमं प्रयोजयेत् ॥४७॥
मनःशिलादेवदारुहरिद्राप्छदनामिषै ।
लाक्षोरुबूकमूलैश्च कृत्वा वर्त्तीर्विधानतः ॥४८॥
सर्पिर्नवमधूच्छिष्टशालनिर्यासजं तथा ।
शृङ्गवालखुरस्नायुत्वक्समस्तं गवामपि ॥४६॥
तुरुष्कशल्लकीनाञ्च गुग्गुलोः पद्मकस्य च ।
एते सर्वे ससर्पिष्का धूमाः कार्य्या विजानता ॥५०॥
बलीयसि कफग्रस्ते वमनं सविरेचनम ।
दुर्बले चैव रूक्षे च तर्पणं हितमुच्यते ।
जाङ्गलोरभ्रजैर्मांसैरानूपैर्वा सुसंस्कृतैः ॥५१॥

निदिग्धिकाश्चामलकप्रमाणा
हिङ्गुर्द्वियुक्ता मधुना सुयुक्ताम् ।
लिहन्नरः श्वासनिपीडितो हि
श्वासं जयत्येव बलात् त्र्यहेण ॥५२॥
यथाग्निरिद्धः खलु काष्ठसङ्घै-
र्वज्रं यथा वा सुरराजमुक्तम् ।
रोगास्तथैते खलु दुर्निवाराः
श्वासश्च कासश्च विलम्बिका च ॥५३॥

---

## द्विपञ्चाशत्तमोऽध्यायः।

अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः।
उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः।
कासस्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः ॥१॥
धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च।
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥२॥
प्राणो ह्युदानानुगतः प्रदुष्टः सम्भिन्नकांस्यस्वनतुल्यघोषः।
निरेति वक्त्रात् सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु ॥३॥
स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च।
पञ्चप्रकारः कथितो भिषग्भिर्विवर्धितो यक्ष्मविकारकृत् स्यात् ॥४॥
भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः।
स्वशब्दवैषम्यमरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि ॥५॥
हृच्छङ्खमूर्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः।
प्रसक्तवेगश्च समीरणेन कासेत् तु शुष्कं स्वरभेदयुक्तः ॥६॥
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः।
पित्तेन पीतानि वमेत्कटूनि कासेत्स पाण्डुः परिदह्यमानः ॥७॥
विलिप्यमानेन मुखेन सीदन् शिरोरुगार्त्तः कफपूर्णदेहः।
अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफं कफेन ॥८॥
वक्षोऽतिमात्रं विहतस्य यस्य व्यायामभाराध्ययनाभिघातैः।
विश्लिष्टवक्षाः स नरः सरक्तं ष्ठीवत्यभीक्ष्णं क्षतजः स उक्तः ॥९॥
अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः।

क्षतस्योर:क्षतं वायुर्गृहीत्वा कासमावहेत् ॥१०॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
कण्ठेन रुजतात्यर्थं विभिन्नेनैव चोरसा ॥११॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥१२॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ।
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ॥१३॥
घृणिना शोचतां नॄणां व्यापन्नेऽग्नौ त्रयो मला ।
कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम् ॥१४॥
स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी ।
शुष्यन् विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्
॥१५॥

तं सर्वलिङ्गं भृशदुश्चिकित्स्यं
चिकित्सितज्ञाः क्षयजं वदन्ति ।
वृद्धत्वमासाद्य भवत्यथो वै
याप्यन्तमाहुर्भिषजस्तु कासम् ॥१६॥

शृङ्गीवचाकट्फलकत्तृणाब्दधान्याभयाभार्ग्यमराह्वविश्वम् ।
उष्णाम्बुना हिङ्गुयुतं तु पीत्वा वदाम्यमप्याशु जहाति कासम्
॥१७॥

फलत्रिकव्योषविडङ्गशृङ्गीरास्नावचापद्मकदेवकाष्ठैः ।
लेहः समैः क्षौद्रसिताघृताक्तः कासं निहन्यादचिरादुदीर्णम्
॥१८॥

पथ्यां सितामामलकानि लाजां

समागधीञ्चापि विचूर्ण्य शुण्ठीम् ।
सर्पिर्मधुभ्यां विलिहीत कासी
ससैन्धवां वोष्णजलेन कृष्णाम् ॥१८॥
खादेद् गुडं नागरपिप्पलीभ्यां
द्राक्षाञ्च सर्पिर्मधुनावलिह्यात् ।
द्राक्षां सितां मागधिकाञ्च तुल्यां
सशृङ्गवेरं मधुकन्तुगाञ्च ॥२०॥
लिह्याद् घृतक्षौद्रयुतां समांशां
सितोपलां वा मरिचांशयुक्ताम् ।
धात्रीकणाविश्वसितोपलाश्च
सञ्चूर्ण्य मण्डेन पिबेच्च दध्नः ॥२१॥
हरेणुकां मागधिकाञ्च तुल्यां
दध्ना पिबेत् कासगदाभिभूतः ।
उभे हरिद्रे सुरदारुशुण्ठीं
गायत्रिसारञ्च पिबेत् समांशम् ॥२२॥
वस्तस्य मूत्रेण सुखाम्बुना वा
दन्तीं द्रवन्तीञ्च सतिल्वकांशाम् ।
भृष्टानि सर्पिष्यथ बादराणि
खादेत्पलांशानि ससैन्धवानि ॥२३॥
कोलप्रमाणं प्रपिबेद्धि हिङ्गु सौवीरकेणाम्लरसेन वापि ।
क्षौद्रेण लिह्यान्मरिचाणि वापि भार्गीवचाहिङ्गुकवाञ्च
वर्त्तिम् ॥२४॥
धूमे प्रशस्ता घृतसंप्रयुक्ता वेणुत्वगेलालवणैः क्षता च ।
मुस्तेङ्गुदीत्वङ्मधुकाश्वमांसीमनःशिलालैङ्गमलाम्बुपिष्टैः॥२५॥

विधाय वर्त्तीः सपयोऽनुपानं धूमं पिबेद्वातबलासकासी ।
पिबेच्च सीधु मरिचान्वितं वा तेनाशु कासं शममभ्युपैति ॥२६॥

द्राक्षाम्बुमञ्जिष्ठसुराह्वयाभिः
क्षीरं शृतं माक्षिकसम्प्रयुक्तम् ।
निदिग्धिकानागरपिप्पलीभिः
खादेच्च मुद्गान्मधुना सुसिद्धान् ॥२७॥
उत्कारिका सर्पिषि नागराढ्या
पक्वा समूलैस्त्रुटिकोलपत्रैः ।
एभिर्निषेवेत कृताश्च पेया
तन्वी सुशीता मधुना विमिश्राम् ॥२८॥

तत् क्षीरि सर्पिर्विहितं षडङ्गं तद्वातकासं जयति प्रसह्य ।
विदारिगन्धादिकृतं घृतं वा रसेन वा वासकजेन पक्वम् ॥२९॥
विरेचनं स्नैहिकमत्र चोक्तमास्थापनं चाप्यनुवासनञ्च ।
धूमं पिबेत् स्नैहिकमप्रमत्तः पिबेत् सुखोष्णं घृतमेव चात्र ॥३०॥

हिता यवाग्वश्च रसेषु सिद्धा पयांसि लेहाः सघृतास्तथैव ।
प्रच्छर्दनं कायशिरोविरेकास्तथैव धूमाः कवलग्रहाश्च ॥३१॥

उष्णाश्च लेहाः कटुकानि हन्युः
कफं विशेषेण विशोषणं वा ।
कटुत्रिकञ्चापि वदन्ति पथ्यं
घृतं कृमिघ्नस्वरसे विपक्वम् ॥३२॥
निर्गुण्डिपत्रस्वरसे च पक्वं
सर्पिः कफोत्थं विनिहन्ति कासम् ।

पाठाविडव्योषविडङ्गसिन्धु-
त्रिकण्टरास्नाहुतभुग्बलाभिः ॥३३॥
शृङ्गीवचाम्भोधरदेवदारु-
दुरालभाभार्गभयाशठीभिः ।
सर्पिर्विपक्वं द्विगुणेन सर्पि-
र्निर्दिग्धिकायाः स्वरसेन चैतत् ॥३४॥
श्वासाग्निसादस्वरभेदभिन्ना-
न्निहन्त्युदीर्णानपि पञ्च कासान् ।
विदारिगन्धोत्पलसारिवादीन्
निःक्वाथ्य वर्गान् मधुकञ्च कल्कम् ॥३५॥
घृतम्पचेदिक्षुरसाम्बुदुग्धे काकोलिवर्गे च सशर्करं तत् ।
प्रातः पिबेत् पित्तकृते च कासे रतिप्रसूते क्षयजे च कासे
॥३६॥
खर्जूरभार्गीमगधाप्रियालमधूलिकैलामलकैः समांशैः ।
चूर्णं सिताक्षौद्रघृतप्रगाढन्नीन् हन्ति कासानुपयुज्यमानम्
॥३७॥
रक्ता हरिद्राञ्जनवह्निपाठा-
मूर्वोपकुल्या विलिहेत् समांशाः ।
क्षौद्रेण कासे क्षतजे क्षयोत्थे
पिबेद्घृतं चेक्षुरसे विपक्वम् ॥३८॥
चूर्णं पिबेच्चामलकस्य वापि क्षीरेण पक्वं सघृतं हिताशी ।
चूर्णानि गोधूमयवोद्भवानि काकोलिवर्गश्च कृतः सुसूक्ष्मः
॥३९॥
कासेषु पेयस्त्रिषु कासवह्निः क्षीरेण सक्षौद्रघृतेन वापि ॥४०॥

गुडोदकं वा क्वथितं पिबेद्धि चौद्रेण शीतं मरिचोपदंशम ।
प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुडस्य ॥४१॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहवुषाजमोदैः ।
विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पिचुप्रमाणैः
॥४२॥
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद् यथावत् ।
तम्भक्षयेदचफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ॥४३॥
अनेन सर्वे ग्रहणीविकारा. सश्वासकासस्वरभेदशोषाः ।
शाम्यन्ति चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतु ॥४४
स्त्रीणाञ्च वन्ध्यामयनाशन. स्यात्
कल्याणको नाम गुड प्रतीतः ।
द्विपञ्चमूलेभकणाव्दशुण्ठा-
भार्गीशटीपुष्करमूलविश्वान् ॥४५॥
पाठामृताग्रन्थिकशङ्खपुष्पी-
रास्नाग्न्यपामार्गबलायवासान् ।
द्विपालिकांस्तस्य यवाढकञ्च
हरीतकीनाञ्च शत गुरूणाम् ॥४६॥
द्रोणे जलस्याढकसंयुते च क्वाथे कृते पूतचतुर्थभागे ।
पचेत् तुला शुद्धगुडस्य दत्त्वा पृथक् च तैलात् कुडवं घृताच्च
॥४७॥
चूर्णञ्च तावन्मगधोद्भवाया देयञ्च तस्मिन्मधुसिद्धशीते ।
रसायनात् कल्कमतो विलिह्याद् द्वे चाभये नित्यमथाश्च
हन्यात् ॥४८॥
तद्राजयक्ष्मग्रहणीप्रदोष-

शोफाग्निमान्द्यस्वरभेदकासान्।
पाण्ड्वामयश्वासशिरोविकारान्
हृद्रोगहिक्काविषमज्वरांश्च ॥४८॥
मेधाबलोत्साहमतिप्रदञ्च चकार चैतद्भगवानगस्त्यः।
कुलीरशृङ्गीचटकैणलावानि क्वाथ्य वर्गैर्मधुरैस्तथान्यैः ॥५१॥
पचेद् घृतं तत् तु निषेव्यमानं
हन्यात् क्षतोत्थं क्षयजञ्च कासम्।
शतावरीनागबलाबलाभि-
र्घृतं विधेयञ्चाहिताय कासिनाम् ॥५२॥

---

त्रिपञ्चाशत्तमोऽध्यायः।

अथातः स्वरभेदप्रतिषेधमध्याय व्याख्यास्यामः।
अत्युच्चभाषणविषाध्ययनाभिघात-
शीतादिभिः प्रकुपिताः पवनादयस्तु।
ते शब्दवाहिधमनीषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥१॥
वातेन कृष्णनयनाननमूत्रवर्चा
भिन्नं शनैर्वदति गर्दभवत् स्वरञ्च।
पित्तेन पीतवदनाक्षिपुरीषमूत्रो
ब्रूयाद्गलेन च विदाहसमन्वितेन ॥२॥
कृच्छ्रात् कफेन सततं कफरुद्धकण्ठो
मन्दं शनैर्वदति वापि दिवा विशेषात्।
सर्वात्मके भवति सर्वविकारसम्प-
द्व्यक्तता च वचसस्तमसाध्यमाहुः ॥३॥

धूप्येत वाक् स्वयकृते चयमाप्नुयाच्च
वागेष वापि हतवाक् परिवर्जनीय ।
अन्तर्गतस्वरमलच्यपदश्चिरेण
मेदोऽन्वयाद्वदति दिग्धगलौष्ठतालु ॥४॥
चीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजात ।
मेदस्विन सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥५॥
स्निग्धान् स्वरातुरनरानपकृष्टदोषान्
सयोजवेद्वमनरेचनवस्तिभिश्च ।
नस्यावपीडमुखधावनधूमलेहै:
सम्पादयेच्च विविधै. कवलग्रहैश्च ॥६॥
य. श्वासकासविधिरादित एव चोक्त-
स्तञ्चाप्यशेषमवतारयितु यतेत ।
वैशेषिकञ्च विधिमूर्द्धमतो वदामि
तद्वै स्वरातुरहित निखिल निबोध ॥७॥
स्वरोपघातेऽनिलजे भुक्तोपरि घृत पिबेत् ।
कासमर्दकवार्त्ताकमार्कवस्वरसैर्युतम् ॥८॥
पीत घृत हन्त्यनिल सिद्धमार्त्तगले रसे ।
यवक्षाराजमोदाभ्या चित्रकामलकेषु वा ॥९॥
देवदार्वग्निकाभ्या वा सिद्धमाज समाक्षिकम् ।
सुखोदकानुपानो वा ससर्पिष्को गुडौदन: ॥१०॥
चीरानुपान पित्ते तु पिबेत् सर्पिरतन्द्रित' ।
अश्नीयाच्च ससर्पिष्क यष्टीमधुकपायसम ॥११॥
लिह्यान्मधुरकाणा वा चूर्ण मधुघृताप्लुतम ।
शतावरीचूर्णयोग बलाचूर्णमथापि वा ॥१२॥

पिबेत् कटूनि मूत्रेण कफजे स्वरसङ्क्षये ।
जिह्वाद्रा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि च ॥१३॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।
सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम् ॥१४॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥१५॥

---

चतुःपञ्चाशत्तमोऽध्यायः ।

अथातः क्रिमिरोगप्रतिषेधमध्यायं व्याख्यास्यामः ।
अजीर्णाध्यशनासात्म्यविरुद्धमलिनाशनैः ।
अव्यायामदिवास्वप्नगुर्वतिस्निग्धशीतलैः ॥१॥
माषपिष्टान्नविदलविसशालूकसेरुकैः ।
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ॥२॥
पललानूपपिशितपिण्याकपृथुकादिभिः ।
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति ॥३॥
क्रिमीन् बहुविधाकारान् करोति विविधाश्रयान् ।
आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः ॥४॥
विंशतेः क्रिमिजातीनां त्रिविधः सम्भवः स्मृतः ।
पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम् ॥५॥
अजवा विजवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः ॥६॥
श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ।
तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥७॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसङ्क्षयाः ।

प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजे ॥८॥
रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ।
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥९॥
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥१०॥
रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः ।
रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥११॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ।
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥१२॥
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ।
कुष्ठजाश्च परीसर्पा ज्ञेयाः शोणितसम्भवाः ॥१३॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ।
रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते ॥१४॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ।
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥१५॥
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम् ॥१६॥
दृश्यास्त्रयोदशाद्यास्तु क्रिमीणां परिकीर्त्तिताः ।
केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ॥१७॥
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम् ।
सुरसादिविपक्वेन सर्पिषा वान्तमादितः ॥१८॥
विरेचयेत्तीक्ष्णतरैर्योगैरास्थापयेच्च तम् ॥१९॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ।

विडङ्गस्नेहयुक्तेन क्वाथेन लवणेन च ॥२०॥
प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना।
युञ्ज्यात् क्रिमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥२१॥
स्नेहेनोक्तेन चैनन्तु योजयेत् स्नेहवस्तिना।
ततः शिरीषकिणिहीरसं चौद्रयुतं पिबेत्।
केवूकस्वरसं वापि पूर्ववच्चोक्तभोजनं ॥२२॥
पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना।
पारिभद्रकपत्राणां चौद्रेण स्वरसं पिबेत् ॥२३॥
धत्तूरस्वरसं वापि पिबेद्वा सुरसादिजम्।
लिह्याद्विडङ्गचूर्णं वा समाक्षिकम् ॥२४॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः।
खादेत् पूपालिकान् पक्वान् धान्याम्लञ्च पिबेदनु ॥२५॥
सुरसादिगणे तैलं पक्वं वा पानमिष्यते।
विडङ्गचूर्णपिष्टाभ्यां तस्मिन् भक्ष्यन्तु कारयेत् ॥२६॥
तत्कषायप्रपीतानां तिलानां स्नेहमेव वा।
श्वाविधः शल्लकस्य चूर्णं सप्तकृत्वः सुभावितम् ॥२७॥
विडङ्गानां कषायेण त्रैफलेन तथैव च।
चौद्रेण लिह्यादनुपिबेद्रसमामलकोद्भवम् ॥२८॥
अश्वाभयारसश्चापि विधिरेषोऽयसामपि।
पूतीकस्वरसं वापि पिबेद्वा मधुना सह ॥२९॥
पिबेद्वा पिप्पलीमूलमजामूत्रेण संयुतम्।
सप्तरात्रं पिबेद् घृष्टत्रपु वा दधिमस्तुना ॥३०॥
पुरीषजान् कफोत्थांश्च हन्यादेवं क्रमीन् भिषक् ॥३१॥
शिरोहृद्घ्राणवक्त्राक्षिसंसृताश्च पृथग्विधान्।

विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥२२॥
शक्रद्रसन्तु रक्तस्य सुशुष्कं भावयेदिति।
नि क्वाथेन विडङ्गानां चूर्णं प्रधमनन्तु तत् ॥२३॥
अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक्।
सकास्यनील तैलञ्च नस्य स्यात्सुरसादिके ॥२४॥
इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु।
दन्तादानां समुद्दिष्टं विधानं मुखरोगिकम् ॥२५॥
रक्तजानां समुद्दिष्टं कुर्य्यात् कुष्ठचिकित्सिते।
सुरसादिन्तु सर्वेषु सर्वथैवोपयोजयेत ॥२६॥
अव्यक्ततिक्तकटुकं भोजनञ्च हितं भवेत्।
कुलत्थक्वाथसंसृष्टं क्षीरपानञ्च पूजितम् ॥२७॥

क्षीराणि मांसानि घृतानि चैव
दधीनि शाकानि च पर्णवन्ति।
समासतोऽम्लान्मधुरान् हिमांश्च
क्रमीन् जिघांसुः परिवर्जयेत् तु ॥२८॥

---

## पञ्चपञ्चाशत्तमोऽध्यायः।

अथात उदावर्त्तप्रतिषेधमध्यायं व्याख्यास्यामः।
अधश्चोर्द्ध्वञ्च भावानां प्रवृत्तानां स्वभावतः।
न वेगान् धारयेत् प्राज्ञो वातादीनां जिजीविषुः ॥१॥
वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः।
व्याहन्यमानैरुदितैरुदावर्त्तो निरुच्यते ॥२॥
क्षुत्तृष्णाश्वासनिद्राणामुदावर्त्तो विधारणात्।
तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितम् ॥३॥

त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः ।
अपथ्यभोजनाच्चापि वक्ष्येत च यथापरः ॥४॥

आध्मानशूलौ हृदयोपरोधं
शिरोरुजं श्वासमतीव हिक्काम् ।
कासप्रतिश्यायगलग्रहांश्च
बलासपित्तप्रसरञ्च घोरम् ॥५॥
कुर्य्यादपानाभिहतः स्वमार्गे
हन्यात् पुरीषं मुखतः क्षिपेद्वा ।
आटोपशूलौ परिकर्त्तनञ्च
सङ्गं पुरीषस्य तथोर्द्ध्ववातः ॥६॥
पुरीषमास्यादपि वा निरेति
पुरीषवेगेऽभिहते नरस्य ।
मूत्रस्य वेगेऽभिहते नरस्तु
कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् ॥७॥
मेढ्रे गुदे वङ्क्षणमुष्कयोश्च
नाभिप्रदेशेष्वथवापि मूर्ध्नि ।
आनद्धवस्तिश्च भवन्ति तीव्राः
शूलाश्च शूलैरिव भिन्नमूर्त्तेः ॥८॥
मन्यागलस्तम्भशिरोविकारा
जृम्भोपघातात् पवनात्मकाः स्युः ।
श्रोत्राननघ्राणविलोचनोत्था
भवन्ति तीव्राश्च तथा विकाराः ॥९॥
आनन्दजं शोकसमुद्भवं वा
नेत्रोदकं प्राप्तममुञ्चतो हि ।

शिरोगुरुत्वं नयनामयाश्च
भवन्ति तीव्राः सह पीनसेन ॥१०॥
भवन्ति गाढ़ं क्षवथोर्विघाता-
च्छिरोऽक्षिनासाश्रवणेषु रोगाः।
कण्ठास्यपूर्णत्वमतीव तोदः
कूजश्च वायोरथवा प्रवृत्तिः ॥११॥
उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः।
छर्द्दिर्विघातेन भवेच्च कुष्ठं येनैव दोषेण विदग्धमन्नम् ॥१२॥
मूत्राशये वा गुदमुष्कयोश्च
शोफो रुजा मूत्रविनिग्रहश्च।
शुक्राश्मरी तत्स्रवणं भवेद्वा
ते ते विकारा विहते तु शुक्रे ॥१३॥
तन्द्राङ्गमर्दावरुचिः श्रमश्च
क्षुधोऽभिघातात् कृशता च दृष्टेः।
कण्ठास्यशोषः श्रवणावरोध-
स्तृष्णाभिघाताद्धृदये व्यथा च ॥१४॥
श्रान्तस्य निःश्वासविनिग्रहेण
हृद्रोगमोहावथवापि गुल्मः।
जृम्भाङ्गमर्दोऽङ्गशिरोऽक्षिजाड्यं
निद्राभिघातादथवापि तन्द्रा ॥१५॥
तृष्णार्द्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम्।
शकृद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥१६॥
सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः।
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥१७॥

सामान्यत पृथक्त्वेन क्रिया भूयो निबोध मे ।
आस्थापन मारुतजे स्निग्धे स्विन्ने विशिष्यते ।१८॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत् ।
सौवर्चकाढ्या मदिरा मूत्रे त्वभिहते पिबेत् ॥१९॥
एलामप्यथ मद्येन चीर वापि पिबेन्नर ।
धात्रीफलाना स्वरस सजल वा पिबेत् व्यहम् ॥२०॥
रसमश्वपुरीषस्य गर्दभस्याथवा पिबेत् ।
मासोपदग्ध मधु वा पिबेद्वा सीधु गौडिकम् ॥२१॥
भद्रदारुघन मूर्वा हरिद्रामधुक तथा ।
कोलप्रमाणानि पिबेदान्तरिक्षेण वारिणा ॥२२॥
दुष्पर्शास्वरस वापि कषाय कुङ्कुमस्य च ।
एर्वारुवीज तोयेन पिबेद्वा लवणीकृतम् ॥२३॥
पञ्चमूलीशृत चीर द्राचारसमथापि वा ।
योगाश्च वितरेत् तत्र पूर्वोक्तानश्मरीभिद: ॥२४॥
मूत्रकृच्छ्रक्रम वापि कुर्य्यान्निरवशेषत: ।
भूयो वक्ष्यामि योगाश्च मूत्राघातोपशान्तये ॥२५॥
स्नेहस्वेदैरुदावर्त्त जृम्भाज समुपाचरेत् ।
अश्रुमोचोऽश्रुजे कार्य्य स्निग्धस्विन्नस्य देहिन. ॥२६॥
तीक्ष्णाञ्जनावपीडाभ्या तीक्ष्णगन्धोपसिंहनै: ।
वर्त्तिप्रयोगैरथवा चवशक्तिं प्रवर्त्तयेत् ॥२७॥
तीक्ष्णौषधप्रधमनैरथवादित्यरश्मिभि ।
उद्गारजे क्रमोपेत स्नैहिक धूममाचरेत् ॥२८॥
सुरां सौवर्चलवतीं वीजपूर्णरसान्विताम् ।
छर्द्याघात यथादोषं सम्यक् स्नेहादिभिर्जयेत् ॥२९॥

क्षारलवणोपेतमभ्यङ्गं वात्र दापयेत्।
वस्तिशुद्धिकरावापश्चतुर्गुणजलम्पयः ॥३०॥
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥३१॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम्।
तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥३२॥
भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः।
निद्राघाते पिबेत् क्षीरं स्वप्याच्चेष्टकथारतः ॥३३॥
आध्मानोत्थेषु रोगेषु यथास्वं प्रयतेत हि।
यच्च यस्मिन् भवेत् प्राप्तं तच्च तस्मिन् प्रयोजयेत् ॥३४॥
वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः।
भोजनैः कुपितः सद्य उदावर्त्तं करोति हि ॥३५॥
वातमूत्रपुरीषासृक्कफमेदोवहानि वै।
स्रोतांस्युदावर्त्तयति पुरीषं चातिवर्त्तयेत् ॥३६॥
ततो हृद्वस्तिशूलार्त्तो गौरवारुचिपीडितः।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥३७॥
श्वासकासप्रतिश्यायदाहमोहवमिज्वरान्।
तृष्णाहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥३८॥
लभते च बहूनन्यान् विकारान् वातकोपजान्।
तत्तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् ॥३९॥
दोषतो भिन्नवर्चस्कं भुक्तं चाप्यनुवासयेत्।
न चेच्छान्तिं प्रयात्येवमुदावर्त्तः सुदारुणः ॥४०॥
अथैनं बहुशः स्विन्नं युञ्ज्यात् स्नेहविरेचनैः।
पाययेत त्रिवृत्पीलुयवानीरसपानकैः ॥४१॥

हिङ्गुकुष्ठवचास्वर्जिविडङ्गं वा द्विरुत्तरम् ।
योगावेतावुदावर्त्तं शूलञ्चापि नियच्छतः ॥४२॥
देवदार्वग्निकं कुष्ठं वचाम्मथ्या पलङ्कषाम् ।
पौष्कराणि च मूलानि तोयस्याद्धाढकं पचेत् ।
पदावशिष्टं तत् पीतमुदावर्त्तं व्यपोहति ॥४३॥
मूलकं शुष्कमार्द्रञ्च वर्षाभूं पञ्चमूलकम् ।
आरेवतफलञ्चाप्सु पक्त्वा तेन घृतं पचेत् ।
तत्पीयमानं शमयेदुदावर्त्तमशेषतः ॥४४॥
वचामतिविषां कुष्ठं यवक्षारं हरीतकीम् ।
कृष्णां निर्दहनीञ्चापि पिबेदुष्णेन वारिणा ॥४५॥
इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचाम् ।
कुष्ठं किण्वाग्निकौ चापि पिबेत् तुल्यानि पूर्ववत् ॥४६॥
मूत्रेण देवदार्वग्नित्रिफलाबृहतीः पिबेत् ॥४७॥
यवपस्थ फलैः सार्द्धङ्कण्टकार्य्या जलाढके ।
पक्त्वार्द्धं प्रस्थशेषन्तु पिबेद्धिङ्गुसमन्वितम् ॥४८॥
मदनालावुबीजानि पिप्पलीं सनिदिग्धिकाम् ।
सञ्चूर्ण्यं प्रधमेन्नाड्या विशल्ये तद्यथागुदम् ॥४९॥
चूर्णं निकुम्भकम्पिल्लश्यामेक्ष्वाकाग्निकोद्भवम् ।
कृतवेधनमागध्यो लवणानाञ्च साधयेत् ॥५०॥
गवां मूत्रेण तां वर्त्तिं कारयेत् तु गुदानुगाः ।
सद्यः शर्मकरावेतौ योगावमृतसम्भवौ ॥५१॥

—o—

षट्पञ्चाशत्तमोऽध्यायः ।

अथातो विसूचिकाप्रतिषेधमध्याय व्याख्यास्यामः ।

अजीर्णमाम विष्टब्धं विदग्धञ्च यदीरितम् ।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥१॥

सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैरुच्यते तु विसूचिका ॥२॥

न ता परिमिताहारा लभन्ते विदितागमाः ।
मूढ़ास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥३॥

मूर्च्छातिसारौ वमथुः पिपासा
शूल भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च
भवन्ति तस्यां शिरसश्च भेदः ॥४॥

कुक्षिरानह्यतेऽत्यर्थन्तान्यत्यर्थञ्च कूजति ।
निरुद्धो मारुतश्चापि कुक्षावुपरि धावति ॥५॥

वातवर्चोनिरोधश्च कुक्षौ यस्य भृशम्भवेत् ।
तस्यालसकमाचष्टे हिक्कोद्गारौ तु यस्य तु ॥६॥

दुष्टन्तु भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्ध्वमधश्च यस्य ।
विलम्बिका तस्य विवर्जनीयामाचक्षते शास्त्रविदः पुराणाः ॥७॥

यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावतत स्वलिङ्गैस्तं लक्षयेदामसमुद्भवैश्च ॥८॥

यः श्यावदन्तौष्ठनखोऽल्पसञ्ज्ञ-
श्छर्द्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसन्धि-

यायान्नरोऽसौ पुनरागमाय ॥९॥
साध्यासु पार्ष्णोर्दहनं प्रशस्त-
मग्निप्रतापो वमनञ्च तीक्ष्णम।
पक्वे ततोऽन्ने तु विलङ्घन स्यात्
सम्पाचनं चापि विरेचन वा ॥१०॥
विशुद्धदेहस्य हि सद्य एव
मूर्च्छातिसारादिरुपैति शान्तिम्।
आस्थापन चापि वदन्ति पथ्यं
सर्वासु योगानपरान्निबोध ॥११॥
पथ्यावचाहिङ्गुकलिङ्गगन्धसौवर्चलैः सातिविषैश्च चूर्णम्।
सुखाम्बुपीत विनिहन्त्यजीर्णं शूल विसूचीमरुचिञ्च सद्यः
॥१२॥
क्षारागद वा लवण विड वा गुडप्रगाढानथ सर्षपान् वा।
अम्लेन वा सैन्धवहिङ्गुयुक्तौ सवीजपूर्णौ सघृतौ त्रिवर्गौ ॥१३
कर्टुत्रिक वा लवणैरुपेत पिबेत् स्नुहीक्षीरविमिश्रित तु।
कल्याणक वा लवण पिबेत् तु यदुक्तमादावनिलामयेषु ॥१४
कृष्णाजमोदत्त्वक्षाणि वापि
तुल्यौ पिबेद्वा मगधाग्निकुम्भौ।
दन्तीयुत वा मगधोद्भवानां
कल्क पिबेत् कोषवतीरसेन ॥१५॥
उष्णाभिरद्भिर्मगधोद्भवाना
कल्क पिबेन्नागरकल्कयुक्तम्।
व्योष करञ्जस्य फल हरिद्रे
मूल सम वाप्यथ मातुलुङ्गयाः ॥१६॥

छायाविशुष्का गुटिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥ १७॥
सुवामित साधुविरेचित वा
सुलङ्घित वा मनुज विदित्वा।
पेयादिभिर्दीपनपाचनीयै
सम्यक् क्षुधार्त्तं समुपक्रमेत ।१८॥
आम शकृद्वा निचितं क्रमेण
भूयो विबद्ध विगुणानिलेन।
प्रवर्त्तमान न यथास्वमेन
विकारमानाहमुदाहरन्ति ॥१९॥
तस्मिन् भवत्यामसमुद्भवे तु
तृष्णाप्रतिश्यायशिरोविदाहा.।
आमाशये शूलमथो गुरुत्व
हृल्लास उद्गारविघातनञ्च ॥२०॥
स्तम्भ कटीपृष्ठपुरीषमूत्रे
शूलोऽथ मूर्च्छा च शकृद्वमिश्च।
श्वासश्च पक्वाशयजे भवन्ति
लिङ्गानि चात्रालसकोद्भवानि ॥२१॥
आमोद्भवे वातमुपक्रमेत
संसर्गभक्तक्रमदीपनीयै ।
अथेतर यो न शकृद्वमेत् त-
माम जयेत् स्वेदनपाचनैश्च ॥२२॥
विसूचिकाया परिकीर्त्तितानि
द्रव्याणि वैरेचनिकानि यानि।

तान्येव वर्त्तीर्वितरेद्विचूर्ण्य
मह्यिष्यजावीभगवा तु मूत्रे ॥२३॥
स्विन्नस्य पायौ विनिवेश्य ताश्च
चूर्णानि चैषां प्रधमेत्तु नाड्या ॥२४॥
मूत्रेण संसाध्य यथाविधानं द्रव्याणि यान्यूर्द्ध्वमधश्च यान्ति।
क्वाथेन तेनाशु निरूहयेच्च मूत्रार्द्धयुक्तेन समाक्षिकेण ॥२५॥
त्रिभण्डियुक्तं लवणप्रकुञ्चं दत्त्वा विरिक्तक्रममाचरेच्च।
एष्वेव तैलेन च साधितेन प्राप्तं यदि स्यादनुवासयेच्च ॥२६॥

---

सप्तपञ्चाशत्तमोऽध्यायः।

अथातोऽरोचकप्रतिषेधमध्यायं व्याख्यास्यामः।

दोषैः पृथक् सह च चित्तविपर्य्ययाच्च
भक्तायनेषु हृदि चावतते प्रगाढम्।
नान्ने रुचिर्भवति तं भिषजो विकारं
भक्तोपघातमिह पञ्चविधं वदन्ति ॥१॥
हृच्छूलपीडनयुतं विरसाननत्वं
वातात्मके भवति लिङ्गमरोचके तु।
हृद्दाहचोषबहुता मुखतिक्तता च
मूर्च्छा सतृड् भवति पित्तकृते तथैव ॥२॥
कण्डूगुरुत्वकफसंस्रवसादतन्द्राः
श्लेष्मात्मके मधुरमास्यमरोचके तु।
सर्वात्मके पवनपित्तकफा बहूनि
रूपाण्यथास्य हृदये समुदीरयन्ति ॥३॥
सरागशोकभयविप्लुतचेतसस्तु

चिन्ताकृतो भवति सोऽशुचिदर्शनाच्च ।
वाते वचाम्बुवमनं कृतवान् पिबेच्च
स्नेहैः सुराभिरथवोष्णजलेन चूर्णम् ॥४॥
कृष्णाविडङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ।
पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं
स्नेहः ससैन्धवसितामधुसर्पिरिष्टः ॥५॥
निम्बाम्बु वामितवतः कफजेऽनुपानं
राजद्रुमाम्बु मधुना तु सदीप्यकं स्यात् ।
चूर्णं यदुक्तमथवानिलजे तदेव
सर्वैश्च सर्वकृतमेवमुपक्रमेत ॥६॥
द्राक्षापटोलविडवेत्रकरीरनिम्ब-
मूर्वाभयाक्षवदरामलकेन्द्रवृक्षैः ।
वीजैः करञ्जनृपवृक्षभवैश्च पिष्टै-
र्लेहं पचेत् सुरभिमूत्रयुतं यथावत् ॥७॥
मुस्ता वचा त्रिकटुकं रजनीद्वयञ्च
भार्गीञ्च कुष्ठमथ निर्दहनीञ्च पिष्ट्वा ।
मूत्रेऽविजे द्विरदमूत्रयुते पचेद्वा
पाठाम्गुगामतिविषां रजनीञ्च मुख्याम् ॥८॥
मण्डूकिमर्कममृताञ्च सलाङ्गलाख्यां
मूत्रे पचेत्तु महिषस्य विधानविद्वा ।
एतांश्च सन्ति चतुरो लिहतस्तु लेहान्
गुल्मारुचिश्वसनकण्ठहृदामयाश्च ॥९॥
साम्प्रान् स्वदेशरचितान् विविधांश्च भक्ष्यान्

पानानि मूलफलषाडवरागयोगान् ।
अद्यादृसांश्च विविधान् विविधैः प्रकारै-
र्भुञ्जीत वापि लघुरुचमन सुखानि ॥१०॥
आस्थापन विधिवदत्र विरेचनञ्च
कुर्य्यान्मृदूनि शिरसश्च विरेचनानि ।
त्रीण्यूषणानि रजनीत्रिफलायुतानि
चूर्णीकृतानि यवशूकविमिश्रितानि ॥११॥
चौद्रायुतानि वितरेन्मुखधावनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ।
मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः
क्वाथैर्जयेन्मधुयुतैर्विविधैश्च लेहैः ॥१२॥
मूत्रासवैर्गुडकृतैश्च तथा त्वरिष्टैः
चारासवैश्च मधुमाधवतुल्यगन्धैः ।
स्यादेष एव कफवातहते विधिश्च
शान्ति गते हुतभुजि प्रशमाय तस्य ॥१३॥
इच्छाभिघातभयशोकहृतेऽन्तरग्नौ
भावान् भवाय वितरेत् खलु शक्यरूपान् ।
अर्थेषु चाप्यपचितेषु पुनर्भवाय
पौराणिकैः श्रुतिपथैरनुमानयेत्तम् ॥१४॥
दैन्य गते मनसि बोधनमत्र शस्तं
यद्यत् प्रिय तदुपसेव्यमरोचके तु ॥१५॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ।

अथातो मूत्राघातप्रतिषेधमध्यायं व्याख्यास्यामः ।

वातकुण्डलिकाष्ठीला वातवस्तिस्तथैव च ।
मूत्रातीतः सजठरो मूत्रोत्सङ्गः क्षयस्तथा ॥१॥
मूत्रग्रन्थिर्मूत्रशुक्रमुष्णवातस्तथैव च ।
मूत्रौकसादौ द्वौ चापि रोगा द्वादश कीर्त्तिताः ॥२॥
रौच्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनम् ।
मूत्रं सगृह्य चरति विगुणः कुण्डलीकृतः ॥३॥
सृजेदल्पाल्पमथवा सरुजस्कं शनैः शनैः ।
वातकुण्डलिकां तान्तु व्याधिं विद्यात् सुदारुणम् ॥४॥
शकृन्मार्गस्य वस्तेश्च वायुरन्तरमाश्रितः ।
अष्ठीलावद्घनं ग्रन्थिं करोत्यचलमुन्नतम् ॥५॥
विण्मूत्रानिलसङ्गश्च तत्राध्मानञ्च जायते ।
वेदना जायते वस्तौ वाताष्ठीलेति तां विदुः ॥६॥
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥७॥
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः ।
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥८॥
सन्धार्य्य वेगं मूत्रस्य यो भूयः स्रष्टुमिच्छति ।
तस्य नाभ्येति यदि वा कथञ्चित्सम्प्रवर्त्तते ॥९॥
प्रवाहतो मन्दरुजमल्पमल्पं पुनः पुनः ।
मूत्रातीतन्तु तं विद्यान्मूत्रवेगविघातजम् ॥१०॥
मूत्रस्य विहते वेगे तदुदावर्त्तहेतुना ।
अपानः कुपितो वायुरुदरं पूरयेद् भृशम् ॥११॥

नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ।
त मूत्रजठरं विद्यादधोवस्तिनिरोधजम् ॥१२॥
वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिन ।
मूत्र प्रवृत्त सज्येत सरक्तं वा प्रवाहत ॥१३॥
स्रवेच्छनैरल्पमल्प सरुजं वाथ नीरुजम् ।
विगुणानिलजो व्याधिर्मूत्रसङ्ग. स सज्ञित: ॥१४॥
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ।
सदाहवेदनं कृच्छ्रं कुर्य्यातां मूत्रसञ्चयम् ॥१५॥
अभ्यन्तरे वस्तिमुखे वृत्तोऽल्प स्थिर एव च ।
वेदनावानतिस्यन्दी मूत्रमार्गनिरोधन: ॥१६॥
जायते सहसा यस्य ग्रन्थिरश्मरिलक्षण. ।
स मूत्रग्रन्थिरित्येवमुच्यते वेदनादिभि ॥१७॥
प्रत्युपस्थितमूत्रस्तु मैथुन योऽभिनन्दति ।
तस्य मूत्रयुत रेत सहसा सम्प्रवर्त्तते ॥१८॥
पुरस्तादापि मूत्रस्य पश्चादापि कदाचन ।
भस्मोदकप्रतीकाश मूत्रशुक्रन्तदुच्यते ॥१९॥
व्यायामाध्वातपै पित्त वस्तिं प्राप्यानिलाहृतम् ।
वस्तिमेढ्रगुदञ्चैव प्रदहन् स्रावयेदध: ॥२०॥
मूत्र हारिद्रमथवा सरक्त रक्तमेव वा ।
कृच्छ्रात् प्रवर्त्तते जन्तोरुष्णवात वदन्ति तम् ॥२१॥
विशद पीतक मूत्रं सदाहं बहुलन्तथा ।
शुष्कं भवति यच्चापि रोचनाचूर्णसन्निभम् ॥२२॥
मूत्रौकसादं त विद्याद्रोगं पित्तकृत बुध: ॥२३॥
शुष्कं भवति यच्चापि शङ्खचूर्णप्रपाण्डुरम् ।

पिच्छिलं सहतं श्वेतं तथा कृच्छ्रं प्रवर्त्तते ॥२४॥
मूत्रौकसादं तं विद्यादामयं चापरं कफात् ॥२५॥
कषायकल्कसर्पींषि भक्ष्यान् लेहान् पयांसि च।
क्षारमध्वासवस्वेदान् वस्तींश्चोत्तरसञ्ज्ञितान् ॥२६॥
विदध्यान्मतिमांस्तत्र विधिंश्चाश्मरिनाशनम।
मूत्रोदावर्त्तयोगांश्च कात्र्स्न्येनात्र प्रयोजयेत् ॥२७॥
कल्कमेर्वारुवीजानामक्षमात्रं ससैन्धवम।
धान्याम्लयुक्तं पीत्वैव मूत्रकृच्छ्रात् प्रमुच्यते ॥२८॥
सुरां सौवर्चलवतीं मूत्रकृच्छ्री पिबेन्नरः।
मधुमासोपदंशं वा पिबेद्वाप्यथ गौडिकम् ॥२९॥
पिबेत् कुङ्कुमकर्षं वा मधूदकसमायुतम।
रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयात् ॥३०॥
दाडिमाम्लयुतां मुख्यामेलाजीरकनागरैः।
पीत्वा सुरां सुलवणां मूत्रकृच्छ्रात् प्रमुच्यते ॥३१॥
पृथक्पर्ण्यादिवर्गस्य मूलं गोक्षुरकस्य च।
अर्द्धप्रस्थेन तोयस्य पचेत् क्षीरं चतुर्गुणम् ॥३२॥
क्षीरावशिष्टं तच्छीतं सिताक्षौद्रयुतं पिबेत्।
नरो मारुतपित्तोत्थं मूत्राघातनिवारणम् ॥३३॥
पिष्पीड्य वाससा सम्यग्वर्चो रासभवाजिनाम्।
रसस्य कुडवन्तस्य पिबेन्मूत्ररुजापहम ॥३४॥
मुस्ताभयादेवदारुमूर्वाणां मधुकस्य च।
पिबेदक्षसमं कल्कं द्राक्षाया जलसंयुतम् ॥३५॥
पिबेत् पर्य्युषितं वारि शीतं मूत्ररुजापहम।
निदिग्धिकायाः स्वरसं पिबेत् कुडवसम्मितम् ॥३६॥

मूत्रदोषहरं कल्कमथवा चौद्रसंयुतम् ।
अपीड्यामलकानान्तु रसं कुडवसम्मितम ।
पीत्वागदी भवेज्जन्तुर्मूत्रदोषरुजातुरः ॥३७॥
धात्रीफलरसेनैव सूक्ष्मैला वा पिबेन्नरः ।
पिष्टाथवा सुधौतेन शालितण्डुलवारिणा ॥३८॥
तालस्य तरुणं मूलन्त्रपुसस्वरसन्तथा ।
श्वेतं कर्कटकञ्चैव प्रातस्तं पयसा पिबेत् ॥३९॥
शृतं वा मधुरैः चीरं सर्पिर्मिश्रं पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरं परम् ॥४०॥
बलाश्वदंष्ट्राक्रौञ्चास्थिकोकिलाचकतण्डुलान् ।
शतपर्वकमूलञ्च देवदारुसचित्रकम ॥४१॥
अत्तवीजञ्च सुरया कल्कीकृत्य पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं तथैवाश्मरिशोधनम् ॥४२॥
पाटलाचारमाहृत्य सप्तकृत्वः परिस्रुतम् ।
पिबेन्मूत्रविकारघ्नं संसृष्टं तैलमात्रया ॥४३॥
नलेक्षुदर्भाश्मभेदत्रपुसैर्वारुबीजकम् ।
क्षीरे परिस्रुतं तत्र पिबेत् सर्पिः समायुतम् ॥४४॥
पाटल्या यावशूकाच्च पारिभद्रात्तिलादपि ।
चारोदकेन मतिमान् त्वगेलोषणचूर्णकम् ॥४५॥
पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक् ।
अत ऊर्द्धं प्रवक्ष्यामि मूत्रदोषे क्रमं हितम् ॥४६॥
स्नेहस्वेदोपपन्नानां हितन्तेषु विरेचनम् ।
ततः सुशुद्धदेहानां हितश्चोत्तरवस्तयः ॥४७॥
स्त्रीणामतिप्रसङ्गेन शोणितं च्यवते स्त्रि।

मैथुनोपरमस्तस्य बृंहणश्च विधिः स्मृतः ॥४८॥
ताम्रचूडवसातैलं हितञ्चोत्तरवस्तिषु।
विधानं तस्य पूर्वं हि व्यासतः परिकीर्त्तितम् ॥४९॥
क्षौद्रार्द्धपात्रं दत्त्वा तु पात्रन्तु क्षीरसर्पिषोः।
स्वयङ्गुप्ताफलञ्चैव तथैव क्षुरकस्य च।
पिप्पलीचूर्णसंयुक्तमर्द्धभागं प्रदापयेत् ॥५०॥
एतद्वैकध्यमानीय खजेनाभिप्रमन्थयेत्।
तस्य पाणितलं चूर्णं लीढ़ा क्षीरं ततः पिबेत् ॥५१॥
एतत् सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा।
मूत्रदोषान् जयेत् सर्वानन्यरोगैः सुदुर्जयान् ॥५२॥
जयेच्छोणितदोषांश्च बन्ध्या गर्भं लभेत च।
नारी चैतत् प्रयुञ्जाना योनिदोषात् प्रमुच्यते ॥५३॥
बलाकोलास्थिमधुकं श्वदंष्ट्राथ शतावरी।
मृणालञ्च कशेरुश्च वीजानि क्षुरकस्य च ॥५४॥
सहस्रवीर्य्यांशुमती पयस्या सह कालया।
शृगालविन्नातिबला बृहत्यौ गणस्तथा ॥५५॥
एतानि समभागानि मतिमान् सह साधयेत् ॥५६॥
चतुर्गुणेन पयसा गुडस्य तुलया सह।
द्रोणावशिष्टं तत् पूतं पचेत्तेन घृताढकम् ॥५७॥
तत् सिद्धं कलसे स्थाप्य क्षौद्रप्रस्थेन संयुतम्।
सर्पिरेतत् प्रयुञ्जानो मूत्रदोषात् प्रमुच्यते ॥५८॥

---

## ऊनषष्टितमोऽध्यायः ।

अथातो मूत्रदोषप्रतिषेधमध्याय व्याख्यास्याम ।
वातेन पित्तेन कफेन सर्वैस्तथाभिघातै शकृदश्मरीभ्याम ।
तथापर शर्करया सुकष्टो मूत्रोपघातः कथितोऽष्टमस्तु ॥१॥

अल्पमल्प समुत्पीड्य मुष्कमेहनवस्तिभि ।
फलद्भिरिव कृच्छ्रेण वाताघातेन मेहति ॥२॥
हरिद्रमुष्ण रक्त वा मुष्कमेहनवस्तिभि ।
अग्निना दह्यमानाभै पित्ताघातेन मेहति ॥३॥
स्निग्ध शुक्लमनुष्णञ्च मुष्कमेहनवस्तिभि ।
सहृष्टरोमा गुरुभि श्लेष्माघातेन मेहति ॥४॥
दाहशीतरुजाविष्टो नानावर्ण मुहुर्मुहु ।
ताम्यमानः सुकृच्छ्रेण सन्निपातेन मेहति ॥५॥
मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ।
श्रोत सु मूत्राघातस्तु जायते भृशवेदन ॥६॥
वातवस्तेस्तु तुल्यानि तस्य लिङ्गानि लक्षयेत् ।
शकृतस्तु प्रतीघाताद्वायुर्विगुणताङ्गत ।
आध्मानञ्च सशूलञ्च मूत्रसङ्ग करोति हि ॥७॥
अश्मरीहेतुक पूर्व मूत्राघात उदाहृत ।
अश्मरी शर्करा चैव तुल्ये सम्भवलक्षणै ॥८॥
शर्कराया विशेषन्तु शृणु कीर्त्तयतो मम ॥९॥
पच्यमानस्य पित्तेन भिद्यमानस्य वायुना ।
श्लेष्मणोऽवयवा भिन्ना शर्करा इतिसञ्ज्ञिता ॥१०॥
हृत्पीडा वेपथु शूल कुक्षौ वह्नि सुदुर्बल ।
ताभिर्भवति मूर्च्छा च मूत्राघातश्च दारुण ॥११॥

मूत्रवेगनिरस्तासु तासु शाम्यति वेदना ॥१२॥
यावदन्या पुनर्नैति गुडिका स्रोतसो मुखम् ।
शर्करासम्भवस्यैतन्मूत्राघातस्य लक्षणम ।
चिकित्सितमतस्तूर्ध्वमष्टानामपि वक्ष्यते ॥१३॥
अश्मरीञ्च समाश्रित्य यदुक्तं प्रसमीक्ष्य तत् ।
यथादोष प्रयुञ्जीत स्नेहादिकमपि क्रमम ॥१४॥
श्वदंष्ट्राश्मभिदौ कुम्भी हपुषा कण्टकारिकाम् ।
बला शतावरी रास्ना वरुण गिरिकर्णिकाम् ।
तथा विदारिगन्धादि सहृत्य तैलत पचेत् ॥१५॥
तैल घृत वा तत्पेय तेन वाप्यनुवासनम् ।
दद्यादुत्तरवस्तिञ्च वातकृच्छ्रोपशान्तये ॥१६॥
श्वदंष्ट्रास्वरसे तैल सगुडक्षीरनागरम् ।
पक्वा तत्पूर्ववद्योज्य· तत्रानिलरुजापहम ॥१७॥
तृणोत्पलादिकाकोलीन्यग्रोधादिगणे कृतम ।
पीतं घृत पित्तकृच्छ्र नाशयेत् क्षिप्रमेव च ॥१८॥
दद्यादुत्तरवस्तिञ्च पित्तकृच्छ्रोपशान्तये ।
एभिरेव कृत' स्नेहस्त्रिविधेष्वेव वस्तिषु ॥१९॥
हित विरेचनं चेक्षुक्षीरद्राक्षारसैर्युतम् ।
सुरसोषकमुस्तादिवरुणादौ च संस्कृतम ॥२०॥
तैल तथा यवाग्वश्च कफकृच्छ्रे प्रशस्यते ।
यथादोषोच्छ्रय कुर्य्यादेतानेव च सर्वजे ॥२१॥
फल्गुवृश्चीकदर्भाश्मसारचूर्णञ्च वारिणा ।
सुरेक्षुरसदर्भाम्बुपीतं कृच्छ्ररुजापहम् ॥२२॥
तथाभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम् ।

मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया ॥२३॥
स्वेदावगाहावभ्यङ्गा वस्तिचूर्णक्रियास्तथा।
मलकृच्छ्रौ द्वौ तथान्यौ यौ तयो प्रोक्त क्रियाविधि. ॥२४॥

इति सौश्रुत आयुर्वेदशास्त्रे उत्तरतन्त्रे काय-
चिकित्सा समाप्ता।

---

षष्टितमोऽध्याय:।

अथातोऽमानुषप्रतिषेधमध्याय व्याख्यास्याम'।
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव चतातुर:।
इति यत्प्रागभिहित विस्तरस्तस्य वक्ष्यते ॥१॥
गुह्यानागतविज्ञानमनवस्था सहिष्णुता।
क्रिया वाऽमानुषी यस्मिन् स ग्रह' परिकीर्त्त्यते ॥२॥
अशुचि भिन्नमर्य्याद चत वा यदिवाऽचतम।
हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि च ॥३॥
असङ्ख्येया ग्रहगणा ग्रहाधिपतयस्तु ये।
व्यज्यन्ते विविधाकारा भिद्यन्ते ते तथाष्टधा ॥४॥
देवास्तथा शत्रुगणाश्च तेषा गन्धर्वयचा. पितरो भुजङ्गा:।
रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणग्रहाख्य: ॥५॥

सतुष्ट. शुचिरपि चेष्टगन्धमाल्यो
निस्तन्द्रो ह्यवितथसस्कृतप्रभाषी।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति च य स देवजुष्ट. ॥६॥
सस्वेदी द्विजगुरुदेवदोषवक्ता

जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
सन्तुष्टो भवति न चान्नपानजातै-
र्दुष्टात्मा भवति च देवशत्रुजुष्टः ॥७॥
हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।
नृत्यन् वा प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥८॥
ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतमतिरल्पवाक् सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥९॥
प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ।
मांसेप्सुस्तिलगुडपायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिभूतः ॥१०॥
भूमौ यः प्रसरति सर्पवत् कदाचित्
सृक्किण्यौ विलिहति जिह्वया प्रसक्तम् ।
निद्रालुर्गुडमधुदुग्धपायसेप्सु-
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥११॥
मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति च रक्षसा गृहीतः ॥१२॥
उद्ध्वस्तः कृशपरुषश्चिरप्रलापी

दुर्गन्धी भृशमशुचिस्तथातिलोलः ।
बह्वाशी विजनहिमाम्बुरात्रिसेवी
व्याचेष्ट भ्रमति रुदन् पिशाचजुष्ट ॥१३॥
स्थूलाचस्त्वरितगति. स्वफेनलेह्री
निद्रालुः पतति च कम्पते च योऽति ।
यश्चाद्रिद्विरदनगादिविच्युत. सन्
सस्रष्टो न भवति वार्द्धकेन जुष्ट ॥१४॥
देवग्रहा पौर्णमास्यामसुरा सन्ध्ययोरपि ।
गन्धर्वाः प्रायशोऽष्टम्या यक्षाश्च प्रतिपद्यथ ॥१५॥
कृष्णपक्षे च पितर पञ्चम्यामपि चोरगाः ।
रक्षासि निशि पैशाचाश्चतुर्दश्या विशन्ति च ॥१६॥
दर्पणादीन् यथा छाया शीतोष्ण प्राणिनो यथा ।
स्वमणिं भास्करार्चिश्च यथा देहञ्च देहभृत् ।
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम ॥१७॥
तपासि तीव्राणि तथैव दानं
व्रतानि धर्मो नियमश्च सत्यम् ।
गुणास्तथाष्टावपि तेषु नित्या
व्यस्ताः समस्ताश्च यथाप्रभावम् ॥१८॥
न ते मनुष्यै सह संविशन्ति
न वा मनुष्यान् क्वचिदाविशन्ति ।
ये वाविशन्तीति वदन्ति मोहात्
ते भूतविद्याविषयादपोह्या ॥१९॥
तेषा ग्रहाणा परिचारका ये
कोटीसहस्रायुतपद्मसंख्याः ।

अस्रग्वसामांसभुजः सुभीमा
निशाविहाराश्च तमाविशन्ति ॥२०॥
निशाचराणां तेषां हि ये देवगणसङ्गताः ।
ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदञ्जनाः ॥२१॥
देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये ।
देववच्च नमस्यन्ते प्रत्यर्च्यन्ते च देववत् ॥२२॥
स्वामिशीलक्रियाचाराः क्रम एव सुरादिषु ।
नैरृतेयाः दुहितरस्तासां स प्रसवः स्मृतः ॥२३॥
सत्यत्वाद्यप्रवृत्तेषु वृत्तिस्तेषां गणैः कृता ।
हिंसाविहारा ये केचिद्दिव्यं भावमुपाश्रिताः ॥२४॥
भूतानीति कृता संज्ञा तेषां संज्ञा प्रवक्तृभिः ।
ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक् ॥२५॥
विद्यया भूतविद्यात्वमत एव निरुच्यते ।
तेषां शान्त्यर्थमन्विच्छन् वैद्यस्तु सुसमाहितः ॥२६॥
जप्यैः सनियमैर्होमैरारभेत चिकित्सितुम् ।
रक्तानि गन्धमाल्यानि बीजानि मधुसर्पिषाम् ॥२७॥
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ।
वस्त्राणि मद्यमांसानि क्षीराणि रुधिराणि च ॥२८॥
यानि येषां यथेष्टानि तानि तेभ्यः प्रदापयेत् ।
हिनस्ति मनुजान् येषु प्रायशो दिवसेषु तु ॥२९॥
दिनेषु तेषु देयानि तत्तु तद्विनिवृत्तये ।
देवग्रहे देवगृहे हुत्वाग्निं प्रापयेद्बलिम् ॥३०॥
कुशस्वस्तिकपूपाज्यच्छत्रपायससम्भृतम् ।
असुराय यथाकालं विदध्याच्चत्वरादिषु ॥३१॥

चतुष्पथे राक्षसस्य भीमेषु गहनेषु वा ।
शून्यागारे पिशाचस्य तीव्रं वलिमुपाहरेत् ॥३२॥
पूर्वमाचरितैर्मन्त्रैर्भूतविद्यादिदर्शितैः ।
न शक्या बलिभिर्जेतुं योगैस्तान् समुपाचरेत् ॥३३॥
अजर्क्षचर्मरोमाणि शल्यकौलूकयोस्तथा ।
हिङ्गुमूत्रञ्च वस्तस्य धूममस्य प्रयोजयेत् ।
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ॥३४॥
गजाह्वपिप्पलीमूलव्योषामलकसर्षपान् ।
गोधानकुलमार्जारऋक्षपित्तप्रभावितान् ॥३५॥
नस्याभ्यञ्जनसेकेषु विदध्याद्योगतत्त्ववित् ।
खराश्वाश्वतरोलूककरभश्वशृगालजम् ॥३६॥
पुरीषं गृध्रकाकानां वराहस्य च पेषयेत् ।
वस्तमूत्रेण तत् सिद्धं तैलं स्यात् पूर्ववद्धितम् ॥३७॥
शिरीषबीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ।
मञ्जिष्ठां रजनीं कृष्णां वस्तमूत्रेण पेषयेत् ॥३८॥
वर्त्तीश्छायाविशुष्कास्ताः सपित्ता नयनाञ्जनम् ।
नक्तमालफलं व्योषं मूलं श्योनाकबिल्वयोः ॥३९॥
हरिद्रे च कृता वर्त्तिः पूर्ववन्नयनाञ्जनम् ।
ये ये ग्रहा न सिध्यन्ति सर्वेषां नयनाञ्जनम् ॥४०॥
सैन्धवं कटुकं हिङ्गु वयस्थाञ्च वचामपि ।
वस्तमूत्रेण तत्पिष्टं मत्स्यपित्तेन पूर्ववत् ॥४१॥
पूराणसर्पिर्लशुनं हिङ्गु सिद्धार्थकं वचाम् ।
गोलोमी चाजलोमी च भूतकेशी जटा तथा ॥४२॥
कुक्कुटीसर्पगन्धाश्च तथाकाणविषाणिके ।

ऋष्यप्रोक्ता वयस्था च शृङ्गी मोहनवल्लिका ॥४३॥
अर्कमूलं त्रिकटुकं लताश्रोतोऽञ्जनाञ्जनम ।
नैपाली हरितालश्च रक्षोघ्ना ये च कीर्त्तिता ॥४४॥
सिंहव्याघ्रर्क्षमार्जारद्वीपिवाजिगवांस्तथा ।
खराविच्छल्यकगोधानामुष्ट्रस्य नकुलस्य च ॥४५॥
विट् त्वग्रोमवसामूत्ररक्तपित्तनखादय: ।
अस्मिन् वर्गे भिषक् कुर्य्यात्तैलानि च घृतानि च ॥४६॥
पानाभ्यञ्जननस्येषु तानि योज्यानि जानता ।
अवपीडेऽञ्जने चैव विदध्याद् गुटिकोत्तमाम् ॥४७॥
विदधीत परीषेके क्वथितं चूर्णितं तथा ।
उद्धूलने सुश्लक्ष्णपिष्टं प्रदेहे चावचारयेत् ॥४८॥
एष सर्वविकारांस्तु मानसानपराजित: ।
हन्यादल्पेन कालेन स्नेहादिरपि च क्रमात् ॥४९॥
न चाशुक्लं प्रयुञ्जीत प्रयोगं देवताग्रहे ।
ऋते पिशाचादन्येषु प्रतिकूलं न चाचरेत ॥५०॥
वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्धा महौजस: ।
हिताहितविधानञ्च नित्यमेव समाचरेत् ॥५१॥
तत: प्राप्स्यति सिद्धिञ्च यशश्च विपुलं भिषक् ।५२॥

---

एकषष्टितमोऽध्याय: ।

अथातोऽपस्मारप्रतिषेधमध्यायं व्याख्यास्याम: ।
स्मृतिर्भूतार्थविज्ञानमपस्तु परिवर्ज्जने ।
अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥१॥
मिथ्यादियोगेन्द्रियार्थकर्मणामभिसेवनात् ।

विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥२॥
वेगनिग्रहशीलानामहिताशुचिभोजिनाम् ।
रजस्तमोऽभिभूतानां गच्छतां च रजस्वलाम् ॥३॥
तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् ।
चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥४॥
संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः ।
रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥५॥
विक्षिपन् हस्तपादौ च विजिह्मभ्रूविलोचनः ।
दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ॥६॥
अल्पकालान्तरच्चापि पुनः संज्ञां लभेत सः ।
सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥७॥
वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः ।
हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥८॥
निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ ।
वेपमानो दशेद्दन्तान् श्वसन् फेनं वमन्नपि ॥९॥
यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति ।
ततो मे चित्तनाशः स्यात्सोऽपस्मारोऽनिलात्मकः ॥१०॥
तृट्तापस्वेदमूर्च्छार्तो धुन्वन्नङ्गानि विह्वलः ।
यो ब्रूयाद्विकृतं सत्त्वं पीतं मामनुधावति ॥११॥
ततो मे चित्तनाशः स्यात्स पित्तभव उच्यते ।
शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम् ॥१२॥
यो ब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति ।
ततो मे चित्तनाशः स्यात्सोऽपस्मारः कफात्मकः ॥१३॥
हृदि तोदस्तृडुत्क्लेदः स्विन्नेष्वप्येतेषु संज्ञया ।

प्रलाप कूजनं क्लेश प्रत्येकन्तु भवेदिह ।१४॥
सर्वलिङ्गसमावाय सर्वदोषप्रकोपजे ।
अनिमित्तागमाद्व्याधेर्गमनादकृतेऽपि च ॥१५॥
आगमाच्चाप्यपस्मार वदन्त्यन्ये न दोषजम ।
कर्मोपयोगाद्दोषाणा क्षणिकत्वात्तथैव च ॥१६॥
आममादेश्वरूपाच्च स तु निर्वर्ण्यते बुधै ।
वर्षत्यपि यथा देवे भूमौ वीजानि कानिचित् । १७॥
शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भव. ।
स्थायिन' केचिदल्पेन कालेनाभिप्रवर्द्धिता ॥१८॥
दर्शयन्ति विकारास्तु विश्वरूपान्निसर्गत ।
अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु ।१९॥
तस्य कार्य्यो विधि. सर्वो य उन्मादेषु वक्ष्यते ।
पुराणसर्पिष. पानमभ्यङ्गश्चैव पूजित ।२०॥
उपयोगो यहोक्ताना योगानान्तु विशेषत. ।
शिग्रुकट्वङ्गकिणिह्व हि निम्बत्वक्‌ससाधितम् ॥२१॥
चतुर्गुणे गवा मूत्रे तैलमभ्यञ्जने हितम् ।
गोधानकुलनागाना पृषतर्क्षगवामपि ।२२॥
पित्तेषु सिद्ध तैलञ्च पानाभ्यङ्गेषु पूजितम ।
तीक्ष्णैरुभयतो भागे शिरश्चापि विशोधयेत् ॥२३॥
पूजा रुद्रस्य कुर्वीत तद्गणानाञ्च नित्यश ।
कुलत्थयवकोलानि शणवीज पलङ्कषाम ।२४॥
जटिला पञ्चमूल्यौ द्वे पथ्याञ्चोत्क्वाथ्य यत्नत. ।
वस्तमूत्रयुत सर्पि. पिबेत् तद्वातिके हितम ॥२५॥
काकोल्यादिप्रतीवापं सिद्ध' वा प्रथमे गणे ।

पयोमधुसितायुक्तं घृतं यत् पैत्तिके हितम् ॥२६॥
कृष्णावचामुस्तकाद्यैर्युक्तमारग्वधादिके ।
पक्वं तन्मूत्रवर्गेषु श्लेष्मापस्मारिणे हितम् ॥२७॥
सुरद्रुमवचाकुष्ठसिद्धार्थव्योषहिङ्गुभिः ।
मञ्जिष्ठारजनीयुग्मसमङ्गालिफलाम्बुदैः ॥२८॥
करञ्जबीजशैरीषगिरिकर्णीहुताशनैः ।
सिद्धं सिद्धार्थकं नाम सर्पिर्मूत्रचतुर्गुणम् ॥२९॥
कृमिकुष्ठगरश्वासबलासविषमज्वरान् ।
सर्वभूतग्रहोन्मादानपस्मारांश्च नाशयेत् ॥३०॥
दशमूलेन्द्रसुरचत्वक्मूर्वाभार्गीफलत्रयैः ।
सम्याकश्रेयसीसप्तपर्णापामार्गपीलुभिः ॥३१॥
एतैः कल्कैश्च भूलिम्बपूतीकव्योषचित्रकैः ।
दूर्वाविल्वाठरानिशायुग्मसारिवाद्वयपौष्करैः ॥३२॥
कटुकामदयन्त्युग्रानीलिनीकृमिशत्रुभिः ।
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥३३॥
साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ।
चातुर्थकक्षयश्वासानुन्मादांश्च नियच्छति ॥३४॥
वातिकं वस्तिभिश्चापि पैत्तिकन्तु विरेचनैः ।
कफजं वमनैर्धीमानपस्मारमपाचरेत् ॥३५॥
भार्गीशृते पचेत् क्षीरे शालितण्डुलपायसम् ।
लाङ्गं शुद्धाय तद्भोज्य वराहायोपकल्पयेत् ॥३६॥
ज्ञात्वा च मधुरीभूतं तं विषस्य तदुद्धरेत् ।
त्रीन् भागान् तस्य चूर्णस्य किण्वभागेन संसृजेत् ॥३७॥
मण्डोदकार्थे देयश्च भार्गीक्वाथः सुशीतलः ।

शुद्धे कुम्भे निदध्याच्च सम्भारं तं सुरान्ततः ॥३८॥
जातगन्धां जातरसां पाययेदातुरं भिषक्।
शिरां विध्येदथ प्राज्ञो मङ्गल्यानि च धारयेत् ॥३९॥

---

## द्विषष्टितमोऽध्यायः।

अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः।

मदयन्त्युद्गता दोषा यस्मादुन्मार्गमाश्रिताः।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः ॥१॥
एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः।
मानसेन च दुःखेन स पञ्चविध उच्यते ॥२॥
विषाद्भवति षष्ठश्च यथास्वन्तत्र भेषजम्।
स चाप्रवृद्धस्तरुणो मदसञ्ज्ञां बिभर्त्ति च ॥३॥
मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्।
अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम् ॥४॥
वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा।
यस्य स्यादचिरेणैवमुन्मादं सोऽधिगच्छति ॥५॥

रूक्षच्छवि परुषवाक् धमनी ततो वा
श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः।
आस्फोटयन् पठति गायति नृत्यशीलो
विक्रोशति भ्रमति चाप्यनिलप्रकोपात् ॥६॥

तृट्स्वेददाहबहुलो बहुभुग्विनिद्र-
श्छायाहिमानिलजलान्तविहारसेवी।
तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की-
पित्ताद्दिवा नभसि पश्यति तारकाश्च ॥७॥

रूक्षाग्निसादश्रदनारुचिकासयुक्तो
योषिद्विविक्तरतिरल्पमतिप्रचारः ।
निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी
रात्रौ भृशं भवति चापि कफप्रकोपात् ॥८॥
सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि
रूपाणि वातकफपित्तकृतानि विद्यात् ।
सम्पूर्णलक्षणमसाध्यमुदाहरन्ति
सर्वात्मकं क्वचिदपि प्रवदन्ति साध्यम् ।९॥
चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः ॥१०॥
चित्रं स जल्पति मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ।
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेन भवेद्विसंज्ञः ॥११॥
स्निग्धं स्विन्नन्तु मनुजमुन्मादार्त्तं विशोधयेत् ।
तीक्ष्णैरुभयतोभागैः शिरसश्च विरेचनैः ।
विविधैरवपीडैश्च सर्षपस्नेहसंयुतैः ॥१२॥
योजयित्वा च तच्चूर्णं घ्राणे नस्यन्तु योजयेत् ।
सततं धूपयेच्चैनं श्वगोमांसैः सुपूतिभिः ॥१३॥
सर्षपानाञ्च तैलेन नस्याभ्यङ्गौ हितौ सदा ।
दर्शयेदद्भुतान्यस्य वदेन्नाशं प्रियस्य च ॥१४॥
भीमाकारैर्नरैर्नागैर्दान्तैर्व्यालैश्च निर्विषैः ।

भीषयेत्ततं पार्श्वे कशाभिर्वाथ ताडयेत् ॥१५॥
यन्त्रयित्वा सुसुप्तं वा त्रासयेत्त तृणाग्निना ।
प्रतुदेद्दारयेच्चैन मर्माघात विवर्जयेत् ॥१६॥
सापिधाने जरत्कूपे सतत वा निवासयेत् ।
त्वग्हाचग्हाद्यवागूश्च दद्यात्सक्तून् जलेन वा ॥१७॥
केवलामम्बुयुक्तान् वा कुल्माषान् वा बहुश्रुतः ।
हृद्य यद्दीपनीयञ्च तत्पथ्य तस्य योजयेत् ॥१८॥
विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ।
श्यामैलावालुकैलाभिश्चन्दनामरदारुभि. ॥१९॥
वर्हिष्ठरजनीकुष्ठपर्णिनीशारिवाद्वये ।
हरेणुकात्वृद्दन्तीवचातालीशकेशरै ॥२०॥
द्विक्षीर साधितं सर्पिर्मालतीकुसुमैः सह ।
गुल्मकासज्वरश्वासक्षयोन्मादनिवारणम् ॥२१॥
एतदेव हि सम्पक्क जीवनीयोपसम्भृतम् ।
चतुर्गुणेन दुग्धेन महाकल्याणमुच्यते ॥२२॥
अपस्मार ग्रह शोष क्लैव्य कार्श्यमबीजताम् ।
घृतमेतन्निहन्त्याशु ये चादौ गदिता गदा' ॥२३॥
वर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाद्वये' ।
तेनेद त्रिफलाहिङ्गुवाजिगन्धामरद्रुमै ॥२४॥
वचाजमोदाकाकोलीमेदामधुकपद्मकैः
सशर्कर हित सर्पि पक्क क्षीरचतुर्गुणम ॥२५॥
बालाना ग्रहजुष्टाना पुसा दुष्टाल्पमेधसाम ।
ख्यात फलघृत स्त्रीणा बन्ध्यानाञ्चाशुगर्भदम ॥२६॥
ब्राह्मीमैन्द्रीं विडङ्गानि व्योष हिङ्गु सुरा जटाम् ।

विषघ्नी लशुनं रास्ना विश्वग्या सुरसा वचाम् ॥२७॥
ज्योतिष्मतीं नागविन्नामनन्तामभयान्तथा ।
सौराष्ट्रीञ्च समांशानि गजमूत्रेण पेषयेत् ॥२८॥
छायाविशुष्कास्तद्वर्त्तीर्योजयेद्विधिकोविदः ।
अवपीडेऽञ्जनेऽभ्यङ्गे नस्ये धूमे प्रलेपने ॥२९॥
उरोऽपाङ्गललाटेषु सिराश्चास्य विमोक्षयेत् ।
अपस्मारक्रियाश्चापि यथोद्दिष्टाश्च कारयेत् ॥३०॥
शान्तदोष विशुद्धञ्च स्नेहवस्तिभिराचरेत् ।
शोकशल्यं व्यपनयेदुन्मादे पञ्चमे भिषक् ॥३१॥
उन्मादेषु च सर्वेषु कुर्य्याच्चित्तप्रसादनम् ।
मृदुपूर्वं मदेऽप्येव क्रिया विद्वान् प्रयोजयेत् ॥३२॥
विषजे मृदुपूर्वाञ्च विषघ्नीं कारयेत् क्रियाम् ॥३३॥

---

त्रिषष्टितमोऽध्यायः ।

अथातो रसभेदविकल्पमध्यायं व्याख्यास्यामः ।
दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः ।
त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते ॥१॥
अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा ।
रसभेदत्रिषष्टिन्तु वीक्ष्य वीक्ष्यावचारयेत् ॥२॥
एकैकेनानुगमनं भागशो यदुदीरितम् ।
दोषाणां तत्र मतिमान् त्रिषष्टिन्तु प्रयोजयेत् ॥३॥
यथाक्रमं प्रवृत्तानां द्विकेषु मधुरो रसः ।
पञ्चानुक्रमते योगानम्ल-तुर एव च ॥४॥

शेषानुगच्छति रसो लवण कटुको द्वयम् ।
तिक्त कषायमन्वेति ते द्विका दश पञ्च च ॥५॥

तद्यथा । मधुराम्ल । मधुरलवण । मधुरतिक्त । मधुरकटुक । मधुरकषाय । एते पञ्चानुक्रान्ता मधुरेण ॥६॥

अम्ललवण । अम्लकटुक । अम्लतिक्त । अम्लकषाय । एते चत्वारोऽनुक्रान्ता अम्लेन ॥७॥

लवणकटुकः । लवणतिक्त । लवणकषायः । एते त्रयोऽनुक्रान्ता लवणेन ॥८॥

कटुतिक्त । कटुकषाय । द्वावेतावनुक्रान्तौ कटुकेन ॥९॥

तिक्तकषाय एक एवानुक्रान्तस्तिक्तेन ॥१०॥

एते पञ्चदश द्विकसंयोगा व्याख्यातास्त्रिकं वक्ष्यामः ॥११॥

आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति ।
षडम्लो लवणस्तस्माद्द्वैन्त्वेक रसः कटु ॥१२॥

मधुराम्ललवण । मधुराम्लकटुक । मधुराम्लतिक्तः । मधुराम्लकषाय । मधुरलवणकटुक । मधुरलवणतिक्त । मधुरलवणकषाय । मधुरकटुकतिक्त । मधुरकटुकषाय । मधुरतिक्तकषायः । एवमेषा त्रिकसंयोगाना दशानामादौ मधुरः प्रयुज्यते ॥१३॥

अम्ललवणकटुकः । अम्ललवणतिक्त । अम्ललवणकषाय । अम्लकटुकषाय । अम्लकटुतिक्तः । अम्लतिक्तकषायः । एवमेषा षण्णामादावम्लः प्रयुज्यते । लवणकटुतिक्त । लवणकटुकषायः । लवणतिक्तकषाय । एवमेषा त्रयाणामादौ लवण प्रयुज्यते । कटुतिक्त कषायः ।

एवमेकस्यादौ कटुक प्रयुज्यते। एवमेते त्रिकसयोग-विंशतिर्व्याख्याता. ॥१४॥

चतुष्कान् वक्ष्यामः।

चतुष्करससयोगान्मधुरो दश गच्छति।

चतुरोऽम्लस्तु गच्छेच्च लवणस्त्वेकमेव तु ॥१५॥

मधुराम्ललवणकटुक, मधुराम्ललवणतिक्त, मधुराम्ल लवणकषाय', मधुराम्लकटुकतिक्त, मधुराम्लकटुकषायः, मधुरलवणतिक्तकटुक', मधुराम्लतिक्तकषाय, मधुरलवण-कटुतिक्त, मधुरलवणकटुकषाय, मधुरलवणतिक्तकषायः। एवमेषां दशानामादौ मधुरः प्रयुज्यते। अम्ललवणकटुक-तिक्त, अम्ललवणकटुकषाय., अम्ललवणतिक्तकषायः, अम्ल-कटुतिक्तकषाय'। एवमेषा चतुर्णामम्लः। लवणकटुतिक्त-कषाय। एवमेकस्यादौ लवण.। एवमेते चतुष्करससयोगा. पञ्चदश कीर्त्तिता ॥१६॥

पञ्चकान् वक्ष्यामः।

पञ्चकान् पञ्च मधुर एकमम्लस्तु गच्छति ॥१७॥

मधुराम्ललवणकटुतिक्तः, मधुराम्ललवणकटुकषाय', मधुराम्ललवणतिक्तकषाय, मधुराम्लकटुतिक्तकषाय, मधुर-लवणकटुतिक्तकषाय'। एवमेषा पञ्चाना पञ्चकरससयो-गानामादौ मधुर. प्रयुज्यते। अम्ललवणकटुतिक्तकषायः। एवमेकस्यादावम्लः प्रयुज्यते। एवमेते षट् पञ्चकसयोगा व्याख्याता. ॥१८॥

षट्कमेकं वक्ष्यामः ।

एकस्तु षट्कसंयोगः । मधुराम्ललवणकटुकतिक्तकषायः ।
एवमयमेकः षट्संयोगः ॥ १९ ॥

एकैकश्च षड्रसा भवन्ति ।

मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति ॥ २० ॥

भवति चात्र ।

एषा त्रिषष्टिर्व्याख्याता रसानां रसचिन्तकैः ।
दोषभेदे त्रिषष्टिस्तु प्रयोक्तव्या विचक्षणैः ॥ २१ ॥

---

चतुःषष्टितमोऽध्यायः ।

अथातः स्वस्थवृत्तमध्यायं व्याख्यास्यामः ।

समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः सुस्थ इत्यभिधीयते ॥ १ ॥
सूत्रस्थाने समुद्दिष्टः सुस्थो भवति यादृशः ।
तस्य यद्रक्षणं तद्धि चिकित्साया प्रयोजनम् ॥ २ ॥
तस्य यद्वृत्तमुक्तं हि रक्षणं हि समासतः ।
तस्मिन्नर्थाः समासोक्ता विस्तरस्तस्य वक्ष्यते ॥ ३ ॥
यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ।
तेषु तेषु प्रदातव्याः रसास्ते ते विजानता ॥ ४ ॥
प्रक्लिन्नत्वाच्छरीराणां वर्षासु खलु देहिनाम् ।
मन्देऽग्नौ कोपमायान्ति सहर्षान्मारुतादयः ॥ ५ ॥
तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च ।
कषायतिक्तकटुकैरसैर्युक्तमथो द्रवम् ॥ ६ ॥
नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च ।

देयमन्न नृपतये यज्जल चोक्तमादितः ॥७॥
तस्मावरतमम्भो वा पिबेन्मधुसमायुतम ।
अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले ॥८॥
तरुणत्वाद्विदाहाच्च गच्छन्त्योषधयस्तदा ।
मतिमांस्तन्निमित्तञ्च नैव व्यायाममाचरेत् ॥९॥
अत्यम्बुपानावश्यायग्राम्यधर्मातपांस्तथा ।
भूवाष्पपरिहारार्थं शयीत च विहायसि ॥१०॥
शीत साग्नौ निवाते च गुरुप्रावरणे गृहे ।
शय्यान्नागवधूभिश्च प्रशस्तागुरुभूषित ॥११॥
दिवास्वप्नमजीर्णञ्च वर्जयेत्तत्र यत्नतः ।
सेव्याः शरदि यत्नेन कषायस्वादुतिक्तका. ॥१२॥
क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः ।
सलिलञ्च प्रसन्नत्वात् सर्वमेव तदा हितम् ॥१३॥
सर स्वाप्लवनञ्चैव कमलोत्पलशालिषु ।
प्रदोषे शशिन पादाश्चन्दनञ्चानुवासनम् ॥१४॥
तिक्तस्य सर्पिष पानैरसृक्स्रावैश्च युक्तित ।
वर्षास्तूपचितम्पित्त हरेच्चापि विरेचनै. ॥१५॥
नोपेयात्तीक्ष्णमम्लोष्ण क्षार स्वप्न दिवातपम् ।
रात्रिजागरणञ्चैव मैथुनञ्चापि वर्जयेत् ॥१६॥
स्वादुशीतजल मद्य शुचिस्फटिकनिर्मलम् ।
शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम् ॥१७॥
प्रसन्नत्वाच्च सलिल सर्वमेव तदा हितम् ।
सचन्दनं वा कर्पूरं वासश्चामलिन लघु ॥१८॥
भजेच्च शारद माल्य सौधे पानञ्च युक्तितः ।

पित्तप्रशमन यच्च तच्च सर्वं समाचरेत् ॥१९॥
हेमन्ते शीतलो रूक्षो मन्दसूर्य्योऽनिलाकुलः ।
ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ॥२०॥
कोष्ठस्थ शीतसंस्पर्शादन्तःपिण्डीकृतोऽनल ।
रसमुच्छोषयत्याशु तस्मात् स्निग्ध तदा हितम ॥२१॥
हेमन्ते लवणक्षारतिक्ताम्लकटुकोल्कटम ।
ससर्पिस्तैलमहिममशन हितमुच्यते ॥२२॥
तीक्ष्णान्यपि च पानानि पिबेदगुरुभूषित ।
तैलाभ्यक्त सुखोष्णे च वारिकोष्ठेऽवगाहयेत् ॥२३॥
साङ्गारयाने महति कौशेयास्तरणास्तृते ।
शयीत शयने वापि वृतो गर्भगृहोदरे ॥२४॥
स्त्रीः स्निग्धागुरुधूपाढ्या पीनोरुजघनस्तनी ॥२४॥
प्रकामञ्च निषेवेत मैथुन तर्पितो नृप ॥२५॥
मधुर तिक्तकटुकमम्ल लवणमेव च ।
अन्नपान तिलान् माषान् शाकानि च दधीनि च ॥२६॥
तथेक्षुविकृती शालीन् सुगन्धाश्च नवानपि ।
प्रसह्यानूपमांसानि क्रव्यादविलशायिनाम् ।
औदकाना प्लवानाञ्च पादिनाञ्चोपजायते ॥२७॥
मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम ।
कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे ॥२८॥
एष एव विधिः कार्य्यः शिशिरे समुदाहृत ।
हैमन्ते निचित श्लेष्मा शैत्याच्छीतशरीरिणाम ।
औष्ण्याद्वसन्ते कुपित कुरुते च गदान् बहून् ॥२९॥
ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च ।

वर्जयेद्दमनादीनि कर्माण्यपि च कारयेत् ॥३०॥
षष्टिकान्न यवान् शीतान् मुद्गान् नीवारकोद्रवान् ।
सौवादिरिष्किररसैर्द्द्यात् यूषैश्च युक्तितः ॥३१॥
पटोलनिम्बवार्त्ताकुतिक्तकैश्च हिमात्यये ।
सेवेन्मध्वासवारिष्टान् सीधुमाध्वीकमासवान् ॥३२॥
व्यायाममञ्जन धूम तीक्ष्णञ्च कवलग्रहम् ।
सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे ॥३३॥
तीक्ष्णरूक्षकटुक्षारकषाय कोष्णमद्रवम् ।
यवमुद्गमधुप्राय वसन्ते भोजन हितम् ॥३४॥
व्यायामोऽत्र नियुद्धाध्वशिलानिर्वातजो हित' ॥३५॥
उत्सादन तथा स्नान वनिता, काननानि च ।
सेवेत निर्हरेच्चापि हेमन्तोपचित कफम् ॥३६॥
शिरोविरेकवमननिरूहकवलादिभि ।
वर्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान् ॥३७॥
व्यायाममुष्णमायास मैथुनञ्चातिशोषि च ।
रसाश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् ॥३८॥
सरासि सरितो वापि वनानि रुचिराणि च ।
चन्दनानि परार्घ्यानि स्रज सकमलोत्पला ॥३९॥
तालवृन्तानिलाहारास्तथा शीतगृहाणि च ।
घर्मकाले निषेवेत वासासि सलघूनि च ॥४०॥
शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च ।
पानकानि च सेवेत मन्थाश्चापि सशर्करान् ॥४१॥
भोजन च हित शीत सघृत मधुरद्रवम् ।
शृतेन पयसा रात्रौ शर्करामधुरेण च ॥४२॥

प्रत्यग्रकुसुमाकीर्णशयने हर्म्यसंस्थिते ।
शयीत चन्दनार्द्राङ्ग. स्पृश्यमानोऽनिलै. सुखै ॥४३॥
तापात्यये हिता नित्य रसा ये गुरवस्त्रय ।
पयोमांसरसा. कोष्णास्तैलानि च घृतानि च ॥४४॥
बृंहणञ्चापि यत्किञ्चिदभिष्यन्दि तथैव च ।
निदाघोपचितञ्चैव प्रकुप्यन्त समीरणम ।
निहन्यादनिलघ्नेन विधिना विधिकोविद ॥४५॥
नदीजल कच्चमुष्णमुदमन्थं तथातपम ।
व्यायामञ्च दिवास्वप्न व्यवायञ्चात्र वर्जयेत् ॥४६॥
यवषष्टिकगोधूमान् शालीश्चाप्यनवास्तथा ।
हर्म्यमध्ये निवाते च भजेच्छय्या मृदूत्तराम ॥४७॥
सविषप्राणिविण्मूत्रलालादिष्ठीवनादिभि ।
समाप्लुत तदा तोयमान्तरीच विषोपमम ॥४८॥
वायुना विषदुष्टेन प्रावृष्येण च दूषितम ।
तद्धि सर्वोपयोगेषु तस्मिन् काले विवर्जयेत् ॥४९॥
निरूहैर्वस्तिभिश्चान्यैस्तथान्यैर्मारुतापहै ।
कुपित शमयेद्वायु वार्षिक वा चरेद्विधिम् ॥५०॥
ऋतावृतौ य एतेन विधिना वर्त्तते नर ।
घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन ॥५१॥

अत ऊर्द्धं द्वादशाशनप्रविभागान् वक्ष्याम. । तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्था. ॥५२॥

तृष्णोष्णमदाहार्त्तान्‌ रक्तपित्तविषातुरान् ।
मूर्च्छार्त्तान् स्त्रीषु च चीणान् शीतैरन्नैरुपाचरेत् ॥५३॥

कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ।
प्रक्लिन्नदेहांश्च नरानुष्णैरन्नैरुपाचरेत् ॥५४॥
वातिकान् रूक्षदेहांश्च व्यायामोपहतांस्तथा ।
व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ॥५५॥
मेदसाभिपरीतांस्तु स्थूलान्मेहातुरानपि ।
कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ॥५६॥
शुष्कदेहान् पिपासार्तान् दुर्बलानपि च द्रवैः ।
प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहितमेव च ॥५७॥
एककालं भवेद्देयो दुर्बलाग्निविवृद्धये ।
समाग्नये तथाहारो देयः कालमथोभयम् ॥५८॥
औषधद्वेषिणे देयस्तथौषधसमायुतः ।
मन्दाग्नये रोगिणे च मात्राहीनः प्रशस्यते ॥५९॥
यथार्थदत्तश्चाहारो दोषप्रशमनः स्मृतः ॥६०॥
अतः परन्तु स्वस्थानां ह्यत्यर्थं सर्वमेव च ।
द्वादशान्नप्रविचारानेतानेव प्रचक्षते ॥६१॥

अत ऊर्द्धं दशौषधकालान् वक्ष्यामः । तत्र निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति दशौषधकालाः ॥६२॥

तत्र निर्भक्तं केवलमेवौषधमुपयुज्यते ।
वीर्याधिकं भवति भेषजमन्नहीनं
हन्यात्तथामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा
ग्लानिं परां समुपयान्ति बलक्षयञ्च ॥६३॥
प्राग्भक्तं नाम यत्तु प्राग्भक्तस्योपयुज्यते ।

शीघ्रं विपाकमुपयाति बलं न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति।
प्राग्भक्तसेवितमथो बलमादधाति
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥६४॥

अधोभक्तं नाम यद्भुक्तान्ते पीयते।
पीतं यदन्नमुपयुज्य तदूर्द्ध्वकाये
हन्याद्गदान् बहुविधांश्च बलं ददाति ॥६५॥

मध्येभक्तं नाम यन्मध्ये भक्तस्य पीयते।
मध्ये तु पीतमुपहन्त्यविसारिभावाद्
ये मध्यदेहमभिभूय भवन्ति रोगाः ॥६६॥

अन्तराभक्तं नाम यदन्तरा पीयते पूर्वापरयोर्भक्तयोः।
हृद्यं मनोबलकरन्त्वतिदीपनीयं
पथ्यञ्च सम्भवति चान्तरभक्तमेतत् ॥६७॥

सभक्तं नामौषधेषु यत्साध्यते भक्तम्।
पथ्यं सभक्तमबलाबलयोर्हि नित्यं
तद्द्वेषिणामपि तथा शिशुवृद्धयोश्च ॥६८॥

सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते।
दोषे द्विधा प्रतिसृते तु सामुद्गसञ्ज्ञ-
माद्यन्तयोर्यदशनस्य निषेव्यते तु ॥६९॥

मुहुर्मुहुर्नाम सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते।
श्वासे मुहुर्मुहुरतिप्रसृते च कासे
हिक्कावमीषु च वदन्त्युपयोज्यमेतत् ॥७०॥

ग्रासान्तरं नाम यत्पिण्डाभिश्रम्।

ग्रासान्तरेषु वितरेद्वमनीयधूमान्
श्वासादिषु प्रथितदृष्टगुणांश्च लेहान् ॥७१॥

एवमेते दशौषधकाला ।

विसृष्टे विरमूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ।
तथान्नश्रद्धाया क्षुदुपगमने कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजा काल स तु मतः ॥७२॥

---

## पञ्चषष्टितमोऽध्याय ।

अथातस्तन्त्रयुक्तिनामाध्याय व्याख्यास्याम. ।

द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति। तद्यथा। अधिकरणं योग पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिर्विपर्य्यय' प्रसङ्ग एकान्तोऽनेकान्त. पूर्वपक्षो निर्णयोऽनुमत विधानमनागतावेक्षणमतिक्रान्तावेक्षणं संशयो व्याख्यान स्वसंज्ञानिर्वचन निदर्शन नियोगो विकल्पः समुच्चय ऊह्यमिति ॥१॥

अत्रासा तन्त्रयुक्तीना किं प्रयोजनमित्युच्यते। वाक्ययोजनमर्थयोजनञ्च ॥२॥

भवन्ति चात्र श्लोका ।

असद्वादिप्रयुक्ताना वाक्याना प्रतिषेधनम् ।
स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तित ॥३॥
व्यक्ता नोक्ताश्च ये ह्यर्था लीना ये चाप्यनिर्मला ।

लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम् ॥४॥

यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।

प्रबोधस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः ॥५॥

यमर्थमधिकृत्योच्यते तदधिकरणं यथा रस दोष वा ॥६॥

येन वाक्य युज्यते स योग । यथा।

तैल पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभि.।

सिद्ध बलाभ्याञ्च सदेवदारु हिताय नित्यङ्गलगण्डरोगी ॥७॥

सिद्धं पिबेदिति प्रथम वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेव दूरस्थानामपि पदानामेकीकरण योगः ॥८॥

योऽर्थोऽभिहित सूत्रे पदे वा स पदार्थ । अपरिमिताश्च पदार्थाः। यथा। स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते तत्र योऽर्थ पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यो यथा। वेदोत्पत्ति व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धि । कतमस्य वेदस्यायमुत्पत्ति विवक्षुरिति। ऋग्वेदादयस्तु वेदास्तत्र पूर्वापरयोगमुपलभ्य विद विचारणे विद विन्दत्ये तयोश्च धात्वोरनेकार्थयो. प्रयोग पश्चात् प्रतिपत्तिर्भवति। आयुर्वेदोत्पत्तिमय विवक्षुरित्येव पदार्थ ॥९॥

यदन्यदुक्तमन्यार्थसाधक भवति स हेत्वर्थ । यथा मृत्पिण्डोऽद्भि प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥१०॥

समासकथनमुद्देश' । यथा। शल्यमिति ॥११॥

विस्तरवचन निर्देश । यथा। शारीरमागन्तु चेति ॥१२

एवमित्युपदेश. । यथा। तथा न जागृयाद्रात्रौ दिवा-

स्वप्नञ्च वर्जयेत् अनेन कारणेनेत्यपदेश यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति ॥१३॥

प्रकृतस्यातिक्रान्तेन साधन प्रदेश । यथा । देवदत्तस्यानेन शल्यमुद्धृत तस्माद्यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति ॥१४॥

प्रकृतस्यानागतेन साधनमतिदेश । यथानेनास्य वायुरूर्ध्वमुपतिष्ठते तेनोदावर्त्तः स्यादिति ॥१५॥

अभिव्याप्यापकर्षणमपवर्ग । यथाऽस्वेद्या विषापसृष्टा अन्यत्र कीटविषादिति ॥१६॥

येन पदेनानुक्तेन वाक्य समाप्यते स वाक्यशेष । यथा । शिर पाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि गम्यते पुरुष एवोक्त इति ॥१७॥

यदकीर्त्तितमर्थादापद्यते सार्थापत्ति । यथौदन भक्ष्य इत्युक्तेऽर्थापन्न भवति नाय पिपासुर्यवागूमिति ॥१८॥

यद्यत्राभिहित तस्य प्रातिलोम्य विपर्य्यय । यथा । कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादय. सुचिकित्स्या इति ॥१९॥

प्रकरणान्तरेण समापनं प्रसङ्गः । यथा । प्रकारान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः । यथा । महाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्याया पुनरुक्तं यतोऽभिहित पञ्चमहाभूतशरीरिसमवाय पुरुष इति स खल्वेवं कर्म्मपुरुषश्चिकित्सायामधिकृत ॥२०॥

सवद्य यदवधारणोच्यते स एकान्त । यथा । त्रिवृद्विरेच-

यति मदनफलं वामयतीति ॥२१॥

क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकार्थः। यथा। केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्य्यं केचिद्विपाकमिति ॥२२॥

आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः। यथा कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥२३॥

तस्योत्तरं निर्णयः। यथा शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं प्रसृजति वातः एवमसाध्या वातजा इति ॥२४॥

यथा चोक्तम।

कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः।
अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः ॥२५॥

परमतमप्रतिषिद्धमनुमतम्। यथान्यो ब्रूयात्सप्तरसा इति ॥२६॥

प्रकरणानुपूर्वाभिहितं विधानम्। यथा सक्थिमर्माण्येकादश प्रकरणानुपूर्वाभिहितानि ॥२७॥

एवं वक्ष्यतीत्यनागतावेक्षणम्। यथा श्लोकस्थाने ब्रूयाच्चिकित्सितेषु वक्ष्यामीति ॥२८॥

यत् पूर्वमुक्तं तदतिक्रान्तावेक्षणम। यथा चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति ॥२९॥

उभयहेतुदर्शनं संशयः। यथा तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनमप्राणहरमिति ॥३०॥

तन्त्रातिशयोपवर्णनं व्याख्यानम्। यथेह पञ्चविंशतिकः पुरुषोऽत्र व्याख्यायते। अन्येष्वायुर्वेदेषु भूतादिप्रकृत्या-

यक्षचिन्ता ॥३१॥

अन्यशास्त्रासामान्यास्वसंज्ञा। यथा मिथुनमिति मधुसर्पिषोर्ग्रहणम। लोके प्रथितमुदाहरणम्। यथोष्णभयाच्छीतमनुधावति ॥३२॥

निश्चित वचनं निर्वचनम्। यथायुर्विद्यतेऽस्मिन्ननेन वायुर्विन्दतीत्यायुर्वेद ॥३३॥

दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम्। यथाग्निर्वायुना सहितः कोष्ठे वृद्धिङ्गच्छति तथा वातपित्तकफदुष्टो व्रण इति ॥३४॥

इदमेव कर्त्तव्यमिति नियोगः। यथापथ्यमेव भोक्तव्यमिति ॥३५॥

इदञ्चेदञ्चेति समुच्चयः। यथा मासवर्गे एणहरिणलावतित्तिरिशारङ्गाः प्रधानमिति ॥३६॥

इदञ्चेति विकल्प। यथा रसौदन. सघृता यवागूर्वा ॥३७॥

यदनिर्दिष्ट बुद्धिमता तदूह्यम्। यथाभिहितमन्नपानविधौ चतुर्विधश्चान्नमुपदिश्यते। भक्ष्य भोज्य लेह्यं पेयमेवञ्चतुर्विधे वक्तव्ये द्विविधमभिहितमतोह्यमिति। अन्नपाने विशिष्टे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवति किञ्चान्यत्। अन्नेन भक्ष्यमवरुद्ध त्वन्नसाधर्म्यात् पेयेन लेह्यं द्रवसाधर्म्यात्। चतुर्विधश्चाहार. प्रायेण द्विविधः प्रसिद्ध इति ॥३८॥

द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे।
मया सम्यग्विनिर्दिष्टा. शब्दन्यायार्थसयुताः ॥३९॥

यो ह्येता विधिवद्वेत्ति द्वीपीभूतास्तु बुद्धिमान्।
स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम् ॥४०॥

---

षट्षष्टितमोऽध्यायः।

अथातो दोषभेदविकल्पनामाध्यायं व्याख्यास्यामः।

अष्टाङ्गायुर्वेदविदं दिवोदासं महामतिम्।
छिन्नशास्त्रार्थसन्देहं सूक्ष्मागाधमिवोदधिम्।
विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति ॥१॥
द्विषष्टिर्दोषभेदा ये पुरस्तात्परिकीर्त्तिताः।
कति तत्रैकशो ज्ञेया द्विशो वाप्यथवा त्रिशः ॥२॥
तस्य तद्वचनं श्रुत्वा सशयच्छिन्महातपाः।
प्रीतात्मा नृपशार्दूल सुश्रुतायाह तत्त्वतः ॥३॥
त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च।
देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः ॥४॥
पुरुषः षोडशकलः प्राणाश्चैकादशैव ये।
रोगाणान्तु सहस्रं यच्छतं विंशतिरेव च ॥५॥
शतञ्च पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम्।
व्यासतः कीर्त्तितं तद्धि भिन्नदोषास्त्रयो गुणाः ॥६॥
द्विषष्टिधा वदन्त्येते भूयिष्ठमिति निश्चयः।
त्रय एव पृथक् दोषा द्विशो नव समाधिकैः ॥७॥
त्रयोदशाधिकैकद्विसममध्योल्बणैस्त्रिशः।
पञ्चाशदेवन्तु सह भवन्ति चयमागतैः ॥८॥
क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथापरैः।
द्वादशैव समाख्यातास्त्रयो दोषा द्विषष्टिधा।

मिश्रधातुमलैर्दोषा यान्त्यसङ्ख्येयतां पुनः ॥९॥
तस्मात् प्रसङ्गं संयम्य दोषभेदविकल्पनैः ।
रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः ॥१०॥
भिषक् कर्त्ताथ करणं रसा दोषास्तु कारणम् ।
कार्य्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा ॥११॥
अध्यायानान्तु षट्षष्ट्या ग्रथितार्थपदक्रमम् ।
एवमेतदशेषेण तन्त्रमुत्तरमुद्दिमत् ॥१२॥
स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम् ।
यथाविधि यथाप्रश्नं भवतां परिकीर्त्तितम् ॥१३॥

सहोत्तरं त्वेतदधीत्य सर्वं
ब्राह्मं विधानेन यथोदितेन ।
न हीयतेऽर्थान्मनसोऽभ्युपेता-
देतद्वचो ब्राह्ममतीव सत्यम् ॥१४॥

इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं
समाप्तम् ।

---

समाप्तश्चायं ग्रन्थः ।